# साहित्यदर्पणम् ।

श्रीविश्वनाथकविराजकृतम् ।

श्रीरामचरणतर्कवागीशकृतव्याख्यामवलम्ब्य
पण्डित-कुलपतिना,
वि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
विरचितया व्याख्यया समुद्भासितम् ।
तेनैव संस्कृत प्रकाशितञ्च ।



पञ्चमसंस्करणम् ।

कलिकातानगर्य्याम् ।
कलिकातायन्त्रे
मुद्रितम् ।

ई १९००।



প্রিন্টার—মুখার্জি এণ্ড কোম্পানি, ৮ নং বহুবাজার ষ্ট্রীট, কলিকাতা।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

PANDITA—KULAPATI

JIBANANDA VIDYASAGARA, B. A

*Superintendent, Free Sanskrit College, Calcutta.*

# साहित्यदर्पणधृतग्रन्थनामानि ।

अनर्घराघवः, आग्नेयपुराणं, आर्य्याविलासः, उदयनचरितं, उदात्तराघवः, कनकावतीमाधवः, कन्दर्पकेलिः, कर्णपराक्रमः कर्पूरमञ्जरी, कादम्बरी, कामदत्ता, मुकुन्दमाला, कुम्भः कुमारसम्भव. कुवलयाश्वचरितं, कुसुमशेखरविजयः, कृत्यारावणः, केलिरैवतकं, क्रीडारसातलं. गङ्गावर्त्तवार्टिका, चण्डकौशिकः, चन्द्रकला, छलितराम, जानकीराघव, त्रिपुरदाहः देवीमहादेवं, देशराजचरितं, धूर्त्तचरितं, नटकमेलकं, नर्मवती, नागानन्दः, नैषधचरितं, पञ्चतन्त्रं, पुष्पभूषितं, पुष्पमाला, प्रभावतीपरिणयः, प्रशस्तिरत्नावली, बालरामायणम्, बालचरितं, विन्दुमती, विरुदमणिमाला, भाषार्णवः, भरतशास्त्रं, भिक्षाटनं, महाभारतं, मायाकापालिकं, मालतीमाधवं, मालविकाग्निमित्रं, मुक्तावली, मुद्राराक्षसं, मेनकाहितं, मेघदूतं, ययातिविजयः, यादवोदयः रघुवंशः, रङ्गदत्तं, रत्नावली, राघवविलासः, राघवानन्दः, राघवाभ्युदयः, रामचरितं, रामायणं, रामाभिनन्दः रामाभ्युदयः, रैवतमर्दनिका, लीलामधुकरः, वालिवधः, विक्रमोर्वशी, विष्णुपुराणं, विलासवती, वीरचरितं, वेणीसंहारः, शर्मिष्ठाययातिः, शाकुन्तलं, शारीरकमीमांसाभाष्यव्याख्यानं, शिशुपालवधः, शृङ्गारतिलकं, समुद्रमथनं, सेतुबन्धः, हयग्रीववधः, हर्षचरितम् ।

# साहित्यदर्पणधृतग्रन्थकृन्नामानि ।

अभिनगुप्तपादाः, अभिहितान्वयवादी, उदयनाचार्य्यः कालिदासः, चण्डीदासः, चन्द्रशेखरः, चाणक्यः, दण्डी, धर्मदत्तः, नारायणः, ध्वनिकारः, पुरुषोत्तमः, भर्तृहरिः, भोजः, महिमभट्टः, मुनिः, मुनीन्द्रः, राघवानन्दः, रुद्रटः, वक्रोक्तिजीवितकारः, वाचस्पतिमिश्रः, वामनः, व्यक्तिविवेककारः श्रीमल्लोचनकारः, श्रोत्रियजरन्मीमांसकः ।

# साहित्यदर्पणस्य सूचीपत्रम् ।

# साहित्यदर्पणम् ।

## प्रथमः परिच्छेदः ।

### अवतरणिका ।

ग्रन्थारम्भे निर्विघ्नेन प्रारिप्सितपरिसमाप्तिकामो वाङ्मयाधिकृततया वाग्देवतायाः साम्मुख्यमाधत्ते (क) ।

---

(क) प्रणम्य परमात्मानं श्रीजीवानन्दशर्मणा ।
साहित्यदर्पणव्याख्या विमलाख्या विरच्यते ॥

अथ प्रथमकारिकायां सरस्वत्याराधनेन स्वार्थनिर्वाहप्रयुक्तिपरतां, प्रकटयितुमवतरणिकां ग्रन्थकृदाचष्टे ग्रन्थारम्भ इति। ग्रन्थस्य महावाक्यविशेषस्य आरम्भे आरम्भप्राक्काले आद्यकृतिरूपस्य आरम्भस्य मङ्गलाचरणाधिकरणत्वबाधादियं सप्तमी तत् प्रयोजनञ्च मङ्गलारम्भयोरव्यवहितत्वबोधः। केचित् तु आरम्भे भाविनि सतीत्यर्थ इत्याहुः तन्न तथा सति आरम्भप्राक्काल इति पदादिव आरम्भे भाविनि सतीत्यस्मादारम्भप्रागभावसमानकालीनत्वस्यैव बोधः न तु सदाचारपरम्परापरिप्राप्तस्य आरम्भाव्यवहितप्राक्कालीनत्वस्य, न च कालान्तरीणमङ्गलाचरणस्यापि अदृष्टद्वारा प्रकृतोपयोगित्वायोगित्वयोरव्यवहितत्वबोधोऽकिञ्चित्कर इति वाच्यं तस्य प्राबल्येनात्यन्तोपयोगित्वकल्पनात्। निर्विघ्नेन प्रतिबन्धकीभूतदुरदृष्टाभावद्वारा प्रारिप्सितस्य चिकीर्षाविषयस्य परिसमाप्तिः चरमवर्णपर्यन्तानुष्ठानं तत्कामो ग्रन्थकृदिति शेषः। वाङ्मयानि अष्टादशविद्याः काव्यकलाकामशास्त्रादीनि च तदधिकृततया तदध्यक्षतया वाग्देवतायाः सरस्वत्याः साम्मुख्यम् आराधनेन स्वार्थसाधनानुकूलत्वमाधत्ते करोति। अत्र प्रथमपुरुषाभिधानं रामः स्वयं याचते कौवल्को रावण इत्यादिवत्

मङ्गलाचरणम्।

**शरदिन्दुसुन्दररुचिश्चेतसि सा मे गिरां देवी।**
**अपहृत्य तमः सन्ततमर्थानखिलान् प्रकाशयतु १ (ख)**

---

काल्पनिक भेदमुररीकृत्य, अन्यथा अस्मत्कर्तृत्वेन उत्तमपुरुष एव स्यात्। न च वृत्तिकारकारिकाकारयोर्वास्तवो भेद इति वाच्य रसस्वरूप निरूपयिष्याम इति प्रतिज्ञातुर्वृत्तिकारस्य कारिकया रसनिरूपणमसङ्गतं स्यात्।

(ख) शरदिन्द्विति। सा वेदागमप्रसिद्धा सह एन विष्णुना वर्त्तमाना वा (अकारो विष्णुरुद्दिष्ट इत्येकाक्षरकोषात्) गिरा देवी सरस्वती मम चेतसि वर्त्तमाना सती तमोऽज्ञानमपहृत्य विनाश्य अखिलान् सर्वान् अर्थान् वाच्यलक्ष्यतात्पर्य्यव्यङ्ग्यरूपान् सन्तत यदा यदा अर्थज्ञानमुपयुक्तं तदैव प्रकाशयतु प्रकटीकरोतु। यद्वा सन्ततमिति तम इत्यस्य विशेषण निविडमिति तदर्थ। सा कीदृशी? शरदिन्दोरिव सुन्दरी अतिविशदा रुचिर्दीप्तिर्यस्या सा तथा। शरदिन्दुरपि तम ध्वान्त विनाश्य अर्थान् वस्तूनि प्रकाशयतीत्युपमा। वाङ्मयाधिकृतत्वव्याख्यापनाय गिरां देवीत्यनेन सरस्वत्या उपन्यास। अथवा देवी दुर्गा मम गिरामर्थान् चेतसि व्युत्पित्सूना हृदि प्रकाशयतु। सा कीदृशी? शरदिन्दुसुन्दर. शिव. तव रुचिरभिलाषो यस्या: सा तथा अन्यत् समानम्। एतत्पक्षे वाङ्मयाधिकृततयेति कर्तृविशेषणम्। वाङ्मयाधिकृत. ग्रन्थकृदिति तदर्थ। अवाग्देवताया इति गोपनीयदेवताया इत्यर्थ· इष्टदेवताया गोपनीयत्वमागमे सुप्रसिद्धम्। अत्र सेत्यनेन सरस्वत्या श्रवण चेतसि वर्त्तमानेत्यनेन मननं ध्यानञ्च लभ्यते इति त्रिविध सरस्वत्याराधनमवोक्तं तस्य विघ्नाभावद्वारा प्रारिप्सितपरिसमाप्तिरेव फल न तु विशिष्ट यथा निष्पापस्य ब्रह्मलोकप्राप्तिरिव सन्ध्योपासनस्य फलं न तु पापक्षयपूर्वकब्रह्मलोकप्राप्ति:। तदुक्तं, "सन्ध्यामुपासते ये तु नियत शंसितव्रता.। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्" इति। यद्वा निर्विघ्नेन इति विघ्नाभावद्वारेत्यर्थम्। अभावश्च यथायथमत्यन्ताभावो ध्वंसश्च ग्राह्य: अत्यन्ताभावपक्षे अन्वयव्यतिरेकानुविधायित्वरूप जन्यत्वमादाय व्यापारत्वनिर्वाह: एतन्मते सर्वत्रैव विशिष्टफलवत्त्वमित्यर्थसम्भव इति सर्वं समञ्जसम्।

अस्य ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलवत्त्वमिति (ग)।

काव्यफलान्याह।

**चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।**
**काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ॥२॥ (घ)**

चतुर्वर्गफलप्राप्तिर्हि काव्यतो रामादिवत् प्रवर्त्तितव्यं न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशद्वारेण सुप्रतीतैव (ङ)। उक्तञ्च—

---

(ग) प्रकृतग्रन्थस्य प्रयोजनवत्त्वं दर्शयति अस्येति प्रक्रम्यमाणस्येत्यर्थः। काव्याङ्गतया काव्यफलसाधनेऽप्रधानकारणतया काव्यफलैरिति धान्येन धनवान् इतिवत् अभेदे तृतीया काव्यफलाभिन्नफलवत्त्वमित्यर्थः। यथा दर्शपौर्णमासाङ्गानां प्रयाजादीनां दर्शपौर्णमासफलेनैव फलवत्त्वं तथास्यापीति भावः। ननु प्रयाजादीनामङ्गापूर्वजननद्वारा परमापूर्वे प्रत्युपकारः सम्भवतीति तत्र तथास्तु प्रकृते तु शास्त्रस्य काव्यगुणदोषादिज्ञापनोपक्षीणत्वेन चतुर्वर्गे प्रत्युपकारासम्भवात् कथं तत्साधनत्वमिति चेन्न काव्यं हि स्वरूपं न कारणं किन्तु कृतिज्ञप्त्यन्यतरविषयतया इति अत्रास्योपकारः सम्भवतीति न कापि विप्रतिपत्तिः। ननु अस्य चतुर्वर्गातिरिक्तकाव्यगुणादिज्ञानरूपफलसत्त्वात् कथमेवकारार्थान्वय इति चेन्न फलवत्त्वमित्यत्र वतोः प्रशस्तार्थत्वेनोत्कृष्टफलपरत्वात्। एवञ्च चतुर्वर्गफलसाधनत्वज्ञापनेन अत्र लोकानां साभिनिवेशप्रवृत्तिर्भविष्यतीति भावः।

(घ) काव्यफलप्रदर्शनपुरःसरं काव्यस्वरूपनिरूपणं प्रतिजानीते चतुर्वर्गेति। चतुर्वर्गो धर्मार्थकाममोक्षा एव फलं सुखात् अनायासात् अल्पधियां सुकुमारमतीनाम् अपिना परिणतबुद्धीनाञ्च एवकारेण वेदशास्त्रव्यवच्छेदः यत इति काव्यादित्यस्य विशेषणम्। एवञ्च प्राचीनसम्मतं नीरसकाव्यं चतुर्वर्गासाधनत्वात् न निरूपणीयमिति फलितम्। तेन आयासं विना चतुर्वर्गसाधनत्वेन तस्य काव्यस्य स्वरूपमिति स्वम् असाधारणं रूपम् इतरव्यावर्त्तको धर्मः लक्षणमित्यर्थः निरूप्यते ज्ञाप्यते।

(ङ) काव्यस्य चतुर्वर्गसाधनत्वमुपपादयति चतुर्वर्गफलप्राप्तिर्हीति। रामादिवत् रामादिनेव चतुर्वर्गकामेन पित्राज्ञापरिपालनादौ प्रवर्त्तितव्यं न राव-

"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्त्तिं प्रीतिञ्च साधुकाव्यनिषेवणमिति"। (च)

किञ्च। काव्यात् धर्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना। एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग् भवति इत्यादिवेदवाक्येभ्यश्च सुप्रसिद्धैव। अर्थप्राप्तिश्च प्रत्यक्षसिद्धा। कामप्राप्तिश्चार्थद्वारैव। मोक्षप्राप्तिश्चैतज्जन्यधर्मफलाननुसन्धानात्। मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायकत्वाच्च (छ)। चतुर्वर्गप्राप्तिर्हि वेदशास्त्रेभ्यो

---

णादिवदिति रावणादिनेव परदारहरणादौ न प्रवर्त्तितव्यम् इत्यर्थः। कृत्य विहितं कर्म अकृत्य निषिद्धं कर्म तयोः प्रवृत्तिनिवृत्तौ यत्नविशेषौ तयोरुपदेशस्तज्जनकज्ञान स एव द्वार व्यापारः तेन। तथाहि काव्यात् विहितकर्मणि कर्त्तव्यताज्ञान ततस्तत्र प्रवृत्तिः तदनुष्ठानं ततो धर्मः तस्मादर्थकामौ धर्मादर्थश्च कामश्चेत्यादिस्मरणात्। विहितकर्मफलत्यागात् निषिद्धाननुष्ठानाच्चापवर्गः। "मुक्तः कर्मफलत्यागात् शान्तिमाप्नोति नैष्ठिकीम्" इति स्मरणात् व्यापारे व्यापारिणो नान्यथासिद्धिरिति न्यायेन काव्यस्य धर्मादिजनकत्वमिति भावः।

(च) अत्र प्राचीनसंवादमाह उक्तञ्चेति। धर्मार्थकाममोक्षेषु तदुपायेषु वैचक्षण्य विशिष्टज्ञानं कलासु नृत्यगीतादिचतुःषष्टिप्रकारासु साधुकाव्यस्य निषेवण करणं ज्ञानञ्च।

(छ) ननु काव्य कर्त्तव्यत्वाकर्त्तव्यत्वज्ञानद्वारा कृत्याकृत्यप्रवृत्तिनिवृत्तौ प्रति कारणमास्तां धर्मादिं प्रति तु अन्यथासिद्धमेवेत्यत आह किञ्चेति काव्यादिति प्राप्तयन्तचतुष्टयेनान्वेति। स्तवो गुणज्ञापनम् आदिना विष्णुजन्मादिज्ञापन तद्द्वारेत्यर्थः एवञ्च काव्यान्तरमफलमत आह एक इति एकोऽपीत्यर्थः। सुप्रयुक्तः रसवत्तया रचितः सम्यक् ताद्रूप्येण ज्ञातः अत्र वाकारो बोद्धव्यः इत्यादिवाक्येभ्यः। सत्काव्यकृतिश्रमग्रन्थतरस्य धर्मसाधनत्व श्रौतमिति भावः। प्रत्यक्षसिद्धेति धनि-स्तवादिना कवीनां धनप्राप्तिर्लोकप्रसिद्धैवेत्यर्थः। कामप्राप्तिश्चेति काम्यते इति कामो विषयभोगः तस्य प्राप्तिः। "धर्मादर्थस्ततः कामः कामात् सुखसमुन्नतिः" इति स्मरणात्। एतज्जन्येति काव्यजन्येत्यर्थः। धर्मस्याननुसन्धानादेव तदधीनोत्पत्तिकयोरर्थकामयोरुत्पत्तिसम्भावनैव नास्तीति तयोरनुपादानम्।

नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते। परमानन्द-सन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव। ननु तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु काव्येषु किमिति यत्नः करणीय इत्यपि न वक्तव्यम्। कटुकौषधोपशमनीयस्य रोगस्य सितशर्कोपशमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधीयसी न स्यात्? किञ्च (ज)। काव्यस्योपादेयत्वमाग्नेयपुराणेऽप्युक्तम्।

"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।

---

यदा धर्मप्रधानं फलं तेन अर्थकामयोरपि संग्रहः अनन्तरमानादपारमाधिकत्वं न साध्यत्वनिर्द्धारणात्। मोक्षोपयोगिवाक्यमुपनिषदादि तत्र व्युत्पत्त्याधायकत्वात् दृढतरज्ञानजनकत्वात्।

(ज) ननु काव्यादुपनिषदादिव्युत्पत्तिस्ततस्तदर्थज्ञानं ततो मोक्षप्राप्तिरित्यन्यथासिद्धिताद्वस्थ्यमेवेति चेत् सत्यम् उपनिषदादेरतोऽपि मोक्षप्राप्तिरित्यभिप्रायेणास्योत्थापनम्। काव्यादेवेति एवकारोऽव्यवच्छेद्यं दर्शयति चतुर्वर्गेति वेदाः ऋग्यजुःसामाथर्वाख्याः शास्त्राणि मीमांसादीनि। दुःखादेवेति सुखव्यवच्छेदः परिणतबुद्धीनां वेदादिभ्यो धर्मप्राप्तिः सुखान्न भवति। सुकुमारमतीनान्तु दुःखादपि न भवतीति भावः। परमानन्दसन्दोहः रसास्वादसुखपरम्परा। अपिना परिणतबुद्धिसमुच्चयः। तथाच रसास्वादनार्थमपि प्रवर्त्तमानस्य कृत्याकृत्योपदेशपर्यवसन्नं सत्काव्यं चतुर्वर्गमपि जनयतीति भावः। ननु चतुर्वर्गार्थं प्रेक्षावन्तः वेदादीननादृत्य किमित्यनाप्तवाक्ये काव्ये प्रवर्त्तन्तामित्यभिप्रायेण शङ्कते नन्विति। तर्हि काव्यस्य चतुर्वर्गसाधनत्वस्वीकारे प्रयत्नश्चतुर्वर्गार्थमुद्यमः। काव्यात् तावत् रसास्वादो दुःखं विना धर्मादिप्राप्तिश्च भवति वेदादिभ्यस्तु दुःखेनैव धर्मादिप्राप्तिरेवेति वेदाद्यपेक्षया काव्यादरः इति सर्वं समीचीनम्। एतदेव लौकिकदृष्टान्तेन द्रढयति कटुकेति। कटुकेति तिक्ताद्युपलक्षणं सितशर्करा अतिशुभ्रगुडविकारविशेषः तया उपशमनीयत्वे प्रतिकार्य्यत्वे। ततश्च काव्यस्य अनाप्तवाक्यत्वेऽपि स्मृतिसदाचारवत् वेदानुमापकत्वेन प्रामाण्यमवगम्यमिति भावः। काव्यस्य सयौक्तिकमुपादेयत्वमुपपाद्य वाचनिकं तदुपपादयति किञ्चेति।

कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभेति" ॥ (झ)

त्रिवर्गसाधनं नाट्यमिति च विष्णुपुराणे (ञ)।

"काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च।

शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मन इति" ॥ (ट)

तेन हेतुना तस्य काव्यस्य स्वरूपं निरूप्यते। एतेनाभिधेयञ्च प्रदर्शितम्। (ठ)

तत् किं स्वरूपं तावत् काव्यमित्यपेक्षायां कश्चित् "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापीति" एतच्चिन्त्यम् (ड)। तथाहि यदि दोषरहितस्यैव काव्यत्वाङ्गीकारस्तदा—

---

(झ) नरत्वमिति। लोके जगति नरत्वं मानवजन्म दुर्लभम् अशीतिलक्षयोनिभ्रमणान्ते तस्याधिगमादिति भाव। तत्र नरत्वे विद्या शास्त्रज्ञानं सुदुर्लभा अतिदुष्प्रापा। तत्र विद्यायामपि इत्यर्थः कवित्वं काव्यरचयितृत्वं दुर्लभं दुष्प्रापम्। यदि कोऽपि विद्वान् कथञ्चित् एकं द्वौ वा श्लोकौ रचयितुं शक्नोति किन्तु काव्यग्रन्थं प्रणेतुं नेत्याह शक्तिरिति। शक्तिः सामर्थ्यं काव्यकरणज्ञानेषु इति भावः। सुदुर्लभा अतिदुरापेत्यर्थः। ततश्च बहुतरपुण्यसापेक्षता काव्यशक्तेरिति फलितम्।

(ञ) त्रिवर्गसाधनमिति। त्रयाणां वर्गः धर्मार्थकामा इत्यर्थः तस्य साधनं लाभोपाय इत्यर्थः नाट्यम् अभिनेयं नाटकादि इति चेति उक्तमिति पूर्वेणान्वेति।

(ट) पुनश्च काव्यस्योपादेयत्वमाग्नेयपुराणप्रामाण्यात् द्रढयति काव्यालापा इति। ये केचित् काव्यालापाः सरसशब्दार्थव्याहाराः अखिलानि समग्राणि गीतकानि सङ्गीतयः विद्यन्ते इति शेषः एते शब्दमूर्त्तिधरस्य वेदमयस्य महात्मनः विष्णोः नारायणस्य अंशाः स्वरूपविशेषा इत्यर्थः।

(ठ) तेन हेतुना चतुर्वर्गफलसाधनत्वेनेति भावः। अभिधेयञ्च अस्य ग्रन्थस्य चतुर्वर्गफलप्राप्तिरित्यनेन अभिहित चकारात प्रयोजनसम्बन्धावपीति भाव सम्बन्धश्चात्र प्रयोजनाभिधेययोः कार्य्यकारणभावरूप इति।

(ड) तदिति। अदोषौ वक्ष्यमाणदोषवर्जितौ सगुणौ वक्ष्यमाणगुणसमन्वितौ क्वापि पुनः अनलङ्कृती अलङ्कारशून्यौ वा अस्फुटालङ्कारौ शब्दार्थौ

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः? (ढ)

अस्य श्लोकस्य विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात् प्रत्युत ध्वनित्वेनोत्तमकाव्यताऽस्याङ्गीकृता तस्मादव्याप्तिलं-

---

शब्दस्य अर्थस्य तौ अर्थविशिष्टशब्द इति भावः तत् काव्यमित्यर्थः। केचित्तु शब्दार्थोभयपर्य्याप्तत्वं काव्यस्येत्याहुः, तन्न, तथा सति शब्दमात्रप्रत्यक्षत्वे काव्यं शृणोमीति न प्रयुज्येत व्यासज्यवृत्तिधर्मस्य लौकिकप्रत्यक्षे स्वाश्रयप्रत्यक्षस्य कारणत्वात्। एतत् लक्षणमिति यावत चिन्त्यं विचार्य्यं दूष्यमिति यावत्।

(ढ) न्यक्कार इति। रावणोक्तिरियम्। मे मम यत् अरयः शत्रवः वर्त्तन्ते इति शेषः, अयमेव अरिसद्भाव एव न्यक्कारः निकारः त्रिलोकाधिपतेर्विजितसर्वारेः शत्रुसद्भावस्य अनादरातिशयप्रतिपादनाय न्यक्कारत्वेन आरोपः। तत्रापि तेषु अरिषु सत्स्वपि असौ रामः तापसः तपस्विमात्रकस्य मम अरिरयमिति द्वितीयो न्यक्कार इति शेषः। द्वेषातिशयाख्यापनाय रामस्य अदःशब्देन निर्देशः, न तु नाम्नेति बोध्यम्। सोऽपि तथाविधोऽपि अत्रैव लङ्कायामेव न तु दूरे इति शेषः, राक्षसकुलं निहन्ति न तु निभृत कुत्रापि अवतिष्ठते नापि द्वि त्रि राक्षसान् नाशयति येन क्षमा स्यादिति भावः। रावणः जीवति अहो आश्चर्य्यम् एतादृशपरिभवेऽपि रावणस्य जीवनमसम्भवमिति भावः"। प्रबोधितवता प्रबुद्धेन बुधिर बोधने इत्यस्य भौवादिकस्य रूपमिदम्। यद्वा प्रबोधितं प्रबोधनमस्यास्तीति तथोक्तेन जागरितेनेत्यर्थः, कुम्भकर्णेन किम्? न किमपि कार्य्यं साधितमिति भावः। शक्रजितं यः शक्रं जितवान् तं मेघनादमित्यर्थः धिक् धिक् इन्द्रजेतापि न किमपि कार्य्यं साधितवान् इति पुनः पुनर्निन्दामि इत्यर्थः। स्वर्ग एव ग्रामटिका क्षुद्रग्रामः अल्पार्थे टीप्रत्ययः। तस्या विलुण्ठनेन वृथा उच्छूनैः बलदर्पितैः इत्यर्थः एभिः भुजैः बाहुभिः विशत्या इति शेषः किम्? निष्प्रयोजना इमे बाहव इत्यर्थः। शार्दूलविक्रीडित वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति लक्षणात्।

(ण) विधेयाविमर्शेति। विधेयस्य साध्यस्य अविमर्शः अप्राधान्येन निर्देशः

क्षणदोषः। ननु कश्चिदेवांशोऽत्र दुष्टो न पुनः सर्वोऽपीति चेत्? तर्हि यत्रांशे दोषः सोऽकाव्यत्वप्रयोजको यत्र ध्वनिः स उत्तमकाव्यत्वप्रयोजक इत्यंशाभ्यामुभयत आकृष्यमाणं काव्यमकाव्यं वा किमपि न स्यात्। न च किञ्चिदेवांशं काव्यस्य दूषयन्तः श्रुतिदुष्टादयो दोषाः; किं तर्हि सर्वमेव काव्यम्। तथाहि काव्यात्मभूतस्य रसस्यानपकर्षकत्वे तेषां दोषत्वमपि नाङ्गीक्रियते। अन्यथा नित्यदोषानित्यदोषत्व-व्यवस्थापि न स्यात् (ग)। यदुक्तं ध्वनिकृता।

---

स एव दोषः तेन दुष्टतया दोषयुक्ततया। अत्र श्लोके विधेयस्य न्यक्कारस्य अनुवाद्य-मनुक्त्वैव न विधेयमुदीरयेदित्युक्तनयेन रचनावैपरीत्यात् अप्राधान्येन निर्देशः तथा स्वर्गग्रामटिकेत्यत्र वृथात्वं विधेयं समासे गुणीभावात् अनुवाद्यताप्रतीतिकरं इति द्विविधो विधेयाविमर्शो द्रष्टव्यः। इष्टापत्तौ दोषमाह प्रत्युतेति। प्रत्युत वैप-रीत्ये ध्वनित्वेन वाच्यार्थादधिकचमत्कारिव्यङ्ग्यवत्तया वाच्यातिशयिनि व्यङ्ग्ये ध्वनि-स्तत् काव्यमुत्तममिति लक्षणात् अस्य श्लोकस्य उत्तमकाव्यता अङ्गीकृता स्वीकृता। अत्र ईर्ष्याजन्यस्वावमाननेन रूपस्य निर्वेदाख्यस्य सञ्चारिभावस्य व्यङ्ग्यतया ध्वनित्व-मवगन्तव्यम्। तस्मादुक्तदोषसद्भावेऽपि काव्यत्वाङ्गीकारात् अव्याप्तिः लक्ष्ये लक्षणा-गमनरूपा लक्षणस्य निरुक्तकाव्यलक्षणस्य दोषः। अंशाभ्याम् उभयतः दुष्टादुष्ट-भागाभ्याम् आकृष्यमाणं व्यावर्त्यमानम् इदं न्यक्कार इति पद्यम्। श्रुतिदुष्टादयः आदिशब्दात् अपुष्टत्वादिग्रहणम्। तथाहि तमेवार्थमवगच्छ इत्यर्थः। काव्यात्म भूतस्य काव्यस्य रसात्मकवाक्यस्य आत्मभूतस्य आत्मतां प्राप्तस्य रसस्य वक्ष्यमाणस्य शृङ्गारादिरूपस्य अनपकर्षकत्वे अपकर्षानाधायकत्वे तेषां श्रुतिदुष्टत्वादीनां दोषत्व-मपि दोषावहत्वमपि न अङ्गीक्रियते। ननु दोषाः सर्वदैव दोषावहाः, ते कदाचित् न दोषावहा इति कथमित्याशङ्क्याह अन्यथेति। अन्यथा वैपरीत्ये इत्यर्थः। नित्यदोषाः च्युतसंस्कारतादयः अनित्यदोषाः श्रुतिदुष्टत्वादयः तेषां भावः तस्य व्यवस्था निर्द्धारणं न स्यात् न भवेत्। रसापकर्षकत्वमात्रेणैव श्रुतिदुष्टत्वादयो दोषतामावहन्ति तदा तु रसं नापकर्षयन्ति वा उत्कर्षयन्ति तदा ते न दोषाः। तस्मात् ते अनित्यदोषाः। च्युतसंस्कारतादयस्तु सर्वदैव रसमपकर्षयन्तीति ते नित्यदोषा इति भावः। अत्र तु

"श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः" ॥ (त)

किञ्चैवं काव्यं प्रविरलविषयं निर्विषयं वा स्यात्। सर्वथा निर्दोषस्यैकान्तमसम्भवात्। ननु ईषदर्थे नञः प्रयोग इति चेत् तर्हि ईषद्दोषौ शब्दार्थौ काव्यमित्युक्ते निर्दोषयोः काव्यत्वं न स्यात्। सति सम्भवे ईषद्दोषाविति चेत् एतदपि काव्यलक्षणेऽवाच्यम्। रत्नादिलक्षणे कीटानुवेधादिपरिहारवत्। न हि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशाः किन्तु उपादेयतारतम्यमेव कर्त्तुं; तद्वदत्र श्रुतिदुष्टादयोऽपि काव्यस्य (थ)। उक्तञ्च।

विधेया विमर्शदोष रसापकर्षकतया सर्वमेव पद्य दूषयन्तीति नास्याश्रिकतेति फलितम्। उक्तमर्थं प्रमाणेन दृढयति यदुक्तमिति।

(त) श्रुतिदुष्टादय इति। ये च श्रुतिदुष्टादय. अनित्या असर्वकालिका दोषा दर्शिता ते ध्वन्यात्मनि व्यङ्ग्यप्रधाने शृङ्गारे एव हेया त्याज्या इति उदाहृता उक्त एवकारो अन्यव्यवच्छेदक' तेन रौद्रवीरादिरसे उद्धतस्य वक्तृ श्रुतिकट्वादिक गुण एव एतच्च उत्तरत्र स्फुटीकृत ग्रन्थकृता।

(थ) ननु शब्ददोषाणा तेषा रसापकर्षका दोषा इति दोषसामान्यलक्षणप्रामाण्यार्थं परम्परया रसदूषकत्व' त्वयापि वाच्यमत आह किञ्चैवमिति। एवं श्रुतिकट्वादीनां परम्परया दोषत्वाङ्गीकारे काव्य भवदुक्तकाव्यलक्षण प्रविरलविषय स्वल्पलक्ष्यम् अवेष्टापत्तौ निर्विषयमिति निर्लक्ष्यमित्यर्थ। एकान्तमत्यन्तम्। ननु यदि सर्वत्रैव दोष. सम्भवति तदा ईषद्दोषौ शब्दार्थौ काव्यमिति विवक्षणीयमित्यभिप्रायेणाह ननु ईषदर्थे नञ इति। यदि निपुणतरकविना निर्दोष काव्य रचयितु शक्यते तदा तत्राव्याप्तिं दर्शयति तर्हीति नञ ईषदर्थस्वीकारे इत्यर्थ.। सति सम्भवे इति ततश्च सदोषाणा मध्ये ईषद्दोषावेव शब्दार्थौ काव्यमित्यर्थकरणे बलवद्दोषरहिताविल्यर्थं सम्पद्यते इति एतद्दूषयति एतदपीति बलवद्दोषरहितत्वमपीत्यर्थः; रत्नादीति आदिपदेन सुवर्णादिग्रहणं कीटानुवेधादीत्यादिपदेन मलिनत्वादिपरिग्रह. परिहारो राहित्यम्। दृष्टान्त' विवृण्वन् प्रकृतमुपपादयति न हीति। रत्नस्य

"कीटानुविद्धरत्नादिसाधारण्येन काव्यता।
दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः॥ (द)

किञ्च। शब्दार्थयोः सगुणत्व-विशेषण-मनुपपन्नम्। गुणानां रसैकधर्मत्वस्य "ये रसस्याङ्गिनो धर्माः शौर्य्यादय इवात्मनः" इत्यादिना तेनैव प्रतिपादितत्वात्। रसाभिव्यञ्जकत्वेन उपचारत उपपद्यत इति चेत् तथाप्ययुक्तम्। तथाहि, तयोः काव्यस्वरूपत्वेन अभिमतयोः शब्दार्थयोः रसोऽस्ति न वा? नास्ति चेद् गुणवत्त्वमपि नास्ति, गुणानां तदन्वयव्यतिरेकानुविधायित्वात्। अस्ति चेत्? कथं नोक्तं रसवन्ताविति विशेषणम्। गुणवत्त्वान्यथानुपपत्त्या एतल्लभ्यत इति चेत्? तर्हि सरसावित्येव वक्तुं युक्तं न सगुणाविति। न हि प्राणिमन्तो देशा इति वक्तव्ये "शौर्य्यादिमन्तो देशाः" इति केनापि उच्यते। ननु शब्दार्थौ सगुणावित्यनेन गुणाभि-

---

रत्नादेः रत्नत्वं रत्नादित्वं व्याहन्तुं व्यावर्त्तयितुम् ईशाः समर्थाः। उपादेयतारतम्यम् उत्कृष्टाद् वैलक्षण्यमपकर्षमिति यावत् तद्वत् अत्र काव्ये वर्त्तमाना अपि श्रुतिदुष्टादयः काव्यस्य काव्यत्वं व्याहन्तुं नेशाः किन्तु उपादेयतारतम्यमेव कर्त्तुमित्यनेनान्वयः।

(द) अत्रार्थे प्रमाणमुपदर्शयति उक्तमिति। कीटानुविद्धं कीटक्षतं यं रत्नादिं तस्य साधारण्येन साम्येन यत्र स्फुटः सुव्यक्तः रसादीनाम् आदिपदेन रसाभासादयो गृह्यन्ते। अनुगमः उपालम्भः तत्र दुष्टेष्वपि काव्यता मता अङ्गीकृता अन्यत्रेति पाठे अदुष्टेषु इति तथैवार्थः। तथाचोक्ताव्याप्तितादवस्थ्यमेवात्र बोध्यम्।

(ध) इत्थम् अदोषाविति शब्दार्थविशेषणं दूषयित्वा सगुणाविति विशेषणं दूषयति किञ्चेति। न हि शब्दार्थेषु गुणानामवस्थानं रसेष्वेव तदवस्थानस्य स्वयं ये रसस्याङ्गिन इत्यनेन प्रतिपादितत्वादिति भावः। रसाभिव्यञ्जकत्वेन रसादिप्रकाशकत्वेन उपचारतः परम्परया उपपद्यते युज्यते सगुणत्वविशेषणमिति शेषः। तदन्वयेति तस्य रसस्य अन्वयः तत्सत्त्वे तत्सत्ता व्यतिरेकः तदसत्त्वे तद-

व्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्यावित्यभिप्राय इति चेत्? न। गुणाभिव्यञ्जकशब्दार्थवत्त्वस्यापि काव्ये उत्कर्षमात्राधायकत्वं न तु स्वरूपाधायकत्वम् (ध)। उक्तं हि "काव्यस्य शब्दार्थौ शरीरं रसादिश्चात्मा गुणाः शौर्य्यादिवद् दोषाः काणत्वादिवद् रीतयोऽवयवसंस्थानविशेषवत् अलङ्काराः कटककुण्डलादिवदिति"। एतेन "अनलङ्कृती पुनः क्वापीति" यदुक्तं तदपि परास्तम्। अस्य ह्यर्थः "सर्वत्र सालङ्कारौ क्वचित्तु अस्फुटालङ्कारावपि शब्दार्थौ काव्यमिति"। तत्र सालङ्कारशब्दार्थयोरपि काव्ये उत्कर्षमात्राधायकत्वात्। एतेन "वक्रोक्तिः काव्यजीवितमिति" वक्रोक्तिजीवितकारोक्तमपि परास्तम्। वक्रोक्तेरलङ्काररूपत्वात् (न)। यच्च क्वचिदस्फुटालङ्कारत्वे उदाहृतम्।

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपाः
ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।

---

सत्त्वा तयोरनुविधायित्वात् सदसद्भावशालित्वात्। अय भावः यत्र यत्र गुणोऽस्ति तत्र तत्र रसोऽस्तीति अन्वय। यत्र यत्र रसो नास्ति तत्र तत्र गुणो नास्तीति व्यतिरेक इति। गुणवत्त्वेति गुणवत्त्वस्य सगुणत्वस्य अन्यथानुपपत्तेः विना रसमस्थितेरित्यर्थ एतत् रसवन्ताविति विशेषणम्। उत्कर्षमात्राधायकत्वम् उत्कर्षमात्रजनकम्। स्वरूपाधायकत्वं स्वस्य रूपं लक्षणं तस्य आधायकत्वं साधकत्वम्।

(न) उक्तमिति। रसादिरित्यादिपदेन रसाभासभावतदाभासभावशान्तिभावोदयभावसन्धिभावशबलत्वादीनां ग्रहणम्। गुणा. माधुर्य्यौजःप्रसादाख्याः वक्ष्यमाणाः। दोषाः श्रुतिदुष्टत्वादयः। रीतय. वैदर्भीगौडीपाञ्चालीलाटीप्रभृतयः। अलङ्काराः अनुप्रासोपमादयः। एतेन वक्ष्यमाणहेतुना परास्तं निराकृतम्। उत्कर्षमात्राधायकत्वात् न तु स्वरूपाधायकत्वमिति शेषः। एतेन उक्तहेतुना वक्रोक्तिः वक्रा विचित्रा उक्तिः वैचित्र्यमित्यर्थः।

सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते" ॥ (प)

---

(प) य इति। रेवातीरे कृतक्रीडतया तत् स्थानं प्रति उत्सुकाया नायिकाया उक्तिरियम्। यः कौमारं हरति विवाहेन अपनयतीति कौमारहरः पतिः स एव वरः अभिमतः एतेन अभिमतस्य पत्युः सत्ता प्रतिपादिता। अत्रापि तत्प्रतिकारकमस्तीत्यत आह ता एवेति। ता एव यासु तत्र क्रीडितं तत्सजातीया इत्यर्थः। उन्मीलिताभिर्विकसिताभिः मालतीभिः पुष्पविशेषैः सुरभयः सौरभवाहिनः प्रगल्भम् ऊढ गतिर्येषां तादृशाः अनुकूलां वहन् वायुरित्यादौ वहधातोर्गमनार्थता प्रसिद्धा। वायुगमनस्य प्रागल्भ्यं मान्द्यम्। कदम्बानिलाः धूलिकदम्बवायवः चैत्रे तस्यैव सद्भावादिति भावः। केचित्तु कदम्बानिलाः कदम्बवनवाताः वनानिलानां प्रौढत्वेन वनवह्निभूतानां मार्गोपलम्भात् उद्दीपकत्वेनाह प्रौढा इति व्याचक्रुः। तन्न, तथात्वे कदम्बपदेनानुधावनस्य निष्प्रयोजनकत्वात् अरण्यानिला इत्यनेनैव तदर्थलाभात् न च मालतीसम्बन्धेनैवानिलानां सौगन्ध्यलाभात् कदम्बसम्बन्धदर्शनं व्यर्थमिति वाच्यं विलक्षणसौगन्ध्यलाभाय तस्य सार्थकत्वात् यथा रमणीकमनीयकपोलतले परिपीतपटीरसैरलसः। अयमञ्चति पञ्चशरानुचरो नवनीपवनीधुवनं पवनः ॥ नवेति नवपुष्पितेत्यर्थः। अत्र चन्दनसम्बन्धेन सौगन्ध्यलाभेऽपि विलक्षणसौगन्ध्यलाभाय कदम्बसम्बन्धवर्णनम्। सा चैव तदवस्थैव अस्मि भवामि वर्त्ते इत्यर्थः। तथापि तादृशसामग्रीसत्त्वेऽपि सुरतव्यापारलीलाविधौ निधुवनव्यापारविधानार्थं रेवायाः नर्मदायाः रोधसि तटे वेतसीतरुतले चेतः चित्तं समुत्कण्ठते तत्रैव विहर्त्तुं समभिलषतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्। एतत् अस्फुटालङ्कारत्वस्य उदाहरणं चिन्त्यं विचार्य्यं दूष्यमित्यर्थः। अत्र हीति विभावना विना हेतुं कार्य्योत्पत्तिरूपा विशेषोक्तिः सति हेतौ फलाभावरूपा ते मूलं यस्य तादृशस्य ताभ्यां निरूपितस्य इत्यर्थः सन्देहसङ्करालङ्कारस्य किमत्र विभावना भवति वा विशेषोक्तिरित्येवंरूपस्य अलङ्कारस्य स्फुटत्वं सुव्यक्तत्वं तथाहि उत्कण्ठायाः पत्याद्यभावरूपकारणं विनापि उत्कण्ठारूपकार्य्यकथनात् किमियं विभावना, वा उत्कण्ठाभावस्य कारणस्य पत्यादेः सत्त्वेऽपि फलरूपस्य उत्कण्ठाभावस्य अकथनात् विशेषोक्तिरिति सन्देहः स्फुटतया प्रतिभाति। केचित्तु रेवातीरे कृतसङ्केतायाः नायिकायाः स्वगृहे सखीं प्रत्युक्तिरियं यः कौमारे अनूढावस्थायां हरतीति कौमारहरः

एतच्चिन्त्यम् । अत्र हि विभावनाविशेषोक्तिमूलस्य सन्देहसङ्करालङ्कारस्य स्फुटत्वम् । एतेन—

"अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिञ्च विन्दति" ॥ (फ)

इत्यादीनामपि काव्यलक्षणत्वमपास्तम् । यत्तु ध्वनिकारेणोक्तं "काव्यस्यात्मा ध्वनिरिति" तत् किं वस्त्वलङ्काररसादिलक्षणस्त्रिरूपो ध्वनिः काव्यस्यात्मा ? उत रसादिरूपमात्रो वा ? तत्र नाद्यः, प्रहेलिकादावतिव्याप्तेः । द्वितीयश्चेत् ओमिति ब्रूमः (ब) । ननु यदि रसादिमात्ररूप एव ध्वनिः काव्यस्यात्मा तदा—

"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ ! रत्तिअंधअ ! सेज्जाइं मह णिमज्जहिसि" ॥

इत्यादौ वस्तुमात्रव्यङ्ग्यत्वे कथं काव्यव्यवहारः ? इति चेन्न अत्रापि रसाभासवत्तयैव ब्रूमः । अन्यथा "देवदत्तो ग्रामं

---

जार इत्यर्थं स एव हि वरं विलक्षणरतिसमर्थतया अभिमत इत्यर्थं एवञ्चात्र रसस्य प्रधानत्वान्नालङ्कारतेति काव्यप्रकाशकारोक्तौ रसस्य रसाभासस्य इत्यर्थः. रतेरुपपतिगोचरत्वेन रसाभासस्यैव सम्भवादित्याहु तन्न व्यञ्जकाभावादुपपतेरवाभावात् वक्तृवैशिष्ट्यमेव व्यञ्जकमिति चेन्न वक्तुस्तादृशवैशिष्ट्ये प्रमाणाभावात् प्रत्युत स एव हि वर इत्यनेन उपपतिरतेरत्यन्तासम्भवित्वमुक्तम् । एतेन उक्तेन हेतुना ।

(फ) अदोषमिति । अदोष दोषशून्यं गुणवत् सगुणम् अलङ्कारैरलङ्कृतं सालङ्कारमित्यर्थं रसान्वित काव्यं कुर्वन् कविः कीर्त्तिं यशः प्रीतिम् आनन्दञ्च विन्दति लभते । इत्यादीना वचनानामित्यर्थ. । एतेन निर्दोषस्य सगुणालङ्कारस्य काव्यस्य प्रशस्तता न तु सदोषादेः काव्यत्वाभाव इति सूचितम् ।

(ब) ध्वनिकारोक्तं दूषयति यत्त्विति । काव्यस्य आत्मा स्वरूपाधायको धर्मविशेष ध्वनि व्यङ्ग्यरूपोऽर्थं इत्यर्थः । प्रहेलिकादौ तरुण्यालिङ्गित कण्ठे नितम्बस्थलमाश्रित. । गुरूणां सन्निधानेऽपि क. कूजति मुहुर्मुहुरित्यादौ इत्यर्थः अत्र किञ्चिदूनजलकलसरूप व्यङ्ग्यम् । ओमिति स्वीकरोमि इत्यर्थ. ।

याति” इति वाक्ये तदभ्रत्यस्य तदनुसरणरूपव्यङ्ग्यावगतेरपि काव्यत्वं स्यात्। अस्त्विति चेत् न। रसवत एव काव्यत्वाङ्गीकारात्। काव्यस्य प्रयोजनं हि रसास्वादसुखपिण्डदानद्वारेण। वेदशास्त्रविमुखानां सुकुमारमतीनां राजपुत्रप्रभृतीना विनेयाना रामादिवत् प्रवर्त्तितव्यं न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेश इति चिरन्तनैरप्युक्तत्वात् (भ)। तथाच आग्नेयपुराणेऽप्युक्तम्।

“वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितमिति”। (म)

---

(भ) अत्ता इति। अत्ता अत्र निमज्जति अत्राहं दिवस एव प्रलोकय। मा पथिक! रात्र्यन्धक! शय्यायामावयोर्निमङ्क्ष्यसीति संस्कृतम्। रात्र्यन्धकत्वेन कथितात्मानं पथिकं प्रति कस्याश्चित् नायिकाया उक्तिरियम्। हे रात्र्यन्धक! पथिक! अत्र अस्मिन् स्थाने अत्ता श्वश्रूः निमज्जति निमग्ना मृतप्राया इति यावत् स्वपितीत्यर्थः, न शङ्काकारणमिति भावः। अत्र अस्मिन् स्थाने अहं शये इति शेषः। दिवसे एव दिनमध्ये एव प्रलोकय प्रकर्षेण पश्य आवयोः श्वश्र्वा मम च इत्यर्थः शय्यायां मा निमङ्क्ष्यसि। अत्र वस्तुमात्रव्यङ्ग्यत्वे स्वशय्यासागमप्रवेशरूपस्य वस्तुन एव व्यङ्ग्यत्वे इत्यर्थः। रसाभासेति रत्युपपतिविषयत्वात् अत्र शृङ्गारो रसः तदाभासत्वेन तद्विशिष्टत्वे चेत्यर्थः। अन्यथा अत्र शृङ्गाराभासरूपव्यङ्ग्यस्य काव्यत्वाधायकत्वास्वीकारे इत्यर्थः, देवदत्त इति तथाच यथाकथञ्चिद् व्यङ्ग्यसद्भावेन काव्यव्यवहार इति भावः। नीरसस्य काव्यत्वास्वीकारे हेतुमाह रसास्वादेति रसास्वादसुखानां पिण्डं समूहः तस्य दानद्वारेण रसानुभवरूपसुखपरम्पराप्रदानेन इत्यर्थः। वेदशास्त्रविमुखानां काठिन्यात् तदर्थग्रहणासमर्थानामिति यावत् सुकुमारमतीनां मृदुबुद्धीनां विनेयानां शिक्षणीयानां राजपुत्रप्रभृतीनां गुणीभूतशब्दार्थेषु रसास्वादप्रधानेषु प्रथमं रसास्वादसुखोद्देशेन प्रवृत्तिस्तत काव्यायानां कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशपरतावधारणमिति भावः। चिरन्तनैः प्राचीनैः पण्डितैः इत्यर्थः।

(म) अत्रार्थे अग्निपुराणप्रमाणत्वेनोपन्यस्यति तथेत्यादि। वाचा वैदग्ध्यं वैचित्र्यं प्रधानं यत्र तस्मिन् एवकारेण अलङ्कारादिव्यवच्छेदः। अत्र काव्ये रस एव जीवितं प्राणभूतः।

व्यक्तिविवेककारेणाप्युक्तं "काव्यस्यात्मनि अङ्गिनि रसादिरूपे न कस्यचिद्विमतिः" इति, ध्वनिकारेणाप्युक्तम् । "न हि कवेरितिवृत्तमात्रनिर्वाहेणात्मलाभः इतिहासादेरेव तत्सिद्धेः" इत्यादि । ननु तर्हि प्रबन्धान्तर्वर्त्तिनां केषामपि नीरसानां पद्यानां काव्यत्वं न स्यादिति चेत् ? न, रसवत्पद्यान्तर्गतनीरसपदानामिव पद्यरसेन प्रबन्धरसेनेव तेषां रसवत्ताङ्गीकारात् । यत्तु नीरसेष्वपि गुणाभिव्यञ्जकशब्दार्थसद्भावाद् दोषाभावादलङ्कारसद्भावाच्च काव्यव्यवहारः स रसादिमत्काव्यबन्धसाम्याद् गौण एव (य) । यत्तु वामनेनोक्तं "रीतिरात्मा काव्यस्य" इति तन्न रीतेः सङ्घटनाविशेषत्वात् । सङ्घटनायाश्च अवयवसंस्थानरूपत्वात् । आत्मनश्च तद्भिन्नत्वात् (र) । यच्च ध्वनिकारेणोक्तम् ।

"अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ" ॥ इति ।

तत्र वाच्यस्यात्मत्वं "काव्यस्यात्मा ध्वनिः" इति स्ववचन-

---

(य) विमतिः विरोधः । इतिवृत्तं नीरसप्रबन्धः तन्मात्रस्य निर्वाहेण रचनेन आत्मलाभः आत्मनः स्ववाचककविसंज्ञाप्राप्तिः चरितार्थतेति यावत् इतिहासादेः भारतादेः । तत्सिद्धेः काव्यपदप्राप्तिसिद्धेः । तर्हि रसवत एव काव्यत्वस्वीकारे, पद्यानामित्युपलक्षणं पद्यं गद्यञ्च मिश्रञ्च तत् त्रिधैव व्यवस्थितमित्यनेन गद्यानामपि काव्यत्वस्वीकारात् । तेषां नीरसपद्यानां स्वव्यञ्जकप्रतिपादकत्वसम्बन्धेन रसवत्त्वमिति भावः ।

(र) वामनोक्तं दूषयति यत्त्विति । काव्यस्य आत्मा रीतिः वैदर्भ्यादिः । तन्न सङ्घटनाविशेषत्वात् रचनाभेदत्वात् सङ्घटनायाः रचनाविशेषस्य च अवयवसंस्थानरूपत्वात् अवयवानां काव्यशरीराणां शब्दार्थानां संस्थानं समुचितस्थानेषु न्यासः तस्मात् ।

विरोधादेवापास्तम् (ल)। तत् किं पुनः काव्यम्? इत्युच्यते।

**वाक्यं रसात्मकं काव्यम्॥ ३॥**

रसस्वरूपं निरूपयिष्यामः। रस एवात्मा साररूपतया जीवनाधायकोऽस्य, तेन विना तस्य काव्यत्वानङ्गीकारात्। रस्यत इति रस इति व्युत्पत्तियोगाद् भावतदाभासादयोऽपि गृह्यन्ते। तत्र रसो यथा—

"शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः
निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता"॥ (व)

---

(ल) पुनश्च ध्वनिकारोक्तं दूषयति यत्त्वेति। सहृदयानां सामाजिकानां श्लाघ्यः प्रशंसनीयः यः अर्थः काव्यस्य आत्मा व्यवस्थितः आत्मत्वेन निर्णीतः तस्य अर्थस्य वाच्यप्रतीयमानाख्यौ अभिधेयव्यङ्ग्यनामानौ उभौ भेदौ स्मृतौ कथितौ इति। तत्र तयोर्वाच्यप्रतीयमानयोर्मध्ये वाच्यस्य अभिधेयस्य अर्थस्य आत्मत्वं स्वरूपाधायकत्वं काव्यस्यात्मा ध्वनिरिति स्वस्य यत् वचनं पूर्वोक्तं तेन विरोधात् विसंवादात् एव अपास्तं निराकृतम्। य एकत्र एकं व्यवस्थाप्य अन्यत्र तदन्यथा व्यवस्थापयति का तस्य वचने आस्थेति भावः।

(व) तत् तस्मात् उक्तमतानां सदोषत्वादित्यर्थः काव्यं किं पुनः किंस्वरूपमिति कथ्यते निरूप्यते वाक्यमिति। रसात्मकं वाक्यं काव्यम्। रस्यते आस्वाद्यते इति व्युत्पत्त्या रसशब्देन रसतदाभासभावतदाभासादयो गृह्यन्ते। रसमुदाहरति तत्रेति। शून्यमिति। वासगृहं शून्यं सख्यादिरहितं विलोक्य दृष्ट्वा बाला नवोढा वधूः शयनात् शय्यायाः किञ्चित् ईषत् पूर्वार्द्धेनेति भावः। शनैः मन्दं निःशब्दं यथा तथा उत्थाय निद्राव्याजं छलनिद्रामुपागतस्य सच्छलं निद्रितस्य पत्युः मुखं सुचिरं बहुक्षणं निर्वर्ण्य दृष्ट्वा विस्रब्धं निःशङ्कं यथा तथा परिचुम्ब्य जातपुलकां सरोमाञ्चां गण्डस्थलीं पत्युरिति शेषः आलोक्य दृष्ट्वा लज्जया नम्रं मुखं यस्याः तादृशी सती हसता प्रियेण पत्या चिरं चुम्बिता। अत्र शय्यायाः किञ्चि-

अत्र हि सम्भोगशृङ्गाराख्यो रसः। भावो यथा महापात्र-राघवानन्दसान्धिविग्रहिकाणाम्।

"यस्यालीयत शल्कसीम्नि जलधिः पृष्ठे जगन्मण्डलं
दंष्ट्रायां धरणी नखे दितिसुताधीशः पदे रोदसी।
क्रोधे क्षत्रगणः शरे दशमुखः पाणौ प्रलम्बासुरो-
ध्याने विश्वमसावधार्मिककुलं कस्मैचिदस्मै नमः" ॥

अत्र भगवद्विषया रतिर्भावः (श)। रसाभासो यथा।

"मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः" ॥

---

दुत्थान प्रियजागरणे झटिति सञ्चरणार्थम् उत्थाने शनैस्त्व जागरणहेतुशब्दानुत्पत्त्यर्थं विश्रब्धत्व निद्रानिश्चयार्थं वेदितव्यम्। शार्दूलविक्रीडित वृत्तम्।

(श) भावमुदाहरति भावो यथेत्यादि। यस्य शल्क मत्स्यत्वक् तस्य सीम्नि एकदेशे जलधि समुद्र' अलीयत लीनोऽभूत्। एतेन मीनावतारो दर्शित। पृष्ठे जगन्मण्डलम् अलीयतेति सर्वत्रान्वेति। एतेन कूर्मावतार प्रोक्त। दंष्ट्राया दशने धरणी पृथ्वी। एतेन वराहावतारः सूचितः। नखे दितिसुताधीश' हिरण्यकशिपुः। एतेन नृसिंहावतार. कथितः। पदे रोदसी द्यावापृथिव्यौ अवालीयेतामिति वचनविपरिणामो बोद्धव्य। एतेन वामनावतार उक्त। क्रोधे क्षत्राणा राजन्याना गणः। एतेन भार्गवावतार' प्रकटितः। शरे दशमुख रावण। एतेन रामावतारः सूचितः। पाणौ भुजे प्रलम्ब, नाम असुरः। एतेन बलावतार' कथित। ध्याने विश्व जगत्। एतेन बौद्धावतार' प्रोक्त। असौ तलवारे अधार्मिकाणा म्लेच्छाना कुलम्। एतेन कल्क्यवतार. कथित। कस्मैचित् अनिर्वचनीय-स्वरूपाय अस्मै देवाय इति शेष' नमः। शार्दूलविक्रीडित वृत्तम्। अत्र भगवान् परमात्मा विषयो यस्यास्तादृशी रति' अनुराग भाव भावशब्दवाच्य सञ्चारिणः प्रधानानि देवादिविषया रतिरुद्बुद्धमात्र. स्थायी च भाव इत्यभिधीयते इति वक्ष्यमाणवचनात्।

अत्र हि सम्भोगशृङ्गारस्य तिर्य्यग्विषयत्वाद्रसाभासः। एवमन्यत् (ष)।

दोषाः पुनः काव्ये किं स्वरूपाः? इत्युच्यन्ते।

**दोषास्तस्यापकर्षकाः॥ ४॥**

श्रुतिदुष्टापुष्टार्थत्वादयः काणत्वखञ्जत्वादय इव देहद्वारेणेव शब्दार्थद्वारेण व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो मूर्खतादय इव साक्षात् काव्यस्यात्मभूतं रसमपकर्षयन्तः काव्यस्यापकर्षका उच्यन्ते। एषां विशेषोदाहरणानि वक्ष्यामः (स)। गुणादयः किंस्वरूपाः? इत्युच्यन्ते।

**उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः॥ ५॥**

---

(ष) रसाभासमुदाहरति रसाभासो यथेत्यादि। मधु इति। द्वौ रेफौ यस्य वाचकशब्दे इति व्युत्पत्त्या द्विरेफो भ्रमर, स्वा प्रिया भ्रमरीमित्यर्थ. अनुवर्त्तमान अनुसरन् सेवमान इति यावत् कुसुममेव एकमद्वितीयं पात्रं तस्मिन् मधु पपौ। कृष्णसारः मृगविशेषश्च स्पर्शेन प्रियस्पर्शसुखेन निमीलिताक्षी मुद्रितनयना मृगीम् अकण्डूयत गात्रकण्डूयनेन सिषेवे इत्यर्थः। उपेन्द्रवज्रावृत्तम्। रसाभासः अनौचित्यप्रवृत्तौ रस इत्यर्थ शृङ्गारस्य उत्तमप्रकृतिकत्वात् अत्र तिर्य्यग्जातिगतत्वेन अनुत्तमप्रकृतिकत्वात् अनौचित्यमिति बोध्यम्। "अनौचित्यप्रवृत्तत्वे आभासो रसभावयो." इति वक्ष्यमाणवचनात्। अन्यत् भावाभासादिकमित्यर्थः।

(स) ननु दोषाणां काव्यलक्षणाघटकत्वात् परिहार्य्यत्वेऽपि तत्स्वरूपज्ञानस्य आवश्यकत्वात्तदाकाङ्क्षामुत्थापयति दोषा इति। तस्य रसस्य अपकर्षकाः लघयितारः। व्यभिचारिभावादेः वक्ष्यमाणानां व्यभिचारिभावानां निर्वेदादीनाम् आदिपदेन शृङ्गारादिरसपरिग्रहः। स्वशब्दवाच्यत्वादय. स्वशब्देन स्वप्रतिपादकशब्देन निर्वेदादिशब्देन वाच्यत्वम् अभिधेयत्वं कथनम् इत्यर्थ, तत्प्रभृतयः।

गुणाः शौर्य्यादिवत्। अलङ्काराः कटककुण्डलादिवत्। रीतयोऽवयवसंस्थानविशेषवत्। देहद्वारेणेव शब्दार्थद्वारेण तमेव काव्यस्यात्मभूतं रसमुत्कर्षयन्तः काव्यस्योत्कर्षका उच्यन्ते। इह यद्यपि गुणानां रसधर्मत्वं तथापि गुणशब्दोऽत्र गुणाभिव्यञ्जक शब्दार्थयोरुपचर्य्यते। अतश्च "गुणाभिव्यञ्जकाः शब्दा रसस्योत्कर्षका." इत्युक्तं भवतीति प्रागेवोक्तम्। एषामपि विशेषोदाहरणानि वक्ष्यामः। (ह)

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्ण-
धारध्वनिप्रस्थापनपरमाचार्य्यकविसूक्तिरत्नाकरा-
ष्टादशभाषावारविलासिनीभुजङ्गसान्धि-
विग्रहिकमहापात्रश्रीविश्वनाथकवि-
राजकृतौ साहित्यदर्पणे काव्य-
स्वरूपनिरूपणं नाम
प्रथमः परिच्छेदः।

---

(ह) गुणादीनाह उत्कर्षेति। गुणा अलङ्कारा. रीतयश्च उत्कर्षस्य रसोद्दीपनस्य इति भाव हेतव' कारणानि। गुणानां रसधर्मत्व शब्दार्थोत्कर्षेण रसोत्कर्षकत्वमित्यर्थ'।

इति वि, ए, उपाधिधारिणा श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण
विरचिता विमलाख्या साहित्यदर्पणप्रथमपरिच्छेद-
व्याख्या समाप्ता।

# द्वितीयः परिच्छेदः ।

वाक्यस्वरूपमाह ।

**वाक्यं स्यात् योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः ॥१॥**

योग्यता पदार्थानां परस्परसम्बन्धे बाधाभावः। पदोच्चयस्य एतदभावेऽपि वाक्यत्वे वह्निना सिञ्चतीत्यपि वाक्यं स्यात्। आकाङ्क्षा प्रतीतिपर्य्यवसानविरहः। स च श्रोतुर्जिज्ञासारूपः। निराकाङ्क्षस्य वाक्यत्वे गौरश्वः पुरुषो हस्तीत्यादीनामपि वाक्यत्वं स्यात्। आसत्तिर्बुद्ध्यविच्छेदः। बुद्धिविच्छेदेऽपि वाक्यत्वे इदानीमुच्चरितस्य देवदत्तशब्दस्य दिनान्तरोच्चारितेन गच्छतीति पदेन सङ्गतिः स्यात्। अत्राकाङ्क्षायोग्यतयोरात्मार्थधर्मत्वेऽपि पदोच्चयधर्मत्वमुपचारात्। (क)

---

(क) उपोद्घातसङ्गत्या वाक्यं निरूपयति वाक्यमित्यादि। प्रकृतसिद्ध्यनुकूलचिन्ताविषयत्वमुपोद्घात। प्रकृतञ्चात्र वाक्यलक्षणम्। पदोच्चय पदसमुदाय'। योग्यतामाह पदार्थानामिति। पदार्थाना सुप्तिङन्तानि पदानि तेषामर्थाना प्रतिपाद्याना परस्परसम्बन्धे परस्परान्वये बाधाभाव अबाधकत्व सद्भाव इत्यर्थ' ततश्च तात्पर्य्यविषयीभूतसम्बन्धेन तन्निरूपकाणा पदार्थानाम् एकतरस्मिन् अपरपदार्थान्वय योग्यता इति फलितम्। पाकादौ विद्यमानस्य वह्निकरणकत्वस्य सेकादौ येन केनचित् सम्बन्धेन सद्भाववशात् वह्निना सिञ्चतीत्यादेर्वाक्यत्वप्रसक्तौ तद्वारणाय तात्पर्य्यविषयीभूतेति सम्बन्धविशेषणमवगन्तव्यम्। योग्यताव्यावृत्तिं दर्शयति पदोच्चयस्येत्यादि। एतदभावे निरुक्तयोग्यताविरहे इत्यर्थ। आकाङ्क्षामाह आकाङ्क्षेत्यादि। प्रतीते पदार्थोपस्थिते' पर्य्यवसानम् अन्वयबोधजनकत्वेनेच्छाविरह. तद्विरह' तद्भाव:। ननु वक्ष्यमाणाकाङ्क्षापदस्य अभावबोधकत्वेन लक्षणापत्तिरित्यत आह स चेति। श्रोतु. जिज्ञासास्वरूप ज्ञानेच्छारूप: यतोऽभावाभाव. प्रतियोगिस्वरूप एव न तु अतिरिक्त इति भाव.। पयसा सिञ्चतीत्यादौ पयसेति पदार्थस्य सिञ्चतीति

**वाक्योच्चयो महावाक्यम् ॥७॥**

**योग्यताकाङ्क्षासक्तियुक्त एव ।**

**इत्थं वाक्यं द्विधा मतम् ॥८॥**

इत्थमिति वाक्यत्वेन महावाक्यत्वेन च (ख)। उक्ताश्च ।

---

पदार्थेन अन्वयबोधजनने श्रोतुरिच्छासत्त्वेऽपि योग्यताविरहान्न वाक्यत्वमिति बोध्यं प्रतिपर्यवसानञ्च क्वचित् स्वाभाविकत्वेन क्वचिज्जनितान्वयबोधजनकत्वेन भवति तत्राद्यमाह निराकाङ्क्षत्यादि। अत्र गौरश्व इत्यादिप्रथमान्तपदोपस्थितानां पदार्थानामभेदातिरिक्तसम्बन्धे नान्वयबोधोऽव्युत्पन्न इति श्रोतुरिच्छाविरहो जायते। अत्र अभेदसम्बन्धेन बाधसत्त्वेऽपि स्वत्वादिसम्बन्धेन बाधविरहरूपयोग्यतासद्भावेऽपि न वाक्यत्वमिति बोध्यम्। द्वितीयं यथा, विमलं जलं नद्याः कच्छे महिषश्चरतीति अत्र नद्या इति पदार्थोपस्थितेर्जलमिति पदार्थेनान्वयबोधे सति सिद्धे कच्छ इत्यनेन श्रोतुरन्वयबोधेच्छाविरहः। यदि पुनरुभयान्वयेच्छया प्रयुज्यते तदा नद्या इति काकाक्षिगोलकन्यायादनुषङ्गाद्वा कच्छ इत्यनेन सम्बन्धात् गृहीतवक्तृतात्पर्यस्य श्रोतुरुभयान्वयबोधेच्छा सम्भवतीति ध्येयम्। आसत्तिमाह आसत्तिरित्यादि। बुद्धेः पदार्थोपस्थितेः अविच्छेदः अव्यवधानं व्यवधानञ्च कालबाहुल्येन प्रकृतानुपयोगि-पदार्थोपस्थित्या च सम्भवति तत्राद्यमाह बुद्धीति वाक्यत्वे वाक्यत्वस्वीकारे दिनान्त-रेति अत्यन्तव्यवधानदर्शनार्थम्। सङ्गतिः सम्मेलनम्। द्वितीय यथा, गिरिर्भुक्त-मग्निमानिति पदार्थोपस्थितेर्व्यवधानम्। ननु आकाङ्क्षायोग्यते आत्मार्थधर्मौ कथं पदोच्चयधर्मत्वं लभेते इत्याशङ्क्याह अत्रेति। आकाङ्क्षायोग्यतयोः आत्मार्थधर्मत्वे यथाक्रमम् आत्मधर्मत्वे चापि पदोच्चयधर्मत्वम् उपचारात् परम्परया इत्यर्थः। परम्परा चात्र स्वजन्यजनकत्वसम्बन्धस्वाश्रयोपस्थापकत्वसम्बन्धरूपा बोध्या। आसत्ते-रपि उक्तरूपाया आत्मधर्मत्वात् एषैव रीतिरनुसरणीयेति ध्येयम्।

(ख) महावाक्यमाह वाक्योच्चय इति। वाक्यानाम् उच्चयः सङ्घातः महावा-क्यम्। योग्यताद्यभावे महावाक्यत्वस्वीकारे चक्षुषा गृह्यतां गगनं वर्त्तते इत्येतयोः भिक्षुरूपवसति गृही भुङ्क्ते इत्येतयो तथा भिन्नदिनोच्चरितयोः चक्षुषा गृह्यतां घटो वर्त्तते इत्येतयोरपि महावाक्यत्वं स्यादित्यत आह योग्यतेत्यादि।

"स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते" इति॥

तत्र वाक्यं यथा। "शून्यं वासगृहमित्यादि"। महावाक्यं यथा। रामायणमहाभारतरघुवंशादि (ग)। पदोच्चयो वाक्यमित्युक्तं तत् किं पदलक्षणमित्यत आह।

**वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः॥९॥**

यथा घटः। प्रयोगार्हा इति प्रातिपदिकस्य व्यवच्छेदः अनन्वितेति वाक्यमहावाक्ययोः। एकेति साकाङ्क्षानेकपदवाक्यानाम्। अर्थबोधका इति कचटतपानाम्। वर्णा इति बहुवचनमविवक्षितम् (घ)। तत्र।

---

(ग) उक्ताय प्रमाणेन द्रढयति स्वार्थेति। स्वार्थबोधेन समाप्ताना निराकाङ्क्षाणा वाक्यानाम् अङ्गाङ्गित्वव्यपेक्षया गुणप्रधानसद्भाविनाःकाङ्क्षया पुन संहत्य एकार्थप्रतिपादकत्वेन मिलित्वा एकवाक्यत्व महावाक्यत्व जायते। स्वार्थबोधसमाप्तत्वं पदोच्चयस्यापि बोद्धव्यम् अन्यथा शून्यं वासगृह विलोक्य इत्यादिभागस्यापि वाक्यत्वापत्तिरिति ध्येयम्। वाक्यार्थानां गुणप्रधानभावेन वैशिष्ट्यादेकत्वं तत्प्रतिपादकत्वेन वाक्यानामप्येकत्वमिति भाव।

(घ) पदनिरूपणे प्रसङ्गसङ्गतिमुपपादयति पदोच्चय इत्यादि। वर्णाः स्वरैर्व्यञ्जनरूपाः प्रयोगार्हाश्च ते अनन्वितैकार्थबोधकाश्चेति विग्रह.। नापदं शास्त्रे प्रयुञ्जीतेति निषेधात् विभक्तिरहितस्य न प्रयोगार्हतेत्यत आह प्रयोगार्हा इति प्रातिपदिकस्य नाम एतदुपलक्षण धातोरपि तस्यापि केवलस्याप्रयोगित्वादिति बोध्यम्। वाक्यमहावाक्ययोरिति व्यवच्छेद इत्यनेनान्वय एवमग्रेऽपि। तयोरन्वितार्थबोधकत्वात् "विशिष्टवाक्यार्थस्य विशेषणविशेष्यार्थातिरिक्तत्वेनैकत्वमित्यभिप्रायेणेद लक्षणम् अन्यथा एकार्थबोधका इत्यनेनैव वारणे सिद्धे अनन्वितेत्युपादान व्यर्थं स्यात्। साकाङ्क्षेति साकाङ्क्षाणाम् अन्वयबोधजनकानाम्" अनेकेषा पदाना वाक्यानाञ्च व्यवच्छेद इत्यर्थ.। तथाच अयोग्यानामनासन्नाना समुदायस्य अनन्वितार्थबोधकत्वेऽपि न पदत्वमित्यभिप्राय.। ननु एकवर्णद्विवर्णपदयोर्वर्णबहुत्वाभावादव्याप्तिरत आह वर्णा इति।" ननु प्रकृत्यर्थान्वितस्वार्थ-

**अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः ॥१०॥**

एषां स्वरूपमाह।

**वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः।**

**व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः॥११॥**

ता अभिधाद्याः। तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा। उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य "गामानय" इत्युक्ते

---

बोधकत्वं प्रत्ययानामिति नियमात् घटाय कर्मत्वमित्याद्यन्विताथबोधकस्य घटमित्यादेः कथं पदत्वम्? 'न च शक्तिमत्पदम्' इति मतानुसारेण घटं घटेत्येकं पदम् अमित्यपरम् पदम्, अन्यथा प्रत्येकपदार्थोपस्थापकत्वेनानन्विताथबोधकत्वमक्षतमिति वाच्य, तथा सति घटमित्यादि पदसमुदायस्य वाक्यत्वं स्यात् न चेष्टापत्तिः, एवं सति शून्यं वासगृहं विलोक्येत्यादि यद्वाक्योदाहरणं दत्तं तदसङ्गतं स्यात्, तस्य तथाविधवाक्यसमुदायत्वेन महावाक्यतयैवोदाहर्तुमुचितत्वात्। न च प्रत्ययार्थातिरिक्तानन्वितैकार्थबोधकत्वं विवक्षणीयमिति वाच्य तथापि अभेदसम्बन्धेन नीलाद्यन्वितोत्पलादिबोधकनीलोत्पलमित्यादिपदेषु मुख्यार्थान्वितबोधकेषु लाक्षणिकत्वे चादिपदेषु च अव्याप्तेरनुद्धारात समस्तस्य पदत्वास्वीकारे वारिदधौ वसतीत्यादौ पदगतक्लिष्टत्वदोषोदाहरणासङ्गतं स्यात न चेतरपदार्थनिरपेक्ष यदन्वितं तद्भिन्नमान्वितमिह विवक्षणीयमिति वाच्यं तथात्वे ग्राम गच्छेत्यादिसमुदायस्य कर्तृपदसापेक्षान्वितबोधकस्य पदत्वापत्तेः। एवमेकेति न सङ्गच्छते घटौ घटा इत्यादिद्विवचनान्तादिपदेषु अनेकार्थबोधकत्वे नाव्याप्तेः। न चैकेति एकजातीयेत्यर्थः इति वाच्य धवखदिरपलाशा इत्यादौ युगपच्चन्द्रसूर्योपस्थापके पुष्पवन्ताविति पदे च अव्याप्तितादवस्थ्यात् अपिच पदघटकानां यावता वर्णानामनन्वितैकार्थबोधकत्वमुत केषाञ्चित, तत्र नाद्य. सुन्दरस्य देवदत्तस्य धनमित्यादौ विशेषणविभक्तेरनर्थकत्वात सुन्दरस्येत्यादिपदे अव्याप्तेः। नापि द्वितीयः, वह्निना सिञ्चतीत्यादौ सर्वेषामनन्वितकार्यबोधकत्वाभावेऽपि प्रत्येकं तथात्वसम्भवादतिव्याप्तेः। एवञ्च पदलक्षणमेव वाच्यम् असमासाङ्गसुप्तिङन्तप्रकृतिः पदम्। सुगन्तेन केवलप्रकृतेः, असमासाङ्गत्वेनेन पितुः स्वमित्यादौ पूर्वावयवस्य राजदन्तेत्यादौ उभयोरपि प्रकृतिरिक्तत्वेन वाक्यमहावाक्ययोर्व्यवच्छेदः। समासावयवस्य पदत्वाङ्गीकारे नीलोत्पलमित्यादिपदस्य वाक्यत्वं स्यात्।

तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य "सास्नादिमत्पिण्डानयनमर्थः" इति प्रथमं प्रतिपद्यते। अनन्तरञ्च "गां बधान अश्वमानय" इत्यादावावापोद्वाराभ्यां गोशब्दस्य "सास्नादिमानर्थः" आनयनशब्दस्य च "आहरणमर्थः" इति सङ्केतमवधारयति (ङ)। क्वचित् च प्रसिद्धपदसमभिव्याहारात् (च)। यथा—

---

(ङ) योग्यताघटकपदार्थानाह अर्थ इति पदप्रतिपाद्य इत्यर्थः। एषां वाच्यलक्ष्यव्यङ्ग्यानामित्यर्थः। अभिधया बोध्यः अभिधाजन्यबोधविषय इत्यर्थः अर्थबोधे शब्दस्य वृत्तीनाञ्च कारणत्वमिह विषयविषयिणोरभेदोपचाराद् बोध्यम्। कारणन्तु तद्वृत्तिज्ञानमेव शब्दस्य प्रकृतेः प्रत्ययस्य च शक्तय अर्थबोधे सहकारिण्य. वृत्तय। तत्र अभिधादिषु मध्ये सङ्केतितार्थस्य कोषव्याकरणादिनियन्त्रितस्य इत्यर्थ न तु सङ्केतग्रहविषयस्य अर्थस्य सङ्केतस्य अभिधाया अभिन्नत्वेन आत्माश्रयत्वापत्ते.। सङ्केतग्रहोपायान् व्यवहारादीनाह उत्तमेति। उत्तमवृद्धेन प्रयोजकप्रयोज्यभावप्रकटनाय वृद्धयोरुत्तममध्यमत्वकल्पन बोध्यम उत्तमेन वृद्धेन सङ्केतग्रहवता इति भावः। उपलभ्य बुद्धा बाल अगृहीतसङ्केत इति भावः अस्य वाक्यस्य गामानयेत्यर्थ प्रथम शक्तिग्रहात् प्राक् प्रतिपद्यते बुध्यते। आवापोद्वाराभ्याम् अन्वयव्यतिरेकाभ्या तथाहि गा बधानेत्यत्र गोपद सास्नादिमत्पदार्थबोध आनयपदव्यतिरेकेणा हरणपदार्थबोधाभावश्च। तथा अश्वमानय इत्यत्र गोपदव्यतिरेकेण सास्नादिमत्पदार्थबोधाभावः आनयपदसत्त्वेन आहरणपदार्थबोधश्चेति अन्वयव्यतिरेकौ बोध्यौ। सङ्केतम् अभिधा नाम शक्ति सा च अतिरिक्तैव न तु अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा। ईश्वरसमयवता पामरादीनामपि शब्दबोधदर्शनात् अतिप्रसङ्गाच्च। अतएव आधुनिकसङ्केतिताना मैत्रचैत्रादिपदानामपि सङ्केत सङ्गच्छते। नात्र "अशौचव्यपगमे पिता नामधेय कुर्यात्" इति शास्त्रात् सामान्यतश्चैत्रादीनामपीश्वरसङ्केतितत्वमिति वाच्य, तत्र तथागतिसम्भवेऽपि यादृच्छिकसङ्केतितडित्थडवित्थादिपदाना सङ्केतासङ्गतिप्रसङ्गात् तस्याश्च पदार्थेषु वैशिष्ट्य नाम सम्बन्धः कल्प्यते, घटपदाभिधेयोऽयमित्यादिप्रतीतिबलादिति साम्प्रदायिका।

(च) क्वचिदिति। प्रसिद्धस्य गृहीतसङ्केतस्य पदस्य समभिव्याहारात् साहचर्य्यात् समीपोच्चारितत्वादिति यावत् प्रभाकरे, प्रायेण योग्यपदार्थोपस्था-

"इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति" इत्यत्र (छ)।

क्वचिदाप्तोपदेशात्। यथा "अयमश्वशब्दवाच्यः" इत्यत्र। तच्च सङ्केतितमर्थं बोधयन्ती शब्दस्य शक्त्यन्तरानन्तरिता शक्तिरभिधा नाम।

**सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च ॥२२॥**

जातिर्गोपिण्डादिषु गोत्वादिका। गुणो विशेषाधानहेतुः सिद्धो वस्तुधर्मः। शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्त्तयन्ति। द्रव्यशब्दा एकव्यक्तिवाचिनो हरिहरडित्थडवित्थादयः। क्रियाः साध्यरूपा वस्तुधर्माः पाकादयः। एषु हि अधिश्रयणावश्रयणान्तादिपूर्वापरीभूतव्यापारकलापः पाकादिशब्दवाच्यः (ज)। एष्वेव हि

पकपद समीपे युज्यते इत्यभिसन्दधानः प्रसिद्धपदान्वययोग्यपदार्थे शक्तिग्रहो भवतीति भावः। एवञ्च अशक्यार्थयोग्यतासत्त्वेऽपि वक्तृतात्पर्यविशेषस्याव हेतुत्व कल्पनान्न तत्र शक्तिग्रहः सङ्केतमवधारयतीति योज्यम्। एवमग्रेऽपि।

(छ) इहेति। इह अस्मिन् प्रभिन्नकमलोदरे विकसितपद्ममध्ये मधुकरः भ्रमरः मधूनि पिबति। अत्र कमलमधु पिबति इत्येषां पदानामन्वययोग्यार्थकत्वज्ञानेन मधुकरपदस्य भ्रमर एव शक्तिग्रहः। मक्षिकादौ तादृशयोग्यतासत्त्वेऽपि वक्तृतात्पर्यविशेषज्ञानाभावात् न शक्तिग्रहः। कमलाभ्यन्तरे भ्रमर एव पिबतीति जानता जनेन कमलपदसमभिव्याहारात् मधुकरपदस्य सङ्केतो गृह्यते।

(ज) क्वचिदाप्तोपदेशादिति। आप्तस्य विश्वस्तस्य प्रामाणिकस्य इत्यर्थः. उपदेशात् वचनात् एतदुपलक्षणं व्याकरणादयोऽपि शक्तिग्रहोपाया द्रष्टव्याः। तदुक्तं, शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च। सान्निध्यतः सिद्धपदस्य वृद्धा वाक्यस्य शेषाद्विवृतेर्वदन्तीति। दाक्ष्यादिशब्दानां दक्षापत्येषु शक्तिग्रहः व्याकरणात्। गोसदृशपिण्डदर्शनात् गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणे अयं गवय इत्युपमानात्। विनायको विघ्नराजद्वैमातुरगणाधिपा इति कोषात्। आप्तवाक्यादिषु उदाहृतं स्वयमेव ग्रन्थकृता। वाक्यस्य शेषाद् यथा— यवमयश्चरुर्भवति, वाराही उपानहौ उपमुञ्चते, वैतसे कटे प्राजापत्यं धिनोतीत्यादौ यववराहवेतसशब्दाः किं म्लेच्छप्रयोगात् यवनामवायसजम्बूनां वाचकाः. उतार्यप्रयोगात्

व्यक्तेरुपाधिषु सङ्केतो गृह्यते न व्यक्तौ। आनन्त्यव्यभिचार-दोषापातात् (झ)।

---

दीर्घशूकशूकरव्यञ्जनानामिति विप्रतिपत्तौ वसन्ते सर्वशस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः। वराहं गावोऽनुधावन्ति, वेतसे अप्सुजो वेतस इति वाक्यशेषरूपवेदविरोधिनी म्लेच्छप्रतीतिः स्मृतिरिव वेदविरुद्धा हेया इत्याचार्यप्रयोगादेव दीर्घशूकादौ शक्तिग्रह इति। शक्तिः कवित्वबीजरूपः संस्कार-विशेष इत्यादौ विवृतम्।

(झ) आनन्त्यव्यभिचारदोषप्रसङ्गशङ्कया व्यक्तिशक्तिवादमपहाय उपाधिशक्ति-वादमाह सङ्केत इति। द्रव्यं सञ्ज्ञाविषयः सञ्ज्ञा च द्विविधा चिरन्तनी आधुनिकी च। तत्राद्या हरिहरादिः, द्वितीया डित्थडवित्थादिः। गोपिण्डादिषु गोव्यक्त्यादिषु। सिद्धः नित्यः एतन्मते गुणानामपि नित्यत्वम् आविर्भावतिरोभावेन उत्पत्तिविनाशप्र-तीतिविषयत्वम्। वस्तुधर्मो द्रव्यमाचष्टेति। विशेषाधानहेतुत्वमुपपादयति। एषु साध्यरूपवस्तुधर्मेषु। एषु एव जात्यादिषु चतुर्षु मध्ये उपाधिषु धर्मेषु जातिगुणक्रियासु इत्यर्थः. सञ्ज्ञाशब्दानां सञ्ज्ञायामेव सङ्केतग्रहः उपस्थाप्योपस्थापकभावेनाविनाभावा-द्व्यक्तेरर्थोपपत्तेश्च इत्याद्यं तत्र सञ्ज्ञाया शब्दानतिरिक्तत्वेन तस्य च उच्चारणभेदेन भिन्नतया निरुक्तदोषद्वयप्रसङ्गात् एवञ्च डित्थडवित्थादिकं व्यक्तिस्वरूपमेव न तु पदा-र्थान्तरमिति ज्ञेयम् आनन्त्येति नानाव्यक्तिषु नानाशक्तिकल्पनाया गौरवम् आनन्त्य-दोषः। ननु दृष्टव्यक्तिषु एव शक्तिग्रहः न तु अनन्तव्यक्तिषु अतः कुतो गौरवमित्याह व्यभिचारेति सङ्केतग्रहकाले अदृष्टव्यक्तावपि शाब्दबोधस्य कार्य्यस्य सत्त्वात् दृष्टव्यक्ति-सङ्केतग्रहरूपकारणस्य असत्त्वाद् व्यभिचारदोष इति बोध्यं कार्य्यस्य कारणाभाववद्-वृत्तित्वं व्यभिचार इति लक्षणात्। ननु गुणद्रव्यक्रियाणां प्रतिव्यक्तिभिन्नत्वेन आन-न्त्यव्यभिचाराभ्यां कथं शक्तिग्रह इति चेन्न तन्मते गुणादीनामपि जातिवदेकत्वमेव भेदप्रतीतिस्तु आश्रयभेदादौपचारिकीति। एतदसहमानाश्च अन्ये जातावेव शक्ति-रिति वदन्ति यथा काव्यप्रकाशे सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वेति। एतन्मते गवादौ गोत्वादिरिव शुक्लादौ शुक्लत्वादि पाकादौ पाकत्वादि डित्थादौ डित्थत्वा-दिर्जातिरस्ति डित्थादीनां प्रत्यवस्थाकालभिन्नत्वेन भिन्नत्वाङ्गीकारात् तद्वृत्तिडित्थ-त्वादिजातिस्वीकारः। एवञ्च शुक्लत्वादिजात्याश्रयस्य शुक्लादिगुणस्य एवाक्षेपः पटादिपरत्वं तु लक्षणैवेति मन्तव्यम्। ननूपाधौ सङ्केतग्रहाङ्गीकारे विशिष्यं नाभिधा गच्छेद् क्षीणशक्तिर्विशेषणे इति न्यायात् गामानयेत्यादौ गोपदादिना

अथ लक्षणा।

**मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते।**
**रूढ़ेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता १२(ञ)**

---

कथं तत्रादेयं ह इति चेन्न गवादेराक्षेपेण लाभात तदुक्त व्यक्त्यविनाभावात न आत्वा व्यक्तिराक्षिप्यते। यथा क्रियते इत्यादौ कर्त्ता कुरु इत्यादौ कर्मेत्यादि। आक्षेपो न अनुमानं व्याप्त्यादिज्ञानव्यतिरेकेण व्यक्तेरनुभवात किन्तु स्मरणमेव गोत्वादिप्रकारकगवादिस्मरणाभावेन गोत्वादिविशिष्टशब्दानुपपत्ते अतएवोक्तं जाति-शक्तं पदं व्यक्तिमेवानुभावयति स्मारयति चेति जातिशक्तमुपाधिशक्तमित्यर्थः।

(ञ) अथेति। अभिधानिरूपणानन्तरमित्यर्थः लक्षणा निरूप्यते इति शेषः। मुख्यार्थबाधे इति मुख्यार्थस्य अभिधेयार्थस्य बाधे अन्वयानुपपत्तिग्रहे अत मुख्यार्थ-सम्बन्धग्रहे इत्यपि बोध्यं तेन विना लक्षणाया अग्राहकत्वात् उक्तञ्च सम्बन्धानुप-पत्तिभ्यां शब्दलक्षणा इति तद्युक्तः मुख्यार्थसम्बन्धीत्यर्थः मुख्यार्थासम्बन्धिनि लक्षणा नास्तीति सूचनाय एतत्। अन्य मुख्यार्थतावच्छेदकातिरिक्तधर्मावच्छिन्न मुख्यार्थ-भिन्न इत्यर्थस्तु न मनोरमः प्रयोजनाभावात् स्वार्थस्यापि बोधिकायामुपादानलक्ष-णाना रामोऽस्मि सर्वं सहे इत्यादि वक्ष्यमाणाया स्वार्थस्यैव दुःखसहिष्णुत्वेन बोधि-काया रामशब्दलक्षणायामव्याप्त्यावायकत्वाच्च अतएव कदली कदलीत्यादि अर्था-न्तरसङ्क्रमितवाच्यलक्षणामूलध्वनेरुदाहरणमपि सङ्गच्छते। अत्र द्वितीयकदल्यादि-पदाना पौनरुक्त्यात् कदलीत्यादिना अन्वयमलभमानाना शीतत्वादिना कदल्यादि-रूपमुख्यार्थस्यैव बोधकत्वेन लक्षणास्वीकारात्। एव पण्डितकवयः कवयोऽन्ये कवयस्तु केवल कवय इत्यत्र द्वितीयकविपदस्य काव्यजन्यलाभपूजाख्यातिभागित्वेन कवेरेवोपस्थानेऽपि लक्षणा। एवञ्च सामान्यशब्दस्य विशेषपरत्वेऽपि लक्षणा सम्भ वति शक्यतावच्छेदकघटितविशिष्टधर्मस्यापि शक्यतावच्छेदकातिरिक्तत्वस्वीकारात् यथा त्वामस्मि वच्मि इत्यादौ। रूढि प्रसिद्धिः सा च भूरिप्रयोगरूपा तस्या ज्ञानात् अवाचकशब्द सप्रयोजनक इति सामान्यतः प्रयोजनज्ञानाद् वा प्रयोजनस्य विशेष-ज्ञानन्तु लक्षणाजन्यबोधानन्तरमेव भवतीति तस्य हेतुत्वमुपपन्न प्रयोजनादित्युद्दिश्य पञ्चमीत्यन्ये। अत्र प्रागुक्तयोर्मुख्यार्थबाधमुख्यार्थसम्बन्धग्रहयोर्दण्डचक्रादिन्यायेन मिलितयोरेव कारणत्व चरमयोस्तु तृणारणिमणिन्यायेन प्रत्येकमेवेति विशेषज्ञापनाय विभिन्नविभक्त्या व्यवधानेन च तेषां निर्देशः। वक्तृतात्पर्यं हि लक्षणा तच्च असा-

"कलिङ्गः साहसिकः" इत्यादौ कलिङ्गादिशब्दो देश-विशेषादिरूपे स्वार्थेऽसम्भवन् यया शब्दस्य शक्त्या स्वसंयुक्तान् पुरुषादीन् प्रत्याययति यया, च "गङ्गायां घोषः" इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृतेऽसम्भवन् स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं तटादिं बोधयति सा शब्दस्यार्पिता = स्वाभाविकेतरा, ईश्वरानुद्भाविता वा, शक्ति-र्लक्षणा नाम। पूर्वत्र हेतू रूढिः प्रसिद्धिरेव। उत्तरत्र "गङ्गातटे घोषः" इति प्रतिपादनादलभ्यस्य शीतत्वपावन-त्वातिशयस्य बोधनरूपं प्रयोजनम्। हेतुं विनापि यस्य कस्यचित् सम्बन्धिनो लक्षणेऽतिप्रसङ्गः स्यादित्यत उक्तम्। "रूढेः प्रयोजनाद्वापोति" (ट) केचित् तु "कर्मणि कुशलः" इति रूढावुदाहरन्ति। तेषामयमभिप्रायः "कुशं

---

च्छब्दान्मुख्यार्थसम्बन्धी बोध्य इति वक्तुरिच्छाविषयत्वम्। हेतवस्तु तस्या एव बोधकाः। एवञ्च निरुक्तहेतुत्रयजन्यज्ञानविषयीभूय लक्षणया मुख्यार्थसम्बन्धी प्रत्याय्यते इति भावः। मुख्यार्थसम्बन्धिविरोधिन्यां व्यञ्जनायाम् एतादृशज्ञानविषय-त्वाभावान्नातिव्याप्तिः।

(ट) उदाहरति कलिङ्ग इत्यादि। साहसिकत्वं चेतनधर्मं तस्य अचेतने देशे अन्वयानुपपत्तिं दर्शयति कलिङ्गादिशब्द इति असम्भवन् साहसिकाद्यन्वययोग्यमर्थ-मभिधातुमशक्नुवन् इत्यर्थः। प्रकृते घोषवासादौ असम्भवन् अभिधातुमशक्नुवन्। केचिदभिधा स्वाभाविको व्यापार वदन्ति तन्मतमनादृत्य लक्षणाया वैलक्षण्यमाह स्वाभाविकेतरेति। अन्ये तु ईश्वरेच्छाविषयत्वरूपामाहुस्तन्न ईश्वरानुद्भाविता ईश्वरेण अनुत्थापितेत्यर्थः। इदानीन्तनवक्तृभिरर्पितेति यावत। प्रतिपादयतीति प्रतिपादनं वाक्यं तस्मात्। अलभ्यस्य मुख्यशब्दघटितवाक्येन अप्रतिपाद्यस्य इत्यर्थः तीरस्य विप्र-कृष्टाग्रगतशीतत्वाद्यपेक्षया सन्निकृष्टाग्रगतशीतत्वादेराधिक्यमत्रातिशयः। एवञ्च अतिशीतेऽतिपावने तीरे घोष इति व्यञ्जनाजन्यबोधो लाक्षणिकशब्दप्रयोगस्य प्रयो-जनमिति भावः। कश्चिन्नैव तु शक्तित इति लक्षणाया निषेध उक्तः। अशक्तितः रूढिप्रयोजनविरहात्। यथा, कमले चरणाघातं मुखं सुमुखि। तेऽकरोदित्यत्र

लाति" इति व्युत्पत्तिलभ्य. कुशग्राहिरूपो मुख्योऽर्थः प्रकृतेऽसम्भवन् विवेचकत्वसाधर्म्यसम्बन्धसम्बन्धिनं दक्षरूपमर्थं बोधयति। तदन्ये न मन्यन्ते। कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात्। अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम्। व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे "गौः शेते" इत्यत्रापि लक्षणा स्यात्। "गमेर्डोः" इति गमधातोर्डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि प्रयोगात् (ठ)।

---

निर्जितत्व लक्ष्यते एषा नेयार्थलक्षणादोषतया वक्ष्यते। सा च कविप्रयोगानर्हत्वात् प्रकृतलक्षणस्य लक्ष्या न भवतीत्यव्याप्तिवारणाय चरमहेतुद्वयमुपन्यस्तं तदेव दर्शयति हेतुमिति रूढिप्रयोजनयोरन्यतरमित्यर्थः सम्बन्धिनो मुख्यार्थसम्बन्धिन लक्षणे लक्षणायाम्।

(ठ) लाति गृह्णातीति व्युत्पत्त्या प्रकृतिप्रत्ययविभागकल्पनया लभ्य प्रतिपाद्य । प्रकृते कर्मणीत्यनेनान्वये असम्भवन् योग्यतामलभमान । दक्षरूपस्यैव इत्येवकारेण कुशग्रहणव्यवच्छेद । अत्र हेतुमाह अन्यदिति व्युत्पत्तिलभ्यार्थप्रतीतौ प्रकारीभूतो धर्म व्युत्पत्तिनिमित्त यथा गोशब्दस्य गमनकर्तृत्व सङ्केतग्रहे प्रकारीभूतो धर्मः। प्रवृत्तिनिमित्त शक्यतावच्छेदक यथा गोत्वजाति.। शब्दाना व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तमिति न नियम । पाचकादिशब्दस्य द्वयोरैक्यसत्त्वेऽपि गवादिशब्दस्य व्यभिचारात् प्रकृते तु कुशग्राहित्वरूपव्युत्पत्तिनिमित्तस्यानेकपदार्थघटितत्वेन गुरुत्वात् तदपेक्ष्य लघुना दक्षत्वरूपाखण्डोपाधिनैव सङ्केतग्रह.। ननु रूढिवत् व्युत्पत्तिरपि पदार्थोपस्थापिकेति रूढिविषयस्येव व्युत्पत्तिविषयस्य मुख्यत्वमास्तामिति चेन्न रूढ्या प्रतिबद्धाया' व्युत्पत्ते पदार्थोपस्थापकत्वासम्भवात्। तदुक्त भट्टै, लब्धात्मिका सती रूढिर्भवेद्‌ योगापहारिणी। कल्पनीया तु लभते नात्मान योगबाधत इति। लब्धात्मिका जनितपदार्थोपस्थापिका कोषपरम्पराप्रसिद्धा सती अनादिसिद्धा योगापहारिणी व्युत्पत्तिलभ्यार्थस्य प्रतिबन्धिका कल्पनीया लाघवप्रतिसन्धात्रभिरिदानीन्तनैरुद्भावनीया आत्मान पदार्थोपस्थिति न लभते न जनयति। योगबाधत. योगे बाधनात् रूढेस्तस्या' पदार्थोपस्थापकत्वस्य च कल्पनामपेक्ष्य क्लृप्तयोगस्यैव पदार्थोपस्थापकत्वमात्र कल्प्यते इति भाव.। मुख्यार्थत्वे मुख्यार्थत्वस्वीकारे शयनकाले गमनकर्तृ

तद्भेदानाह ।

**मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।**
**स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ॥१४॥**

रूढावुपादानलक्षणा यथा । "श्वेतो धावति" ।

प्रयोजने यथा । "कुन्ताः प्रविशन्ति" । अनयोर्हि श्वेतादिभिः कुन्तादिभिश्च अचेतनया केवलैर्धावनप्रवेशनक्रिययोः कर्त्तृतयाऽन्वयमलभमानैरेतत्सिद्धये आत्मसम्बन्धिनोऽश्वादयः पुरुषादयश्चाक्षिप्यन्ते । पूर्वत्र प्रयोजनाभावाद्रूढिः । उत्तरत्र कुन्तादीनामतिगहनत्वं प्रयोजनम् । अत्र च मुख्यार्थस्य आत्मनोऽप्युपादानम् । लक्षणलक्षणायान्तु परस्यैव उपलक्षणमित्यनयोर्भेदः । इयमेव "अजहत्स्वार्था" इत्युच्यते (ड) ।

---

त्वरूपमुख्यार्थबाध इति भाव । यदि पुन उणादिप्रत्ययाना व्युत्पत्ते प्रायिकत्व कल्प्यते तदा निषङ्गे सायका' सन्तीत्यादौ लक्षणापत्तिर्दोषो द्रष्टव्य षोऽन्तकर्मणीति षोधातोर्ण्वकप्रत्ययनिष्पन्नस्य सायकशब्दस्य बिनाशाभावकालेऽपि प्रयोगादिति ।

(ड) लक्षणाया विशेषलक्षणमाह मुख्यार्थस्येति । वाक्यार्थ इति सप्तम्यर्थो घटकत्व ततश्च मुख्यार्थस्य वाक्यार्थे अन्वयसिद्धये वाक्यार्थघटकान्वयबोधाय यया इत्या इतरस्य शक्यतावच्छेदकातिरिक्तधर्मावच्छिन्नस्य आक्षेप प्रत्यय सा उपादानलक्षणा स्यात । सञ्ज्ञाबीजमाह आत्मनोऽपीति मुख्यार्थस्यापीत्यर्थ उपादानात प्रत्यायनात मुख्यार्थविषयिणी प्रतीतिरुपादानम् । एषा उपादानलक्षणा । यद्वा उपादीयत मुख्यार्थोऽपि प्रतीयते अनेनेत्युपादान तन्नाम्नी लक्षणा उपादानलक्षणञ्च इत्युक्ता शुद्धैव सा द्विधेति काव्यप्रकाशे तन्नामप्रसिद्धा । अत्र वाक्यार्थ इत्यनेन तात्पर्य्यविषयीभूतो वाक्यार्थो ग्राह्य' । अन्यथा इदमनर्थक छत्रिणो यान्तीत्यत्र छत्रिगमनकर्त्तृत्वरूपवाक्यार्थे छत्रान्वयबोधस्य मुख्यार्थाक्षेप विनापि सम्भवनात्ति तात्पर्य्यविषयस्य छत्रिच्छत्रिभिन्नोभयनिष्ठगमनकर्त्तृत्वरूपवाक्यार्थस्य घटको य उभयान्वय. तद्बोधाय मुख्यार्थस्याक्षेपो युज्यते । कदली कदलीत्यादावुपादानलक्षणासग्रहाय शक्यतावच्छेदकातिरिक्तेति अत्र क्वचित् मुख्यार्थ एव धर्मान्तरेण प्रतीयते यथा कदली कदलीत्यादौ द्वितीयकदलीपद शैत्यरूपधर्मान्तरेण कदलीमेव बोधयति । क्वचित् मु-

**अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये ।**
**उपलक्षणहेतुत्वादेषा लक्षणलक्षणा ॥ १५ ॥ (ढ)**

रूढिप्रयोजनयोर्लक्षणा यथा । "कलिङ्गः साहसिकः" "गङ्गायां घोषः" इति च । अनयोर्हि पुरुषतटयोर्वाक्यार्थेऽन्वयसिद्धये कलिङ्गगङ्गाशब्दावात्मानमर्पयतः । यथा वा ।

"उपकृतं बहु तत्र किमुच्यते
सुजनता प्रथिता भवता परम् ।

---

व्यापस्तु भिन्नस्य धर्मान्तरेण प्रतीयते यथा काकेभ्यो रक्ष्यतामन्नमित्यत्र काकपदेनान्नोपघातकत्वेन काककुक्कुरमार्जारा लक्ष्यन्ते अत्र प्रयोजनाभावात् रूढिः । छत्रिणो यान्तीत्यादौ छत्रिसाहचर्यादिना छत्रिणस्तद्भिन्नाश्च प्रतीयन्ते क्वचित् बाहुल्यमत्र प्रयोजनम् । क्वचिच्च मुख्यार्थविशिष्टः प्रतीयते यथा श्वेतो धावति कुन्ताः प्रविशन्तीति । ननु काकेभ्यो रक्ष्यतामन्नमित्यादावन्वयानुपपत्तिरेव नास्तीति कथं लक्षणा इति चेन्न तात्पर्यविषयस्यान्वयस्य मुख्यतावच्छेदकरूपेणानिर्वाहादन्वयानुपपत्तिरित्यस्य विवक्षणात् काकेभ्यो रक्ष्यतामन्नमित्यादौ काककुक्कुरमार्जाराणामन्नरक्षणान्वयस्य काकत्वरूपशक्यतावच्छेदकरूपेणानिर्वाहः स्फुट एवमन्यत्रापि अनयोर्हीति स्वस्य सिद्धये प्रकारतया अन्वयसिद्धये आक्षिप्यन्ते असम्यक्पदे प्रत्याय्यन्ते । मुख्यार्थस्योपयोगश्चान्वयानुपपत्तिज्ञानेन स्वसम्बन्धित्वज्ञानेन च सम्भवति । अत्रेदमवधेयं श्वेतो धावतीत्यादावितरान्वयेऽपि गुणतया क्रियावैशिष्ट्यरूपकर्तृत्वस्यापि बोध इति तस्योपलक्षणरूपतयैव बोधः । यष्टयः प्रविशन्तीत्यादौ यष्टीनां क्रियासम्भवात् विशेषणतया बोधः । कृतिमत्त्वरूपकर्तृत्वपक्षे उभयत्वेन तद्बोधात् द्वयोरेवोपलक्षणत्वेन प्रकारत्वमिति । प्रयोजनं प्रयोजनीभूतज्ञानविषयः । अस्याः संज्ञान्तरमाह इयमेवेति अजहत्स्वार्था या सा । गा बध्नीयादित्यादौ नोपादानलक्षणोदाहर्तव्या रूढिप्रयोजनाभावात् किन्त्वाक्षेपादेव तत्र व्यक्तिलाभः । न चात्र प्रयोगप्राचुर्यरूपा रूढिरस्तीति वाच्यं लक्ष्यार्थविनिर्मोकेण शक्यार्थे प्रयोगार्हस्य शब्दस्य लक्ष्यार्थे प्रयोगप्राचुर्यरूढिरेव लक्षणाहेतुः अन्यथा जात्याव्यक्तिराक्षिप्यते इति प्राचीनप्रवादविलयः स्यात् ।

(ढ) लक्षणलक्षणामाह अर्पणमिति । वाक्यार्थे परस्यैव मुख्यार्थभिन्नस्यैव

विदधदीदृशमेव सदा सखे !

सुखितमास्स्व ततः शरदां शतम्" (ण) ॥

अत्र अपकारादीनां वाक्यार्थेऽन्वयसिद्धये उपकृतादयः शब्दा आत्मानमर्पयन्ति । अत्र अपकारिणं प्रत्युपकारादिप्रतिपादनान्मुख्यार्थबाधः । वैपरीत्यलक्षणः सम्बन्धः । फलमप्यपकारातिशयः । इयमेव "जहत्स्वार्था" इत्युच्यते (त) ।

**आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा १६ (थ)**

ताः पूर्वोक्ताश्चतुर्भेदलक्षणाः ।

**विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् ।**

---

अन्वयसिद्धये स्वस्य अर्पण स्वार्थपरित्याग इत्यर्थ. यथा भवतीति शेष. उपलक्षणहेतुत्वात् मुख्यार्थाविषयिण्या. प्रतीते' एषा लक्षणलक्षणा ।

(ण) उपकृतमिति । हे सखे ! भवता बहु उपकृतं तत्र तस्मिन उपकारविषये इत्यर्थं किमुच्यत, कथ्यते, परम् अत्यय सुजनता सौजन्य प्रथिता प्रकटिता सदा ईदृशमेव सौजन्यमिति भाव विदधत् कुर्वन् तत तस्मिन् कर्मणि प्रकृते इत्यर्थ' शरदा वत्सराणा शतम् आस्स्व तिष्ठ । अत्य तापकारिण प्रत्युक्तिरियम् ।

(त) अत्र अपकारादीना प्रकृतानामिति भाव वाक्यार्थे वक्तृतात्पर्य्यविषये इति भाव उपकृतादय आत्मानमपयन्ति स्वार्थ परित्यज्य विपरीतमर्थमपकृतादिक लक्षयन्तीत्यथ फल प्रयोजनमपकारातिशय । जहत्स्वार्थेति जहत् स्वार्थो या सा ।

(थ) इत्थ' लक्षणाया द्वौ भेदावुक्ता पुनस्तौ द्विधा योजयति आरोपेति । ताः पूर्वोक्ताश्चतुर्भेदा रूढिप्रयोजनाभ्याम् उपादानोपलक्षणाभ्याञ्चेति भावः । आरोपः आहार्य्याभेदप्रतीति. अध्यवसानं सिद्धाभेदप्रतीति. ताभ्या प्रत्येक द्विधा ततश्च सारोपा रूढिहेतुका उपादानलक्षणा सारोपा रूढिहेतुका लक्षणलक्षणा सारोपा फलहेतुका उपादानलक्षणा सारोपा फलहेतुका लक्षणलक्षणा साध्यवसाना रूढिहेतुका उपादानलक्षणा साध्यवसाना रूढिहेतुका लक्षणलक्षणा साध्यवसाना फलहेतुका उपादानलक्षणा साध्यवसाना फलहेतुका लक्षणलक्षणा इत्यष्टभेदा लक्षणा इत्यर्थः ।

**सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका १० (द)**

रूढौ उपादानलक्षणा सारोपा यथा। "अश्वः श्वेतो धावति"। अत्र हि श्वेतगुणवान् अश्वोऽनिगीर्णस्वरूपः स्वसमवेतश्वेतगुणतादात्म्येन प्रतीयते। प्रयोजने यथा। "एते कुन्ताः प्रविशन्ति"। अत्र सर्वनाम्ना कुन्तधारिपुरुषनिर्देशात् सारोपात्वम्। रूढौ लक्षणलक्षणा सारोपा यथा। "कलिङ्गः पुरुषो युध्यते"। अत्र पुरुषकलिङ्गयोराधार्य्याधारसम्बन्धः। प्रयोजने यथा। "आयुर्घृतम्" अत्र आयुष्कारणमपि घृतं कार्य्यकारणभावसम्बन्धसम्बन्ध्यायुस्तादात्म्येन प्रतीयते। अन्यवैलक्षण्येनाव्यभिचारेण आयुष्करत्वं प्रयोजनम्।

यथा वा। राजकीये पुरुषे गच्छति "राजासौ गच्छति" इति। अत्र स्वस्वामिभावलक्षणः सम्बन्धः। यथा वा। अग्रमात्रेऽवयवे "हस्तोऽयम्"। अत्र अवयवावयविभावलक्षणः सम्बन्धः। ब्राह्मणेऽपि "तक्षासौ"। अत्र तात्कर्म्यलक्षणः सम्बन्धः। इन्द्रार्थासु स्थूणासु "अमी इन्द्राः"। अत्र तादर्थ्यलक्षणः सम्बन्धः। एवमन्यत्रापि निगीर्णस्य पुनर्विषयस्य अन्यतादात्म्यप्रतीतिकृत् साध्यवसाना। अस्याश्चतुर्षु भेदेषु पूर्वोदाहरणान्येव (ध)।

---

(द) सारोपा साध्यवसानाश्चाह विषयस्येति। अनिगीर्णस्य शब्दस्य विषयस्य लक्ष्यस्य या अन्येन मुख्यार्थेन तादात्म्यप्रतीतिम् अभेदप्रतिपत्तिं करोति सा तथोक्ता सारोपा, या च निगीर्णस्य अर्थस्य अन्यतादात्म्यप्रतीतिकृत् सा साध्यवसाना।

(ध) उदाहरति रूढाविव्यादि। अश्व अनिगीर्णस्वरूप शब्दप्रतिपाद्य.। अत्र अश्व श्वेत इत्यत्र समवायसम्बन्ध। कुन्ता' अस्त्रविशेषा अत्र धार्य्यधारकसम्बन्ध.। राजासौ गच्छतीत्यत्र राजवत् परिच्छदाद्यतिशयबोधन प्रयो-

**साहश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि ।**
**साहश्यात्तु मता गौण्यस्तेन षोड़शभेदिताः १८ (न)**

ताः पूर्वोक्ता अष्टभेदा लक्षणाः। साहश्येतरसम्बन्धाः कार्य्यकारणभावादयः। अत्र शुद्धाना पूर्वोदाहरणान्येव। रूढावुपादानलक्षणा सारोपा गौणी यथा। "एतानि तैलानि हेमन्ते सुखानि"। अत्र तैलशब्दस्तिलभवस्नेहरूपं मुख्यार्थमुपादायैव सार्षपादिस्नेहेषु वर्त्तते। प्रयोजने यथा। राजकुमारेषु तत्सदृशेषु गच्छत्सु "एते राजकुमारा गच्छन्ति"। रूढावुपादानलक्षणा साध्यवसाना गौणी यथा। "तैलानि हेमन्ते सुखानि"। प्रयोजने यथा। "राजकुमारा गच्छन्ति"। रूढौ लक्षणलक्षणा सारोपा गौणी यथा। "राजा गौडेन्द्रः कण्टकं शोधयति" (प)। प्रयोजने यथा "गौर्वाहीकः" (फ)। रूढौ लक्षणा साध्यवसाना गौणी

---

जनम्। कुशलोऽयमित्यत्र प्राचुर्य्यप्रयोगात् रूढिरित्यवगन्तव्यम्। तच्चासावित्यत्र तत्कर्मनैपुण्यातिशय प्रयोजनम्। इन्द्रार्थासु इन्द्राराधनार्थं निर्मितासु स्थूणासु स्तम्भविशेषेषु। इन्द्रवत् पूज्यत्वरूप प्रयोजनम्। पूर्वोदाहरणानि यथा श्वेतो धावति घृतमानयेत्यादीनि।

(न) एव लक्षणाया अष्टविधत्वमुक्त्वा पुनर्द्वैविध्यमाह साहश्येति। ताः सकला अष्टभेदा अपि लक्षणा साहश्येतरसम्बन्धा साहश्यभिन्नसम्बन्धवत्यश्चेत् शुद्धाः, साहश्यात् तु साहश्यसम्बन्धयोगात् तु गौण्यः मता कथिता तेन हेतुना लक्षणाः षोडशभेदिताः। साहश्यसम्बन्धवत्य अष्टौ तदन्यसम्बन्धवत्यश्च अष्टावित्यर्थः।

(प) राजा गौडेन्द्र कण्टकं शोधयतीति। शोधयति उद्धरति निर्वंशं करोतीत्यर्थः। अत्र तीक्ष्णाग्रवृक्षविशेष कण्टकपदार्थरूपमुख्यार्थः शोधनासम्भवात् दुःखदत्वेन तत्सदृशक्षुद्रशत्रौ लक्षणया वर्त्तते। यत् तु क्षुद्रशत्रौ च कण्टकम् इत्यभिधानं तत् निरूढलक्षणाया ग्राहक न त्वभिधाया इति विभाव्यम्।

यथा। "राजा कण्टकं शोधयति"। प्रयोजने यथा। "गौर्जल्पति"।

अत्र केचिदाहुः "गोसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यन्ते। ते च गोशब्दस्य वाहीकार्थाभिधाने निमित्तीभवन्ति"। तदयुक्तम्। गोशब्दस्यागृहीतसङ्केतं वाहीकार्थमभिधातुमसामर्थ्यात् गोशब्दार्थमात्रबोधनाच्च। अभिधाया विरतत्वाद् विरतायाश्च पुनरुत्थानाभावात्। अन्ये पुनर्गोशब्देन "वाहीकार्थो नाभिधीयते किन्तु स्वार्थसहचारिगुणसाजात्येन वाहीकार्थगता गुणा एव लक्ष्यन्ते"। तदपि अन्ये न मन्यन्ते। तथाहि अत्र गोशब्दाद्वाहीकार्थः प्रतीयते न वा?। आद्येऽपि गोशब्दादेव वा तल्लक्षिताद्वा गुणात्। अविनाभावद्वारा, तत्र न प्रथमः। वाहीकार्थेऽस्यासङ्केतितत्वात्। न द्वितीय। अविनाभावलभ्यस्यार्थस्य शाब्देऽन्वये प्रवेशासम्भवात्। शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यते। न द्वितीयः। यदि हि गोशब्दाद्वाहीकार्थो न प्रतीयते तदास्य वाहीकस्य सामानाधिकरण्यमसमञ्जसं स्यात्। तस्मादत्र गोशब्दो मुख्यया वृत्त्या वाहीकशब्देन सह अन्वयमलभमानोऽज्ञत्वादिसाधर्म्यसम्बन्धाद्वाहीकार्थं लक्षयति। वाहीकस्याज्ञत्वाद्यतिशयबोधनं प्रयोजनम् (ब)। इयञ्च गुणयो-

---

(फ) गौर्वाहीक इति वाहीकः हलवाहकः। अत्र अज्ञत्वादिसाधर्म्यसम्बन्धः अज्ञत्वाद्यतिशयबोधनं प्रयोजनम्।

(ब) अत्र केचिदाहुरित्यादि। गौर्जल्पति कथयतीत्यर्थः। अत्र गोर्जल्पनस्य असम्भवात् मुख्यार्थबाधः। गोसहचारिणः गोस्थायिनः जाड्यं जडत्वं मान्द्यम् अपाटवं तत्प्रभृतयः गुणाः धर्माः लक्ष्यन्ते लक्षणया प्रतिपाद्यन्ते। ते च गुणाः गोशब्दस्य वाहीकार्थस्य अभिधाने अभिधया प्रतिपादने निमित्तीभवति हेतुतामापद्यते विरतत्वात् गतशक्तित्वादित्यर्थः। सकृदुच्चरित शब्द सकृदेवार्थं गमयतीति न्यायादिति

गात् "गौणी" इत्युच्यते। पूर्वा तु उपचारामिश्रणात् शुद्धा। उपचारो हि नामात्यन्तं विशकलितयोः सादृश्यातिशय-महिम्ना भेदप्रतीतिस्थगनमात्रम्। यथा अग्निमाणवकयोः। शुक्लपटयोस्तु नात्यन्तं भेदप्रतीतिः। तस्मादेवमादिषु शुद्धैव लक्षणा।

**व्यङ्ग्यस्य गूढागूढत्वाद् द्विधा स्युः फललक्षणाः॥१९॥**

प्रयोजने अष्टभेदा लक्षणा दर्शिता स्ताः प्रयोजनरूप-व्यङ्ग्यस्य गूढागूढतया प्रत्येकं द्विधा भूत्वा षोडशभेदाः। तत्र गूढः काव्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यः। यथा। "उपकृतं बहु तत्रेति"। अगूढोऽतिस्पष्टतया सर्वजनसंवेद्यः। यथा।

"उपदिशति कामिनीनां यौवनमद एव ललितानि"।

---

भाव.। विरतायामेति शब्द-इत्यर्थ। विरस्य व्यापाराभाव इति न्यायादिति भावः। यत्र श्लेषादावस्य नियमस्य व्यभिचारो दृश्यते तत्र अनेकार्थस्य अभिधया प्रतिपादनादिति चेन्न तत्र युगपदेव अनेकार्थानाम् अभिधया प्रतिपादनम् इह तु प्रथम गोशब्देन पशुमात्रबोधस्ततश्चान्वयानुपपत्तौ वाहीकार्थप्रतीतिरिति ध्येयम्। स्वार्थेति स्वार्थस्य गोपदार्थस्य गोत्वस्येत्यर्थः सहचारिणो ये गुणा जाड्यमान्द्यादय तत्साजात्येन तत्समानजातित्वेन वाहीकार्थगुणा जाड्यमान्द्यादय इति भावः लक्ष्यन्ते लक्षणाजन्यबोधविषयीक्रियन्ते। लक्षितात् लक्षणाजन्यबोधविषयात् गुणात् जाड्यमान्द्यादेरित्यर्थः। अविनाभाव आक्षेप तद्द्वारा तेनेत्यर्थ। अविनाभावलभ्यस्य आक्षेपलभ्यस्य अर्थस्य शाब्दे अन्वये शाब्दबोधे इत्यर्थः प्रवेशासम्भवात् शब्दप्रतिपाद्यानामेव शाब्दबोधो भवतीति भावः शाब्दी शब्दबोधविषयिणी आकाङ्क्षा इच्छा शब्देनैव न तु आक्षेपेणेति भावः। प्रपूर्य्यते। सामानाधिकरण्यम् अभेदान्वय इत्यर्थः। स्वमतमाविष्करोति तस्मादिति उक्तमताना दोषकवलितत्वादित्यर्थ। वृत्त्या शक्त्या अभिधया इत्यर्थ।

अत्र "उपदिशति" इत्यनेन "आविष्करोति" इति लक्ष्यते। आविष्कारातिशयश्चाभिधेयवत् स्फुटं प्रतीयते *(भ)*।

**धर्मिधर्मगतत्वेन फलस्यैता अपि द्विधा ॥२०॥**

एता अनन्तरोक्ताः षोडशभेदा लक्षणाः फलस्य धर्मिगतत्वेन धर्मगतत्वेन च प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्भेदाः (म)।

क्रमेणोदाहरति।

"स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा! हा देवि! धीरा भव ॥"

---

(भ) गौणी लक्षणा उक्ता तदव्युत्पत्तिमाह इयञ्चेति। गुणयोगात् वाच्यलक्ष्ययोः सादृश्यात्मकः सम्बन्ध गुणः तद्योगात् तत्सम्बन्धादित्यर्थः। पूर्वा असादृश्यमूला लक्षणा इत्यर्थः; उपचारामिश्रणात् सादृश्याधीनारोपायोगात् शुद्धा। विप्रकलितयोर्विभिन्नयोः भेदप्रतीतिस्थगनमात्र भेदज्ञानतिरोधानमेव। यथा, अग्निमाणवकयोः अग्निः माणवक नवीमनौत ब्रह्मचारीत्यर्थः। तयोः साम्प्रतं फललक्षणाया, पुनर्भेद दर्शयति व्यङ्ग्यस्येति। उपदिशतीत्यादि। श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानामित्यस्य पूर्वार्द्धम्। तदयमर्थः जड़ाः अनभिज्ञा अपि श्रीपरिचयात् सम्पतसंयोगात् विदग्धचरितानां विज्ञव्यवहाराणाम् अभिज्ञा भवन्ति। कामिनीनां यौवनमद एव ललितानि लीलाविलासादीनि उपदिशति। अत्र उपदिशति आविष्करोतीत्यर्थः; उपदेशस्य अचेतने यौवनमदे असम्भवात् मुख्यार्थबाधः तस्मात् उपदेशशब्देन आविष्काररूपार्थो लक्ष्यते इति भावः। तदेवं फललक्षणा अष्टभेदाः षोड़शभेदा भवन्ति रूढिलक्षणास्तु अष्टभेदा इति मिलित्वा चतुर्विंशतिभेदा लक्षणा बोध्याः।

(म) पुनश्च फललक्षणाभेदमाह धर्मीति। एताः पूर्वोक्ताः फललक्षणाः षोडशभेदाः फलस्य धर्मिधर्मगतत्वेन द्विधा भवन्तीति द्वात्रिंशद्भेदाः। तदेवं फललक्षणा द्वात्रिंशद्भेदाः रूढिलक्षणास्त्वष्टौ मिलित्वा चत्वारिंशत्प्रकाराः लक्षणा बोद्धव्याः।

अत्रात्यन्तदुःखसहिष्णुरूपे रामे धर्मिणि लक्ष्ये तस्यैवातिशयः फलम्। "गङ्गायां घोषः"। इत्यत्र तटादिषु लक्ष्येषु शीतत्वपावनत्वादिरूपधर्मस्यातिशयः फलम् (य)॥

**तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः ॥२१॥ (र)**

रूढावष्टौ फले द्वात्रिंशदिति चत्वारिंशल्लक्षणाभेदाः। किञ्च।

**पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा ॥२२॥(ल)**

ता अनन्तरोक्ताः। तत्र पदगतत्वेन यथा। "गङ्गायां घोषः"। वाक्यगतत्वेन यथा। "उपकृतं बहु तत्र" इति। एवमशीतिप्रकारा लक्षणा।

---

(य) स्निग्धेति। सीताविरहिणो रामस्योक्तिरियम्। स्निग्धा श्यामला च या कान्तिः तया लिप्तम् आच्छादितं वियत् अन्तरीक्षं, "वियद्विष्णुपदं वापि पुंस्याकाशविहायसी" इत्यमरः। ये तयोक्ता वेल्लन्त्यः चरन्त्यः बलाकाः बकपङ्क्तयः येषु तादृशाः घनाः मेघाः। वाताः वायवः शीकरिणः साम्बुकणाः तथा पयोदसुहृदां मयूराणां कलाः मधुरास्फुटाः आनन्दकेकाः आनन्दजनितकेकारवाः कामं यथेष्टम् अविश्रान्तमित्यर्थः सन्तु वर्त्तन्ताम् अहं च अहं दृढम् अत्यर्थं कठोरहृदयः कठिनात्मा रामः सर्वं सहे सोढुं शक्नोमीत्यर्थः। वैदेही जानकी तु कथं भविष्यति केन प्रकारेण स्थास्यति इत्यर्थः हहा इति खेदसूचकमव्ययं हा देवि! सीते! धीरा धैर्यशालिनी भव मदन्तरेण अस्मिन् समये नात्कण्ठिता भव इति भावः। शार्दूलविक्रीडितं वृत्तम्। अत्र अत्यन्तदुःखसहिष्णुरामे धर्मिणि लक्ष्ये तस्यैव अतिशयः धैर्याद्युत्कर्षः फलमिति बोध्यम्। अत्र सहे इत्युत्तमपुरुषस्यैव वक्तृत्वेन रामस्य लाभे पुनस्तस्य उपादानम् अत्यन्तदुःखसहिष्णुरामप्रतिपादनार्थमत एव अत्र मुख्यार्थबाधादुपादानलक्षणेति बोध्यम्।

(र) उपसंहरति। तदेवमिति तत् तस्मात् एवं प्रकारेणेत्यर्थः बुधैः विद्वद्भिः चत्वारिंशत् लक्षणाभेदाः मताः कथिताः।

(ल) पुनश्च तासामेव भेदं दर्शयति पदेति। ताः चत्वारिंशद्भेदाः अपि लक्षणाः पदवाक्यगतत्वेन पदगतत्वेन वाक्यगतत्वेन च इत्यर्थः प्रत्येकं द्विधा भवन्तीति शेषः। तदेव मिलित्वा अशीतिप्रकाराः लक्षणाः।

अथ व्यञ्जना ।

**विरतास्वभिधाद्यासु ययाऽर्थो बोध्यतेऽपरः ।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च २३(व)**

शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति नयेनाभिधालक्षणातात्पर्य्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वा उपक्षीणासु यया अपरः अन्योऽर्थो बोध्यते सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च वृत्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषयो व्यञ्जना नाम (श)। तत्र ।

**अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा॥२४(ष)**

अभिधामूलामाह ।

**अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।**
**एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया॥२५॥(स)**

---

(व) व्यञ्जनां निरूपयति अथेति। अथ लक्षणानिरूपणात् परमित्यर्थः। विरतास्विति। अभिधाद्यासु अभिधालक्षणातात्पर्य्याख्यासु तिसृषु वृत्तिषु विरतासु यया वृत्त्या अपरः वाच्यलक्ष्यतात्पर्य्यार्थेभ्यः भिन्नः अर्थः बोध्यते प्रत्याय्यते शब्दस्य अर्थादिकस्य च वृत्तिर्व्यापारविशेषः व्यञ्जना नाम।

(श) व्यञ्जनेति। व्यञ्जन ध्वनन गमन प्रत्यायनञ्च आदि यस्य तादृशः यः व्यपदेशः संज्ञा स विषयो यस्यास्तथोक्ता।

(ष) अभिधेति। अभिधा लक्षणा च मूलं यस्याः तथोक्ता शब्दस्य व्यञ्जना द्विधा अभिधामूला एका लक्षणामूला अपरेति।

(स) अनेकार्थस्येति। संयोगाद्यैरनन्तरोक्तैः अनेकार्थस्य अनेके एकभिन्नाः द्वौ बहवो वेत्यर्थः अर्थाः यस्य तादृशस्य शब्दस्य एकत्र एकस्मिन् अर्थे नियन्त्रिते नियम्य प्रतिपादिते सति अन्यधीहेतुः अन्यस्य अर्थान्तरस्य धीहेतुः बोधोपायः यः व्यापार इति शेषः सा अभिधाश्रया अभिधामूला व्यञ्जना। यत्र तु संयोगादिकं नास्ति तत्र यावन्त एवार्थाः वाच्या इति बोध्यम्। प्रथममभिधायां संयोगादि-

आद्यशब्दाद् विप्रयोगादयः। उक्तं हि।

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता।

अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।

शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः"॥ इति। (छ)

"सशङ्खचक्रो हरिः" इत्यत्र शङ्खचक्रसंयोगेन हरिशब्दो विष्णुमेवाभिधत्ते। "अशङ्खचक्रो हरिः" इति वियोगेन तमेव। "भीमार्जुनौ" इति अर्जुनः पार्थः। "कर्णार्जुनौ" इति कर्णः सूतपुत्रः। "स्थाणुं वन्दे" इति स्थाणुः शिवः। "सर्वं जानाति देवः" इति देवो भवान्। "कुपितो मकरध्वजः" इति मकरध्वजः कामः। "देवः पुरारिः" इति पुरारिः शिवः। "मधुना मत्तः पिकः" इति मधुर्वसन्तः। "यातु वो दयिता मुखम्" इति मुखं सांमुख्यम्। "विभाति गगने चन्द्रः" इति चन्द्रः शशी। "निशि चित्रभानुः" इति चित्रभानुर्वह्निः। "भाति रथाङ्गम्" इति नपुंसकव्यक्त्या रथाङ्गं चक्रम्। स्वरस्तु वेद एव विशेषप्रतीतिकृत् न काव्ये इति तस्य विषये नोदाहृतम् (च)। इदञ्च केऽप्यसहमाना आहुः।

---

नियन्त्रितमर्थं बोधयित्वा उपचीणाया पर्यालोचनेन अपरार्थप्रतीतेरभिधामूलत्वमिति भावः।

(छ) संयोग इति। संयोगः सङ्गः, विप्रयोगः वियोगः, साहचर्यं सहकारित्वं विरोधिता वैरम्, अर्थः प्रयोजनम्, "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। प्रकरणं प्रस्तावः, लिङ्गं चिह्नम्, अन्यस्य तुल्यविभक्तिकस्य शब्दस्य सन्निधिः सान्निध्यं, सामर्थ्यं नियतशक्तिः, औचिती औचित्यं, देशः नियमित स्थानं, कालः निर्दिष्टसमयः, व्यक्तिः पुंस्त्वादिकं, तथा स्वरादयः उदात्तानुदात्तस्वरितप्रभृतयः, शब्दार्थस्य अनवच्छेदे अनिर्द्धारणे विशेषस्मृतिहेतवः विशेषबोधकारणानि।

(च) उदाहरति सशङ्खचक्र. हरिरित्यादि। वियोगेन शङ्खचक्रपरि-

"स्वरोऽपि काक्वादिरूपः काव्ये विशेषप्रतीतिकृदेव, उदात्तादिरूपोऽपि मुनेः पाठोक्तदिशा शृङ्गारादिरसविशेषप्रतीतिकृदेवेत्येतद्विषय उदाहरणमुचितमेव" इति तन्न। स्वराः काक्वादय उदात्तादयो वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति न खलु प्रकृतोक्तमनेकार्थशब्दस्यैकार्थनियन्त्रणरूपं विशेषम्। किञ्च। यदि यत्र क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावादनियन्त्रितयोरप्यर्थयोः अनुरूपस्वरवशेनैकत्र नियमनं वाच्यं तदा तथाविधस्थले श्लेषानङ्गीकारप्रसङ्गः। न च तथा।

---

हरिणेत्ययं द विष्णुमेव अभिधत्ते अभिधया बोधयति न तु इन्द्रादिकमित्येवकारस्यार्थः। साहचर्यमुदाहरति भीमेति। अत्र न. पार्थः पृथापुत्र. धनञ्जय. न तु कार्त्तवीर्यादि। विरोधितामुदाहरति कर्णार्जुनाविति। कर्ण सूतपुत्र. तेनैव सहार्जुनस्य सततवैरित्वादिति भाव' न तु श्रवणेन्द्रियादिः। अर्थमुदाहरति स्थाणुमिति। शिववन्दनस्यैव भवच्छेदनफलकत्वादिति भावः न तु शाखापल्लवादिहीन शुष्कतरुकाण्डम्। प्रकरणमुदाहरति सर्वमिति। अत्र राज्ञ एव प्रकृतत्वं न तु कस्यचित् देवताविशेषस्य। लिङ्गमुदाहरति कुपित इति। कोपचिह्नस्य चेतनधर्मत्वात् मकरध्वजो नात्र समुद्र इति भाव.। अन्यशब्दसन्निधिमुदाहरति देव इति। अत्र पुरारिशब्दसान्निध्यात् देवशब्द शिवमेवाभिधत्ते न तु अन्यं कञ्चनेति बोध्यम्। सामर्थ्यमुदाहरति मधुनेति। वसन्तस्यैव कोकिलमादने सामर्थ्यात् न तु मधुशब्द. मद्यविशेषमभिधत्ते इति भाव.। औचितीमुदाहरति पातु इति। अत्र मुखशब्द. औचित्यात् साम्मुख्यमेव न तु वदनादिकमभिधत्ते इति बोध्यम्। देशमुदाहरति विभातीति। शशी न तु कर्पूरादिरिति शेष.। कालमुदाहरति निशीति। वह्निर्न तु सूर्य. तस्य निशि अदर्शनादिति भावः। व्यक्तिमुदाहरति भातीति। अत्र रथाङ्गशब्द नपुंसकलिङ्गेन चक्रमेवाभिधत्ते न तु चक्रवाकादिमिति भाव'। स्वरस्त्विति विशेषप्रतीतिकृत् विशेषस्य अन्यतरस्य अर्थस्य प्रतीतिकृत बोधकः यथा इन्द्रशत्रुर्विवर्धस्वेत्यादौ स्वरभेदेन इन्द्र. शत्रुर्यस्येति बहुव्रीहिसमासे इन्द्रशत्रुशब्दः इन्द्र एव शासनकर्त्ता वृत्रस्येत्येवमर्थमभिहितवान् न तु इन्द्रस्य शत्रुरिति तत्पुरुषसमासीयस्वराप्रयोगात् वृत्रस्य इन्द्रहन्तृत्वमित्यादि।

अतएवाहु: "श्लेषनिरूपणप्रस्तावे काव्यमार्गे स्वरो न गण्यत इति च नय:" इत्यलमुपजीव्यानां मान्यानां व्याख्यानेषु कटाक्षनिक्षेपेण (क)। आदिशब्दात् "एतावन्मात्रस्तनी" इत्यादौ हस्तादिचेष्टादिभि: स्तनादीनां कमलकोरकाद्याकारत्वम्। एवमेकस्मिन्नर्थे अभिधया नियन्त्रिते या शब्दस्यान्यार्थबुद्धिहेतु: शक्ति: सा अभिधामूला व्यञ्जना। यथा मम तातपादानां महापात्रचतुर्दशभाषाविलासिनीभुजङ्गमहाकवीश्वरश्रीचन्द्रशेखरसान्धिविग्रहिकाणाम्।

"दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा
प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभि:।
नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढ़ां रुचिं धारयन्
गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभ:"॥ (ख)

---

(क) उदात्तादिरूप: उच्चैरुदात्त नीचैरनुदात्त मध्यम. स्वरित'। मुने. भरतस्य पाठोक्तदिशा पाठोक्तरीत्या यथा हास्यशृङ्गारयो स्वरितोदात्त वीररौद्राद्भुतेषु उदात्तस्वरित करुणबीभत्सभयानकेषु अनुदात्तस्वरितमुपपादयेदिति। काव्यमार्गे काव्यपद्धतौ। उपजीव्याना यानाश्रित्य जीवतोत्युपजीव्यास्तेषा कटाक्षनिक्षेपेण दृष्टिपातेन।

(ख) अभिधामूलामुदाहरति दुर्गेति। दुर्गै प्राकारपरिखादिभि' अलङ्घित: प्रतिरोद्धुमपारित विग्रह' सग्राम यस्य तादृश य शत्रूणा दुर्गाणि भित्त्वापि सग्राममातनोतीति भाव अथवा विग्रह शरीर यस्य तथोक्त शत्रुभि यस्य दुर्गाणि भित्त्वा शरीर नाक्रमितु शक्यते इति भाव। तेजसा कान्त्या सौन्दर्य्येणेत्यर्थ. मनसिज काम सम्मीलयन् सङ्कोचयन् खर्वयन्नित्यर्थ। प्रोद्यत् प्रकर्षेण उद्यत् राजकं राजसमूह लाति गृह्णाति वशीकरोतीति प्रोद्यद्राजकल, गृहीत गरिमा गौरव येन तथोक्त', भोगिभि. सुखभोगरतै पुरुषै: विष्वक् समन्तात् वृत: परिवृत. नक्षत्रेशेषु क्षत्रियश्रेष्ठेषु कृतम् ईक्षण दृष्टिर्येन तथाविध. श्रेष्ठानपि क्षत्रियान् अगणयन्नित्यर्थ' गिरि हिमालय: गुरु श्वशुरो यस्य तस्मिन् हरे इत्यर्थ. गाढा महतीं रुचिम् अनुराग भक्तिमिति यावत् धारयन् शिवोपासक इत्यर्थ. तथा गा पृथ्वीमा-

अत्र प्रकरणेनाभिधया उमावल्लभशब्दस्य उमानाम्नी महादेवी तद्वल्लभभानुदेवनृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपोऽर्थो बोध्यते । एवमन्यत् (ग) ।

लक्षणामूलामाह ।

**लक्षणोपास्यते यस्य कृते तत् तु प्रयोजनम् ।**
**यया प्रत्याय्यते सा स्याद्व्यञ्जना लक्षणाश्रया २६ (घ)**

"गङ्गायां घोषः" इत्यादौ जलमयाद्यर्थबोधनादभिधायां विरतायां तटाद्यर्थबोधनाच्च लक्षणायां विरतायां यया शीतत्वपावनत्वाद्यतिशयादिर्बोध्यते सा लक्षणामूला व्यञ्जना ।

---

क्रम्य विभूतिभिः सम्पद्भिः भूषिता अलङ्कृता तनुर्यस्य तथाविधः उमावल्लभः तदाख्यो राजविशेषः वा उमानाम्नी महादेवी तस्याः वल्लभः पतिः राजति शोभते ।

(ग) व्यञ्जनयैवेति । व्यञ्जनया अभिधामूलया इत्यर्थः पश्चात् अनेकार्थशब्दानां पर्य्यालोचनेन गौरीवल्लभरूपो द्वितीयोऽर्थ बोध्यते तद्यथा दुर्गया पार्वत्या लङ्घितः अर्द्धाङ्गत्वेन आक्रान्तः विग्रहः शरीरं यस्य तथोक्तः, तेजसा तृतीयनयनोत्थेन वह्निनेत्यर्थः मनसिजं मदनं सम्मीलयन् दहन् शोभमानो भाले विराजन्ती राजकला चन्द्रकला यस्य तादृशः, गृहीतगरिमा विश्वम्भरत्वादिति भावः, भोगिभिः भुजङ्गैः विष्वक् सर्व्वतः वृतः पन्नगालङ्कार इत्यर्थः, नक्षत्राणां ईशेन राज्ञा चन्द्रेणेत्यर्थः कृतम् अलङ्कृतमित्यर्थः ईक्षणं तृतीयनेत्रमिति यावत् यस्य तादृशः, गिरिगुरौ हिमाद्रौ गाढा महती रुचिं प्रीतिं धारयन् श्वशुरत्वादिति भावः, गां वृषमाक्रम्य विभूतिभिः भस्मभिर्भूषिता तनुर्यस्य तथोक्तः उमायाः पार्व्वत्या वल्लभः पतिः शम्भुः राजति इत्येवंरूपो द्वितीयोऽर्थः व्यञ्जनया प्रतिपाद्यते ।

(घ) लक्षणामूलामुदाहरति लक्षणामूलेति । यस्य प्रयोजनस्य कृते बोधाय इत्यर्थः लक्षणाप्रयोजनवतीति शेषः उपास्यते आश्रियते स्वीक्रियते इति यावत् तत् तु प्रयोजनं यया प्रत्याय्यते बोध्यते सा लक्षणाश्रया व्यञ्जना स्यात् ।

एवं शाब्दीं व्यञ्जनामुक्त्वा आर्थीं व्यञ्जनामाह।

वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः।
प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च॥
वैशिष्ट्यादन्यमर्थं या बोधयेत् सार्थसम्भवा २७ (ङ)

व्यञ्जनेति सम्बध्यते। तत्र वक्तृवाक्यप्रस्तावदेशकाल-वैशिष्ट्ये यथा मम।

"कालो मधुः कुपित एष च पुष्पधन्वा
धीरा वहन्ति रतिखेदहराः समीराः।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु-
र्दूरे पतिः कथय किं करणीयमद्य" ॥ (च)

अत्रैतं देशं प्रति शीघ्रं "प्रच्छन्नकामुकस्त्वया प्रेष्यताम्" इति सखीं प्रति कयाचित् द्योत्यते।

बोद्धव्यवैशिष्ट्ये यथा।

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः

---

(ङ) आर्थीं व्यञ्जनामाह वक्त्रिति। वक्ता कथयिता, यत् समीपे उच्यते स बोद्धव्यः, तस्य वाक्यानाम् अन्यसन्निधिः अन्यस्य सन्निधानं वाच्यस्य तयोः, प्रस्तावः प्रकरणं देशः स्थानं कालः समयः, तेषां काकोः ध्वनिविकारस्य तथा चेष्टादिकस्य वैशिष्ट्यात् वैचित्र्यात् या वृत्तिः, अन्यम् अर्थं बोधयेत् प्रत्याययेत् सा अर्थसम्भवा आर्थी व्यञ्जनेति शेषः।

(च) काल इति। कालः समयः मधुः वसन्तः एष च पुष्पधन्वा कामः कुपितः धीराः मन्दाः रतिखेदहराः सुरतपरिश्रमापहारकाः समीराः वायवः वहन्ति वञ्जुलानाम् अशोकानां कुञ्जेन लतादिपिहितस्थानेन मञ्जुः मनोज्ञा इयं केलीवनी क्रीडाकाननं किन्तु पतिः दूरे वर्त्तते इति शेषः, अद्य किं करणीयं कथय। अत्र वक्तुः कामुकत्वं वाक्यस्य उद्दीपकत्वं प्रस्तावस्य सखीसमीपे सुरतसङ्कल्पत्वं देशस्य कालस्य च कामोद्दीपकत्वेन वैशिष्ट्यं बोद्धव्यम्। वाच्यवैशिष्ट्येऽपि एतदुदाहरणं बोध्यम्।

नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडागमे !
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्" ॥ (क)

अत्र तदन्तिकमेव गतासीति विपरीतलक्षणया लक्ष्यम् । तस्य च रन्तुमिति व्यङ्ग्यं प्रतिपाद्यं दूतीवैशिष्ट्याद् बोध्यते ।

अन्यसन्निधिवैशिष्ट्ये यथा ।

"उअ णिच्चल ! णिप्पंदा भिसिणीपत्तम्मि रेहइ बलाआ ।
णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्तिव्व" (ख) ॥

अत्र बलाकाया निष्पन्दत्वेन विश्वस्तत्वं तेनास्य देशस्य विजनत्वमतः सङ्केतस्थानमेतदिति कयापि सन्निहितप्रच्छन्न-

---

(क) निःशेषेति । उपपतिमानेतुं प्रेषितां दूतीं प्रति कस्याश्चिदुक्तिरियम् । रे मिथ्यावादिनि ! मम प्रयत्नेनापि स नायात इति मृषाभाषिणि । बान्धवजनस्य मादृशस्य अज्ञात अविदित पीडागम क्लेशानुभवः यया तत्सम्बुद्धौ । दूति ! त्वमितो मत्सकाशात् स्नातुं वापीं सरसीं गता न पुनस्तस्य अधमस्य अन्तिकं समीपं गता ? यत् तव स्तनतटं निःशेषं यथा तथा च्युतचन्दनं यस्मात् तादृशं विशिष्टावगाहनेन क्षालनादिति भावः. तव अधरः निर्मृष्टः निःशेषेण मृष्टः क्षालितः रागो लौहित्यं यस्मात् तथोक्तः, नेत्रे, नयने दूरम् अत्यर्थम् अनञ्जने कज्जलरहिते, इयं तन्वी क्षीणा तनुः, पुलकिता रोमाञ्चिता सर्वमेतत् स्नानफलमापाततः अभिधया प्रतिपाद्यते । किन्तु बोद्धव्यायाः दूत्या वैशिष्ट्येन तदन्तिकमेव रन्तुं गतासीति व्यञ्जनया प्रतीयते । यदि च निःशेषच्युतचन्दनमित्यादि स्नानकार्य्यञ्च तथापि स्नाने स्तनतटस्यैव निःशेषच्युतचन्दनत्वं न किन्तु सर्व्वस्यैवाङ्गस्य, अधरस्यैव निर्मृष्टरागत्वं न किन्तु ओष्ठस्यापि, नेत्रयोरव्यञ्जनत्वं न अपि तु अनञ्जनमेव, ततश्चैतत् चुम्बनस्यैव फलमिति दूत्या वैशिष्ट्यमिति बोध्यम् ।

(ख) उअ इति । उअ निश्चल । निष्पन्दा बिसिनीपत्रे राजते बलाका । निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिवेति संस्कृतम् । हे निश्चल ! पश्य । निश्चलाह इत्यर्थः. निर्मलमरकतभाजने स्वच्छमरकतमणिपात्रे परि-

कामुकं प्रत्युच्यते । अत्रैव स्थाननिर्जनत्वरूपव्यङ्ग्यार्थवैशिष्ट्यं प्रयोजकम् (झ) ।

**भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते ॥२८॥**

इत्युक्तप्रकारायाः काकोर्भेदा आकरादिभ्यो ज्ञातव्याः (ञ)

एतद्वैशिष्ट्ये यथा ।

"गुरुपरतन्त्रतया बत ! दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते नैष्यति सखि ! सुरभिसमयेऽसौ" ॥ (ट)

अत्र नैष्यति अपि तर्हि एष्यत्येवेति काका व्यज्यते ।

चेष्टावैशिष्ट्ये यथा ।

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम ॥ (ठ)

अत्र सन्ध्या सङ्केतकाल इति पद्मनिमीलनादिचेष्टया

---

स्थिता शङ्खशुक्तिरिव शङ्खकपालमिव बिसिनीपत्रे इव बलाका बकी निष्पन्दा-राजते ऊह पश्य ।

(झ) प्रयोजकं तृतीयव्यञ्जनाया कारणमित्यर्थः ।

(ञ) भिन्नेति । भिन्नः शोकहर्षादिभिर्विकृतीकृतः यः कण्ठध्वनिः स धीरैः विद्वद्भिः काकुरिति अभिधीयते कथ्यते । आकरादिभ्यः प्राचीनाचार्य्यप्रबन्धेभ्यः ।

(ट) गुर्विति । हे सखि ! असौ मत्पतिरित्यर्थः गुरूणां पित्रादीनां परतन्त्रतया पराधीनतया बत खेदे दूरतरम् अतिदूरं देशं गन्तुम् उद्यतः प्रवृत्तः, अलिकुलैः भ्रमरसङ्घैः कोकिलैश्च ललिते सुन्दरे मनोहरे इत्यर्थः सुरभिसमये वसन्ते न एष्यति ? न आगमिष्यति ? अपि तु एष्यत्येव ।

(ठ) सङ्केतेति । विदग्धया चतुरया कयाचित् कामिन्या विटम् उपपतिं सङ्केतकाले सङ्केतकालज्ञाने मनो यस्य तादृशं कः सङ्केतसमयः ? इति जिज्ञासुमित्यर्थः ज्ञात्वा विदित्वा हसद्भ्यां नेत्राभ्याम् अर्पितः ज्ञापितः आकूतः अभिप्रायः यस्मिन् तद् यथा तथा लीलापद्मं क्रीडाकमलं निमीलितं सङ्कोचितम् ।

कथयिष्यते। एवं वक्त्रादीनां व्यस्तसमस्तानां (ड) वैशिष्ट्ये बोद्धव्यम्।

**त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता॥२८(ढ)**

अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिरूपतया सर्वा अपि अनन्तरोक्ता व्यञ्जनास्त्रिविधाः। तत्र वाच्यार्थस्य व्यञ्जना यथा, "कालो मधुः" इत्यादि। लक्ष्यार्थस्य यथा। "निःशेष-च्युतचन्दनम्" इत्यादि। व्यङ्ग्यार्थस्य यथा, "उत्र णिच्च-लीत्यादि"। प्रकृतिप्रत्ययव्यञ्जकत्वन्तु प्रपञ्चयिष्यते (ण)।

**शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः।**

**एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता॥३०॥(त)**

यतः शब्दो व्यञ्जकत्वे अर्थान्तरमपेक्षते अर्थोऽपि शब्दं तदेकस्य व्यञ्जकत्वे अन्यस्य सहकारिताऽवश्यमङ्गीकार्य्या।

**अभिधादित्रयीपाधिवैशिष्ट्यात् त्रिविधो मतः।**

---

(ड) व्यस्तेति। व्यस्तानां वक्त्रादीनां प्रत्येकस्येत्यर्थः समस्तानां मिलितानां-मित्यर्थः।

(ढ) त्रैविध्यादिति। इयं व्यञ्जना चार्थीति शेषः अर्थानां वाच्यलक्ष्यव्यङ्ग्यानां त्रैविध्यात् त्रिप्रकारत्वात् प्रत्येकं त्रिविधा वाच्यव्यञ्जना लक्ष्यव्यञ्जना व्यङ्ग्यव्यञ्जना च मता।

(ण) प्रकृतिप्रत्ययेति। प्रपञ्चयिष्यते प्रकाशयिष्यते चतुर्थपरिच्छेदे इति शेषः।

(त) शब्देति। अर्थः शब्देन बोध्यः प्रतिपाद्यः सन् व्यनक्ति अर्थान्तरं व्यञ्ज-नया बोधयति। शब्दोऽपि अर्थान्तरम् आश्रयतीति तथाभूतः सन् व्यनक्ति प्रकाश-यति तत तस्मात् एकस्य अनयोरन्यतरस्येत्यर्थः व्यञ्जकत्वे अन्यस्य सहकारिता सह-कारित्वं सहायत्वमित्यर्थः।

**शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ॥ २१ (थ)**

अभिधोपाधिको वाचकः । लक्षणोपाधिको लक्षकः । व्यञ्जनोपाधिको व्यञ्जकः । किञ्च ।

**तात्पर्य्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने ।**
**तात्पर्य्यार्थं तदर्थञ्च वाक्यं तद्बोधकं परे ॥ २२ (द)**

अभिधाया एकैकपदार्थबोधनविरमाद् वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्य्या नाम वृत्तिस्तदर्थश्च तात्पर्य्यार्थस्तद्बोधकञ्च वाक्यमिति अभिहितान्वयवादिनां मतम् (ध) ।

इति साहित्यदर्पणे वाक्यस्वरूपनिरूपणो नाम
द्वितीयः परिच्छेदः ।

---

(थ) अभिधेति । शब्दोऽपि अभिधादित्रयम् अभिधालक्षणाव्यञ्जनात्रयमित्यर्थः तदेव उपाधि व्यापारविशेषः तद्वैशिष्ट्यात् तद्वैचित्र्यात् वाचक. लक्षक व्यञ्जक इति त्रिविधो मतः कथित. ।

(द) सम्प्रति प्राचीननैयायिकमतोक्तां तात्पर्य्याख्यामाह तात्पर्य्याख्यामिति । पदार्थानाम् अन्वयबोधने संसर्गप्रत्यायने तदर्थमिति यावत् निमित्तार्थे सप्तमी । तात्पर्य्याख्या तात्पर्य्यनाम्नी वृत्तिं व्यापारं तथा तदर्थं तस्य तात्पर्य्यार्थस्य बोधकं वाक्यञ्च परे प्राचीना नैयायिका. आहु. वदन्ति नव्यास्तु इमां संसर्गमर्य्यादामाहुः ।

(ध) अभिहितान्वयवादिनाम् अभिहितानाम् अभिधया उपस्थापितानाम् उपलक्षणमेतत् लक्षणया च प्रतिपादितानाम् अर्थानाम् अन्वयः सम्बन्धं त वदन्तीति तथोक्तानां प्राचीननैयायिकानामित्यर्थं. अभिहितान्वयवादिनस्तु प्रथमकैव संसम्बन्धं पदार्थम् अभिधया लक्षणया वा प्रतिपादयन्तीति न तै. तात्पर्य्यवृत्तिरङ्गीकृतेति द्रष्टव्यम् ।

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागर-
भट्टाचार्य्येण विरचिता विमलाख्या साहित्यदर्पणस्य
द्वितीयपरिच्छेदव्याख्या समाप्ता ।

---

# तृतीयः परिच्छेदः ।

—•:○□○:•—

अथ कोऽयं रस इति उच्यते ।

**विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।**
**रसतामेति रत्यादिः स्थायिभावः सचेतसाम् ॥२३॥**

विभावादयो वक्ष्यन्ते । सात्त्विकाश्चानुभावरूपत्वात् न पृथगुक्ताः । व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतो (व्यक्తీ-कृत एव रसो)न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते । तदुक्तं लोचनकारैः, "रसाः प्रतीयन्त इति त्वोदनं पचतीतिवद् व्यवहार इति" अत्र च रत्यादिपदोपादानादेव प्राप्ते स्थायित्वे पुनः स्थायिपदोपादानं रत्यादीनामपि रसान्तरेषु अस्थायित्व-प्रतिपादनार्थं ततश्च हासक्रोधादयः शृङ्गारवीरादौ व्यभि-चारिण एव । तदुक्तं, "रसावस्थः परं भावः स्थायितां प्रति-पद्यते" इति (क) ।

---

(क) अथ काव्यनिरूपणानन्तरम् अय काव्यलक्षणघटकः इत्यर्थः । विभावेनेति । विभावेन अनुभावेन तथा सञ्चारिणा व्यक्तः प्रकटितः रत्यादिः रतिहासादिरूपः स्थायिभावः सचेतसां सामाजिकानां रसताम् एति प्राप्नोति रसरूपेण परिणमति गच्छतीत्यर्थः । रत्यादेर्नायकादिनिष्ठत्वेऽपि तादृशकाव्यार्थभावनया सामाजिक-निष्ठत्वं बोध्यम् । यद्यपि विभावा अनुभावाश्च सात्त्विका व्यभिचारिण इत्यादिना सात्त्विकानामपि रसघटकत्वं निरूपितं तदपि तेषाम् अनुभावरूपात् न पृथगुक्ति । दध्यादीति आदिपदेन प्रपानकरसादीनां परिग्रहः । यथा दुग्धमम्लयोगेन दधि-रूपेण परिणमति तद्वत् रत्यादिः विभावादियोगेन सामाजिकानां [illegible] इत्यर्थः । रूपान्तरं विभिन्नस्वरूपं परिणतः प्राप्त इत्यर्थः रूपान्तरं परिणतं निष्पन्नं

अस्य स्वरूपकथनगर्भं आस्वादप्रकारः कथ्यते (ख)।

**सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।**
**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥**
**लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः ।**
**स्वाकारवदभिन्नत्वे नायमास्वाद्यते रसः ॥ (ग)**
**(रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते ॥३४॥)**

---

यस्य स तथा। अग्न्याहितादित्वात् क्तान्तस्य परनिपातो वा बोध्यः। रसस्य पूर्वसिद्धता नास्तीत्याह नन्विति। दीपन यथा पूर्वसिद्धान् घटादिपदार्थान् प्रकाशयति तथा विभावादय रसं नेत्यर्थ। उक्तमर्थं प्रमाणयति तदुक्तमिति। ओदनमिति ओदनम् अन्न न खलु ओदन पच्यते अपि तु तण्डुल एव पक्वान्नस्यैव ओदनत्वात् किन्तु ओदन पचतीति यथा व्यवह्रियते तद्वत् रसा प्रतीयन्ते इति रत्यादिप्रतीतिविशेषस्यैव रसत्वादिति भाव.। यद्यपि रत्यादीना नायकादिनिष्ठतया पूर्वसिद्धत्वमस्ति, किन्तु तादृशरत्यादिर्न रससंज्ञया उच्यते सामाजिकनिष्ठ एव रस. स च काव्यार्थभावनासमुद्भवस्तत्क्षणमनुभूयमान एव तस्मान्नास्य पूर्वसिद्धत्वमिति भाव्यम्। रसावस्थ इति रसे अवस्था अवस्थान यस्य तादृश रसपदवीमापन्न इत्यर्थ' न तु कदाचिदनुभूयमानः रसस्य व्यापकत्वादिति भाव, भाव रत्यादि स्थायिता व्यापकत्वमित्यर्थ प्रतिपद्यते लभते। स्थायी रत्यादि रस न तु व्यभिचारीति भाव।

(ख) कि स्वरूपो रस कथ वा अस्य आस्वाद इत्याह अस्येति। अस्य रसस्य स्वरूप लक्षण तस्य कथन गर्भे मध्ये यस्य तादृश. आस्वादप्रकार. अनुभवविशेष. कथ्यते निरूप्यते।

(ग) सत्त्वोद्रेकादिति। सत्त्वस्य वक्ष्यमाणस्य उद्रेकात् कैश्चित् न तु सर्वैरिति भाव प्रमातृभि विद्वद्भि' अखण्डः पूर्ण स्वप्रकाशः स्वेन आत्मना प्रकाशते इति स्वप्रकाश. न तु कोऽप्यस्य प्रकाशक इति भाव. आनन्दचिन्मय. आनन्दसवलितज्ञानमय' वेद्यान्तरस्य अन्यस्य ज्ञेयस्य स्पर्शेन शून्य. रसास्वादकाले अन्यज्ञानस्यासद्भावादिति भावः अतएव ब्रह्मण. परमात्मन. आस्वादस्य साक्षात्कारस्य सहोदरः सदृशः परमात्मज्ञानकाले अपरज्ञानस्यापायादिति भाव.। लोकोत्तर अलौकिकः यश्चमत्कारः चित्तविकास. स एव प्राण. जीवनभूतो यस्य

इत्युक्तप्रकारो बाह्यमेयविमुखतापादकः कश्चनान्तरो धर्मः सत्त्वं; तस्योद्रेकः रजस्तमसी अभिभूयाविर्भावः। अत्र च हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम्। अखण्ड इत्येक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः। अत्र (घ) हेतुं वक्ष्यामः। स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या। चिन्मय इति स्वरूपार्थे मयट्। चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्य्यायः। तत्प्राणत्वञ्च अस्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तम्। तदाह धर्मदत्तः स्वग्रन्थे।

रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः॥

---

तादृश नायकादीना मायिकादिरत्यादिषु लौकिकचमत्कारस्यैव सम्भवात् अस्य तु सामाजिकनिष्ठस्य अलौकिकत्वमिति भाव। अयम् उक्तस्वरूपो रस स्वाकारवत् स्वदेहवत् अभिन्नत्वेन आस्वाद्यते अनुभूयते यथा आत्मनोऽभिन्नोऽपि देह. अहं स्थूल अहं कृश इत्यादिभेदोल्लेखाभावेन प्रतीयते तथा रसोऽपि नायकादिनिष्ठतया भिन्नोऽपि रामोऽहं सीताविषयकरतिमानित्येवमात्मनिष्ठतया आस्वाद्यते घटादिज्ञाने जातेऽहं वेद्मि इति यथा ज्ञातृज्ञानभेदः प्रतीयते तथात्र नेति भाव।

(घ) सत्त्व निरूपयति रज इति। अनुत्कृष्टो मनोधर्मविशेष रजः, निकृष्टमनोधर्मविशेष तम, ताभ्याम् असृष्ट स्पर्शरहित मन, मानसो धर्मविशेष इत्यर्थः। इह रसनिरूपणप्रसङ्गे इत्यर्थ। सत्त्वम् उच्यते कथ्यते इति एवम् उक्तप्रकारः कथितरूप बाह्येभ्य. लौकिकेभ्य मेयेभ्य वेद्येभ्य या विमुखता वैमुख्य ताम् आपादयति आवहति इति तथोक्तः यस्मिन् सति बाह्यज्ञान न तिष्ठतीति भाव.। कश्चन अनिर्दिष्टरूप आन्तरः मानस धर्मः गुणविशेष। उद्रेक अत्र सत्त्वोद्रेके इत्यर्थ.। विभावादीति अयं रसः विभावादिभि सह य. रत्यादि. तस्य प्रकाशो यत्र तादृशः सुखचमत्कार अलौकिक सुखम् आत्मा स्वरूप यस्य तथाविध। यद्यपि विभावादीना प्रत्येकस्य खण्डत्वमस्ति तथापि समूहालम्बनात्मकतया अस्य अखण्डत्वमिति बोध्यम्। अत अखण्डत्वे।

तस्मादद्भुतमेवाह कृती नारायणो रसमिति" ॥ (ङ)

कैश्चिदिति प्राक्तनपुण्यशालिभिः। यदुक्तं, "पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम्" इति (च)। यद्यपि "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तदिशा रसस्यास्वादानतिरिक्तत्वमुक्तं तथापि "रसः स्वाद्यते" इति काल्पनिकं भेदमुररीकृत्य (छ) कर्मकर्त्तरि वा प्रयोगः। तदुक्तं, रस्यमानतामात्रसारत्वात् प्रकाशशरीरादनन्यः (ज) एव हि रसः" इति। एवमन्यत्रापि एवंविधस्थलेषु उपचारेण (झ) प्रयोगा ज्ञेयाः। ननु एतावता रसस्याज्ञेयत्वमुक्तं भवतीति व्यञ्जनायाश्च ज्ञानविशेषत्वाद् द्वयोरैक्यमापतितम् (ञ)। ततश्च।

---

(ङ) रसे इति। सर्वत्रापि रसे चमत्कारः चित्तविस्तार एव सारः स्थिरांशः प्राण इति भावः, "सारो बले स्थिरांशे च" इत्यमरः। अनुभूयते तत् चमत्कारसारत्वे तस्य रसस्य चमत्कारसारत्वे विस्मयप्राधान्ये स्थिते इत्यर्थं सर्वत्रापि सर्वोऽपीत्यर्थः प्रथमायास्त्रप्रत्ययः। रसः अद्भुतः। अद्भुत इति सामान्यं रसमात्रसञ्ज्ञेति भावः। अर्थात् रत्याद्यास्वाद्यमानत्वे यथास्वं शृङ्गारादिव्यपदेशः, तस्यानुभवानुत्पत्तौ च अद्भुतव्यपदेश इति बोध्यम्।

(च) पुण्यवन्त इति। पुण्यवन्तः प्राक्तनपुण्यशालिनः योगिवत् योगिन इव रससन्ततिं रसानां शृङ्गारादीनां सन्ततिं समूहं विस्तारमित्यर्थः, अन्यत्र रससन्ततिं परमात्मतत्त्वविस्तारमित्यर्थः, रसो वै स इत्यादिश्रुतौ परमात्मनो रसतया उल्लिखितत्वादिति भावः। प्रमिण्वन्ति अनुभवन्ति।

(छ) स्वाद इति। काव्यार्थस्य सम्भेदात् परिशीलनात् आत्मनः स्वस्य आनन्दसमुद्भवः सुखसमुत्पत्तिः स्वादः, काव्यार्थपरिशीलनजनितानन्दानुभवः स्वाद इति फलितार्थः। काल्पनिकम् आरोपितम्। उररीकृत्य अङ्गीकृत्य।

(ज) रस्यमानतेति। रस्यमानता आस्वाद्यमानतामात्रसारत्वात् प्रकाशशरीरात् अनुभवरूपात् अनन्यः अभिन्नः।

(झ) उपचारेण आरोपेण, प्रकाशशरीरादनन्य एवेति कथनेन इत्यर्थः।

(ञ) नन्विति एतावता अज्ञेयत्वं न ज्ञानविषयत्वम्। द्वयोरिति व्यञ्जनारसयोः

स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्" ॥

इत्युक्तदिशा घटप्रदीपवद् व्यङ्ग्यव्यञ्जकयोः पार्थक्यमेवेति कथं रसस्य व्यङ्ग्यतेति चेत् सत्यमुक्तम्। अतएवाहुः। विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चित् व्यापारः। अतएव हि रसनास्वादनचमत्कारणादयो विलक्षणा एव व्यपदेशा' इति अभिधादिविलक्षणव्यापारता अत्र प्रसाधनग्रहिलैः अस्माभिः रसादीनां व्यङ्ग्यत्वमुक्तं भवतीति (ट)। ननु तर्हि

रस इति स्थितिः। यदि रसः ज्ञानविशेषरूपव्यञ्जना च ज्ञानविशेषरूपा तदा उभयोरन्यतरत्वेऽपीति कथं साध्यसाधकत्वमिति भावः।

(ट) स्वज्ञानेनेति। सिद्धे अर्थे वस्तुनि सति व्यञ्जकः ज्ञापकः स्वस्य ज्ञानेन अन्यस्य सिद्धस्य अपरस्य अर्थस्य धीहेतु ज्ञानकरणं भवति यथा दीपः स्वज्ञानेन अन्येषां घटपटादीनां ज्ञानहेतुर्भवति। अन्यथा सिद्धवस्तुज्ञापकत्वाभावे अस्य व्यञ्जकस्य कारकात् जनकात् हेतोः को विशेषः। अयं भावः जनको हेतुः असिद्धं वस्तु उत्पादयति ज्ञापकस्तु सिद्धमेव वस्तु ज्ञापयतीति। इत्युक्तदिशा एवमुक्तरीत्या घटप्रदीपवत् यथा घटं प्रदीपो व्यनक्ति तद्वत् व्यञ्जको व्यङ्ग्यं व्यनक्ति अतस्तयोः पार्थक्यं भिन्नत्वमेव न तु एकरूपत्वमिति भावः। अतएव उक्तात् विसंवादादेवेत्यर्थः। आहुः कथयन्ति अभिनवगुप्तमतानुसारिणः इति शेषः। कृतिः करणं ज्ञप्तिः ज्ञानानुकूलव्यापारः तद्भेदेभ्यः विलक्षणः विभिन्नः स्वादनाख्यः कश्चित् अनिर्दिष्टः केनाप्यनुक्तावित इति यावत् व्यापारः शक्तिविशेषः येन रसः स्वाद्यते इति भावः। अतएव विभिन्नत्वादेव विलक्षणाः कृतिज्ञप्तिभिन्नाः व्यपदेशाः संज्ञाः उक्तव्यापारस्येति भावः। अस्माभिः तु अभिधादिविलक्षणव्यापारप्रसाधनग्रहिलैः अभिधादिभ्यः अभिधालक्षणातात्पर्याख्येभ्यः विलक्षणः विभिन्नः यः व्यापारः व्यञ्जनेत्यर्थः तस्य प्रसाधने स्थापने ग्रहिलैः प्रयासिभिः। यदि ज्ञानसामान्यबुद्धौ व्यञ्जनाया रसस्य च ऐक्यमापतेत् तथापि ज्ञानविशेषेण ज्ञानविशेषस्यापि व्यञ्जनं दृश्यते यथा प्रदीपसामान्यज्ञानेन घटादिज्ञानं व्यज्यते तद्वत् व्यञ्जनया रसो व्यज्यते इति व्यञ्जनायाः वक्तृतात्पर्यरूपज्ञानविशेषरूपया रसस्य आनन्दचिन्मयस्य पार्थक्यमेव सिद्धेऽर्थे इति तु प्रायिकं क्वचित् असिद्धार्थानामपि व्यञ्जनात् यथा सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया। हसन्ने-

(ठ) करुणादीनां रसानां दुःखमयत्वाद्रसत्वं न स्यादित्युच्यते।

**करुणादावपि रसे जायते यत् परं सुखम्।**
**सचेतसामनुभवः प्रमाणं तत्र केवलम्॥ ३५॥**

आदिशब्दाद्बीभत्सभयानकादयः। तथापि असहृदयानां मुखमुद्रणाय पक्षान्तरमुच्यते।

**किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः।**

न हि कश्चित् सचेता आत्मनो दुःखाय प्रवर्त्तते। करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात्।

अनुपपत्त्यन्तरमाह (ड)।

**तथा रामायणादीनां भविता दुःखहेतुता॥३६॥**

करुणरसस्य दुःखहेतुत्वात् करुणरसप्रधानरामायणादिप्रबन्धानामपि दुःखहेतुत्वप्रसङ्गः स्यात्। ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिरित्याह।

**हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात्।**
**शोकहर्षादयो लोके जायन्तां नाम लौकिकाः॥**
**अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात्।**
**सुखं सञ्जायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः ३७ [ढ**

---

र्पिताकूतं लीलापद्मं निमीलितमिति सन्ध्यासङ्केतकाल इति प्रच्छन्नकामुकं प्रति पद्मनिमीलनेनैव कयाचित् व्यज्यते इत्यतः सन्ध्यायाः सङ्केतकालत्वेन असिद्धत्वेऽपि व्यञ्जनागम्यत्वमिति सुधीभिर्भाव्यम्।

(ठ) नान्वेति तर्हि रसस्य आनन्दचिन्मयत्वे इत्यथ।

(ड) अनुपपत्त्यन्तरमिति। अन्याम् अनुपपत्तिम् अयौक्तिकतामित्यर्थः।

(ढ) हेतुत्वमिति। लोकः चराचरवस्तुजातं तस्य संश्रयात् संसर्गात् स्वभावाद्वा शोकहर्षादेः हेतुत्वं कारणत्वं गतेभ्यः प्राप्तेभ्यः वनवासादिभ्यः लौकिकाः लोकनिष्ठाः शोकहर्षादयः जायन्तां यथा रामवनवासे रामस्य दुःख

ये खलु रामवनवासादयो लोके "दुःखकारणानि" इत्युच्यन्ते त एव हि काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्दवाच्यत्वं विहाय अलौकिकविभावशब्दवाच्यत्वं भजन्ते (ण)। तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेव जायते। अतश्च "लौकिकशोकहर्षादिकारणेभ्यो लौकिकशोकहर्षादयो जायन्ते" इति लोक एव प्रतिनियमः। काव्ये पुनः "सर्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते" इति नियमान्न कश्चिद्दोषः। कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शनश्रवणाभ्यामश्रुपातादयो जायन्त इत्युच्यते।

**अश्रुपातादयस्तद्वद्द्रुतत्वाच्चेतसो मताः ॥३८॥ (त)**

तर्हि कथं काव्यतः सर्वेषामीदृशी रसाभिव्यक्तिर्न (थ) जायते इत्याह।

**न जायते तदास्वादो विना रत्यादिवासनाम् ३९ (द**

---

लौकिकानीति भावः काव्यसमाश्रयात् काव्यविनिवेशात् अलौकिकविभावत्व विलक्षणकारणत्व प्राप्तेभ्य तेभ्य सर्वेभ्य वनवासादिभ्योऽपि सुख सञ्जायते समुद्भवति इति अत का चाति, हानि ?

(ण) त एव हीत्यादि। त एव दुःखकारणानि वनवासादय इत्यर्थ. काव्यनाट्ययोः समर्पिता. अभिनिवेशिता. सन्त. अलौकिक विलक्षण यत् विभावनं रत्यादेरास्वादाङ्कुरयोग्यतानयन तदेव व्यापारः तद्वत्तया कारणशब्दवाच्यत्वं कारणशब्दप्रतिपाद्यत्व विहाय त्यक्त्वा अलौकिकः विलक्षणो य. विभावादिशब्द. तद्वाच्यत्वं भजन्ते प्राप्नुवन्ति। प्रतिनियम. स्थिति।

(त) अश्रु इति। चेतस. चित्तस्य द्रुतत्वात् गलितत्वात् अश्रुपातादय' आविर्भवन्तीति शेष' तदश्रुपातादिकम् आनन्दसञ्जनितमेवेति भाव.।

(थ) रसाभिव्यक्ति. रसास्वाद।

(द) नेति। रत्यादिवासना विना तस्य रसस्य आस्वादः न जायते रत्यादि-

वासना च इदानीन्तनी प्राक्तनी च रसास्वादहेतुः। तत्र यदि आद्या (ध) न स्याच्छ्रोत्रियजरन्मीमांसकादीनामपि सा स्यात्। यदि द्वितीया न स्याद्‌ यद्रागिणामपि (न) केषाञ्चिद्र-सोद्बोधो न दृश्यते तन्न स्यात्। उक्तञ्च धर्मदत्तेन।

सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।

निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः॥ (प) इति।

ननु कथं रामादिरत्याद्युद्बोधकारणैः (फ) सीता-दिभिः सामाजिकरत्याद्युद्बोधः? इत्युच्यते।

**व्यापारोऽस्ति विभावादेर्नाम्ना साधारणी कृतिः।**
**तत्प्रभावेण यस्यासन् पाथोधिप्लवनादयः॥**
**प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते॥४०॥ (ब)**

---

वासनावन्त एव रससास्वादयन्ति नान्ये इति भावः वासना संस्कारविशेषः।

(ध) आद्येति इदानीन्तनीत्यर्थः।

(न) रागिणाम् अनुरागवताम्।

(प) सवासनामिति। सवासनानाम् इदानीन्तनप्राक्तनवासनावतां सभ्यानां सहृदयानां रसस्य आस्वादनम् अनुभवः भवेत्। निर्वासनास्तु इदानीन्तनप्राक्तनान्यतरवासनारहितास्तु रङ्गान्तः रङ्गभूमिमध्ये काष्ठं कुड्यं भित्तिं वा अश्म तत्सन्निभाः काष्ठादिवत् रसबोधरहितास्तिष्ठन्तीत्यर्थः।

(फ) नन्विति। रामादीनां रत्यादेः उद्‌बोधः तस्य कारणैः हेतुभिः।

(ब) व्यापार इति। विभावादेः व्यापारः सामर्थ्यविशेषः इत्यर्थः अस्ति यः नाम्ना साधारणी कृतिः साधारणीकरणम् उच्यते इति शेषः तत्प्रभावेण तेषां विभावादीनां प्रभावेण सामर्थ्येन यस्य रामस्य वा हनुमतः पाथोधिप्लवनादयः समुद्रतरणादयः समुद्रलङ्घनादयो वा आसन् प्रमाता विद्वान् सामाजिकः तदभेदेन तेन रामेण वा हनुमता यः अभेदः भेदाभावः तेन तदभिन्नतया इत्यर्थः स्वात्मानं स्वस्वरूपं प्रतिपद्यते प्राप्नोति।

ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोधः ? इत्युच्यते ।

**उत्साहादिसमुद्बोधः साधारण्याभिमानतः ।**
**नृणामपि समुद्रादिलङ्घनादौ न दुष्यति ॥४१॥ [भ]**

रत्यादयोऽपि साधारण्येन प्रतीयन्त इत्याह ।

**साधारण्येन रत्यादिरपि तद्वत् प्रतीयते ॥४२॥ [म]**

रत्यादेरपि स्वात्मगतत्वेन प्रतीतौ सभ्यानां व्रीडातङ्कादिर्भवेत् परगतत्वेन तु अरस्यतापातः (य)। विभावादयोऽपि प्रथमतः साधारण्येन प्रतीयन्त इत्याह ।

**परस्य न परस्येति ममेति न ममेति च ।**
**तदास्वादे विभावादेः परिच्छेदो न विद्यते ॥४३ [र]**

ननु तथापि कथमेवमलौकिकत्वमेतेषां विभावादीनाम् इत्युच्यते ।

---

(भ) उत्साहादीति । विभावादेः साधारणीकरणव्यापारवशात् नृणामपि साधारण्याभिमानत रामस्य मम च साधारण्याऽय समुद्रप्लवनादिरिति तात्कालिकज्ञानतः समुद्रादिलङ्घनादौ उत्साहादिसमुद्बोधः उत्साहादीनां सम्यक् उदयः न दुष्यति ।

(म) साधारण्येनेति । रत्यादिः सीताविषयकरामादेरनुरागादिरपि तद्वत् समुद्रलङ्घनादिवत् साधारण्येन यथा रामवदहमपि सीताविषयकरतिमानित्यादि प्रतीयते ज्ञायते सामाजिकैरिति शेष ।

(य) आत्मगतत्वेन आत्ममात्रनिष्ठत्वेन । परगतत्वेन नायकमात्रगतत्वेन इत्यर्थः अरस्यतापात. वैरस्यभावापत्तिः ।

(र) परस्येति । तस्य रसस्य आस्वादे आस्वादनसमये इत्यर्थः विभावादे आलम्बनोद्दीपनादेः परस्य न परस्य इति, मम इति न ममेति च परिच्छेदः अवबोध. न विद्यते न भवति ।

**विभावनादिव्यापारमलौकिकमुपेयुषाम् ।**
**अलौकिकत्वमेतेषां भूषणं न तु दूषणम् ॥४४[ल]**

आदिशब्दादनुभावनसञ्चारणे। तत्र विभावनं रत्यादेर्विशेषेण आस्वादाङ्कुरणयोग्यतानयनम्। अनुभावनमेवम्भूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनम्। सञ्चारणं तथाभूतस्यैतस्य सम्यक् चारणम् (व)। विभावादीनां यथासङ्ख्यं कारणकार्य्यसहकारित्वे कथं त्रयाणामपि रसोद्बोधे कारणत्वमित्युच्यते।

**कारणं कार्य्यसञ्चारिरूपा अपि हि लोकतः ।**
**रसोद्बोधे विभावाद्याः कारणान्येव ते मताः॥४५[श]**

ननु तर्हि कथं रसास्वादे तेषामेकः प्रतिभास इत्युच्यते (ष)

---

(ल) विभावनेति। अलौकिक तत्तल्लोकावृत्ति विभावनादिव्यापारम् उपेयुषा प्राप्तवताम् एतेषा विभावादीना काव्यनिवेशितानां सीतादीनाम् अलौकिकत्व साधारणत्व भूषणम् अलङ्कृति सहृदयानाम् आस्वादार्हत्वादिति भावः न तु दूषणं परानुरागजननादिति भाव ।

(व) विशेषेण अतिशयेन आस्वादस्य अङ्कुरयोग्यता अङ्कुरवत सूक्ष्मरूपेण आविर्भाव तन्नयन तस्य प्रापणमित्यर्थ एवभूतस्य सूक्ष्मरूपेण आस्वादयोग्यता नीतस्य इत्यर्थ भावन प्रकाशनम्। तथाभूतस्य रसरूपेण भावितस्य इत्यर्थ एतस्य रत्यादेः चारण प्रसारण विस्तृतिरिति यावत् ।

(श) कारणमिति। ते विभावाद्या' लोकत' लोकनिष्ठा इत्यर्थः कारणकार्य्यसञ्चारिरूपा' विभावा कारणानि अनुभावा कार्य्याणि सञ्चारिण सहकारिणः अपि रसस्य उद्बोधे आविर्भावे कारणान्येव सामान्यत हेतव एव मताः त्रयाणामेव एषा रसनिष्पादकत्वादिति भाव' ।

(ष) पूर्वं कारणसद्भावः पश्चात् कार्य्यनिष्पत्तिरिति स्थिति.। तत् कथं रसास्वादे विभावादीनां यौगपद्यमित्याह नन्विति। एक. अभिन्न. इत्यर्थ. प्रतिभासः स्फुरणं विभावाद्यन्वित रत्यादेरनुभवस्य पौर्वापर्य्यव्यवगमादिति भाव.।

प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते ।
ततः संवलितः सर्वो विभावादिः सचेतसाम् ॥
प्रपानकरसन्यायाच्चर्व्यमाणो रसो भवेत् ॥४६॥ [स]

यथा खण्डमरिचादीनां सम्मेलनादपूर्व इव कश्चिदास्वादः प्रपानकरसे सञ्जायते विभावादिसम्मेलनादिहापि तथेत्यर्थः ।

ननु यदि विभावानुभावव्यभिचारिभिर्मिलितैरेव रसस्तत् कथम् एकस्य द्वयोर्वा सद्भावेऽपि स स्यात् ? इत्युच्यते ।

सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत् ।
झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते ४७[ह]

अन्यसमाक्षेपश्च प्रकरणादिवशात् यथा ।

"दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
सङ्क्षिप्तं निविडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली

---

(स) प्रतीयमान इति । विभावादि प्रथम रस दूर्बोधात प्राग्गित्यर्थं प्रतीयमान. प्रत्यकं हेतुः रसास्वादकारणम् उच्यते । त पश्चात रसोद्बोधकाले सम्मिलित. मिश्रितः सर्व. विभावादि विभावानुभावव्यभि चा रभावसंवलितरत्यादिरित्यर्थः प्रपानकरसन्यायात् प्रपानकरस इव चर्व्यमाण आ स्वाद्यमान. सन् सचेतसा सामाजिकाना रसः भवेत् रसरूपेण परिणमेदित्यर्थं ।

(ह) सद्भाव इति । विभावादे. द्वयो. एक. । सद्भाव समावेशः चेत् यदि भवेत् तदा झटिति शीघ्रम् अन्यसमाक्षेपे अन्य अन्ययो अन्येषा वा समाक्षेपे अध्याहारे दोषो न भवेत् यत्र विभावोऽस्ति अनुभावसञ्चारिरत्यादयो न सन्ति तत्र तेषामध्याहार. यत्र विभवानुभावौ स्त. स ञ्चारि त्यादय न सन्ति तत्र तेषामध्याहारः यत्र अनुभावसञ्चारिणौ स्तः त त्र वि भावस्य पूर्ववत् समाक्षेप. एव सर्वत्र ।

छन्दो नर्त्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः" ॥ (च)

अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकारूप-विभावमात्रवर्णने सञ्चारिणा-मौत्सुक्यादीना-मनुभावानाञ्च नयनविस्फारादीनामौचित्यादेवाक्षेपः। एवमन्याक्षेपेऽपि ऊह्यम् (क)। "अनुकार्य्यगतो रसः" (ख) इति वदतः प्रत्याह।

**पारिमित्याल्लौकिकत्वात् सान्तरायतया तथा।**
**अनुकार्य्यस्य रत्यादेरुद्बोधो न रसो भवेत्॥४८[ग]**

---

(च) उदाहरति दीर्घाक्षमिति। मालविकाया वर्णनमिदम्। नर्त्तयितुः चपलयितुः कामस्येत्यर्थः मनसः यथैव यादृश एव छन्दः अभिप्रायः, "छन्दोऽभिप्राये आशये" इत्यमरः। अस्याः मालविकायाः वपुः शरीरं तथैव सृष्टं तथाहि वदनं दीर्घे आयते अक्षिणी यस्य तादृशं, तथा शरदिन्दोरिव कान्तिर्यस्य तथाभूतं बाहू भुजौ असयोः स्कन्धयोर्नतौ विनतौ, उरः वक्षःस्थलं निविडौ घनौ उन्नतौ स्तनौ यत्र तादृशम् अतएव सङ्कुचितम् अल्पायतनं पार्श्वे प्रमृष्टे क्षिप्ते इव तत्रत्यानामस्थ्नामलक्ष्यत्वादिति भावः मध्यः कटिदेशः पाणिमितः वितस्तिवेष्टनेन परिमित इत्यर्थः। जघनं नितम्बि नितम्बविशिष्टं तथा पादौ चरणौ उदग्रा उन्नताया अङ्गुलयः ययोस्तथाभूतौ। शार्दूलविक्रीडितं वृत्तम्।

(क) अन्याक्षेपे विभावाक्षेपे इत्यर्थः। यथा, परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु। कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदकान्तः कपोलः" ॥ अत्र नायिकायाः सम्भोगशृङ्गारस्य आलम्बनविभावो नायकः तच्चेष्टादिकमुद्दीपनविभावः तयोः समाक्षेपो द्रष्टव्य इति।

(ख) नायकादिनिष्ठतां रसस्य परिहरति अनुकार्य्य इति। अनुकार्य्यं नायकादिः। तद्गतः तन्निष्ठः न तु सामाजिकवृत्तिरिति भावः।

(ग) पारिमित्यादिति। पारिमित्यात् परिमितत्वात् अनुकार्य्यमात्रगतत्वेन अल्पत्वात् अस्य तु बहुसामाजिकनिष्ठत्वेन व्यापकत्वमिति भावः लौकिकत्वात् तत्तल्लोकनिष्ठत्वात् अस्य तु अलौकिकत्वमिति भावः सान्तरायतया नाट्यकाव्यदर्शनादेः आदिपदेन श्रवणपरिग्रहः प्रतिकूलतया यदि अनुकार्य्यगत एव रसः तदा सामाजिकाः कथं काव्यदर्शनश्रवणेषु व्यग्रा भवेयुः तेषामभीष्टरसास्वाद-

सीतादिदर्शनादिजो रामादिरत्याद्युद्बोधो हि परिमितो लौकिको नाट्यकाव्यदर्शनादेः सान्तरायश्च। तस्मात् कथं रसरूपतामियात्। रसस्य एतद्धर्मकत्वात् (घ)। अनुकर्तृगतत्वञ्च अस्य (ङ) निरस्यति।

**शिक्षाभ्यासादिमात्रेण राघवादेः स्वरूपताम्।**
**दर्शयन् नर्त्तको नैव रसस्यास्वादको भवेत्॥४९[च**

किञ्च,

**काव्यार्थभावनेनायमपि सभ्यपदास्पदम्॥५०[छ**

यदि पुनर्नटोऽपि काव्यार्थभावनया रामादिरूपतामात्मनो दर्शयेत् तदा सोऽपि सभ्यमध्य एव गण्यते।

**नायं ज्ञाप्यः स्वसत्तायां प्रतीत्यव्यभिचारतः॥५१[ज**

---

प्रत्याशाविरहार्पित भाव अनुकार्य्यस्य नायकादे रत्याद्युद्बोध नायिकादिविषयक इति शेष रस न भवेत्।

(घ) एतद्विलक्षणधर्मकत्वात् एतस्मात् उक्तविविधात पारिमित्यादेरित्यर्थ विलक्षण विपरीत धर्म यस्य तस्य भाव तस्मात।

(ङ) नटगतत्वञ्चास्य निराकरोति अनुकर्त्तृ इति। अनुकर्त्ता नट, तद्गत, तस्य भाव: तत्।

(च) शिक्षेति। नर्त्तक, नट: शिक्षा गुरुसकाशादुपदेशग्रहणम् अभ्यास पुन पुनरनुशीलन तत्प्रभृतिभि, राघवादे रामादे स्वरूपता तुल्यता दर्शयन् नाट्येन प्रकटयन् रसस्य आस्वादक, नैव भवेत्।

(छ) ननु यदि नटोऽसौ सहृदयो भवति तदापि किं तस्य रसास्वादो न स्यादित्याशङ्क्याह किञ्चेति काव्येति। अय नटोऽपि काव्यार्थभावनेन काव्यार्थस्य परिशीलनेन सभ्यपदास्पद भवति सभ्यवत् रसास्वादमाप्नोतीत्यर्थ।

(ज) रसस्य स्वप्रकाशत्व पूर्वमुक्तं तदेवान्यधर्मत्वखण्डनेन द्रढयति नायमित्यादि। अय रस न ज्ञाप्य ज्ञापयितु शक्य वा जन्यज्ञानविषय स्वसत्ताया स्वस्य रसस्य सत्ताया विद्यमानताया प्रतीते, ज्ञानस्य अव्यभिचारत, निश्चयादि-

यो हि ज्ञाप्यो घटादिः स सन्नपि कदाचिदज्ञातो भवति। न ह्ययं तथा। प्रतीतिमन्तरेण अभावात्।

**यस्मादेष विभावादिसमूहालम्बनात्मकः।**
**तस्मान्न कार्य्यः** ॥५२ [झ]

यदि रसः कार्य्यः स्यात् तदा विभावादिज्ञानकारणक एव स्यात्। ततश्च रसप्रतीतिकाले विभावादयो न प्रतीयेरन् (ञ)। कारणज्ञानतत्कार्य्यज्ञानयोर्युगपददर्शनात्। न हि चन्दनस्पर्शज्ञानं तज्जन्यसुखज्ञानं च एकदा सम्भवति। रसस्य च विभावादिसमूहालम्बनात्मकतयैव प्रतीतेर्न विभावादिज्ञान-कारणकत्वमित्यभिप्रायः।

**नो नित्यः पूर्वसंवेदनोज्झितः।**
**असंवेदनकाले हि न भावोऽप्यस्य विद्यते** ॥५३[ट

न खलु नित्यस्य वस्तुनोऽसंवेदनकालेऽसम्भवो। नापि भवि-ष्यन्। साक्षादानन्दमयस्वप्रकाशरूपत्वात् (ठ)। कार्य्यज्ञाप्य-विलक्षणभावात् नो वर्त्तमानोऽपि (ड)।

र्थः अन्यथा तु ज्ञाप्यानां प्रतीतेः पूर्वमपि सत्तास्ति अस्य तु प्रतीतिकाल एवेति ज्ञाप्यलक्षणायोगादिति भावः।

(झ) यस्मादिति। यस्मात् एषः रसः विभावादिसमूह एव आलम्बनम् आत्मा यस्य तादृशः तस्मात् न कार्य्यः।

(ञ) विभावादीति। विभावादि ज्ञानं कारणं यस्य तथाभूतः। न प्रतीयेरन् न बुद्ध्येरन् न हि कारणं कार्य्यं च युगपत् ज्ञायते इति भावः।

(ट) नो इति। अयं रसः पूर्वसंवेदनेन संवेदनात् पूर्वभावेन इत्यर्थः उज्झितः परित्यक्तः हि यतः असंवेदनकाले अप्रतीतिक्षणे अस्य रसस्य भावः सत्ता न विद्यते। नित्यवस्तुनः सर्वकालिकी स्थितिरस्तीति भावः।

(ठ) नापीति। भविष्यद्वस्तुनः साक्षादानन्दमयस्वप्रकाशरूपत्वासम्भवात् न हि भविष्यन् साक्षादानन्दं वितरीतुं शक्नोतीति भावः।

विभावादिपरामर्शविषयत्वात् सचेतसाम् ।
परानन्दमयत्वेन संवेद्यत्वादपि स्फुटम् ॥
न निर्विकल्पकं ज्ञानं तस्य ग्राहकमिष्यते ।
तथाऽभिलापसंसर्गयोग्यत्वविरहान्न च ।
सविकल्पकसंवेद्यः ५४॥ [ढ]

सविकल्पकज्ञानसंवेद्यानां हि वचनप्रयोगयोग्यता न तु रसस्य ।

तथा ।

साक्षात्कारतया न च ।
परोक्षस्तत्प्रकाशो नापरोक्षः शब्दसम्भवात् ॥५५॥ [ण]

---

(ड) कार्य्यज्ञाप्ययोर्विलक्षणभावात वैलक्षण्यात कार्य्यत्वाभावात ज्ञाप्यत्वाभावाच्च इत्यर्थः रसः वर्त्तमानः अपि न वर्त्तमानत्वस्य कार्य्यज्ञाप्यान्यतरविषयनियमादिति भावः ।

(ढ) विभावादीति । निर्नास्ति विकल्पो विभिन्नकल्पः विशिष्टप्रकारः यस्य तादृशं निरवच्छिन्नमित्यर्थः सम्बन्धानवगाहीत्यर्थः ज्ञानं विभावादिभिः परामर्शः सम्बलनं विषयः यस्य तस्य भावः तस्मात् तथा सचेतसां सहृदयानां स्फुटं परमानन्दमयत्वेन संवेद्यत्वात् ज्ञेयत्वात् अपि तस्य रसस्य ग्राहकः प्रतिपादकः न इष्यते निर्विकल्पकं ज्ञानं न विशिष्टवैशिष्ट्यावगाहिपदार्थं बोधयतीति भावः । अयं तु रसः विभावादिविशिष्टः तथा सुखसवलितज्ञानमयोऽपीति भावः । तथा अभिलापः वचनं तस्य संसर्गः सम्बन्धः तद्योग्यत्वविरहात् वक्तुमशक्यत्वादित्यर्थः सविकल्पकज्ञानस्य सम्बन्धावगाहिनः इत्यर्थः न संवेद्यः । सविकल्पकज्ञानगम्यानां हि वचनगम्यत्वमस्ति रसस्य तु न तथेति भावः ।

(ण) साक्षादिति । साक्षात्कारतया साक्षादनुभवयोग्यतयेत्यर्थः तस्य रसस्य प्रकाशः न परोक्षः प्रत्यक्षविलक्षणः न हि परोक्षवस्तुनः साक्षात्कारो भवतीति भावः । अपरोक्षः प्रत्यक्षश्च न शब्दसम्भवात् शब्दैः काव्यार्थसूचकैः सम्भवात् उत्पत्तेः न हि शब्दप्रमाणगम्यानां प्रत्यक्षत्वमिति भावः ।

तत् कथय कीदृगस्य तत्त्वम् । एवमश्रुतादृष्टपूर्वनिरूपण-प्रकारस्येत्याह ।

**तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम् ५६[त]**

तत् किं पुनः प्रमाणं तस्य सद्भावे ? इत्याह—

**प्रमाणं चर्वणैवात्र स्वाभिन्ने विदुषां मतम् ॥५७[थ]**

चर्वणा आस्वादनम् । तच्च "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तप्रकारम् । ननु यदि रसो न कार्य्यस्तत् कथं महर्षिणा "विभावानुभावव्यभिचारिसंयोगाद्रस-निष्पत्तिः" इति लक्षणं कृतम् ? इत्युच्यते—

**निष्पत्त्या चर्वणस्यास्य निष्पत्तिरुपचारतः॥५८[द]**

यद्यपि रसाभिन्नतया चर्वणस्यापि न कार्य्यत्वं तथापि तस्य कादाचित्कतया उपचरितेन कार्य्यत्वेन कार्य्यत्वमुपचर्य्यते (ध) ।

**अवाच्यत्वादिकं तस्य वक्ष्ये व्यञ्जनरूपणे ॥५९[न]**

---

(त) तस्मादिति उक्तविरोधादित्यर्थः. अयं रसः सहृदयैः सामाजिकैः. अलौकिकः अलोकसिद्धः, जगद्विलक्षण इत्यर्थः सत्यं तत्त्वतः वेद्यः ।

(थ) प्रमाणमिति । स्वाभिन्ने चर्वणास्वरूपे अत्र रसे चर्वणा आस्वाद एव विदुषां प्रमाणं मतम् ।

(द) निष्पत्त्येति । चर्वणस्य निष्पत्त्या अस्य रसस्य उपचारतः, परम्परया स्वाश्रयग्राह्यत्वसम्बन्धेनेत्यर्थः, निष्पत्तिः ।

(ध) कादाचित्कतया आविर्भावतिरोभावाभ्यां कदाचिद्भवतया उपचरितेन आरोपितेन कार्य्यत्वेन कल्पितकार्य्यत्वेन न तु वास्तवेनेति भावः; कार्य्यत्वम् उपचर्य्यते आरोप्यते । वस्तुतस्तु चर्वणा रसाभिन्ना एव यदा तु रस आस्वाद्यते तदैव चर्वणानिष्पत्तिः. यदा नास्वाद्यते न निष्पद्यते इति आविर्भावतिरोभावाभ्यां चर्वणारूपस्य रसस्य निष्पत्तिरिति ध्येयम् ।

तस्य रसस्य। आदिशब्दादलक्ष्यत्वादि। ननु यदि मिलिता रत्यादयो रसस्तत् कथमस्य प्रकाशत्वं कथं वाऽखण्डत्वम्? इत्याह—

**रत्यादिज्ञानतादात्म्यादेव यस्माद्रसो भवेत्।**
**अतोऽस्य स्वप्रकाशत्वमखण्डत्वञ्च सिध्यति ६० [प]**

यदि रत्यादिकं प्रकाशशरीरादतिरिक्तं स्यात् तदैवास्य स्वप्रकाशत्वं न सिध्येत्। न च तथा, तादात्म्याङ्गीकारात्। यदुक्तम्। "यद्यपि रसानन्यतया चर्वणा न कार्य्या तथापि कादाचित्कतया कार्य्यत्वमुपकल्प्य तदेकात्मन्यनादिवासनापरिणतिरूपे रत्यादिभागेऽपि व्यवहारः" इति। "सुखादितादात्म्याङ्गीकारे च आस्माकीं सिद्धान्तशय्यामधिशय्य दिव्यवर्षसहस्रं प्रमोदनिद्रामुपेयाः" इति च। "अभिन्नोऽपि स प्रमाता वासनोपनीतरत्यादितादात्म्यगोचरीकृतः" इति च। ज्ञानस्य स्वप्रकाशत्वमनङ्गीकुर्वतामुपरि वेदान्तिभिरेव निपातनीयो दण्डः। तादात्म्यादेव अस्य अखण्डत्वम्। रत्यादयो

---

(न) अवाच्यत्वादिकमिति। तस्य रसस्य अवाच्यत्वादिकम् अभिधादिव्यापारावेद्यत्वं व्यञ्जनरूपत्वं व्यञ्जनानिरूपणप्रस्तावे पञ्चमपरिच्छेदे इति भावः वक्ष्ये कथयिष्यामि।

(प) अस्य स्वप्रकाशत्वमखण्डत्वञ्च पूर्वमुक्तं प्रमाणयति रत्यादिरिति। यस्मात् रत्यादिः ज्ञानतादात्म्यादेव ज्ञानाभिन्नत्वादेव रसो भवेत् आनन्दसंवलितज्ञानधाराया एव रसत्वादिति भावः अतएव ज्ञानतादात्म्यादेव अस्य रसस्य स्वप्रकाशत्वम् अखण्डत्वं पूर्णत्वञ्च सिध्यति यत् यत् ज्ञानमय वस्तु तत्तत् स्वप्रकाशमखण्डञ्च भवतीति भावः।

(फ) प्रकाशशरीरात् ज्ञानशरीरात् ज्ञानरूपादित्यर्थः। अतिरिक्तं भिन्नम्। तादात्म्याङ्गीकारात् ज्ञानभिन्नत्वस्वीकारादित्यर्थः। रसानन्यतया रसाभिन्नतया चर्वणा आस्वादः न कार्य्या कार्य्यत्वेन न वाच्या यतो रसो न कार्य्य इति भावः।

हि प्रथममेकैकश: प्रतीयमाना: सर्वेऽप्येकीभूता: स्फुरन्त एव रसतामापद्यन्ते (फ)। तदुक्तम्।

"विभावा अनुभावाश्च सात्त्विका व्यभिचारिण:।
प्रतीयमाना: प्रथमं खण्डशो यान्त्यखण्डताम्" ॥ (ब)

इति। "परमार्थतस्त्वखण्ड एवायं वेदान्तप्रसिद्धब्रह्मतत्त्ववद्वेदितव्य इति च"। अथ के ते विभावानुभावव्यभिचारिण इत्यपेक्षायां विभावमाह।

---

कादाचित्कतया आविर्भावतिरोभावाभ्या कदाचिद्भवतया कार्य्यत्वमुपकल्प्य आरोप्य तदेकात्मनि चर्वणामये अनादिवासना सामाजिकाना प्राक्तनी या वासना संस्कारविशेष तस्या परिणतिरूपे आविर्भूतज्ञानरूपे रत्यादिभागेऽपि रसेऽपीत्यर्थ: व्यवहारकार्य्यत्वेन इति शेष'। एतेन रसस्य स्वप्रकाशत्वं ज्ञानमयत्व प्रतिपन्नमिति बोध्य सुखादितादात्म्याङ्गीकारे सुखमानन्द. आदिपदेन चमत्कारपरिग्रह. यदि आनन्दमय चमत्कारमयो वा रस इति अङ्गीकरोषि तदेत्यर्थ। आस्माकीम् अस्मत्सम्बन्धिनीम् आलङ्कारिकीमित्यर्थ: सिद्धान्तशय्या चरमसम्मतिमिति भाव: अधिशय्य आश्रित्य दिव्यवर्षसहस्रं मानवनामेकेन वत्सरेण देवानामेक दिन तस्य षष्ट्यधिकत्रिशतसख्याभि एक दिव्यवत्सर. तत् सहस्रं यावत् प्रमोदनिद्रा सुखस्वप्नम् उपेया' लभस्व चिर सुखेन तिष्ठेत्यर्थ:। अस्मत्सिद्धान्ताश्रयेण न कोऽपि वादी त्वा जेतु शक्नोतीति स्वपक्षीय प्रत्युक्तिरियमिति भाव.। प्रमाचा प्रमया भावप्रधानो निर्देश। अभिन्नोऽपि ज्ञानभिन्नोऽपीत्यर्थ: स रस वासनया सस्कारेण उपनीता उपस्थापिता या रत्यादि. तदेव गोचरीकृत: तस्या विषयीकृत: वासनोपपादितानन्दचिदात्मक इति फलितम्। वेदान्तिभि: ब्रह्ममीमासा वेदान्तस्तदनुसारिभिरित्यर्थ वेदान्तमते ज्ञानमय आत्मा स्वप्रकाश इति भाव। तादात्म्यादेव ज्ञानाभिन्नत्वादेव इत्यर्थ:। रत्यादय: आदिपदेन विभावानुभावसञ्चारिण: गृह्यन्ते। प्रथम रसतापत्ते प्रागित्यर्थ:। रसताम् आपद्यन्ते प्राप्नुवन्ति रसरूपेण परिणमन्तीत्यर्थ: अतोऽय रस अखण्ड' पूर्ण: एकरूप इति यावत्।

(ब) उक्तमर्थं प्रमाणेन द्रढयति तदुक्तमिति। विभावा: अनुभावा: सात्त्विका: व्यभिचारिणश्च प्रथम रसोत्पत्ते: प्राक् खण्डश: विभिन्नत्वेनेत्यर्थ: प्रतीयमाना: बोधविषयीक्रियमाणा: सन्त. अखण्डतां पूर्णताम् एकरूपत्व यान्ति प्राप्नुवन्ति।

**रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः ६१[भ**

ये हि लोके रामादिगतरतिहासादीनामुद्बोधकारणानि सीतादयस्त एव काव्ये नाट्ये च निवेशिताः सन्तः "विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिः" इति विभावा उच्यन्ते। तदुक्तं भर्तृहरिणा।

"शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्।
प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते" ॥ (म)

इति। तद्भेदावाह।

**आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ ६२[य**

स्पष्टम्। तत्र—

**आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात् ॥६३॥**

आदिशब्दान्नायिकाप्रतिनायकादयः। अत्र यो यस्य विभावः स तत्स्वरूपवर्णने वक्ष्यते। तत्र नायकः।

**त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।**

---

(भ) रत्यादीति। लोके तत्तल्लौकिकवृत्तित्वदशायां ये रत्यादीनामुद्बोधकाः उद्बोधकारणानि सीतादयः काव्यनाट्ययोः निवेशिता इति शेषः विभावा उच्यन्ते इति शेषः।

(म) शब्देति। शब्दोपहितरूपान् काव्यनाट्यप्रकाशितरूपान् बुद्धेर्ज्ञानाजन्यबोधस्य विषयतां गतान् प्राप्तान् तान् कंसादीन् वीररसस्यालम्बनाभिप्रायेणोक्तमिदं प्रत्यक्षानिव परिदृश्यमानानि च साधनत्वेन वीररसनिष्पादकत्वेन मन्यते सहृदय इति शेषः।

(य) आलम्बनेति। तस्य विभावस्य आलम्बनोद्दीपनाख्यौ उभौ भेदौ स्मृतौ। आलम्बनम् आश्रयः नायकादिः, तं नायकादिमालम्ब्य रसस्य उद्गमः उद्रेकः भवतीति शेषः।

**दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता॥६४ (र)**

दक्षः क्षिप्रकारी। शीलं सद्वृत्तम्। एवमादिगुण-सम्पन्नो नेता नायको भवति। तद्भेदानाह।

**धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च।**
**धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः॥६५॥**

स्पष्टम्। अत्र धीरोदात्तः—

**अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।**
**स्थेयान् निगूढ़मानो धीरोदात्तो दृढ़व्रतः कथितः ६६**

अविकत्थनोऽनात्मश्लाघाकरः। महासत्त्वो हर्षशोकाद्यन-भिभूतस्वभावः। निगूढमानो विनयच्छन्नगर्वः। दृढव्रतोऽङ्गी-कृतनिर्वाहकः। यथा रामयुधिष्ठिरादिः। (ल) अथ धीरोद्धतः—

**मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।**
**आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः ६७(व)**

यथा भीमसेनादिः। अथ धीरललितः—

---

(र) त्यागीति। त्यागी दानशीलः, कृती कृतकार्य्यः, कुलीनः सत्कुलोत्पन्नः, सुश्रीकः सम्पत्तिमान् वा सुष्ठु शोभासम्पन्नः, रूपं सौन्दर्य्यं, यौवनं तारुण्यम्, उत्साहवान्, दक्षः कार्य्यकुशलः, अनुरक्तलोकः लोकरञ्जकः, तेजोवैदग्ध्यशीलवान् तेजस्वी विदग्धः सुशीलश्चेत्यर्थः, नेता नायकः।

(ल) अविकत्थन इति। अविकत्थनः आत्मश्लाघावर्जितः, क्षमावान् शक्तौ क्षमाशीलः, अतिगम्भीरः अतिदुरवगाहस्वभावः स्थेयान् महासङ्कटेऽपि कार्य्यादविचल इत्यर्थः।

(व) मायापर इति। मायापरः कपटनिरतः, प्रचण्डः उग्रः, अहङ्कारः गर्व्वोऽभिमानः, दर्पः आत्मगौरवं, तद्भूयिष्ठः प्रायेण तद्विशिष्ट इत्यर्थः। अन्यत् स्पष्टम्।

**निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्॥६८**

कला नृत्यादिका। यथा रत्नावल्यादौ वत्सराजादिः। (अ)

अथ धीरप्रशान्तः—

**सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात्॥६९**

यथा मालतीमाधवादौ माधवादिः (प)। एषाञ्च शृङ्गारि-रूपत्वे (स) भेदानाह।

**एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोड़शधा॥७०**

तत्र तेषां धीरोदात्तादीनां प्रत्येकं दक्षिणधृष्टानुकूलशठ-त्वेन षोडशप्रकारो नायकः।

**एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः॥७१**

द्वयोस्त्रिचतुःप्रभृतिषु नायिकासु तुल्यानुरागो दक्षिण-नायकः। यथा।

"स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुः
द्यूतैरात्रिरियं जिता कमलया देवी प्रसाद्याद्य च।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाऽप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाड़िकाः"॥ (ह)

---

(अ) निश्चिन्त इति। निश्चिन्त चिन्तारहित, मृदु. कोमलचित्तः, अनिश कलापरः नृत्यगीतादिनिरतः।

(प) सामान्येति। सामान्यगुणै. त्यागी कृतीत्यादिसामान्यनायकगुणै. इत्यर्थं भूयान् प्रचुर' प्रायश्च युक्त इत्यर्थ'।

(स) शृङ्गारिरूपत्वे शृङ्गारिनायकरूपत्वे इत्यर्थः।

(ह) स्नातेति। कुन्तलेश्वरसुता कुन्तलाः जनपदविशेषाः तेषामीश्वरः राजा तस्य सुता स्नाता ऋतुस्नाता तिष्ठति वर्त्तते अद्यगम्या चेति भाव.। अङ्गराजस्वसु अङ्गानां राजा अङ्गराज. तस्य स्वसु. भगिन्याः वार. नियमित-

कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः ।
दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः ७२[च

यथा मम ।

"श्रोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं ततः
पादेन प्रहृत तया सपदि तं धृत्वा सहासे मयि ।
किञ्चित् तत्र विधातुमक्षमतया वाष्पं त्यजन्त्याः सखे ।
ध्यातश्चेतसि कौतुक वितनुते कोपोऽपि वामभ्रुवः" ॥(क)

अनुकूल एकनितरः ॥७३॥

एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः ।

---

दिवस कमलया कयाचित् राजपत्न्या द्यूते. राज्ञा सह द्यूतक्रीडनेरित्यर्थ. इयम् उपस्थिता रात्रि जिता पणत्वेनेति भाव । अद्य च देवी महाराज्ञी प्रसाद्या अनुनेया देवेनेति शेषः स्वय कृतापराधत्वादिति भावः । इति इत्थ मया अन्त.-पुरसुन्दरीः प्रति विज्ञाय यस्या यद्ब यत् वक्तव्यमिति विदित्वा विज्ञापिते निवेदिते सति देवेन महाराजेन अप्रतिपत्तिमूढमनसा इतिकर्त्तव्यविमूढचित्तेन द्वित्रा नाडिका व्याप्य स्थित तूष्णीमिति शेष. । शार्दूलविक्रीडित वृत्तम् ।

(च) कृतागा इति । कृतागा. कृतापराधोऽपि निःशङ्क निर्भय, तर्जित निर्भर्त्सितोऽपि न लज्जितः न सङ्कुचित इत्यर्थ, दृष्ट. दोषो यस्य तादृशोऽपि मिथ्यावाक् मृषावादी नाहमेवरूप इति भाषणशील इत्यर्थ । अन्यत् स्पष्टम् ।

(क) श्रोणमिति । प्रवासे सखायं प्रति कस्यचिदुक्तिरियम् । हे सखे ! अहं श्रोण रक्त मदपराधादिति भाव. मुख तस्या इति शेषः वीक्ष्य विचुम्बितु समीप यात., तत. अनन्तर तया मत्कान्तया पादेन चरणेन प्रहृतं मयि पादप्रहारो दत्त इत्यर्थ । सपदि तत्क्षणात् त पादं धृत्वा मयि सहासे हसतीत्यर्थः तत्र किञ्चित् विधातु कर्त्तुमक्षमतया वाष्पम् अश्रु त्यजन्त्या वामभ्रुवः सुन्दर्य्याः मत्प्रियाया इत्यर्थः स कोपोऽपि चेतसि मनसि ध्यात चिन्तितः सन् कौतुकम् आनन्दं वितनुते विस्तारयति शार्दूलविक्रीडित वृत्तम् ।

यथा।

"अस्माकं सखि! वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः।
किन्त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतः
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम्"॥ (ख)

**शठोऽयमेकत्र बद्धभावो यः।**
**दर्शितवहिरनुरागो विप्रियमन्यत्र गूढमाचरति॥७४**

यः पुनरेकस्यामेव नायिकायां बद्धभावो द्वयोरपि नायिकयोर्बहिर्दर्शितानुरागोऽन्यस्या नायिकाया गूढं विप्रियमाचरति स शठनायकः। यथा।

"शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः।
तदेतत् क्वाचक्षे घृतमधुमयत्वद्बहुवचो-
विषेणाघूर्णन्ती किमपि न सखी मे गणयति"॥ (ग)

---

(ख) अस्माकमिति। सौभाग्यं व्यञ्जयन्त्याः कस्याश्चित् सखीं प्रत्युक्तिरियम्। हे सखि! अस्माकं वाससी वसने परिधेयमुत्तरीयञ्चेत्यर्थः न रुचिरे न मनोहरे, ग्रैवेयकं ग्रीवाभूषणं न उज्ज्वलं, गतिः चलनं नो वक्रा वक्रभावयुक्ता इत्यर्थः, हसितं हासः न उद्धतम् उत्कटं चिरमित्यर्थः, कश्चित् मदोऽपि सौभाग्ययौवनादिजनितो मनोविकारोऽपि नैव अस्ति, किन्तु अन्ये जना अपि किं पुनः स्वकीया इति भावः अस्याः ममेति भावः प्रियः सुभगोऽपि महिलान्तरवल्लभोऽपि अन्यतः अन्यस्या महिलाया दृष्टिं न निक्षिपतीति वदन्ति इयता अनेन विश्वं जगत् दुःस्थितं दुर्नीत्यवस्थितं मन्यामहे केवलमहं प्रियसाहचर्येण सुखमनुभवामि नापरा इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ग) शठेति। हे शठ! धूर्त! अन्यस्याः नायिकायाः काञ्चीरणितं रसनाध्वनिम् आकर्ण्य आश्लिष्यन् आलिङ्गन्नेव मत्सखीमिति शेषः सहसा प्रशिथिलः विश्लथः भुजग्रन्थिः यस्य तादृशः यत् अभवः, मत्सख्याः आलिङ्गनसमये

एषाञ्च त्रैविध्यात् सर्वेषामुत्तममध्यमाधमत्वेन।
उक्ता नायकभेदाश्चत्वारिंशत्तथाऽष्टौ च ॥७५॥ [घ]

सर्वेषामुक्तषोडशभेदानाम्। अथ प्रसङ्गादेतेषां सहा-
यानाह।

दूरानुवर्त्तिनि स्यात् तस्य प्रासङ्गिकेतिवृत्ते तु।
किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः ७६

तस्य नायकस्य बहुव्यापिनि प्रसङ्गसङ्गते इतिवृत्तेऽनन्त-
रोक्तैर्नायकसामान्यगुणैः किञ्चिदूनः पीठमर्दनामा सहायो
भवति। यथा रामचन्द्रादीनां सुग्रीवादयः (ङ)। अथ शृङ्गार-
सहायाः—

शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः।
भक्ता नर्मसुनिपुणाः कुपितवधूमानभञ्जनाः शुद्धाः७७

---

अन्यनायिकाया रमणारब्धितश्रवणेन तां प्रति मनसः प्रवृत्तेरालिङ्गनभङ्गं यत्
कृतवानसि इत्यर्थः. तदेतत् तव अप्रियकरणमित्यर्थः क्व कुत्र आचचे कथयामि?
कुत्रापि तत्कथनस्थानं न लभे इति भावः। धूतमधुमयेन तव बहुवचोरूपेण विषेण
आघूर्णन्ती मे सखी किमपि न गणयति न अवधारयति किं कार्य्यं कर्त्तव्यं किम
कर्त्तव्यमिति न निश्चिनोतीति भावः। कस्याश्चित नायिकाप्रेरिताया दूत्या नायकं
प्रत्युक्तिरियम्। शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणीति
तल्लक्षणात्।

(घ) एषामिति। एषां नायकानां षोडशभेदानाम् उत्तममध्यमाधमत्वेन
हेतुना त्रैविध्यात् त्रिरूपत्वात् चत्वारिंशत् तथा अष्टौ च अष्टचत्वारिंशदित्यर्थः
नायकभेदा उक्ताः कथिताः।

(ङ) दूरेति। तस्य नायकस्य दूरानुवर्त्तिनि अतिविस्तारिणि इत्यर्थः. प्रासङ्गिके
प्रसङ्गक्रमेण उत्थापिते इतिवृत्ते किञ्चित् तद्गुणहीनः प्रायेण नायकवत् गुणवान्
इत्यर्थः पीठमर्दाख्यः. पीठमर्दो नाम सहायः स्यात्।

आदिशब्दान्मालाकाररजकताम्बूलिकगान्धिकादयः। तत्र विटः (च)।

सम्भोगहीनसम्पद्

विटस्तु धूर्त्तः कलैकदेशज्ञः।

वेशोपचारकुशलो

वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् ॥७८॥ [छ]

चेटः प्रसिद्ध एव।

कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः।

हास्यकरःकलहरतिर्विदूषकःस्यात् स्वकर्मज्ञः॥७९॥[ज]

स्वकर्म भोजनादि। अर्थचिन्तने सहायमाह।

मन्त्री स्यादर्थचिन्तायामर्थास्तन्त्रावापादयः॥८०॥[झ]

---

(च) शृङ्गारस्येति। भक्ता अनुरक्ता, नर्मसु परिहासादिषु। शुद्धा निर्दोषा।

(छ) सम्भोगेति। सम्भोगेन सम्यक् भोगेन सुखाद्युपभोगेन हीना नष्टा, सम्पद् यस्य तादृशः। धूर्त्तः चतुरः, कलैकदेशज्ञः यत्किञ्चित्कलानिपुणः। वेशेषु वेश्याजनाश्रयेषु य उपचारः व्यवहारः तत्र कुशलः दक्षः, वाग्मी सुवक्ता, मधुरः मनोरञ्जनकृत्, गोष्ठ्यां सभायां बहुमतः बहुजनप्रियः, विटः तदाख्यः, शृङ्गारसहायः भवेदिति शेषः।

(ज) कुसुमेति। कुसुमवसन्तादिनामा, कर्मणा, वपुषा शरीरेण, वेशेन परिच्छदेन, तथा भाषाद्यैः वचनाद्यैः हास्यकरः लोकानां हास्यकृत, कलहे रतिः अनुरागो यस्य तादृशः, स्वकर्म निजं कर्म भोजनं जानातीति तथाभूतः, शृङ्गारसहायः, विदूषकः स्यात्।

(झ) मन्त्रीति। अर्थचिन्तायां कार्य्यचिन्तनव्यापारे मन्त्री सहायः स्यात्। अर्थाः कार्य्याणि तन्त्रावापादयः तन्त्रः स्वराष्ट्रकर्त्तव्यम्, आवापः परराष्ट्रकर्म, आदिपदेन दुष्टनिग्रहशिष्टपरिपालनादयो गृह्यन्ते।

यत्त्वत्र सहायकथनप्रस्तावे "मन्त्री स्वञ्चोभयञ्चापि सखा तस्यार्थचिन्तने" इति केनचिल्लक्षणं कृतं तदपि राज्ञोऽर्थचिन्तनोपायलक्षणप्रकरणे लक्षितव्यं, न तु सहायकथनप्रकरणे नायकस्य। "अर्थचिन्तने मन्त्री सहायः" इत्युक्तेऽपि नायकस्यार्थत एव सिद्धत्वात्। यदपि उक्तं "मन्त्रिणा ललितः शेषा मन्त्रिस्वायत्तसिद्धयः" इति तदपि स्वलक्षणकथनेनैव लक्षितस्य धीरललितस्य मन्त्रिमात्रायत्तार्थचिन्तनोपपत्तेर्गतार्थम् (ञ)। न च अर्थचिन्तने तस्य मन्त्री सहायः, किन्तु स्वयमेव निष्पादकः, तस्यार्थचिन्तनाद्यभावात्। अथान्तःपुरसहायाः। तद्दवरोधे।

**वामनषण्डकिरातम्लेच्छाभीराः शकारकुब्जाद्याः।**
**मदमूर्खताभिमानी दुष्कुलतैश्वर्य्यसंयुक्तः।**
**सोऽयमनूढाभ्राता[ट]राज्ञः श्यालः शकार इत्युक्तः ॥ ८१ ॥**

आद्यशब्दात् मूकादयः। तत्र षण्डवामनकिरातकुब्जादयो यथा रत्नावल्याम्।

"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपाम्

---

(ञ) मन्त्रिणेति। ललित. धीरललित मन्त्रिणा आयत्तसिद्धिरिति शेष। शेषा धीरोदात्तादय. मन्त्रिस्वायत्तसिद्धय, मन्त्रिषु स्वेषु च आयत्ता सिद्धिर्येषा तथाभूता मन्त्रिसहिता. कार्य्यं पश्यन्तीति भाव। स्वेति। निश्चिन्त मृदुरनिशमित्यादि धीरललितलक्षणनिविष्टेन तस्यार्थचिन्तनाद्यभावतया मन्त्रिमात्रायत्तार्थसिद्धिः स्फुटा एव प्रतिभाषते इति भाव.। गतार्थं कृतार्थं पुनस्तस्य कथन व्यर्थमिति भाव.।

(ट) मदेति। अहं महानिति ज्ञानवान्, मदादिमयवान् वा। अनूढाया. अपरिणीताया: रक्षिताया. उपपत्न्या इत्यर्थ: भ्राता सोदर.।

अन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः" ॥ (ठ)

शकारो मृच्छकटिकादिषु प्रसिद्धः। अन्येऽपि यथादर्शनं ज्ञातव्याः। अथ दण्डसहायाः।

**दण्डे सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च ॥८२॥**

दुष्टनिग्रहो दण्डः स्पष्टम् (ड)। अथ धर्मसहायाः।

**ऋत्विक्पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्मे ॥८३॥**

ब्रह्मविदो वेदविदः आत्मविदो वा (ढ)। तत्र च।

**उत्तमाः पीठमर्दाद्याः ॥८४॥**

आद्यशब्दात् मन्त्रिपुरोहितादयः।

---

(ठ) नष्टमिति। मनुष्यगणनाभावात् मनुष्येषु अगणनादित्यर्थः त्रपां लज्जाम् अपास्य त्यक्त्वा नाशादिति सर्वत्र योज्यं वर्षवरैः क्लीबैः नष्टं पलायितम् अयं वामनः खर्वाकृतिः पुरुषः कञ्चुकिनः कञ्चुकस्य वारबाणस्य अन्तः अभ्यन्तरं विशति, पर्यन्ताश्रयिभिः नगरप्रान्तवर्त्तिभिः किरातैः व्याधैः नाम्नः किर पर्यन्तम् अवन्तीति स्वनामव्युत्पत्तेरित्यर्थः. सदृशम् उचितं कृतं पर्यन्ताश्रयत्व कृतमित्यर्थः। कुब्जा आत्मेक्षणाशङ्किनः आत्मनः ईक्षणं दर्शनम् आशङ्कन्ते इति तथोक्ताः सन्तः नीचतयैव नतभावेनैव शनकैः मन्दं मन्दं यान्ति गच्छन्ति। मन्दुराया वानरनिर्गमे वर्णनमिदम्। शार्दूलविक्रीडितं वृत्तम्।

(ड) दण्डेष्विति। दण्डेषु दुष्टनिग्रहव्यापारेषु सुहृदः कुमाराः पुत्राः आटविकाः वनचारिणः सामन्ताः अधीननृपाः सैनिकाद्याः सहाया भवन्तीति शेषः।

(ढ) ऋत्विगिति। धर्मे धर्म्यकार्ये ऋत्विजः पुरोहितविशेषाः पुरोधसः पुरोहिताः ब्रह्मविदः ब्रह्मतत्त्वज्ञानिनः तथा तापसाः एते सर्वे सहायाः स्युः भवेयुः।

मध्यौ विटविदूषकौ।

तथा शकारचेटाद्या अधमाः परिकीर्त्तिताः॥८५॥[ण

आद्यशब्दात् ताम्बूलिकगान्धिकादयः। अथ प्रसङ्गाद्दूतानां विभागगर्भलक्षणमाह।

निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः।

कार्य्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः॥८६॥[त

तत्र कार्य्यप्रेष्यो दूत इति लक्षणम्। तत्र।

उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम्।

सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु स स्मृतः॥८७॥(थ

उभयोरिति येन प्रेषितो यदन्तिकं प्रेषितश्च।

मितार्थभाषी कार्य्यस्य सिद्धिकारी मितार्थकः।

यावद्भाषितसन्देशहारः सन्देशहारकः॥८८॥[द

---

(ण) उत्तमा इति। पीठमर्दाद्या' पूर्व्वोक्ता' उत्तमा' श्रेष्ठा' सहाया इति शेषः विट विदूषकौ मध्यौ सहायौ तथा शकारचेटाद्याः अधमाः सहायाः परिकीर्त्तिता कथिता'।

(त' दूत निर्व्वक्ति अधेति निसृष्टार्थ इति। कार्य्यप्रेष्य' कार्य्येषु प्रेष्य' नियोज्यः दूत। स त्रिधा निसृष्टार्थ, मितार्थ तथा सन्देशहारकः। दूत्यश्च तथाविधाः निसृष्टा, मितार्था तथा सन्देशहारिकेत्यर्थ'।

(थ) निसृष्टार्थमाह उभयोरिति। उभयो भावम् आशयम्। उन्नीय उद्भाव्य स्वयम् उत्तरं सिद्धान्तं वदति कार्य्यञ्च सुश्लिष्ट सुसङ्गतं कुरुते स निसृष्टार्थ' स्मृतः कथितः।

(द' मितार्थेति। मित परिमितम् अर्थं भाषते इति मितार्थभाषी अथ च कार्य्यस्य सिद्धिकारी मितार्थकः। यावद्भाषितं प्रभुणा यावत् कथित सन्देशं हरतीति सन्देशहारकः।

अथ सात्त्विकनायकगुणाः ।

**शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यं तेजसी ।**
**ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः॥८९॥(ध)**

तत्र ।

**शूरता दक्षता सत्यं महोत्साहोऽनुरागिता ।**
**नीचे घृणाऽधिके स्पर्द्धा यतः शोभेति तां विदुः॥९०॥(न)**

तत्रानुरागिता यथा ।

"अहमेव मतो महीपतेः
इति सर्व्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशते-
ष्वभवन्नास्य विमानना क्वचित्" ॥ (प)

एवमन्यत्रापि । अथ विलासः ।

**धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः॥९१॥(फ)**

---

(ध) सत्त्वगुणजान् गुणानाह सात्त्विका इति । शोभा इति स्पष्टम् ।

(न) शोभामाह शूरतेति । शूरता शौर्य्यं, दक्षता क्षिप्रकारिता, सत्यं सत्य-भाषणं, महोत्साहः कार्य्येषु उद्यमातिशयः, अनुरागिता अनुजीविप्रियता, नीचे क्षुद्रे दुर्व्वले इत्यर्थः घृणा दया, अधिके बलीयसि स्पर्द्धा जिगीषा, एते गुणाः यतः यस्मात भवन्ति तां शोभां विदुः ।

(प) अनुरागितायामुदाहरति । अहमिति । अजराजगुणवर्णनमिदम् । प्रकृतिषु प्रजासु सर्व्वो जनः अहमेव महीपतेः अजस्य मतः सम्मत इति अचिन्तयत् । अजस्य तु समदर्शितायामाह उदधेरिति । उदधेः समुद्रस्य निम्नगाशतेषु नदीसमूहेषु इव अस्य अजस्य क्वचित् क्वापि जने इत्यर्थः विमानना न अभवत् । सुन्दरी-वृत्तम्, अयुजोर्यदि सौ जगौ युजोः सभरा लौ यदि सुन्दरी तदेति तल्लक्षणात ।

(फ) धीरेति । विलासे सति दृष्टिर्धीरा, गतिः चित्रा मनोज्ञा, वचः वचनं सस्मितम् ईषद्धास्यसहितं भवति ।

यथा।

"दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम्।
कौमारकेऽपि गिरिवद् गुरुतां दधानः
वीरो रसः किमयमेत्युत दर्प एषः" ॥ (व)

**सङ्क्षोभेष्वप्यनुद्वेगो माधुर्य्यं परिकीर्त्तितम् ९२(भ)**

उह्यमुदाहरणम् (म)।

**भीशोकक्रोधहर्षाद्यैर्गाम्भीर्य्यं निर्विकारता ९३(य)**

---

(व) विलासमुदाहरति। दृष्टिरिति। कुशस्य सङ्ग्रामभूमौ उद्धतागमनं दृष्ट्वा रामस्य सविस्मयवचनमिदम्। दृष्टिः कुशस्येति शेषः तृणीकृतः तृणवत् तुच्छीकृतः जगत्त्रयस्य त्रिजगतामित्यर्थः सत्त्वस्य प्राणिनः सारः बलं यया तादृशी, तथा धीरोद्धता धीरा उद्धता च गतिः धरित्रीं पृथ्वीं नमयतीव। अयं कुशः कौमारकेऽपि गिरिवत् पर्वत इव गुरुतां दधानः अतएव वीरो रसः किम्? उत अथवा एषः दर्पः एति आगच्छति? वसन्ततिलकं वृत्तं, ज्ञेयं वसन्ततिलकं तभजा जगौ ग इति लक्षणात्।

(भ) माधुर्य्यमाह सङ्क्षोभेष्विति। सङ्क्षोभेषु सम्यक् क्षोभानुकूलव्यापारेषु अपि अनुद्वेगः उद्वेगराहित्यं माधुर्य्यं परिकीर्त्तितं कथितम्।

(म) उदाहरति—

निपीय कटु कर्णपदव्या खेदमाप न मनागपि रामः।
शूलपाणिरिव घोरमुदग्रं कालकूटपटलं किल पूर्वम्॥

अस्यार्थः। कर्णपदव्या श्रोत्रपथस्य कटु कर्कशं वचः इति शेषः पूर्वं पूर्वस्मिन् काले शूलपाणिः शिवः उग्रं तीक्ष्णं घोरं भयङ्करं कालकूटपटलमिव निपीय श्रुत्वा अन्यत्र पीत्वा मनागपि अल्पमपि खेदं न आप न प्राप।

(य) गाम्भीर्य्यमाह भीति। भीर्भयं, शोकः स्वजनधनवियोगजं दुःखं, क्रोधः कोपः हर्षः आनन्दः इत्यादिभिर्हेतुभिरपि निर्विकारता अविकृतत्वं गाम्भीर्य्यम्।

यथा ।

"आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः" ॥ (र)

व्यवसायादचलनं धैर्य्यं विघ्ने महत्यपि ॥९४॥ (ल)

यथा ।

"श्रुताप्सरोगीतिरपि क्षणेऽस्मिन् हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति" ॥ (व)

अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत् तेजः समुदाहृतम् ॥ (श)
वाग्वेशयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितम् ।
दानं सप्रियभाषणमौदार्य्यं शत्रुमित्रयोः समता ॥९५॥ (ष)

---

(र) उदाहरति । मया आहूतस्येति । अभिषेकाय आहूतस्य वनाय-वनगमनाय विसृष्टस्य त्यक्तस्य च तस्य रामस्य स्वल्पोऽपि आकारविभ्रमः आकारविकारः न लक्षितः न दृष्टः । अत्र राज्यवियोगेऽपि अविकृतत्वं बोध्यम् ।

(ल) धैर्य्यं निर्वक्ति व्यवसायादिति । महति विघ्नेऽपि व्यवसायात् उद्योगात् आरब्धकर्म्मण इत्यर्थः, अचलनम् अपगमाभाव इत्यर्थः धैर्य्यम् ।

(व) उदाहरति श्रुतेति । अस्मिन् क्षणे वसन्ताविर्भावसमये हरः शम्भुः श्रुता अप्सरसां गीतिर्येन तादृशः अप्सरसां गीतिमाकर्णयन्नपीत्यर्थः, प्रसंख्यानपरः समाधिनिष्ठः बभूव । हि यतः विघ्नाः अन्तरायाः आत्मेश्वराणां जितेन्द्रियाणां समाधिभेदे योगभञ्जने न हि प्रभवः समर्थाः भवन्ति । उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिवृत्तम्, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति, उपेन्द्रवज्रा प्रथमे लघौ सेति, अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति च लक्षणात् ।

(श) तेजो निर्वक्ति अधीति । प्राणात्ययेऽपि जीवनस्यापगमेऽपि परेण अन्येन प्रयुक्तस्य कृतस्य अधिक्षेपापमानादेः तिरस्कारस्य अन्यविधस्य अपकारस्य चेत्यर्थः यत् असहनं तत् तेजः समुदाहृतं कथितम् ।

(ष) ललितमौदार्य्यं चाह वागिति । वाग्वेशयोः वाचि वेशे च मधुरता मनो-

एषामपि उदाहरणानि ऊह्यानि।

**अथ नायिका त्रिविधा स्वाऽन्या साधारणस्त्रीति।**
**नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता ॥९६॥**

नायिका पुनर्नायकसामान्यगुणैस्त्यागादिभिर्यथासम्भवैर्युक्ता भवति। सा च स्वस्त्री, अन्यस्त्री, साधारणस्त्रीति त्रिविधा। तत्र स्वस्त्री।

**विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया९७ (ख)**

यथा।

"लज्जापज्जत्तपसाहणाइं परभत्तणिप्पिवासाइं।
अविणयदुम्मेहाइं धस्साणं घरे कलत्ताइम्" ॥ (ह)

**सापि कथिता त्रिविधा मुग्धा मध्या प्रगल्भेति॥९८॥**

तत्र।

**प्रथमावतीर्णयौवनमदनविकारा रतौ वामा।**
**कथिता मृदुश्च माने समधिकलज्जावती मुग्धा९९ (च)**

---

स्वरता शृङ्गारचेष्टितञ्च ललितम्। सप्रियभाषण दान शत्रुमित्रयोः समता समदर्शित्वञ्च औदार्य्यम्।

(ख) विनयेति। विनय शिष्टाचार आर्जवमकापट्यम् इत्येवमादिभिर्युक्ता गृहकर्मपरा गार्हस्थ्यविधानरता पतिव्रता पत्यनुरागिणी स्वीया भवति।

(ह) उदाहरति लज्जेति। लज्जापर्य्याप्तप्रसाधनानि परभर्तृनिष्पिपासानि। अविनयदुर्मेधानि धन्याना गृहे कलत्राणि॥ इति संस्कृतम्। धन्याना पुण्यवता जनाना गृहे कलत्राणि स्त्रियः लज्जायां पर्य्याप्तानि प्रसाधनानि अलङ्काराः येषा तादृशानि, परभर्तृषु परपुरुषेषु इत्यर्थः निष्पिपासानि तृष्णारहितानि, तथा अविनये अशिष्टव्यवहारे दुर्मेधानि मेधारहितानि, अप्रवृत्तानीति भावः।

(च) मुग्धा निर्वक्ति प्रथमेति। प्रथमम् अवतीर्णः उद्गतः यौवनस्य मदनस्य

तत्र प्रथमावतीर्णयौवना यथा मम तातपादानाम्।

"मध्यस्य प्रथिमानमेति जघनं वक्षोजयोर्मन्दतां
दूरं यात्युदरञ्च रोमलतिका नेत्रार्जवं धावति।
कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणाद्
अङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः" ॥ (क)

तत्र प्रथमावतीर्णमदनविकारा यथा मम प्रभावतीपरिणये।

"दत्ते सालसमन्थरं भुवि पदं निर्य्याति नान्तःपुरात्।
नोद्दाम हसति क्षणात् कलयते ह्रीयन्त्रणां कामपि।
किञ्चिद्भावगभीरवक्रिमलवस्पृष्टं मनाग् भाषते।
सभ्रूभङ्गमुदीक्षते प्रियकथामुल्लासयन्तीं सखीम्" ॥ (ख)

---

च विकारो यस्याः तथोक्ता, रतौ सुरतव्यापारे वामा प्रतिकूला, माने भर्त्तारं प्रति कोपे मृदुः, तथा समधिकलज्जावती अतिलज्जाशीला इत्यर्थः मुग्धा कथिता।

(क) क्रमेणोदाहरति मध्यस्येति। कन्दर्पं कामं नूतनमनोराज्याभिषिक्तं दृष्ट्वा क्षणात् क्षणमात्रेणैव सुभ्रुवः कामिन्याः अङ्गानि परस्परम् अन्योऽन्य निर्लुण्ठनं विदधते इव। तथा हि, जघनं मध्यस्य मध्यदेशस्य प्रथिमानं पृथुत्वं विशालत्वम् एति प्राप्नोति, मध्यदेशे या विशालता आसीत् सा जघनेन लुण्ठिता जघनस्य या क्षीणतासीत् सा मध्यदेशेनेति भावः। वक्षोजयोः स्तनयोर्मन्दता क्षीणता दूरम् अत्यर्थम् उदरं याति प्राप्नोति, उदरे या स्थूलतासीत् सा स्तनाभ्यां लुण्ठिता, स्तनयोश्च या क्षीणतासीत सा उदरेणेति भावः। तथा रोमलतिका रोमावली नेत्रयोः आर्जवं सारल्यं धावति प्राप्नोति, नेत्रयोः या सरलतासीत् सा रोमावल्या लुण्ठिता, सरला लोमावली जाता इति भावः, रोमावल्या या कुटिलतासीत् सा इदानीं नेत्राभ्यामिति भावः। राज्ञः प्रथमाभिषेकसमये सानन्दाः प्रजाः परस्परं लुठन्तीति प्रसिद्धिः। शार्दूलविक्रीडितं वृत्तम्।

(ख) दत्ते इति। सालसमन्थरं यथा तथा भुवि पदं दत्ते निक्षिपति, अन्तःपुरात् न निर्य्याति निर्गच्छति, उद्दामम् उत्कटं यथा तथा न हसति, क्षणात् क्षणमात्रेणैव कामपि अनिर्वचनीयां ह्रीयन्त्रणां लज्जाजनितां वेदनां कलयति व्यनक्ति, किञ्चित् ईषत् अल्पमित्यर्थः, भावेन गभीरः दुरवगाहः यः वक्रिमलवः

रतौ वामा यथा।

"दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते।
जाता वामतयैव सम्प्रति मम प्रीत्यै नवोढ़ा प्रिया"॥ (ग)

माने मृदुर्यथा।

"सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।
स्वच्छैरच्छकपोलमूलगलितैः पर्य्यस्तनेत्रोत्पला।
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः"॥ (घ)

समधिकलज्जावती यथा। "दत्ते सालसमन्थरम्" इत्यत्र श्लोके

---

कौटिल्यभावलेशः तेन स्पृष्टं यथा तथा मनाक् अल्पं भाषते कथयति, तथा प्रियस्य अन्यु कथाम् उल्लासयन्तीम् उद्घोषयन्तीं सखीं सभ्रूभङ्गम् उदीक्षते निरीक्षते। कर्त्तृपदं प्रभावतीत्यूहनीयम्। शार्दूलविक्रीडितं वृत्तम्।

(ग) दृष्टेति। नवोढा अभिनवविवाहिता प्रिया दृष्टा निरीक्षिता सती मयेति शेषः, अधः दृष्टिं ददाति अधोमुखी भवतीत्यर्थः, आभाषिता आलपने कृतप्रयत्ने वि आव आलापं न कुरुते उत्तरं न ददातीत्यर्थः, शय्यायां परिवृत्य तिष्ठति, बलात् बलमाश्रित्य, ल्यबर्थे पञ्चमी। आलिङ्गिता आश्लिष्टा सती वेपते कम्पते, सखीषु वासभवनात् निर्य्यान्तीषु निर्गच्छन्तीषु सतीषु निर्गन्तुमेव ईहते चेष्टते। अत्र सम्प्रति वामतयैव प्रतिकूलतयैव मम प्रीतये आनन्दाय जाता। शार्दूलविक्रीडितं वृत्तम्।

(घ) सेति। सा बाला पत्युः प्रथमापराधसमये, सख्या अयं सख्यः स चासौ उपदेशश्चेति तं विना सखीभिश्चाप्यन्तरेणेत्यर्थः, सविभ्रमाङ्गवलनया सह वक्रोक्तिसंसूचनं नो जानाति। केवलं स्वच्छैः निर्मलैः अच्छयोः निर्म्मलयोः कपोलयोर्मूलात् गलितैः लुठन्तः लोलाश्चञ्चला अलकाश्चूर्णकुन्तला येषु तादृशैः अश्रुभिः बाष्पैः पर्य्यस्ते पूर्णे नेत्रोत्पले यस्यास्तथाभूता सती केवलमेव रोदिति। शार्दूलविक्रीडितं वृत्तम्।

अत्र समधिकलज्जावत्त्वेनापि मुग्धाया रतिवामताया विच्छित्तिविशेषवत्तया (ङ) पुनः कथनम्।

अथ मध्या।

**मध्या विचित्रसुरता प्ररूढ़स्मरयौवना।**
**ईषत्प्रगल्भवचना मध्यमव्रीड़िता मता ॥१०७॥**

तत्र विचित्रसुरता यथा।

कान्ते तथा कथमपि प्रथितं मृगाक्ष्या
चातुर्य्यमुद्धतमनोभवया रतेषु।
तत्कूजितान्यनुवदद्भिरनेकवारं
शिष्यायितं गृहकपोतशतैर्यथास्याः" ॥ (च)

प्ररूढस्मरा यथाऽत्रैव उदाहरणे। प्ररूढ़यौवना यथा मम।

"नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं
वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः।
कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्यन्दिनी।
स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा" ॥ (छ)

---

(ङ) विच्छित्तिविशेषवत्तया वैचित्र्यविशेषवत्त्वेनेत्यर्थः।

(च) मध्यां क्रमेण उदाहरति कान्ते इति। उद्धतः उत्कटः मनोभवः कामो यस्याः तथाभूतया मृगाक्ष्या रतेषु सुरतक्रीडासु कान्ते पत्यौ तथा तेन प्रकारेण कथमपि चातुर्य्यं प्रथितं प्रकटीकृतं यथा अनेकवारं तत्कूजितानि तानि सुरतकूजितानि अनुवदद्भिः गृहकपोतशतैः अस्याः शिष्यायितं शिष्यवत् आचरितं गृहकपोताः पुनः पुनः सुरतकूजनानि श्रुत्वा तथैव पुनः पुनः शिष्यवत् आचरयन्ति स्मेति भावः। वसन्ततिलकं वृत्तम्।

(छ) नेत्रे इति। तस्याः कामिन्याः नेत्रे नयने खञ्जनगञ्जने खञ्जनपक्षितिरस्कारकारिणी, पाणिद्वयं भुजयुगलं सरसिजप्रत्यर्थि पङ्कजसदृशमित्यर्थः, वक्षोजौ स्तनौ करिकुम्भयोर्विभ्रमकरीं भ्रान्तिजननीं वा विलासकारिणीम् अत्युन्नतिं गच्छतः

एवमन्यत्रापि।

अथ प्रगल्भा।

स्मरान्धा गाढ़तारुण्या समस्तरतकोविदा।
भावोन्नता दरव्रीड़ा प्रगल्भाऽऽक्रान्तनायका॥१०१॥

स्मरान्धा यथा।

"धन्यासि या कथयसि प्रियसङ्गमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः! शपामि यदि किञ्चिदपि स्मरामि"॥ (ञ)

गाढ़तारुण्या यथा।

"अत्युन्नतस्तनमुरो नयने सुदीर्घे
वक्रे भ्रुवावतितरां वचनं ततोऽपि।
मध्योऽधिकं तनुरनूनगुरुर्नितम्बो-
मन्दा गतिः किमपि चाद्भुतयौवनायाः"॥ (झ)

विविधसुरतज्ञा यथा।

"क्वचित्ताम्बूलाक्तः क्वचिदगुरुपङ्काङ्कमलिनः

---

प्राप्नुतः, कान्तिः काञ्चनचम्पकस्य प्रतिनिधिः, वाणी वचनं सुधास्पर्द्धिनी अमृतजयिनीत्यर्थः, कटाक्षच्छटा स्मेर यत् इन्दीवरदाम नीलोत्पलमाल्यं तत्सोदरं वपुः शरीरं यस्यास्तादृशी। शार्दूलविक्रीडितं वृत्तम्।

(ञ) धन्येति। या त्वं प्रियसङ्गमेऽपि रतान्तरेषु सुरतव्यापारमध्येषु विश्रब्धचाटुकशतानि कथयसि सा त्वं धन्या पुण्यवती असि। हे सख्यः! प्रियेण करे नीवीं वसनग्रन्थिं प्रति प्रणिहिते सति तु शपामि शपथं करोमि, यदि किञ्चिदपि स्मरामि। न किमपि तात्कालिकचाट्वादिकं स्मृतमिति भावः। वसन्ततिलकं वृत्तम्।

(झ) अत्युन्नतस्तनमिति। अद्भुतयौवनायाः कामिन्याः उरः वक्षःस्थलम् अत्युन्नतौ स्तनौ यत्र तादृशं, नयने नेत्रे सुदीर्घे अतिविशाले भ्रुवौ वक्रे कुटिले,

क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः ।
वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः" ॥ (ञ)

भावोन्नता यथा ।

मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनैः
अलसवलितैरङ्गन्यासैर्महोत्सवबन्धुभिः ।
असकृदसकृत्स्फारस्फारैरपाङ्गविलोकितैः
त्रिभुवनजये सा पञ्चेषोः करोति सहायताम्" ॥ (ट)

स्वल्पव्रीडा यथा । "धन्यासि या कथयसीत्यत्रैव" ।

आक्रान्तनायका यथा ।

"स्वामिन् ! भङ्गुरयालकं सतिलकं भालं विलासिन् ! कुरु
प्राणेश ! त्रुटितं पयोधरतटे हारं पुनर्योजय ।
इत्युक्त्वा सुरतावसानसमये सम्पूर्णचन्द्रानना
स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम्" । (ठ)

वचनं ततोऽपि भ्रुवौ अपि अतितरां वक्रमित्यर्थः, मध्यं तन्वङ्ग्या अधिकं तनु क्षीणं, नितम्बः स्तनगुरु अतिविशालं किमपि गतिः मन्दा मृदुः । वसन्ततिलकं वृत्तम् ।

(ञ) क्वचिदिति । प्रच्छदपटः शय्यास्तरणवस्त्रमित्यर्थः क्वचित् ताम्बूलाक्तः ताम्बूलरागरञ्जितः, क्वचित् अगुरुपङ्केन मलिनः कृष्णः, क्वचित् चूर्णोद्गारी, क्वचित् अपि च सालक्तकपदः अलक्तकपदचिह्नितः सन् वलीभङ्गाभोगैः तथा अलकेभ्यः चूर्णकुन्तलेभ्यः पतितैः शीर्णकुसुमैः पर्युषितपुष्पैः स्त्रियाः सर्वावस्थं सर्वप्रकारं रतं कथयति प्रकटयति । शिखरिणीवृत्तम् ।

(ट) मधुरवचनैरिति । सा कान्ता पञ्चेषोः कामस्य त्रिभुवनजये [illegible] मिष्टभाषितैः सभ्रूभङ्गैः भ्रूभङ्गिभिः कृता अङ्गुल्या तर्जना [illegible] अलसवलितैः मृदुमन्दव्यापारितैः महोत्सवबन्धुभिः परमप्रीतिजनकैः अङ्गन्यासैः अङ्गसञ्चालनैः, तथा स्फारस्फारैः अत्यायतैः अपाङ्गविलोकितैः सहायतां साहाय्यम् आनुकूल्यं करोति । हरिणीवृत्तं, न-स-म-र-स-ला-गः षड्वेदैर्हयैर्हरिणी मता इति लक्षणात् ।

(ठ) स्वामिन्निति । सम्पूर्णचन्द्रानना पूर्णचन्द्रमुखी कापि रमणी सुरताव-

मध्याप्रगल्भाभेदान्तराण्याह।

ते धीरा चाप्यधीरा च धीराधीरेति षड्‌विधे १०२

ते मध्याप्रगल्भे।

तत्र।

प्रियं सोत्प्रासवक्रोक्त्या मध्याधीरा दहेद्रुषा।
धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः १०३ [ड]

तत्र मध्याधीरा यथा।

"तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद् दुकूलं दधानः।
मदधिवसतिमागाः कामिनां मण्डनश्री
र्व्रजति हि सफलत्वं वल्लभालोकनेन"॥ (ढ)

---

स्नानसमये, हे स्वामिन्! अलक चूर्णकुन्तल भङ्गुरय भङ्गुर कुरु, हे विलासिन्। भाल ललाट सतिलक तिलकालङ्कृत कुरु, हे प्राणेश। पयोधरतटे त्रुटित छिन्न हार पुनर्योजय, इति उक्त्वा तेन स्वामिना तथैव उक्तप्रकारेणेत्यर्थ स्पृष्टा तत्तत्कार्य्यकरणेनेति भाव जातपुलका सञ्जातरोमाञ्चा सती पुन मोहन प्राप्ता पुन कान्तेन सह सुरतव्यापारे प्रवृत्तवतीति भाव। शार्दूलविक्रीडितं वृत्तम्।

(ड) प्रियमिति। सोत्प्रासवक्रोक्त्या उत्प्रास मनाक्स्मितम्, "उत्प्रास समनाक्स्मितम्" इत्यमर। तेन सह वर्त्तमाना या वक्रा भङ्गियुक्ता उक्ति तया। अन्यत् स्पष्टम्।

(ढ) तदिति। त्व मम प्रिया इति अवितथ सत्यम् अवादी, उक्तवानसि, यत् यस्मात् प्रियजनेन अन्यकामिनीजनेन परिभुक्त परिहित दुकूल वसन दधान धारयन् सन् मम अधिवसतिम् आलयम् आगा एतद्दुकूलपरिधानेन विलक्षणा शोभा जाता तद्दर्शनेन महती मे प्रीतिरिति अहो अवितथवादित्वमसीति भाव। हि तथाहि कामिना मण्डनश्री अलङ्कारशोभा वल्लभालोकनेन प्रियजनदर्शनेन सफलत्व व्रजति प्राप्नोति। मालिनीवृत्त, ननमयययुतेय मालिनी भोगिलोकैरिति तल्लक्षणात्। एका सम्भुज्य तत्परिहितवसन परिधाय गृहागत स्वामिनं प्रति कस्याश्चित् सोत्प्रासवक्रोक्तिरियम्।

मध्येव धीराधीरा यथा।

बाले! नाथ! विमुञ्च मानिनि! रुषं, रोषान्मया किं कृतं?
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।
तत् किं रोदिषि गद्गदेन वचसा? कस्याग्रतो रुद्यते?
नन्वेतन्मम:, का तवास्मि? दयिता—नास्मीत्यतो रुद्यते"॥(ण)

इयमेवाधीरा यथा।

"साहं मनोरथशतैस्तव धूर्त! कान्ता
सैव स्थिता मनसि कृत्रिमहावरम्या।
अस्माकमस्ति न च कश्चिदिहावकाश:
तस्मात् कृतं चरणपातविडम्बनाभि:"॥ (त)

---

(ण) बाले इति। नायकनायिकयोरुक्तिप्रत्युक्ती। हे बाले! इति नायकोक्तिः। नाथ! स्वामिन्! इति नायिकायाः प्रत्युक्तिः। हे मानिनि! रुषं कोपं विमुञ्च त्यज इति नायकोक्तिः। रोषात् कोपात् कोपमाश्रित्य इत्यर्थः, ल्यबर्थे पञ्चमी। मया किं कृतम् अनुष्ठितं न किमपि न अहितं कृतमिति भावः इति नायिकायाः प्रत्युक्तिः। अस्मासु खेदः कृतः इति शेषः इति नायकस्योक्तिः। भवान् मे मह्यं न अपराध्यति सर्वे अपराधा मयि वर्त्तन्ते इति शेषः इति नायिकायाः प्रत्युक्तिः। तत् तदा गद्गदेन अर्द्धस्फुटेन वचसा किं कथं रोदिषि? इति नायकोक्तिः। कस्य अग्रतः समक्षं रुद्यते? इति नायिकायाः प्रत्युक्तिः। ननु भोः! एतत् रोदनं मम अग्रतः इति शेषः इति नायकोक्तिः। अस्मि अहं तव का? इति नायिकायाः प्रत्युक्तिः। दयिता प्रिया मम त्वमिति शेषः इति नायकोक्तिः। नास्मि न प्रिया भवामीति अतः रुद्यते मयेति शेषः नायिकायाः प्रत्युक्तिः। शार्दूलविक्रीडितं वृत्तम्।

(त) साहमिति। परनायिकासक्तं पतिम् आगत्य कृतापराधतया चरणपतितम् आलोक्य कस्याश्चिदुक्तिः। हे धूर्त! सैव कृत्रिमेण कपटेन न तु अनुरागनिबन्धनेनेति भावः, हावेन विलासविशेषेण रम्या मनोहारिणी कान्ता मनोरथशतैः साहं तव मनसि स्थिता इह जगति अस्माकं कश्चित् अवकाशः स्थानं नास्ति तस्मात् चरणपातविडम्बनाभिः पादपतनरूपकपटव्यापारैः कृतम् अलम् न हि पादपतनं कार्य्यमित्यर्थः। वसन्ततिलकं वृत्तम्।

प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा ।
उदास्ते सुरते तत्र दर्शयन्त्यादरान् वहिः॥१०४[य]

तत्र=प्रिये; यथा ।

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद् दूरतः
ताम्बूलानयनच्छलेन रभसाऽऽश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्याऽन्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः" ॥ (द)

धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुम् १०५[ध

अमुं नायकम् ।

यथा मम ।

"अनलङ्कृतोऽपि सुन्दर । हरसि मनो मे यतः प्रसभम् ।
किं पुनरलङ्कृतस्त्वं सम्प्रति नखरक्षतैस्तस्याः" ॥ (न)

---

(य) प्रगल्भेति । प्रगल्भा प्रौढा छन्ना तिरोहिता कोपस्य आकृति यस्या, तादृशी सती वहि आदरान् दर्शयन्ती तत्र प्रिये सुरते उदास्ते उदासीना भवति ।

(द) उदाहरति एकत्रेति । चतुरया कयाचित कामिन्या कान्त विदेशादागतमिति शेष प्रति उपचारत बाह्यपरिचर्य्यया इत्यर्थः कोप कृतार्थीकृत. सफलीकृत । तथाहि दूरत दूरात् प्रत्युद्गमात् एकत्र एकस्मिन् स्थाने आसनसंस्थिति. आसनेन उपवेशनेन संस्थितिः सहावस्थानं परिहृता परित्यक्ता, ताम्बूलस्य आनयनमेव छल व्याज तेन रभसाश्लेष वेगालिङ्गन वा सहर्षमालिङ्गन, "रभसो वेगहर्षयो." इत्यमरः । संविघ्नित. सम्यक् परिहृत इत्यर्थ, तथा अन्तिके समीपे परिजन व्यापारयन्त्या प्रेरयन्त्या सत्या आलापोऽपि न मिश्रित । शार्दूलविक्रीडितं वृत्तम् ।

(ध) धीरेति । सोल्लुण्ठभाषितैः प्रियवत् भाषितमप्रियम् उल्लुण्ठ. तेन सहितै. भाषितैः वचनैः ।

(न) अनलङ्कृत इति । हे सुन्दर । यतः अनलङ्कृतः अशोभितोऽपि त्वं

तर्जयेत्ताड़येदन्या ॥१०६॥

अन्या अधीरा। यथा "शोणं वीक्ष्य मुखम्" इत्यत्रैव। अत्र च सर्वत्र रुषेत्यनुवर्त्तते।

प्रत्येकं ता अपि द्विधा।

कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति ॥१०७॥ [प]

ता अनन्तरोक्ताः षड्भेदा नायिकाः।

यथा।

"दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरात्
एकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसाम्
अन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरा चुम्बति" ॥ (फ)

मध्याप्रगल्भयोर्भेदास्तस्माद् द्वादश कीर्त्तिताः।
मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश ॥

---

मे मम मनः प्रसभं सहसा हरसि, सम्प्रति तस्या नायिकाया नखरक्षतैः अलङ्कृतः शोभितः त्वं किं पुनः ?

(प) कनिष्ठेति। नायकप्रणयं प्रति कनिष्ठज्येष्ठरूपत्वात् अल्पमहत्त्वरूपा-दित्यर्थः।

(फ) दृष्टेति। धूर्त्तः शठः एकस्मिन् आसने संस्थिते एकासनोप-विष्टे प्रियतमे दृष्ट्वा पश्चात् पृष्ठतः उपेत्य आगत्य आदरात् एकस्या प्रियाया नयने पिधाय आच्छाद्य विहितं कृतं क्रीडानुबन्ध एव छलं व्याजं येन तादृशः ईषत् अल्पं वक्रिता कन्धरा येन तथोक्तः, तथा सपुलकः सञ्जातलोमाञ्चः सन् प्रेम्णा प्रणयेन उल्लसत् विकसत् मानसं यस्यास्ताम्, अन्तर्हासेन आन्तरिकेण विकाशेन लसन्तौ कपोलफलकौ यस्यास्तादृशीम् अपरां कामिनीं चुम्बति। शार्दूलविक्रीडितं वृत्तम्।

परकीया द्विधा प्रोक्ता परोढ़ा कन्यका तथा १०८[ब]

तत्र।

यात्रादिनिरताऽन्योढ़ा कुलटा गलितत्रपा १०९[भ]

यथा।

"स्वामी निःश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीजनः
श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः।
तद्दूरादयमञ्जलिः किमधुना दृग्भङ्गिभावेन ते
वैदग्धीमधुर! प्रबन्धरसिक! व्यर्थोऽयमत्र श्रमः"॥ (म)

अत्र हि मम परिणीताऽऽच्छादनादिदातृतया स्वाम्येव न तु वल्लभः। त्वन्तु वैदग्धीमधुरत्वेन प्रबन्धरसिकतया च मम

---

(ब) कन्यका अजातोद्वाहा, "कन्या त्वजातोपयमा" इत्यमर।

(भ) परोढामाह तत्रेति। तत्र तयोर्मध्ये यात्रादिनिरता यात्रा उत्सव इत्यादिषु निरता आसक्ता कुलटा व्यभिचारिणी, गलिता गता त्रपा लज्जा यस्यास्तथाभूता, अन्योढा परोढा कथ्यते इति शेष।

(म) उदाहरति स्वामीति। निश्वसितेऽपि निश्वासपरित्यागेऽपि स्वामी असूयति असूया करोति, इय परपुरुषप्राप्त्या निःश्वसितेति बुद्ध्या इति भाव। सपत्नीजन मनोजिघ्र मनसि किं मया क्रियते इति पर्य्यवेक्षते इति भावः। श्वश्रू इङ्गितस्य हृद्गतस्य भावस्य, "इङ्गित हृद्गतो भाव" इत्यमर। दैवतम् अधिष्ठात्री देवीत्यर्थ। यातर भ्रातृश्वशुरदेवराणा पत्न्य. नयनयोः नेत्रयो ईहा चेष्टा कटाक्षनिक्षेपादिकमित्यर्थ. ता लिहन्तीति तथोक्ता' नेत्रेङ्गिताना बोद्ध्र्य इत्यर्थ। हे वैदग्धीमधुर। वैदग्ध्या चातुर्य्येण मधुर. मनोहर तत्सम्बुद्धौ। हे प्रबन्धरसिक। प्रबन्ध. सुरतव्यापार' तत्र रसिक निपुण. तत्सम्बुद्धौ। तत् तस्मात् उक्तात् अन्तरायादादित्यर्थ दूरात् अयम् अञ्जलि रचित इति शेष, अधुना ते तव दृग्भङ्गिभावेन कटाक्षपातेनेत्यर्थ किम्? अत्र मत्प्राप्तिविषये इत्यर्थ. अय श्रम. व्यर्थ. विफल, न अहमिदानीं तव मनोरथ पूरयितु शक्नोमि तत् क्षमस्वेति भाव.। शार्दूलविक्रीडित वृत्तम्।

वल्लभीऽभीत्यादिव्यङ्ग्यार्थवशादस्याः परनायकविषया रतिः प्रतीयते।

कन्या त्वजातोपयमा सलज्जा नवयौवना ॥११०॥

अस्याश्च पित्राद्यायत्तत्वात् परकीयात्वम्। यथा मालतीमाधवादौ मालत्यादिः।

धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका।
निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि।
वित्तमात्रं समालोक्य सा रागं दर्शयेद् बहिः॥
काममङ्गीकृतमपि परिक्षीणधनं नरम्।
मात्रा निष्क्रामयेदेषा पुनः सन्धानकाङ्क्षया (य)
तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा।
लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः॥
एषापि मदनायत्ता क्वापि सत्यानुरागिणी।
रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ॥१११॥

पण्डको वातरोगपण्ड्रादिः। छन्नं प्रच्छन्नं ये कामयन्ते ते छन्नकामाः। तत्र रागहीना यथा लटकमेलकादौ मदनमञ्जर्यादिः। रक्ता यथा मृच्छकटिकादौ वसन्तसेनादिः। पुनश्च।

अवस्थाभिर्भवन्त्यष्टावेताः षोड़शभेदिताः।

---

(य) साधारणी स्त्रीति धीरेति। कलासु नृत्यगीतादिषु प्रगल्भा प्रवीणा। वित्तमात्रं केवलं धनं न तु गुणादिकमिति भाव.। रागम् अनुरागम्। निष्क्रामयेत् गृहात् बहिष्कारयेत्।

स्वाधीनभर्तृका तद्वत् खण्डिताऽथाभिसारिका ॥
कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका ।
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा॥११२

तत्र।

कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम् ।
विचित्रविभ्रमासक्ता सा स्यात् स्वाधीनभर्तृका ११३

यथा "अस्माकं सखि । वाससी" इत्यादि ।

पार्श्वमेति प्रियो यस्याः अन्यसम्भोगचिह्नितः ।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता॥११४

यथा "तदवितथमवादीरित्यादि"।

अभिसारयते कान्तं या मन्मथवशंवदा ।
स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका ॥११५॥

क्रमाद् यथा ।

"न च मेऽवगच्छति यथा लघुतां
करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमवगम्य वदेः
अभिदूति काचिदिति सन्दिदिशे" ॥ (२)

"उत्क्षिप्तं करकङ्कणद्वयमिदं बद्धा दृढं मेखला।

---

(२) न चेति । काचित् प्रमदा अभिदूति दूतीसमीपे यथा स मत्प्रिय इति शेषः मे मम लघुतां न च अवगच्छति बुध्यते, यथा च मयि करुणा दया कुरुते तथा अवगम्य एनं कान्तं वदेः इति निपुणं यथा तथा सन्दिदिशे सन्दिष्टम्। प्रमिता-क्षरावृत्तं प्रमिताक्षरा सजससैः, कथितेति लक्षणात् ।

यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता ।
आरब्धे रभसान्मया प्रियसखि ! क्रीड़ाभिसारोत्सवे
चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः” ॥ (ल)

संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा ।
अवगुण्ठनसंवीता कुलजाऽभिसरेत् यदि ॥
विचित्रोज्ज्वलवेशा तु वलन्नूपुरनिस्वना ।
प्रमोदस्मेरवदना स्याद् वेश्याऽभिसरेत् यदि ॥
मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसञ्चारास्यात् प्रेष्याऽभिसरेद् यदि ११६ [व]

तत्राद्ये “उत्क्षिप्तमित्यादि” * । अन्ययोरूह्यमुदाहरणम् । प्रसङ्गादभिसारस्थानानि कथ्यन्ते ।

---

(ल) उत्क्षिप्तमित्यादि । हे प्रियसखि ! इद करकङ्कणद्वयम् उत्क्षिप्तम् उत्तोल्य परिहित, रणन मा भूदिति सर्वत्र योज्यम् । मेखला रशना दृढ वद्धा, यत्नेन मुखरयो. रणतो. मञ्जीरयो. नूपुरयो. मूकता प्रतिपादिता, इत्थ मया रभसात् उल्लासात् क्रीडाभिसारोत्सवे आरब्धे सति चण्डाल अति निष्ठुरत्वादिति भाव विधु. चन्द्र तिमिरमेव अवगुण्ठनपट तस्य क्षेपम् अपसारणमित्यर्थ विधत्ते करोतीत्यर्थ, गूढमभिसर्त्तुकामाया मम सहसा चन्द्रोदयात् सर्व वैफल्य जातमिति भावः । शार्दूलविक्रीडित वृत्तम् ।

* तत्र यथा प्रेष्याभिसारिका ।

“ताम्बूलाक्तं दशनमसकृद दर्शयन्तीह चेटी
घोटी क्षीबाविकृतविकृत हेतुहीन हसन्ती ।
स्थानस्थानस्खलितपदविन्यासमाभासमाना
यूनामग्रे वसति कुटिल नर्त्तितोच्चैर्नितम्बम्” ॥

आहृतपूर्वोऽप्येष पाठः प्रकृतानुपयोगित्वादध. कृतः ॥

(व) संलीनेति । स्वेषु गात्रेषु संलीना अतिसङ्कुचितशरीरेत्यर्थः, मूकीकृतं निःशब्दीकृतं विभूषणं यया तादृशी, अवगुण्ठनसंवीता कृतावगुण्ठना, कुलजा

क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम्।
मालयञ्च श्मशानञ्च नद्यादीनां तटी तथा।
एवं कृताभिसाराणां पुंश्चलीनां विनोदने।
स्थानान्यष्टौ तथा ध्वान्तच्छन्नेषु क्वचिदाश्रयः॥
चाटुकारमपि [श] प्राणनाथं रोषादपास्य या।
पश्चात्तापमवाप्नोति कलहान्तरिता तु सा॥११७॥

यथा मम तातपादानाम्।

"नो चाटुश्रवणं कृतं न च दृशा हारोऽन्तिके वीक्षितः
कान्तस्य प्रियहेतवे निजसखीवाचोऽपि दूरीकृताः।
पादान्ते विनिपत्य तत्क्षणमसौ गच्छन्मया मूढया
पाणिभ्यामवरुध्य हन्त। सहसा कण्ठे कथं नार्पितः॥(ष)

प्रियः कृत्वापि सङ्केतं यस्या नायाति सन्निधिम्।

---

कुलीनेत्यर्थं, वलन्नुपुरनिस्वना वलन् उद्गच्छन् नूपुरयो निस्वनो यस्याः सा, प्रमोदेन आनन्देन स्मेरं विकसत् वदनं यस्यास्तादृशी, मदेन स्खलित अन्यथाभूत संलापो यस्याः सा, विभ्रमेण विलासेन उत्फुल्ले लोचने यस्याः तथोक्ता, आविद्धा गति यस्य तादृश सञ्चार यस्याः स्खलद्गतिरित्यर्थः, प्रेष्या दूती।

(श) ध्वान्तच्छन्ने कुत्रचिदाश्रये इति पाठे कुत्रचिदाश्रये पुंश्चल्योऽभिसरन्तीति शेष। चाटुकार प्रियकरम्।

(ष) नो इति। रोषात् पतिं निराकृत्य पश्चात्तापयुताया स्वजनं प्रत्युक्ति। मूढया मन्दबुद्ध्या मया चाटुश्रवणं तोषामोदवचनं नो श्रुतं प्रियस्येति शेषः, अन्तिके समीपे हारः प्रियेण सन्तोषणार्थं दत्त इति शेषः, दृशा चक्षुषा न च वीक्षितः दृष्टः, कान्तस्य प्रियहेतवे प्रियाचरणार्थं निजसखीनां वाचोऽपि अनुनयवचनान्यपि दूरीकृता न श्रुता इत्यर्थः। तत्क्षणं तस्मिन् क्षणे पादान्ते मम चरणतले विनिपत्य गच्छन् असौ मत्प्रियः अवरुध्य पाणिभ्यां कण्ठे कथं न अर्पितः न दत्तः? शार्दूलविक्रीडित वृत्तम्।

**विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता ॥११८॥ (स)**

यथा ।

"उत्तिष्ठ दूति ! यामो यामो यातस्तथापि नायात: ।
याऽत:परमपि जीवेज्जीवितनाथो भवेत् तस्या:" ॥ (ह)

**नानाकार्य्यवशाद् यस्या दूरदेशं गत: पति: ।**
**सा मनोभवदु:खार्त्ता भवेत् प्रोषितभर्तृका ॥११९॥**

यथा ।

"तां जानीथा: परिमितकथा जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठा गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम्" ॥ (च)

**कुरुते मण्डनं यस्या: सज्जिते वासवेश्मनि ।**

---

(स) प्रिय इति । विप्रलब्धा प्रतारिता । अन्यत् सर्वं स्पष्टम् ।

(ह) उत्तिष्ठेति । हे दूति । उत्तिष्ठ, याम: गच्छाम गृहमिति शेष:, याम: प्रहर:, "द्वौ यामप्रहरौ समौ" इत्यमर: । यात: गत:, तथापि न आयात: आगत: अत: परम् अनन्तरम् अपि या नारी जीवेत् तस्या: नार्य्या: जीवितनाथ: प्राणेश्वर: भवेत् स इति शेष: । आर्य्यावृत्तं, यस्या: प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति लक्षणात् ।

(च) तामिति । मेघं प्रति यक्षस्य वियोगिन उक्तिरियम् । परिमितकथा मितभाषिणीं मे मम द्वितीयं जीवितं प्राणभूतां मयि सहचरे दूरीभूते दूरवर्त्तिनि सति एकाम् एकाकिनीं चक्रवाकीमिव स्थितां तां मत्पत्नीं जानीथा: अवगच्छ । यदि किञ्चिदाकारवैलक्षण्यं दृश्यते तदपि नान्यथा शङ्कितव्यमित्याह, गुरुषु विरहमहत्सु एषु दिवसेषु गच्छत्सु गाढोत्कण्ठाम् अत्युत्कण्ठावतीं बालामप्रौढां तां शिशिरमथितां हिमशोषिताम् अतएव अन्यरूपां विकृतावयवां विशीर्णामित्यर्थ: पद्मिनीं वा कमलिनीमिव जातां मन्ये सम्भावयामि । मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ गौ ययुग्मम् इति तल्लक्षणात् ।

**सा तु वासकसज्जा स्याद्विदितप्रियसङ्गमा १२० [क**

यथा राघवानन्दानां नाटके।

"विदूरे केयूरे कुरु करयुगे रत्नवलयैः
अलं गुर्वी ग्रीवाभरणलतिकेयं किमनया।
नवामेकामेकावलिमयि! मयि त्वं विरचयेः
न पथ्यं नेपथ्यं बहुतरमनङ्गोत्सवविधौ" ॥ (ख)

**आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः।**
**तदनागमदुःखार्त्ता विरहोत्कण्ठिता तु सा ॥१२१॥**

यथा।

"किं रुद्धः प्रियया कयाचिदथवा सख्या ममोद्वेजितः
किंवा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः।
इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं
दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः" ॥ (ग)

---

(क) कुरुते इति। यस्या वासवेश्मनि शय्यागृहे सज्जिते मण्डनं कुरुते वासगृहं सज्जयित्वा स्वयं मण्डनादि करोति सा विदितः ज्ञातः प्रियसङ्गमः यया तादृशी सती वासकसज्जा स्यात्।

(ख) विदूरे इति। केयूरे करभूषणविशेषौ विदूरे दूरवर्त्तिनौ कुरु करयुगे रत्नवलयैः अलं न कार्यमित्यर्थः, इयं ग्रीवाभरणलतिका गुर्वी अतिमहती अनया किम्? अयि सखि! त्वं मयि नवाम् एकां केवलाम् एकावलीं विरचयेः विरचितां कुरु, अनङ्गोत्सवविधौ कामोत्सवव्यापारे बहुतरं नेपथ्यम् अलङ्करणं न पथ्यं न हितकरम्। शिखरिणीवृत्तम्।

(ग) किमिति। कयाचित् अपरया इत्यर्थः, प्रियया किं रुद्धः, अथवा मम सख्या दूत्या उद्वेजितः विरक्तीकृतः, किं वा कारणगौरवं प्रयोजनविशेषः अस्तीति शेषः, यतः येन अद्य वल्लभः प्रियः न आगतः? इति आलोच्य मृगीदृशा हरिणाक्ष्या करतले वक्त्रं वदनमेवाम्बुजं विन्यस्य दीर्घं यथा तथा निःश्वसितं

इति साष्टाविंशतिशत-
मुत्तममध्यमाधमस्वरूपतः।
चतुरधिकाशीतियुतं
शतत्रयं नायिकाभेदानां स्यात् ॥ १२२ ॥

इह च "परस्त्रियौ कन्यकोढे सङ्केतात् पूर्वं विरहोत्कण्ठिते पश्चाद्विदूषकादिना सहाभिसरन्त्यावभिसारिके कुतोऽपि सङ्केतितस्थानमप्राप्ते नायके विप्रलब्धे इति त्र्यवस्थैवानयोरस्वाधीनप्रिययोरवस्थान्तरायोगात्" इति कश्चित्।

क्वचिदन्योन्यसाङ्कर्य्यमासां लक्ष्येषु दृश्यते १२३[घ]

यथा।

"न खलु वयममुष्य दानयोग्याः
पिबति च पाति च यासकौ रहस्त्वाम्।
विट। विटपममुं ददस्व तस्यै
भवति यतः सदृशोश्चिराय योगः॥ (ङ)

तव कितव। किमाहितैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः।

---

श्चिर बहुत्वञ्च रुदितञ्च, पुष्पस्रजः कुसुमदामानि क्षिप्ता परित्यक्ताश्च। शार्दूलविक्रीडित वृत्तम्।

(घ) अन्योन्यसाङ्कर्य्यं परस्परमेलनम्।

(ङ) नेति। हे विट। धूर्त्त। वयम् अमुष्य विटपस्य दानयोग्याः दानपात्राणि न खलु नैव, या असकौ कान्ता रह विजने त्वा पिबति चुम्बतीत्यर्थः, पाति रक्षति परिचरति चेत्यर्थः, तस्यै अमु विटप सपुष्पपल्लवा शाखां ददस्व, यत दानात् सदृशोर्युवयोश्चिराय योगः सम्मेलनाभववि। पुष्पिताग्रावृत्तम्, अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात्।

(च) तवेति। हे कितव। धूर्त्त। नः अस्माभ्यं वृथा निरर्थकं आहितैः

ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम्॥ (च)

इति गदितवती रुषा जघान
स्फुरितमनोरमपक्ष्मकेसरेण।
श्रवणनियमितेन कान्तमन्या
सममसिताम्बुरुहेण चक्षुषा च"॥ (छ)

इयं हि वक्रोक्त्या परुषवचनेन कर्णोत्पलताड़नेन च धीरमध्यताऽधीरमध्यताऽधीरप्रगल्भताभिः सङ्कीर्णा। एवमन्यत्रापि ऊह्यम्।

**इतरा अप्यसंख्यास्ता नोक्ता विस्तरशङ्कया॥१२४॥**

ता नायिकाः। अथासामलङ्काराः।

**यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः।**
**अलङ्कारास्तत्र-भावहावहेलास्त्रयोऽङ्गजाः॥**
**शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता।**
**औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः,।**
**लीलाविलासौ विच्छित्तिर्व्विव्वोकः किलकिञ्चितम्**

---

दत्ते छिन्नरुहस्य वृक्षस्य पल्लवपुष्पाण्येव कर्णपूरा कर्णभूषणानि तै किम्? ननु भो जनविदितैः जनाना विज्ञातै. भवद्व्यलीकै' तवाप्रियै कर्णयुग्म श्रोत्रयुगल ममेति शेष चिरपरिपूरितमेव अत स्थानाभावात् कर्णपूरार्थपुष्पपल्लवदान निरर्थकमेवेति भाव'। पुष्पिताग्रावृत्तम्।

(छ) इतीति। इत्थ' गदितवती अन्या कामिनी रुषा कोपेन स्फुरितैन मनोरमाः पक्ष्माण्येव केसराः किञ्जल्काः यस्य तादृशेन, श्रवणनियमितेन कर्णस्थितेन आकर्णायतेन च असिताम्बुरुहेण नीलोत्पलेन चक्षुषा च सम कान्त जघान आहतवती हस्तस्थितनीलोत्पलेन कटाक्षेण च ताडयामासेत्यर्थ.। पुष्पिताग्रावृत्तम्।

मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः।
विकृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम्॥
हसितं चकितं केलिरित्यष्टादशसंख्यकाः।
स्वभावजाश्च भावाद्या दश पुंसां भवन्त्यपि॥१२५॥

पूर्वे भावादयो धैर्य्यान्ता दश नायकानामपि सम्भवन्ति किन्तु सर्व्वेऽप्यमी नायिकाश्रिता एव विच्छित्तिविशेष (ज) पुष्णन्ति। तत्र भावः।

निर्व्विकारात्मके चित्ते भावः प्रथमविक्रिया १२६[झ]

जन्मतः प्रभृति निर्व्विकारे मनसि उद्‌बुद्धमात्रो विकारो भावः।

यथा।

"स एव सुरभिः कालः स एव मलयानिलः।
सैवेयमबला किन्तु मनोऽन्यदिव दृश्यते"॥ (ञ)

अथ हावः।

भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः।
भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते १२७[ट]

---

(ज) यौवने इति। सत्त्वजाः सत्त्वगुणजाताः स्वाभाविका इत्यर्थं अलङ्काराः शरीरशोभाजनका धर्मा इत्यर्थः। अङ्गजाः शरीरोत्पन्नाः। अयत्नजाः अप्रयाससिद्धाः नैसर्गिका इत्यर्थः। विच्छित्तिविशेषं वैचित्र्यातिशयम्।

(झ) भावमाह निर्व्विकारात्मके अविकृते चित्ते मनसि प्रथमविक्रिया विकारः भावः।

(ञ) उदाहरति यथेति स एवेति। यौवनाविर्भावात् मनसः अन्यथाभाव इति भावः।

"विव्वृखती शैलसुताऽपि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्य्यस्तविलोचनेन" ॥ (ठ)

अथ हेला ।

**हेलात्यन्तसमालक्ष्यविकारः स्यात् स एव च ॥१२८**

स एव भाव एव । यथा ।

"तह से झत्ति पउत्ता बहुए सव्वङ्गविभ्भमा सअला ।
संसइअमुद्धभावा होइ चिरं जइ सहीणम्पि" ॥ ( ड )

अथ शोभा ।

**रूपयौवनलालित्यभोगाद्यैरङ्गभूषणम् ।**
**शोभा प्रोक्ता ॥ १२९ ॥ [ढ]**

---

(ट) हावमाह भ्रूनेत्रादीति । अल्पं संलक्ष्यं विकारो यस्य तादृशो भावः हाव उच्यते ।

(ठ) उदाहरति विव्वृखतीति । शैलसुता पार्वती अपि स्फुरतः विकसत बालकदम्बात् ईषदूनानि तैः विकसिताभिनवकदम्बसदृशैरित्यर्थः, अङ्गैः अवयवैः भाव रत्याख्य विव्वृखती व्यञ्जयन्ती पर्य्यस्तविलोचनेन विभ्रान्तनेत्रेण अतएव चारुतरेण अतिमनोहरेण मुखेन साचीकृता ईषत् वक्रीकृता सती तस्थौ । उपजातिवृत्तम् ।

( ड ) हेलामुदाहरति तह इति । तथा तस्या झटिति प्रवृत्ता वध्वाः सर्वाङ्गविभ्रमा सकलाः । संशयितमुग्धभावा भवति चिरं यथा सखीनामपीति संस्कृतम् । अस्यार्थः । तस्याः वध्वाः नवोढायाः बालायाः झटिति सहसा सकलाः समग्राः सर्वाङ्गेषु विभ्रमाः विलासाः तथा प्रवृत्ताः सञ्जाताः, यथा सखीनां सहचरीणामपि किमन्येषामित्यपिशब्दार्थः चिरं संशयितमुग्धभावा सन्दिग्धशैशवा भवति ।

(ढ) शोभामाह रूपेति । लालित्यं सौन्दर्य्यं, "ललितं त्रिषु सुन्दरम्" इत्यमरः ।

तत्र यौवनशोभा।

"असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साऽथ वयः प्रपेदे"॥(ण)

एवमन्यत्रापि।*

अथ कान्तिः।

**सैव कान्तिर्मन्मथाप्यायिता द्युतिः॥ १३०॥ [त]**

मन्मथोन्मेषणातिविस्तीर्णा शोभैव कान्तिरुच्यते। यथा।
"नेत्रे खञ्जनगञ्जने इत्यादि"।[83]

अथ दीप्तिः।

**कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते॥१३१॥**

यथा मम चन्द्रकलानामनाटिकायां चन्द्रकलावर्णनम्।
"तारुण्यस्य विलासः समधिकलावण्यसम्पदो हासः।
धरणितलस्याभरणं युवजनमनसो वशीकरणम्"॥ (थ)

अथ माधुर्य्यम्।

**सर्वावस्थाविशेषे तु माधुर्य्यं रमणीयता॥१३२॥**

---

(ण) उदाहरति असम्भृतमिति। अथ शैशवादनन्तरं सा पार्वती अङ्गयष्टेः असम्भृतम् अनाहृत मण्डन भूषणम्, अनासवाख्यम् आसवाख्यारहित विना सुरापानमित्यर्थः मदस्य मत्ततायाः करणं साधनं, कामस्य मदनस्य पुष्पव्यतिरिक्तं पुष्पभिन्नमस्त्र, बाल्यात् परं वयः यौवनमित्यर्थः प्रपेदे प्राप। उपजातिवृत्तम्।

(त) कान्तिमाह सैवेति। सैव शोभैव मन्मथेन कामेन आप्यायिता वर्द्धिता द्युतिः यस्याः तथाभूता कान्तिरुच्यते इति शेषः।

(थ) दीप्तिमुदाहरति तारुण्यस्येति। तारुण्यस्य यौवनस्य विलासः स्फुरण समधिकं यत् लावण्य तदेव सम्पत् तस्याः हासः हास्य विकास इत्यर्थः धरणितलस्य पृथिव्याः आभरणम् अलङ्कारः, तथा युवान एव जनाः तेषां मनसः चित्तस्य वशीकरणम्। आर्य्यावृत्तम्।

यथा।

"सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्"। (द)

अथ प्रगल्भता।

निःसाध्वसत्वं प्रागल्भ्यम् ॥ १३३ ॥ [ध]

यथा।

"समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि।
दष्टाश्च दंशनैः कान्तं दासीकुर्वन्ति योषितः" ॥ (न)

अथ औदार्य्यम्।

औदार्य्यं विनयः सदा ॥ १३४ ॥ [प]

---

(द) माधुर्य्यमुदाहरति सरसिजमिति। शैवलेन अनुविद्धं सङ्गतमपि सरसिजं रम्यं मनोहरं, हिमांशोश्चन्द्रस्य लक्ष्म कलङ्कं मलिनमपि लक्ष्मीं श्रियं तनोति विस्तारयति, इयं तन्वी कृशाङ्गी शकुन्तला वल्कलेन त्वचलचाऽपि अधिकमनोज्ञा अतिमनोहारिणी। हि तथाहि मधुराणाम् आकृतीनां किमिव मण्डनं भूषणं न भवति? अपि तु सर्वमेव वस्तु इत्यर्थः। मालिनीवृत्तम्।

(ध) प्रागल्भ्यमाह निःसाध्वसत्वमिति। निःसाध्वसत्वं निर्भीकत्वम् असङ्कुचितत्वमिति यावत् प्रागल्भ्यं प्रौढत्वमित्यर्थः।

(न) उदाहरति समाश्लिष्टा इति। योषितः नार्य्यः समाश्लिष्टाः समालिङ्गिताः कान्तेनेति सर्वत्र योज्यम्। समाश्लेषैः समालिङ्गनैः चुम्बिताः चुम्बनैः दष्टाश्च दशनैः कान्तं प्रियं दासीकुर्वन्ति अधीनीकुर्वन्ति इत्यर्थः। पथ्यावक्त्रं वृत्तं, "युजोश्चतुर्थतो येन पथ्यावक्त्रं प्रकीर्त्तितम्।

(प) औदार्य्यमाह औदार्य्यमिति। सर्वदा सर्वस्मिन् काले विनयः नम्रता शिष्टाचार इति यावत्।

"न ब्रूते परुषां गिरं वितनुते न भ्रूयुगं भङ्गुरं
नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि।
कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या वहिः
सख्या वक्त्रमभिप्रयच्छति परं पर्य्यश्रुणी लोचने"॥ (फ)

अथ धैर्य्यम्।

**मुक्तात्मश्लाघना धैर्य्यं मनोवृत्तिरचञ्चला॥१३५ [ब]**

यथा।

"ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किंवा मृत्योः परेण विधास्यति।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम्"॥ (भ)

---

(फ) उदाहरति नेति। सा कान्ता मे मम आगसि अपराधे स्फुटे व्यक्तेऽपि परुषां कर्कशां गिरं वाचं न ब्रूते, भ्रूयुगं भङ्गुरं कुटिलं न वितनुते न करोति, तथा श्रवणतः कर्णाभ्याम् उत्तंसम् अवतंसं कर्णभूषणमित्यर्थः क्षितौ धरण्यां न क्षिपति, परं केवलं गर्भगृहे गृहान्तरे स्थिता इति शेषः। वहिः गवाक्षविवरेण व्यापारिते अन्तर्गृहे चालिते अक्षिणी यया तादृश्या सख्याः वक्त्रं वदनमभि अभिलक्ष्य इत्यर्थः पर्य्यश्रुणी अश्रुपूर्णे लोचने प्रयच्छति पातयतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(ब) धैर्य्यमाह मुक्तेति। मुक्ता त्यक्ता आत्मश्लाघना यस्यां तादृशी अचञ्चला अचपला मनोवृत्तिः धैर्य्यम्।

(भ) उदाहरति ज्वलतु इति। रात्रौ रात्रौ प्रतिरात्रं गगने अखण्डकलः पूर्ण इत्यर्थः शशी ज्वलतु अग्निवत् किरणान् विस्तारयतु इत्यर्थः, मदनः कामः दहतु भस्मीकरोतु, मृत्योः परेण किंवा विधास्यति करिष्यति मृत्युपर्य्यन्तविधानमेव तस्य चरमसीमेति भावः, मम तु दयितः पतिः तातश्च श्लाघ्यः प्रशंसनीयः अभिमत इत्यर्थः अन्यच माननीय इत्यर्थः, केचित्तु मम तु तातः पिता दयितः प्रियः श्लाघ्यश्चेत्यर्थ इति पत्यर्थं विहाय व्याचक्रुः। जननी माता अमलान्वया विशुद्धवंशीया, कुलं स्वामिकुलमित्यर्थः, अमलिनं कलङ्करहितम्, अयं जनः अहमित्यर्थः

अथ लीला।

**अङ्गैर्वेशैरलङ्कारैः प्रेमभिर्वचनैरपि।**
**प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः॥१३६॥**

यथा।

"मृणालव्यालवलया वेणीबन्धकपर्दिनी।
हरानुकारिणी पातु लीलया पार्वती जगत्॥ (म)

अथ विलासः।

**यानस्थानासनादीनां मुखनेत्रादिकर्मणाम्।**
**विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना १३७[य]**

यथा।

"अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः।
तद्भूरिसात्त्विकविकारमपास्तधैर्य्य-
माचार्य्यकं विजयि मान्मथमाविरासीत्" ॥ (र)

---

न तु एव न स्थिरं जीवितञ्च न स्थिरमिति शेष, अत अस्थिरस्य देहस्य जीवनस्य च कृते पितृमातृभर्तृकुलानि न कलङ्कयिष्यामीति भाव.। हरिणीवृत्त, न सम-रसला गे षड्वेदैर्हयैर्हरिणी मतेति तल्लक्षणात्।

(म) लीलामुदाहरति मृणालेति। पार्वती, मृणालमेव व्याल' पन्नग' वलय यस्या तादृशी, वेणीबन्धः केशपाश एव कपर्द. जटाजूट' तच्छालिनी, अतएव लीलया हरस्य शम्भोः अनुकारिणी सती जगत् पातु रक्षतु।

(य) विलासमाह यानेति। इष्टस्य प्रियस्य सन्दर्शनादिना यानं गमन स्थानं स्थिति. आसनम् उपवेशन तत्प्रभृतीना तथा मुखनेत्रादिकर्मणा विशेषः वैचि-त्र्यन्तु विलास' स्यात्।

(र) उदाहरति अत्रेति। मालत्याः भावं दृष्टवती माधवस्य सख्युः सखीसमीपे तद्वर्णनमिदम्। अत्र अस्मिन् अन्तरे अवसरे आयताक्ष्याः दीर्घ-

अथ विच्छित्तिः।

स्तोकाऽप्याकल्परचना

विच्छित्तिः कान्तिपोषकृत् ॥ १३८ ॥ [ल]

यथा।

"स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठ

स्ताम्बूलद्युतिविशदो विलासिनीनाम्।

वासस्तु प्रतनु विविक्तमस्त्वितीयान्

आकल्पो यदि कुसुमेषुणा न शून्यः ॥ (व)

अथ विव्वोकः।

विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः १३९ [श]

---

नेवाया मालत्या किमपि अनिर्दिष्टमित्यर्थ वाचा विभव सामर्थ्यम् अतिवृत्तम् अतिक्रान्त वैचित्र यस्य तथोक्तम् अवचनीयवैचित्रमित्यर्थ, उल्लसिता प्रकटिताः विभ्रमा. विलासविशेषा यत्र तादृश, भूयः बहव सात्त्विकाना स्तम्भस्वेदादीना विकारा यस्मिन् तथाभूतम्, अपास्त निरस्त धैर्य्यं यस्मात तत् धैर्य्यविध्वंसकमित्यर्थ, विजयि विजयशील मान्मथ मदनसम्बन्धि आचार्य्यकम् आचार्य्यकर्मशिक्षाकार्य्यमित्यर्थ आविरासीत् प्रकटीबभूव। वसन्ततिलक वृत्तम्।

(ल) विच्छित्तिमाह स्तोकेति। अल्पापि कान्तिपोषकृत् कान्तिपोषिणी आकल्परचना अलङ्काररचना विच्छित्ति.।

(व) उदाहरति स्वच्छेति। विलासिनीना कामिनीनाम् अङ्गं स्वच्छे विमले अम्भसि स्नपनेन विधौत विशेषत चालितम्, ओष्ठ. ताम्बूलाना द्युत्या रागेण विशद निर्मलः तथा वास. वसनन्तु प्रतनु सूक्ष्म, तथा विविक्त पूत निर्मलमिति यावत् इतीयान् एवं प्राय इत्यथ आकल्प भूषणम् अस्तु भवतु नाधिकमिति भाव.। यदि कुसुमेषुणा कामेन शून्य न रहित आकल्प इति भाव. यत् किञ्चिदाभरणमस्तु किन्तु तत् मदनव्यञ्जक भवितुमर्हतीति भाव.। प्रहर्षणीवृत्तं, म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयमिति तल्लक्षणात।

(श) विव्वोक इति। अतिगर्वेण अहङ्कारातिशयेन इष्टे प्रियेऽपि वस्तुनि विषये अनादरः अयत्न. विव्वोक.।

यथा ।

"यासां सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परा
याः प्राणान् वरमर्पयन्ति न पुनः सम्पूर्णदृष्टिं प्रिये ।
अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मकः
तास्त्रैलोक्यविलक्षणप्रकृतयो वामाः प्रसीदन्तु ते" ॥ (ष)

अथ किलकिञ्चितम् ।

**स्मितशुष्करुदित-**
**हसितत्रासक्रोधश्रमादीनाम् ।**
**साङ्कर्य्यं किलकिञ्चित-**
**मभीष्टतमसङ्गमादिजाद्धर्षात् ॥ १४० ॥** [स]

यथा ।

"पाणिरोधमविरोधितवाञ्छं
भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरु-
र्हारि शुष्करुदितञ्च सुखेऽपि" ॥ (ह)

---

(ष) उदाहरति यासामिति । सद्गुणानुसरणे सत्यपि यासां नारीणां परा केवला दोषानुवृत्तिः दोषग्रहणम् । याः वरं प्राणान् अर्पयन्ति त्यजन्ति, प्रिये पत्यौ सम्पूर्णदृष्टिं न पुनः अर्पयन्तीति शेषः । अत्यन्ताभिमते अतिप्रियेऽपि वस्तुनि विषये यासां निषेधात्मकः विधिः न न इति व्याहारः इत्यर्थः त्रैलोक्यस्य विलक्षणा प्रकृतिः यासां तथाविधाः ताः वामाः प्रतिकूलवर्त्तिन्यः नार्य्यः ते तव प्रसीदन्तु प्रसन्ना भवन्तु । शार्दूलविक्रीडितं वृत्तम् ।

(स) किलकिञ्चितमाह स्मितेति । अभीष्टतमस्य प्रियतमस्य सङ्गमादिजात् हर्षात् आनन्दात् स्मितस्य मृदुहासस्य शुष्करुदितस्य अनश्रुरोदनस्य हसितस्य त्रासस्य भयस्य क्रोधस्य मानस्य श्रमस्य आयासस्य एवमन्यस्य साङ्कर्य्यं सम्मेलनं किलकिञ्चितम् ।

(ह) उदाहरति पाणिरोधमिति । करभोरुः कान्ता सुखेऽपि अविरोधिता अविनष्टा वाञ्छा यत्र तत् यथा तथा कामिनः कान्तस्य पाणिरोधं

अथ मोट्टायितम्।

तद्भावभाविते चित्ते वल्लभस्य कथादिषु।
मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम् १४१ च

यथा।

"सुभग! त्वत्कथारम्भे कर्णकण्डूतिलालसा।
उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साङ्गना"॥ (क)

अथ कुट्टमितम्।

केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात्।
प्राहुः कुट्टमितं नाम शिरःकरविधूननम् १४२[ख]

यथा।

"पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे।
पर्य्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण"॥ (ग)

---

स्वगात्रे अदित्सितस्य पाणे रोधः अवरोधः तं, मधुर स्मित मृदुहसित गर्भे यासां तथाविधाः भर्त्सनाश्च, तथा हारि मनोहरं शुष्करुदितञ्च करोति। स्वागतावृत्तं, स्वागता रनभगैर्गुरुणा चेति तल्लक्षणात्।

(च) मोट्टायितमाह तदिति। तस्य वल्लभस्य भावः भावितः चिन्तितः येन तादृशे चित्ते मनसि सति वल्लभस्य प्रियस्य कथादिषु कर्णकण्डूयनादिकं मोट्टायितमिति प्राहुः।

(क) उदाहरति सुभगेति। हे सुभग! सा अङ्गना कामिनी तव कथायाः आरम्भे सति कर्णकण्डूतिलालसा कर्णकण्डूयनपरा तथा उज्जृम्भं वदनमेव अम्भोजं पद्मं यस्याः तथाभूता सती अङ्गानि भिनत्ति स्वाङ्गभङ्गं करोतीत्यर्थः।

(ख) कुट्टमितमाह केशेति। केशस्तनाधरादीनां ग्रहे ग्रहणे हर्षे आनन्देऽपि प्रियस्पर्शादिति भावः, सम्भ्रमात् यत् शिरःकरविधूननं शीर्षहस्तकम्पनं तत् कुट्टमितं प्राहुः।

(ग) उदाहरति पल्लवेति। अभीष्टे प्रिये पल्लवेन या उपमितिः उपमानं तेन साम्यं सादृश्यं तस्य सपक्षं तत् अधरबिम्बं दष्टवति सति तरुण्याः कामिन्याः

अथ विभ्रमः।

**त्वरया हर्षरागादेर्दयितागमनादिषु।**
**अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः॥१४३[घ]**

यथा।

"श्रुत्वाऽऽयान्तं बहिः कान्तमसमाप्तविभूषया।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः"॥ (ङ)

अथ ललितम्।

**सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत्॥१४४[च]**

यथा।

"गुरुतरकलनूपुरानुनादं सललितनर्त्तितवामपादपद्मा।
इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम"॥ (छ)

---

तारलोलम् अतिचञ्चलं मुखरमित्यर्थः वलयं यस्य तादृशेन करेण हस्तेन सरुजेव सपीडनेव पर्य्यकूजि परिकूजितम्। अधरदशनोद्यते प्रिये वलयालङ्कृतेन पाणिना निषेधादिति भावः।

(घ) विभ्रममाह त्वरयेति। दयितस्य प्रियस्य आगमनादिषु हर्षरागादेः आनन्दानुरागादेः हेतोः त्वरया अस्थाने अयोग्यस्थाने भूषणादीनां न्यासः परिधानमित्यर्थः विभ्रमः मतः।

(ङ) उदाहरति श्रुत्वेति। बहिः बाह्यदेशे कान्तमायान्तं दृष्ट्वा असमाप्तविभूषया अशेषितालङ्करणया कयाचित् भाले ललाटे अञ्जनं, दृशोः चक्षुषोः लाक्षा अलक्तकरागः, कपोले गण्डे तिलकः कृतश्च।

(च) ललितमाह सुकुमारतयेति। सुकुमारतया ोलतया सुकमलं अङ्गानां विन्यासः विशेषेण न्यासः विक्षेपः ललितं भवेत्।

(छ) उदाहरति गुर्विति। अथ अनन्तरं सेति पदमध्याहार्य्यम्। गुरुतरं गम्भीरं कलं मधुरास्फुटं नूपुरस्य अनुनादः अनुध्वनिः यस्मिन् तत् यथा तथा सललितं मनोहरं यथा तथा नर्त्तितं निक्षिप्तं वामं दक्षिणेतरं पादपद्मं चरणकमलं यया तादृशी, तथा इतरत् अन्यत् दक्षिणमित्यर्थः पदम् अनतिलोलं नातिचपलं यथा तथा आदधाना अर्पयन्ती सती मन्मथमन्थरं मदनजडं यथा तथा जगाम।

अथ मदः।

**मदो विकारः सौभाग्ययौवनाद्यवलेपजः १४५[ज]**

यथा।

"मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति।
अन्याऽपि किं न खलु भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः। (झ)

अथ विकृतम्।

**वक्तव्यकालेऽप्यवचो व्रीड़या विकृतं मतम् १४६ [ञ]**

यथा।

"दूरागतेन कुशलं पृष्टा नोवाच सा मया किञ्चित्।
पर्य्यश्रुणी तु नयने तस्याः कथयाम्बभूवतुः सर्वम्॥ (ट)

---

(ज) मदमाह मद इति। सौभाग्यैयौवनादिना य. अवलेप गर्व. तज्ज. विकार. मदः।

(झ) उदाहरति मेति। कामपि सौभाग्यगर्ववती प्रति कस्याश्चिदुक्तिः। कान्तस्य प्रियस्य स्वहस्तेन लिखिता मञ्जरी रचनाविशेष इत्यर्थ, मम कपोलतले चकास्ति राजते इति कृत्वा गर्वं मा उद्वह न गर्वं कुरु इत्यर्थः चेत् यदि वैरी विपक्षः वेपथु कम्प. कान्तस्पर्शजनितः सात्त्विकभावविशेष इत्यर्थ. अन्तराय' विघ्न. न भवति तदा अन्या अपरापि नारी ईदृशीना प्रियस्वहस्तलिखितमञ्जर्य्यादीना भाजन पात्र' न खलु नैव भवति किम्? वसन्ततिलकं वृत्तम्।

(ञ) विकृतमाह वक्तव्येति। वक्तव्यकाले वचनावसरेऽपि व्रीडया लज्जया अवच' अकथन विकृत मतम्।

(ट) उदाहरति दूरागतेनेति। दूरागतेन मया कुशलं पृष्टा सा किञ्चित् न उवाच, तु किन्तु तस्या. पर्य्यश्रुणी अश्रुपूर्णे नयने सर्व कथयाम्बभूवतु। आर्य्यावृत्तम्।

अथ तपनम्।

**तपनं प्रियविच्छेदे स्मरावेशोत्थचेष्टितम्॥१४७ [ठ]**

यथा मम।

"श्वासान् मुञ्चति भूतले विलुठति त्वन्मार्गमालोकते
दीर्घं रोदिति विक्षिपत्यत इतः क्षामां भुजावल्लरीम्।
किञ्च प्राणसमान! काङ्क्षितवती स्वप्नेऽपि ते सङ्गमं
निद्रां वाञ्छति न प्रयच्छति पुनर्दग्धो विधिस्तामपि"॥ (ड)

अथ मौग्ध्यम्।

**अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः।**
**वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत् तत्त्ववेदिभिः॥१४८[ढ]**

यथा।

"के द्रुमास्ते क्व वा ग्रामे सन्ति केन प्ररोपिताः।

---

(ठ) तपनमाह तपनमिति। प्रियविच्छेदे कान्तविरहे सति स्मरावेशोत्थ-चेष्टितं स्मरस्य कामस्य यः आवेशः तेन उत्थम् उत्पन्नं चेष्टितं व्यापारः तपनम्।

(ड) उदाहरति श्वासानिति। नायकं प्रति दूत्या उक्तिरियम्। हे प्राणसमान! सा तव कान्ता इति अध्याहार्य्यं, श्वासान् निश्वासान् मुञ्चति त्यजति, भूतले धरण्यां विलुठति, तव मार्गं पन्थानम् आलोकते अवलोकयति, दीर्घं रोदिति, अत इतः इतस्ततः इत्यर्थः क्षामां विरहक्षीणामित्यर्थः भुजावल्लरीं बाहुलतिकां विक्षिपति, किञ्च स्वप्नेऽपि ते तव सङ्गमं काङ्क्षितवती सती निद्रां वाञ्छति, पुनः किन्तु दग्धो विधिः तां निद्रामपि न प्रयच्छति न ददाति। शार्दूल-विक्रीडितं वृत्तम्।

(ढ) मौग्ध्यमाह अज्ञानादिवेति। प्रतीतस्य प्रसिद्धस्य वा ज्ञातस्यापि वस्तुनः अज्ञानादिव वल्लभस्य प्रियस्य पुरः अग्रतः या पृच्छा जिज्ञासा तत् तत्त्ववेदिभिः मौग्ध्यं प्रोक्तम्।

नाथ ! मत्कङ्कणन्यस्तं येषां मुक्ताफलं फलम्" ॥ (ण)

अथ विक्षेपः।

भूषाणामर्द्धरचना वृथा विष्वगवेक्षणम्।
रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके ॥१४९(त)

यथा।

"धम्मिल्लमर्द्धमुक्तं कलयति तिलकं तथा शकलम्।
किञ्चिद्वदति रहस्यं चकित विष्वगवलोकते तन्वी" ॥ (थ)

अथ कुतूहलम्।

रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम् ॥१५०(द)

यथा।

"प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव।
उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान" ॥ (ध)

---

(ण) उदाहरति के इति। हे नाथ! मत्कङ्कणन्यस्त मुक्ताफल येषा फल त द्रुमा के? क्व वा ग्रामे सन्ति? केन वा प्ररोपिताः?

(त) विक्षेपमाह भूषाणामिति। दयितस्य प्रियस्य अन्तिके समीपे भूषाणाम अलङ्कतीनाम् अर्द्धरचना, वृथा निरर्थकं विष्वक् समन्तात् अवेक्षणम् अवलोकनम् ईषत् मन्दं मन्द रहस्यस्य गोपनीयस्य आख्यान कथनञ्च विक्षेप।

(थ) उदाहरति धम्मिल्लमिति। तन्वी कृशाङ्गी धम्मिल्ल बद्धकेशं, "धम्मिल्ला. संयता' कचाः" इत्यमर। अर्द्धमुक्तं, शकल खण्ड तिलकं कलयति करोति, किञ्चित् रहस्यं वदति, तथा विष्वक् सर्वत. चकितं यथा तथा अवलोकते।

(द) कुतूहलमाह रम्येति। रम्यं मनोज्ञं वस्तु तस्य समालोके सम्यक् दर्शने लोलता सतृष्णता औत्सुक्यमिति यावत् कुतूहल स्यात्।

(ध) उदाहरति प्रसाधिकेति। काचित् पुरसुन्दरी प्रसाधिकया अलङ्कारिण्या लम्बितं गृहीतम् अग्रपाद द्रवरागमेव आक्षिप्य आकृष्य उत्सृष्टा त्यक्ता लीलागतिः विलासमन्दगमन यया तादृशी सती आगवाक्षात् अलक्तकाङ्कां पदवी पदपङ्क्तिम् आततान विस्तारयामास। उपजातिवृत्तम्।

अथ हसितम्।

**हसितन्तु वृथाहासो यौवनोद्भेदसम्भवः ॥१५१॥(न)**

यथा।

"अकस्मादेव तन्वङ्गी जहास यदियं पुनः।
नूनं प्रसूनबाणोऽस्यां स्वाराज्यमधितिष्ठति" ॥ (प)

अथ चकितम्।

**कुतोऽपि दयितस्याग्रे चकितं भयसम्भ्रमः॥१५२(फ)**

यथा।

"त्रस्यन्ती चलशफरीविघट्टितोरु-
र्वामोरुरतिशयमवाप विभ्रमस्य।
क्षुभ्यन्ति प्रसभमहो विनाऽपि हेतो-
र्लीलाभिः किमु सति कारणे तरुण्यः" ॥ (ब)

---

(न) हसितमाह हसितमिति। यौवनोद्भेदसम्भवः यौवनप्रकाशजः वृथा निरर्थकः हासः हसितम्।

(प) उदाहरति अकस्मादिति। इयं तन्वङ्गी कृशाङ्गी अकस्मात् विना हेतुमित्यर्थः यत् पुनः जहास हसितवती नूनं मन्ये इत्यर्थः, प्रसूनबाणः पुष्पशरः कामः अस्यां कृशाङ्ग्यां स्वाराज्यं स्वर्गराज्यवत् अधितिष्ठति।

(फ) चकितमाह कुत इति। दयितस्य प्रियस्य अग्रे कुतोऽपि अल्पादपि कारणादित्यर्थः भयसम्भ्रमः भयेन व्यग्रता चकितम्।

(ब) उदाहरति त्रस्यन्तीति। चलाभिश्चपलाभिः शफरीभिः प्रोष्ठीभिः, "प्रोष्ठी तु शफरी द्वयोः" इत्यमरः। विघट्टितौ ऊरू यस्याः सा अतएव त्रस्यन्ती त्रासं गच्छन्ती वामोरुः विभ्रमस्य विलासस्य भ्रमणविशेषस्य वा अतिशयम् अवाप प्राप्तवती, अहो आश्चर्य्यं, तरुण्यः युवत्यः हेतोः कारणात् विनापि लीलाभिः प्रसभं सहसा क्षुभ्यन्ति क्षोभं गच्छन्ति कारणे सति विद्यमाने किमु वक्तव्यमिति शेषः। प्रहर्षिणीवृत्तम्।

अथ केलि:।

विहारे सह कान्तेन क्रीड़ितं केलिरुच्यते॥१५३(भ)

यथा।

"व्यपोहितुं लोचनतो मुखानिलै-
रपारयन्तं किल पुष्पजं रज:।
पयोधरेणोरसि काचिदुन्मना:
प्रियं जघानोन्नतपीवरस्तनी" ॥ (म)

अथ मुग्धाकन्ययोरनुरागेङ्गितानि।

दृष्टा दर्शयति व्रीड़ां सम्मुखं नैव पश्यति।
प्रच्छन्नं वा भ्रमन्तं वा तिर्य्यक् त पश्यति प्रियम्।
बहुधा पृच्छ्यमानापि मन्दमन्दमधोमुखी।
सगद्गदस्वरं किञ्चित् प्रियं प्रायेण भाषते।
अन्यै: प्रवर्त्तितां शश्वत् सावधाना च तत्कथाम्।
शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी॥१५४(य)

---

(भ) केलिमाह विहारे इति। विहारे विहारकाले कान्तेन सह क्रीडित केलि उच्यते।

(म) उदाहरति व्यपोहितुमिति। काचित् उन्नतपीवरस्तनी कान्ता उन्मना उत्सुकचित्ता सती मुखानिलै वदनमरुद्भि: लोचनत स्वचक्षुष पुष्पज रज: कुतश्चित् सलग्नमिति भाव: व्यपोहितुम् अपनेतुम् अपारयन्त प्रिय कान्त पयोधरेण स्तनेन उरसि वक्षसि जघान आहतवती।

(य) दृष्टेति। बाला कन्या वा मुग्धा प्रिये अनुरागिणी सती दृष्टा प्रियेण अवलोकिता व्रीडा लज्जा दर्शयति सम्मुख प्रियस्येति शेष, न पश्यति नावलोकते, प्रच्छन्न निभृतस्थित वा भ्रमन्त त प्रिय तिर्य्यक् पश्यति। बहुधा पुन. पुन. पृच्छ्यमानापि प्रियेणेति शेष अधोमुखी सती सगद्गदस्वर मन्द मन्द

अथ सकलानामपि नायिकानामनुरागेङ्गितानि।

चिराय सविधे स्थानं प्रियस्य बहु मन्यते।
विलोचनपथञ्चास्य न गच्छत्यनलङ्कृता॥
कापि कुन्तलसंव्यानसंयमव्यपदेशतः।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम्॥
आच्छादयति वागाद्यैः प्रियस्य परिचारकान्।
विश्वसित्यस्य मित्रेषु बहुमानं करोति च॥
सखीमध्ये गुणान् ब्रूते स्वधनं प्रददाति च।
सुप्ते स्वपिति दुःखेऽस्य दुःखं धत्ते सुखे सुखम्॥
स्थिता दृष्टिपथे शश्वत् प्रिये पश्यति दूरतः।
आभाषते परिजनं सम्मुखे स्मरविक्रियम्॥

---

प्रियं प्रायेण भाषते वदति, तथा सावधाना अवहिता अन्ये प्रवर्त्तिता प्रस्तुता तस्य प्रियस्य कथा वार्त्ताम् अन्यव दत्ताची अर्पितनयना सती शश्वत् सततं शृणोति।

(२) चिरायेति। प्रियस्य सविधे समीपे स्थानम् अवस्थान बहु मन्यते, अनलङ्कृता अभूषिता सती अस्य प्रियस्य विलोकनपथ दृष्टिपथ न गच्छति। कापि कामिनी कुन्तलाना केशाना सव्यानस्य परिधानवस्त्रस्य च संयम बन्धन स एव व्यपदेश छल तस्मात् तमाश्रित्येत्यर्थ, यवर्थे पञ्चमी। बाहुमूल स्तनौ नाभिपङ्कजं स्फुट दर्शयेत्। वागाद्यै मिष्टवचनप्रयोगादिभि. प्रियस्य परिचारकान् भृत्यान् आच्छादयति वशीकरोति। अस्य प्रियस्य मित्रेषु सुहृत्सु बहुमान करोति च। सखीमध्ये गुणान् प्रियस्येति शेष. ब्रूते, स्वधन निज धन प्रददाति च प्रियायेति शेष। सुप्ते निद्रिते प्रिये इति शेष स्वपिति, अस्य स्वामिन दु.खे दु ख सुखे सुख धत्ते अनुभवति। प्रिये दूरतः दूरात् पश्यति सति शश्वत् निरन्तरम् अस्य दृष्टिपथे स्थिता तिष्ठतीत्यर्थः। सम्मुखे

यत्किञ्चिदपि संवीक्ष्य कुरुते हसितं मुधा ।
कर्णकण्डूयनं तद्वत् कवरीमोक्षसंयमौ ॥
जृम्भते स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति ।
भाले तथा वयस्याया आरभेत् तिलकक्रियाम् ॥
अङ्गुष्ठाग्रेण लिखति सकटाक्षं निरीक्षते ।
दशति स्वाधरं चापि ब्रूते प्रियमधोमुखी ॥
न मुञ्चति च तं देशं नायको यत्र दृश्यते ।
आगच्छति गृहं चास्य कार्य्यव्याजेन केनचित् ॥
दत्तं किमपि कान्तेन धृत्वाङ्गे मुहुरीक्षते ।
नित्यं हृष्यति तद्योगे वियोगे मलिना कृशा ॥
मन्यते बहु तच्छीलं तत्प्रियं मन्यते प्रियम् ।
प्रार्थयतेऽल्पमूल्यानि सुप्ता न परिवर्त्तते ॥
विकारान् सात्त्विकानस्य सम्मुखी चाधिगच्छति।

---

प्रियस्येति शेषः परिजनं स्वरविक्रियं सकामाविभ्रमम् आभाषते कथयति। यत्किञ्चित् अतिसामान्यमित्यर्थः अपि अहास्यकारणमपीत्यर्थः. संवीक्ष्य दृष्ट्वा मुधा निरर्थकं हसितं कुरुते हसतीत्यर्थः । कर्णकण्डूयनं तद्वत तथा कवरीमोक्षसंयमौ केशमोक्षबन्धने करोति। जृम्भते. अङ्गं स्फोटयति, बालकम् आश्लिष्य आलिङ्ग्य चुम्बति, तथा वयस्याया. सख्या भाले ललाटे तिलकक्रियाम् आरभेत्, अङ्गुष्ठाग्रेण वृद्धपादाङ्गुल्यग्रेण लिखति, सकटाक्षं निरीक्षते अवलोकयति, स्वाधरं निजमधरं दशति, अधोमुखी सती प्रियं ब्रूते च। यत्र नायकः प्रियः दृश्यते तं देशं स्थानं न मुञ्चति, न त्यजति, केनचित् कार्य्यव्याजेन कर्मच्छलेन अस्य कान्तस्य गृहम् आगच्छति, कान्तेन दत्तं किमपि वस्तु अङ्गे धृत्वा बहु मन्यते, तस्य प्रियस्य योगे सहवासे नित्यं सततं हृष्यति आनन्दमनुभवति,

भाषते सूनृतं स्निग्धमनुरक्ता नितम्बिनी।
एतेष्वधिकलज्जानि चेष्टितानि नवस्त्रियाः॥
मध्यव्रीडानि मध्यायाः स्रंसमानत्रपाणि तु।
अन्यस्त्रियाः प्रगल्भायास्तथा स्युर्वारयोषितः १५५(र)

दिङ्मात्रं (ल) यथा मम।

"अन्तिकगतमपि मामियमवलोकयतीव हन्त! दृष्टापि।
सरसनखक्षतलक्षितमाविष्कुरुते भुजामूलम्॥ (व)

तथा।

लेख्यप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः।
दूतीसम्प्रेषणैर्नार्या भावाभिव्यक्तिरिष्यते॥१५६॥(श)

---

वियोगे प्रियस्येति शेषः मलिना कृशा च भवतीत्यर्थः। तच्छीलं तस्य कान्तस्य चरितं प्रियञ्च बहु मन्यते। अल्पमूल्यानि प्रार्थयते याचते, सुप्ता सती न परिवर्त्तते प्रियं विमुखीकृत्य पार्श्वपरिवर्त्तनं न करोतीत्यर्थः। अस्य सम्मुखीना सम्मुखवर्त्तिनी सती सात्त्विकान् विकारान् स्तम्भस्वेदादीन् अधिगच्छति च प्राप्नोति अनुभवतीत्यर्थः। अनुरक्ता अनुरागवती सती स्निग्धं सूनृतं सत्यमधुरं भाषते। एतेषु मध्ये नवस्त्रियाः नवोढायाः चेष्टितानि कार्य्याणि, अधिका लज्जा येषु तादृशानि भवन्ति, मध्यायाः नायिकायाश्चेष्टितानीति शेषः, मध्या व्रीडा लज्जा यासु तादृशानि अल्पलज्जानीत्यर्थः, अन्यस्त्रियाः परकीयाया इत्यर्थः, प्रगल्भायाः प्रौढायाः तथा वारयोषितः साधारण्या इत्यर्थः चेष्टितानि, स्रंसमाना त्रपा लज्जा येषु तादृशानि भवन्ति।

(ल) दिङ्मात्रं किञ्चित्।

(व) अन्तिकेति। हन्त हर्षे इयं कामिनी दृष्टापि मयेति शेषः अन्तिकगतं समीपवर्त्तिनमपि माम् अवलोकयतीव, तथा सरसेन आर्द्रेण नखक्षतेन लक्षितं भुजामूलं बाहुमूलम् आविष्कुरुते प्रकटयति दर्शयति चेति यावत्।

(श) लेख्येति। लेख्यस्य प्रणयव्यञ्जकपत्रस्य प्रस्थापनैः प्रेषणैः, स्निग्धैः

दूत्यश्च ।

**दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी ।**
**बाला प्रव्रजिता कारूः शिल्पिन्याद्याः स्वयं तथा ॥१५७॥ (ष)**

कारू रजकीप्रभृतिः । शिल्पिनी चित्रकारादिस्त्री । आदिशब्दात् ताम्बूलिकगान्धिकस्त्रीप्रभृतयः । तत्र सखी यथा—

"श्वासान् मुञ्चतीत्यादि" । स्वयं दूती यथा मम ।

"पन्थिअ । पिआसिओ विअ लच्छीअसि जासि ता किमस्सत्तो ।
ण मणं वि वारओ इध अत्थि घरे घणरसं पिअंताण" ॥ (स)

एताश्च नायिकाविषये नायकानामपि दूत्यो भवन्ति ।

दूतीगुणानाह ।

**कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ।**

---

सर्वेहि वीक्षिते अवलोकिते, मृदुभाषिते तथा दूतीसम्प्रेषणे. नार्य्या कामिन्याः भावस्य प्रेम्णः अभिव्यक्तिः प्रकटनम् इष्यते ।

(ष) दूत्य इति । सखी सहचरी, नटी नर्त्तकी, दासी किङ्करी, धात्रेयी धात्रीकन्या, प्रतिवेशिनी प्रतिवेशवासिनी, बाला अप्रौढा कन्या, प्रव्रजिता सन्न्यासिनी, अन्यत् स्पष्टम् एता दूत्य. भवन्तीति शेष ।

(स) पन्थिअ इति । पान्थ ! पिपासित इव लक्ष्यसे यासि तत् किमन्यत्र । न मनागपि वारक इहास्ति घनरसं पिबताम् । इति संस्कृतम् । हे पान्थ ! पथिक । पिपासितः तृषार्त्तः इव लक्ष्यसे दृश्यसे, तत् तस्मात् किं कथम् अन्यत्र यासि गच्छसि, इह अस्मिन् स्थाने घनरसमेघपयः जलमित्यर्थः. शृङ्गाररसमिति ध्वनि. पिबता जनाना मनाक् अल्पमपि न वारकः निषेद्धा अस्ति ।

(ह) कलेति । कला. नृत्यगीतादिका., कौशल दक्षता, उत्साहः

माधुर्य्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ॥

एता अपि यथौचित्यादुत्तमाधममध्यमाः ॥१५८॥(छ)

एता दूत्य. । अथ प्रतिनायकः ।

धीरोद्धतः पापकारी व्यसनी प्रतिनायकः॥१५९॥(च)

यथा रामस्य रावणः । अथोद्दीपनविभावाः ।

ते च ।

उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ॥१६०॥ (क)

आलम्बनस्य चेष्टाद्या देशकालादयस्तथा ॥१६१॥

चेष्टाद्या इत्यादिशब्दाद्रूपभूषणादयः । कालादीत्यादिशब्दात् चन्द्रचन्दनकोकिलालापभ्रमरझङ्कारादयः । तत्र चन्द्रो यथा मम ।

"करमुदयमहीधरस्तनाग्रे

गलिततमःपटलांशुके निवेश्य ।

---

स्थैर्यान् यत्न, भक्ति प्रभावनुराग, चित्तज्ञता मनोविज्ञानं, स्मृति कर्त्तव्यार्थस्मरण, माधुर्य्य मनोहरत्व नर्मविज्ञान परिहासाभिज्ञता, वाग्मिता मधुरभाषित्वमित्यर्थ एते तस्य दूतस्य दूत्याश्च गुणा' ।

(च) धीरोद्धत इति । धीरोद्धत' मायापर इति पूर्वोक्त पापकारी पापाशय: व्यसनी मृगयाद्यष्टादशदोषाविष्ट । यदुक्त मृगयाक्षो दिवास्वप्न. परीवाद स्त्रियो मद । तौर्य्यत्रिक वृथाट्या च कामजो दशको गण. । पैशुन्यं साहस द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः । कामजेषु प्रसक्तोऽपि व्यसनेषु महीपति । वियुज्यतेऽर्थधर्माभ्या क्रोधजेष्वात्मनैव तु इति मनुवचनम् । प्रतिनायक. प्रतिकूलनायक' ।

(क) उद्दीपनेति । ये रसम् उद्दीपयन्ति उद्दिप्तं कुर्वन्ति ते उद्दीपनविभावाः । अन्यत स्पष्टम् ।

(ख) करमिति । अयं सुधांशुः चन्द्रः गलित तमसा तिमिराणा पटलमेव

विकसितकुमुदेक्षणं विचुम्ब-
त्ययममरेशदिशो मुखं सुधांशुः"॥ (ख)

यो यस्य रसस्य उद्दीपनविभावः स तत्स्वरूपवर्णने वक्ष्यते।

अथानुभावाः।

उद्बुद्धं कारणैः स्वैः स्वै-
र्बहिर्भावं प्रकाशयन्।
लोके यः कार्य्यरूपः सो-
ऽनुभावः काव्यनाट्ययोः॥१६२॥ (ग)

यः खलु लोके सीतादिचन्द्रादिभिः स्वैः स्वैः आलम्बनोद्दीपनकारणैः रामादेः अन्तः उद्बुद्धं रत्यादिकं बहिः प्रकाशयन् कार्य्यमित्युच्यते स काव्यनाट्ययोः पुनः अनुभावः। कः पुनः असौ इत्याह।

उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः।
तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि॥१६३

---

अंशुक वसनं यस्मात्, तादृशे उदयमहीधर एव स्तनः तस्य अग्रे उपरीत्यर्थः करं किरणं हस्तञ्च निवेश्य अर्पयित्वा अमरेशदिशः पूर्वदिशः अङ्गनाया इति ध्वनि विकसित कुमुदमिव ईक्षणं नयनं यस्य तादृशं मुखम् अयं वदनञ्च विचुम्बति। पुष्पिताग्रावृत्तम्, अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात्।

(ग) उद्बुद्धमिति। स्वै स्वैः निजैः निजैः कारणैः उद्बुद्धम् उत्थापितं भावं बहिः प्रकाशयन् लोके लौकिकव्यवस्थाया यः कार्य्यरूपः सः काव्यनाट्ययोः अनुभावः।

तद्रूपा अनुभावस्वरूपाः। तत्र च यो यस्य रसस्य अनुभावः स तत्स्वरूपवर्णने वक्ष्यते। तत्र सात्त्विकाः।

**विकाराः सत्त्वसम्भूताः**

**सात्त्विकाः परिकीर्त्तिताः ॥१६४॥ (घ)**

सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चन आन्तरो धर्मः। (ङ)

**सत्त्वमात्रोद्भवत्वात् ते भिन्ना अप्यनुभावतः॥१६५(च)**

गोबलीवर्दन्यायेन इति शेषः। के ते इत्याह।

**स्तम्भः स्वेदोऽथ रोमाञ्चः**

**स्वरभङ्गोऽथ वेपथुः।**

**वैवर्ण्यमश्रुप्रलय-**

**इत्यष्टौ सात्त्विकाः स्मृताः ॥१६६॥**

तत्र।

**स्तम्भश्चेष्टाप्रतीघातो भयहर्षामयादिभिः।**

---

(घ) विकारा इति। सत्त्वं रजस्तमोगुणवर्जितमनोधर्मविशेष. तस्मात् सम्भूता समुत्पन्ना विकारा. प्रकृतेरन्यथात्वरूपा धर्मा इत्यर्थः सात्त्विका परिकीर्त्तिता. उक्ता'।

(ङ) स्वात्मविश्रामेति। स्वस्य आत्मनि स्वरूपे विश्रामो यस्य सः स्वात्मविश्रामः रस इत्यर्थः तस्य प्रकाशकारी अभिव्यञ्जक इत्यर्थः आन्तरः मानसः धर्म' गुणः।

(च) सत्त्वेति। सत्त्वमात्रात् केवलात् सत्त्वात् उद्भव. येषा ते अनुभावत. अनुभावात् भिन्ना' पृथगपीत्यर्थ गोबलीवर्दन्यायेन यथा गामानयेत्युक्ते बलीवर्दस्य च गोत्वात् तदानयने निष्पन्नेऽपि बलीवर्दग्रहण तथा अनुभावरूपत्वेऽपि सात्त्विकाना विशिष्य ग्रहणमिति भावः।

वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः ॥
हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया ।
मदसंमदपीडाद्यैर्वैस्वर्य्यं गद्गदं विदुः ॥
रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः ।
विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता ॥
अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम् ।
प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः १६७[क]

यथा मम ।

"तनुस्पर्शादस्या दरमुकुलिते हन्त नयने
उदञ्चद्रोमाञ्चं व्रजति जडताभङ्गमखिलम् ।

---

(क) स्तम्भादीन् व्याकरोति स्तम्भ इति । भयेन हर्षेण आमयः व्याधि इत्यादिभि कारणै चेष्टाया प्रतीघात निश्चलीभाव इत्यर्थ । रति. सुरतक्रिया घर्मो निदाघ. श्रमः शारीरव्यापार. इत्यादिभिः कारणै वपुष. शरीरात् जलोद्गम' जलनिर्गम स्वेद । हर्ष' आनन्द' अद्भुतं चमत्कृतिः भयम् इत्यादिभ्य कारणेभ्य रोम्णा विक्रिया विकार' रोमाञ्च । मद. सुरासेवन सम्मदः सम्यक् आनन्द पीडा रोग. तत्प्रभृतिभि' हेतुभिः गद्गदम् अस्पष्टभाषण वैस्वर्य्य स्वरभङ्ग विदु । रागः अनुराग. द्वेष श्रम परिश्रम' इत्यादिभ्यः कारणेभ्य' गात्रस्य कम्प वेपथु' । विषाद' विषण्णता मद' मद्यपानजो विकारः रोष' क्रोध' तत्प्रभृतिभि कारणै' वर्णान्यत्वम् अन्यवर्णप्राप्तिः विवर्णता । क्रोध' कोप दुःख मनस क्षोभ प्रहर्ष. प्रकृष्टानन्द' एभ्य. जात नेत्रोद्भव वारि जलम् अश्रु । सुखदुःखाभ्या चेष्टायाः शारीरव्यापारस्य ज्ञानस्य च निराकृतिः अपगमः प्रलय ।

(ख) तन्विति । नायकस्य नायिकास्पर्शजनितस्य सात्त्विकभावस्य वर्णनमिदम् । अस्या. कान्ताया तनुस्पर्शात शरीरस्पर्शात् हेतो नयने नेत्रे दरमुकुलिते ईषत् मुकुलभाव प्राप्ते इत्यर्थः । अखिल समग्रम् अङ्गम् उदञ्चन्तः उद्गच्छन्तः रोमाञ्चाः यस्मात् तथाभूत सत् जडता व्रजति गच्छति । कपोलौ

कपोलौ घर्मार्द्रौ ध्रुवमुपरताशेषविषयं
मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम्" ॥ (ज)

एवमन्यत् । अथ व्यभिचारिणः ।

विशेषादाभिमुख्येन
चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्मग्ना-
स्त्रयस्त्रिंशच्च तद्भिदाः ॥ १६८ ॥ [झ]

स्थिरतया वर्त्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भाव-तिरोभावाभ्यामाभिमुख्येन चरणाद् व्यभिचारिणः कथ्यन्ते । के ते इत्याह ।

निर्वेदावेगदैन्यश्रममदजड़ता औग्र्यमोहौ विबोधः
स्वप्नापस्मारगर्वामरणमलसतामर्षनिद्रावहित्थाः ।
औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता
व्याधिसन्त्रासलज्जा-

---

गण्डदेशौ घर्मार्द्रौ स्वेदाक्तौ भवत. । किं बहुना उपरता अशेषा समग्राः विषया बाह्यव्यापारा' यस्य तादृश मन झटिति सहसा सान्द्रानन्द घना-नन्दस्वरूप परम ब्रह्म ध्रुव निश्चित स्पृशति अनुभवतीत्यर्थ. । सर्वत्र ममेति अध्याहार्य्यम् । शिखरिणीवृत्त, रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणीति तल्लक्षणात् ।

(झ) विशेषादिति । विशेषात् उत्कर्षभावात् आभिमुख्येन आनु-कूल्येन चरन्तः प्रादुर्भवन्त' 'स्थायिनि रत्यादौ उन्मग्ना' कदाचित् उद्रिक्ता निमग्ना. कदाचित् तिरोहिता ये धर्मा. ते व्यभिचारिणः तद्भिदा. तेषा भेदाः त्रयस्त्रिंशत् ।

हर्षासूयाविषादाः सधृतिचपलताग्लानिचिन्ता-
वितर्काः ॥ १६९ ॥

तत्र निर्वेदः ।

तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना । [ञ]
दैन्यचिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वसितादिकृत् १७०

तत्र तत्त्वज्ञानात् निर्वेदो यथा ।

"मृत्कुम्भवालुकारन्ध्रपिधानरचनार्थिना ।
दक्षिणावर्त्तशङ्खोऽयं हन्त ! चूर्णीकृतो मया" ॥ (ट)

आवेगः सम्भ्रमस्तत्र वर्षजे पीड़िताङ्गता ।
उत्पातजे स्रस्तताङ्गे धूमाद्याकुलताग्निजे ॥
राजविद्रवजादेस्तु शस्त्रनागादियोजनम् ।
गजादेः स्तम्भकम्पादिः पांश्वाद्याकुलताऽनिलात् ॥

---

(ञ) निर्वेदमाह तत्त्वेति । तत्त्वज्ञानात देहविषयादौ अनुपादेयत्वज्ञानात न तु जीवपरमात्मनोरभेदज्ञानात । तथा सति मोक्ष एव न तु आत्मनोऽवमाननम् । आपदः ईर्ष्यादेश्च कारणात् स्वस्मिन् अवमानना अवज्ञान निर्वेद. । अत्र आदिपदद्वयेन यथाक्रम पुराणश्रवणादीना स्वस्य च दुष्क्रियोद्भावनादीना परिग्रह ।

(ट) उदाहरति मृदिति । मृत्कुम्भस्य मृत्तिकाकलसस्य वालुकारन्ध्र तस्य पिधानम् आच्छादनं तदर्थिना मया हन्त इति खेदे अयं 'दक्षिणावर्त्तशङ्ख' चूर्णीकृत. तथा-संसारसुखार्थिना परमार्थसाधनसमर्थतया अत्युपादेय अयं देहः जरया जर्जरीकृत इति भाव: । वैराग्यवत 'दक्षिणावर्त्तशङ्खचूर्णनमयुक्तमत उपमाकल्पनेनाऽस्य निदर्शनालङ्कार: । रावणभ्रश्चा वा मोहमुपगते लक्ष्मणे श्रीरामचन्द्रस्योक्तिरियम् । तर्हि लक्ष्मण एव 'दक्षिणावर्त्तशङ्ख', चूर्णीकृत विनाशित', चूर्णाख्यद्रव्यविशेषीकृतश्च, रावणवधादिरेव मृत्कुम्भवालुकारन्ध्रपिधानम् । रूपकोपपादक: अतिशयोक्त्यलङ्कारोऽयम् । पक्षेऽस्मिन् आपदुत्थ स्वावमाननं बोध्यम् ।

इष्टाद्धर्षाः शुचोऽनिष्टाज्-
ज्ञेयाश्चान्ये यथायथम् ॥ १७१ ॥ [ ठ ]

तत्र शत्रुजो यथा ।

"अर्घ्यमर्घ्यमिति वादिनं नृप सोऽनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम्" ॥ (ड)

एवमन्यत् ऊह्यम् । अथ दैन्यम् ।

दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत् १७२[ढ

यथा ।

"वृद्धोऽन्धः पतिरेष मञ्चकगतः स्थूणावशेषं गृहं
कालोऽभ्यर्णजलागमः कुशलिनो वत्सस्य वार्त्तापि नो ।

---

( ठ ) आवेगमाह आवेग इति । सम्भ्रम. आवेग. तत्र आवेगे वर्षजे वृष्टिजाते पीडिताङ्गता सङ्कुचिताङ्गत्व भवति । उत्पातजे उत्पातात् जाते सति अङ्गे शरीरे स्रस्तता शैथिल्य भवति । अग्निजे सति धूमार्द्दिभि आकुलता भवति । राजविद्रवजादेः राजोपद्रवादिजातात् आवेगादिति शेष शस्त्रनागादि-योजन सग्रामप्रवर्त्तनमिति यावत्र भवति । गजादे आवेगे सतीति भाव' स्तम्भ-कम्पादिर्जायते इति शेष' । अनिलात् वायोरावेगे सति पांशुभि' आकुलता भवति । इष्टात् आवेगे सति हर्षा, अनिष्टात् अहितात् आवेगे जाते शुच: शोका' भवन्ति । अन्ये आवेगा यथायथ ज्ञेया वेदितव्या. ।

(ड) दिग्मात्रमुदाहरति अर्घ्यमिति । स' भार्गव. अर्घ्यम् अर्घ्यं गृहाणेति शेष. इति वादिन नृप दशरथम् अनवेक्ष्य अगणयित्वेत्यर्थ. यत' यस्मिन् प्रदेशे भरताग्रज राम' तिष्ठतीति शेष तत तत्र प्रदेशे चक्षु कोप एव दहन अग्नि तस्य अर्चिषं शिखास्वरूपाम् उदग्रतारका तीक्ष्णतारा दृश चक्षुष सन्दधे संहितवान् । उपजातिवृत्तम् ।

(ढ) दैन्यमाह दौर्गत्याद्यैरिति । दौर्गत्याद्यै दारिद्र्यादिभि' हेतुभि' मलिन-तादिकृत् अनौजस्यम् ओज. बल तेजो वा तच्छून्यत्व दैन्यम् ।

( ण ) उदाहरति वृद्ध इति । एष वृद्ध' अन्ध पति मञ्चकगत. पर्य्यङ्कशायी शय्याश्रय इत्यर्थ:, गृह स्थूणा: स्तम्भदारूणि एव अवशेषा. यस्य

यत्नात्सञ्चिततैलविन्दुघटिका भग्नेति पर्य्याकुला
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिर रोदिति"॥ (ण)

अथ श्रमः।

**खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः १७३[त]**

यथा।

"सद्यः पुरीपरिसरे च शिरोषम्टद्वी
गत्वा जवात्त्रिचतुराणि पदानि सीता।
गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम्"॥ (थ)

अथ मदः।

**सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः।
अमुना चोत्तमः शेते मध्यो हसति गायति॥
अधमप्रकृतिश्चापि परुषं वक्ति रोदिति॥१७४॥ [द]**

---

तादृशं, काल. समय' अभ्यर्णजलागम सन्निहितवृष्टि वत्सस्य विदेशगतस्य पुवस्येयम् कुशलिनी कल्याणी वार्त्तापि नो प्राप्नोति शेष, यत्नात् सञ्चित-तैलविन्दुघटिका भग्ना इति हेतो पर्य्याकुला श्वश्रू गर्भभरालसा पूर्णगर्भामिति यावत् निजवधू दृष्ट्वा चिर रोदिति। शार्दूलविक्रीडित वृत्तम्।

(त) श्रममाह खेद इति। रत्यध्वगत्यादे. सुरताध्वश्रमादिभिर्हेतुभि. श्वासस्य निद्रादेश्च कारक खेद' अवसादः श्रमः।

(थ) उदाहरति सद्य इति। शिरीषम्टद्वी शिरीषकुसुमसुकुमारा सीता पुरीपरिसरे अयोध्यां परित इत्यर्थः जवात् वेगात् त्रिचतुराणि पदानि गत्वा सद्य तत्क्षण कियत् गन्तव्यमस्ति इति असकृत् पुन पुन ब्रुवाणा सती रामा-श्रुण रामस्य नयनजलस्य प्रथमावतारं पूर्वाविष्कारण कृतवती। सीतया सह रामस्य वनगमनारम्भवर्णनमिदम्। वसन्ततिलक वृत्तम्।

(द) मदमाह सम्मोहेति। मद्यस्य उपयोगः पान तस्मात् जात' सम्मोहानन्दयो. सम्भेदः सम्मेलन मदः। अमुना मदेन उत्तमः साधुशीलो जनः

यथा ।

"प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः ।
गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः" ॥ध॥

**अप्रतिपत्तिर्जड़ता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र१७५[न]**

यथा मम कुवलयाश्वचरिते प्राकृतकाव्ये ।

णवरिअ तं जुअजुअलं अस्रोस्रणिहिदसजलमंथरदिट्ठिम् ।
आलेक्खआप्पिदं विअ खणमेत्तं तत्थ ठिअं मुत्तसङ्गं" ॥ (प)

अथ उग्रता ।

**शौर्य्यापराधादिभवं भवेच्चण्डत्वमुग्रता ।
तत्र स्वेदः शिरःकम्पतर्जनाताड़नादयः ॥१७६॥ (फ)**

---

शते। मध्य मध्यविधो लोक. हसति गायति च। अधमप्रकृति' नीचस्वभावी जन परुष कर्कश वक्ति रोदिति च।

(ध) उदाहरति प्रातिभमिति। त्रिसरकेण त्रिवारमधुपानेन प्रातिभ प्रागल्भ्य गताना सुभ्रु वा रमणीना वक्र' वाक्य तस्य रचनया रमणीय मनोहर, गूढेन सूचितेन प्रकाशितेन रहस्येन गुह्यविषयेण सहास हासपूर्ण परिहास. प्रववृते। उपजातिवृत्तम्।

(न) जडतामाह अप्रतिपत्तिरिति। इष्टानिष्टयी प्रियाप्रिययोर्दर्शनश्रुतिभि अप्रतिपत्ति कर्त्तव्यविमूढता जडता स्यात्, अत्र जडतायाम् अनिमिषेण विनिंमेषेण नयनेन निरीक्षण तूष्णीम्भाव. मौनित्व तत्प्रभृतय भवन्तीति शेष.।

(प) उदाहरति णवरिअ इति। केवल तद युवयुगलमन्योऽन्यनिहितसजलमन्थरदृष्टि। आलिख्यार्पितमिव चणमात्र तत्र स्थित मुक्तसङ्गमिति संस्कृतम्। तत् युवयुगलम् अन्योऽन्यस्मिन् निहिता अर्पिता सजला अश्रुपूर्णा मन्थरा जडा दृष्टि. येन तादृशम् अतएव आलिख्यार्पितमिव मुक्तसङ्गम् आसङ्गरहित सत् तत्र चणमात्र स्थितम्।

(फ) उग्रतामाह शौर्य्येति। शौर्य्यं बलशालित्वम् अपराध अन्यकृताभिभवः

यथा।

"प्रणयिसखीसलीलपरिहासरसाधिगतैः
ललितशिरीषपुष्पहननैरपि ताम्यति यत्।
वपुषि बधाय तत्र तव शस्त्रमुपक्षिपतः।
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः॥ (ब)

अथ मोहः।

**मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः।**
**घूर्णनागात्रपतनभ्रमणादर्शनादिकृत्॥ १७७॥(भ)**

यथा।

"तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्तृव्यसना मुहूर्त्तं कृतोपकारेव रतिर्बभूव"॥ (म)

---

एवमादिश्च भवतीति तथोक्तः चण्डत्वं प्रचण्डत्वं तीक्ष्णत्वमित्यर्थः, उग्रता स्यात्, तत्र उग्रतायां स्वेदः, शिरःकम्पः तर्जना ताडनादयश्च भवन्ति।

(ब) उदाहरति प्रणयीति। प्रणयिनी या सखी सहचरी तस्याः सलीलं सविलासं यः परिहासः तस्य रसेन आवेशेन अधिगतानि प्राप्तानि तैः ललितैः सुन्दरैः शिरीषपुष्पैः, यानि हननानि प्रहाराः तैः, यत् वपुः ताम्यति क्लिश्यतीत्यर्थः, तत्र वपुषि शरीरे शस्त्रम् असिम् उपक्षिपतः चालयतः तव शिरसि एषः अकाण्डयमदण्डः इव भुजः पततु। नर्दटकं वृत्तं, यदि भवतो नजौ भजजलाः गुरुनर्दटकमिति तल्लक्षणात्।

(भ) मोहमाह मोह इति। भीतिः भयं, दुःखावेगः दुःखापातः तयोः अनुचिन्तनैः हेतुभिः घूर्णना गात्रपतनं, भ्रमणम्, अदर्शनम् इत्यादिकृत् इत्यादिहेतुभूता या विचित्तता विचेतनत्वं मोहः।

(म) उदाहरति तीव्रेति। रतिः कामपत्नी तीव्रः तीक्ष्णः दुःसहः इति यावत् यः अभिषङ्गः पराभवः, "अभिषङ्गः पराभवे" इत्यमरः। तत्प्रभवेण इन्द्रियाणां वृत्तिं संस्तम्भयता निरुन्धता मोहेन अज्ञातं भर्तुः व्यसनं वियोगः यया तथाभूता सती मुहूर्त्तं कृतोपकारा प्राप्तोपकारा बभूव। उपजाति वृत्तम्।

अथ विबोधः।

निद्रापगमहेतुभ्यो विबोधश्चेतनागमः।

जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत्॥१७८॥ (य)

यथा।

"चिररतिपरिखेदात् प्राप्तनिद्रासुखानां

चरममपि शयित्वा पूर्वमेव प्रबुद्धाः।

अपरिचलितगात्राः कुर्वते न प्रियाणाम्

अशिथिलभुजचक्राश्लेषभेदं तरुण्यः"॥ (र)

स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः।

कोपावेगभयग्लानिसुखदुःखादिकारकः॥१७९॥(ल)

यथा।

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-

र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेन।

पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां

मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति॥ (व)

---

(य) विबोधमाह निद्रेति। निद्रायाः अपगमः नाशः तस्य हेतुभ्यः जृम्भा अङ्गभङ्गः नयनमीलनम् अङ्गावलोकः शरीरदर्शनं करोति जनयतीति तथोक्तः. चेतनाया आगमः उपस्थितिः विबोधः।

(र) उदाहरति चिरेति। प्रभातवर्णनमिदम्। तरुण्यः युवत्यः चिर-रति बहुक्षणकृतः सुरतप्रसङ्गः तया यः परिखेदः परिश्रमः तस्मात् हेतोः प्राप्तं निद्रासुखं यैः तेषां प्रियाणां चरमं पश्चादपि शयित्वा निद्रायाः पूर्वमेव पति-प्रबोधात् प्राक् इत्यर्थः, प्रबुद्धाः जागरिता अपि अपरिचलितं निश्चलं पतिनिद्रा-भङ्गभयादिति भावः गात्रं यासां तथाविधाः सत्यः, अशिथिलः गाढः यः भुजचक्रेण परस्परभुजवलयेन आश्लेषः तस्य भेदं विश्लेषं विस्रंसनं न कुर्वते। मालिनीवृत्तम्।

(ल) स्वप्नमाह स्वप्न इति। निद्राम् उपेतस्य गतस्य यः विषयानुभवः स स्वप्नः, तत्र कोपः, आवेगः, भयं, ग्लानिः, सुखं, दुःखञ्च भवति।

(व) उदाहरति मामिति। मया कथमपि अतिकष्टेन स्वप्नलब्धायास्ते

अथ अपस्मारः ।

**मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः ।**
**भूपातकम्पप्रस्वेदफेनलालादिकारकः ॥१८०॥ (अ)**

यथा ।

"आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के" ॥ (ब)

अथ गर्वः ।

**गर्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः ।**
**अवज्ञासविलासाङ्गदर्शनाविनयादिकृत्॥१८१॥(स)**

यथा ।

"धृतायुधो यावदहं तावदन्यैः किमायुधैः ?

---

तव निर्दयाश्लेषहेतोः गाढालिङ्गनार्थम् आकाशप्रणिहितभुजं मां पश्यन्तीनां स्थलीदेवतानां वनदेवतानां मुक्तास्थूलाः अश्रुबिन्दवः तरुकिसलयेषु बहुशः पुनः पुनः न खलु पतन्ति इति न अपि तु पतन्त्येव मां दृष्ट्वा वनदेवता अपि रुदन्तीति भावः । मन्दाक्रान्तावृत्तम् ।

(अ) अपस्मारमाह मन इति । ग्रहादीनाम् आवेशनादिना आक्रमणादिना जनितः मनसः चित्तस्य क्षेपः विकृतिः अपस्मारः, तत्र भुवि पतनं कम्पः प्रकृष्टः स्वेदः फेनलालादीनामुद्गमश्च भवति ।

(ब) उदाहरति आश्लिष्टेति । असौ कृष्णः, आश्लिष्टा आलिङ्गिता भूमिर्येन तथोक्तम्, एतेन भूपात उक्तः । उच्चैः रसितारं शब्दं कुर्वन्तं, लोलन्तः आस्फोटयन्तः भुजाकाराः भुजसदृशाः बृहन्तः महान्तः तरङ्गाः यस्य तादृशं, फेनायमानं फेनमुद्वमन्तम्, आपगानां नदीनां पतिं समुद्रम् अपस्मारिणम् अपस्माररोगग्रस्तम् आशशङ्के तर्कितवान् ।

(स) गर्वमाह गर्व इति । प्रभावेण श्रिया विद्यया तथा सत्कुलतादिभिश्च जातः मदः अहङ्कारः गर्वः, तत्र अवज्ञा लोकान् प्रति हेयत्वबुद्धिः सविलासं सभङ्गि अङ्गदर्शनं, शरीरप्रदर्शनं, तथा अविनयादिः अशिष्टव्यवहारादिर्भवति ।

यद्वा न सिद्धमस्त्रेण मम तत् केन साध्यताम् ?" ॥ (ङ)

अथ मरणम्।

**शराद्यैर्मरणं जीवत्यागोऽङ्गपतनादिकृत् १८२ (च)**

यथा।

"राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा" ॥ (क)

अथ आलस्यम्।

**आलस्यं श्रमगर्भाद्यै-**
**र्जाड्यं जृम्भासितादिकृत् ॥ १८३ ॥ (ख)**

यथा।

"न तथा भूषयत्यङ्गं न तथा भाषते सखीम्।
जृम्भते मुहुरासीना बाला गर्भभरालसा" ॥ (ग)

---

(ङ) उदाहरति धृतायुध इति। अश्वत्थाम्न उक्तिरियम्। यावदहं धृतायुधः शस्त्रधारी भवामीति शेषः, तावत् अन्यैः धनुर्धैः शस्त्रैः किम्? विफलमन्येषामस्त्रधारणमिति भावः। मम अस्त्रेण यत् कार्य्यं न सिद्धं न निष्पन्नं तत् कार्य्यं केन साध्यताम्? वदेति शेषः।

(च) मरणमाह शराद्यैरिति। शराद्यैः अस्त्रप्रहाराद्यैः जीवस्य जीवनस्य त्यागः मरणं, तत्र अङ्गपतनादि भवति।

(क) उदाहरति रामेति। निशाचरी ताडका दुःसहेन सोढुमशक्येन, राम एव मन्मथः कामः तस्य शरेण हृदये वक्षसि ताडिता आहता अतएव गन्धवता रुधिरेण चन्दनेनेव उक्षिता सिक्ता सती जीवितेशस्य यमस्य कान्तस्य च वसतिम् आलयं जगाम। यथा कामशरार्त्ता कामिनी चन्दनलिप्ताङ्गी सती कान्तागारं व्रजति तद्वदिति ध्वनिः। इन्द्रवज्रावृत्तम्।

(ख) आलस्यमाह आलस्यमिति। श्रमेण गर्भादिना वा शरीरस्य जाड्यं चलनाद्यसमर्थत्वमित्यर्थः आलस्यं, तत्र जृम्भा उपवेशनादिकं भवति।

अथ अमर्षः।

निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता।
नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्जनादिकृत्॥१८४॥(घ)

यथा।

"प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात।
न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम्"॥ (ङ)

अथ निद्रा।

चेतःसम्मीलनं निद्रा श्रमक्लममदादिजम्।
जृम्भाक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम्॥१८५॥(च)

---

(ग) उदाहरति नेति। बाला कामिनी गर्भभरेण अलसा मन्थरा सती अङ्ग तथा पूर्ववदित्यर्थः न भूषयति नालङ्करोति तथा सखीं न आभाषते नालपति, केवलम् आसीना उपविष्टा सती मुहुः पुनः पुनः जृम्भते आलस्यं व्यनक्तीत्यर्थः।

(घ) अमर्षमाह निन्देति। निन्दा आक्षेपः तिरस्कारः अपमानः अवज्ञा इत्यादिहेतोः अभिनिविष्टता वैरनिर्यातनाभिनिवेशः अमर्षः, तत्र नेत्ररागः चक्षुषो रक्तत्वं, शिरःकम्पः, भ्रूभङ्गः, तथा उत्तर्जनादि भवति।

(ङ) उदाहरति प्रायश्चित्तमिति। पूज्यानां वः युष्माकं व्यतिक्रमात् आज्ञाभङ्गात् प्रायश्चित्तं पापशोधनानुकूलं कर्म चरिष्यामि, येन पूज्यपूजाव्यतिक्रमजं पापं नश्येदिति भावः, तु किन्तु शस्त्रग्रहः शस्त्रधारणमेव महाव्रतं न दूषयिष्यामि। भवद्भिः पूज्यैः शस्त्रग्रहणं मम निषिध्यते, अहन्तु भवतां तद्वाक्यमगणयित्वैव पश्चात् प्रायश्चित्तं करिष्यामि अधुना तु शस्त्रग्रहणेन शत्रून् घातयिष्यामीति परशुरामोक्तिः।

(च) निद्रामाह चेत इति। श्रमेण क्लमेन क्लान्त्या मदादिना च जनितं चेतसः चित्तस्य सम्मीलनं मुकुलीभावः इत्यर्थः, निद्रा, तत्र जृम्भा, अक्षिमीलनम्, उच्छ्वासः, तथा गात्रभङ्गादिश्च भवति।

यथा ।

"सार्थकानर्थकपदं ब्रुवती मन्थराक्षरम् ।
निद्रार्द्धमीलिताक्षी सा लिखितेवास्ति मे हृदि" ॥ (छ)

अथ अवहित्था ।

भयगौरवलज्जादे-
र्हर्षाद्याकारगुप्तिरवहित्था ।
व्यापारान्तरसक्त्य-
न्यथावभाषणविलोकनादिकरी ॥१८६॥ (ज)

यथा ।

"एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती" ॥ (झ)

अथ औत्सुक्यम् ।

इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।

---

(छ) उदाहरति सार्थेति। सखायं प्रति कस्यचिन्नायकस्य उक्तिः। सा आक्रान्ता निद्रया अर्द्धमीलिते अक्षिणी यस्याः तथाभूता अतएव सार्थकानि अर्थयुक्तानि अनर्थकानि च पदानि यस्मिन् तत् तथा मन्थराणि अक्षराणि यस्मिन् तत् यथा तथा ब्रुवती मे मम हृदि लिखितेव चित्रितेव अस्ति।

(ज) अवहित्थामाह भयेति। भयात्, गौरवात्, लज्जादेश्च हेतोः हर्षादीनाम् आकाराणां गुप्तिः गोपनम् अवहित्था, तत्र व्यापारान्तरे कार्य्यान्तरे सक्तिः आसक्तिः अन्यथा अवभाषणम् अन्यथा विलोकनादिकञ्च भवति।

(झ) उदाहरति एवमिति। देवर्षौ नारदे एवं वादिनि सति पितुः हिमाद्रेः पार्श्वे स्थिता पार्वती अधोमुखी अवनतवदना सती लीलाकमलपत्राणि क्रीडापद्मपत्राणि गणयामास।

(ञ) औत्सुक्यमाह इष्टेति। इष्टस्य प्रियस्य अनवाप्तेः अप्राप्तेः हेतोः

चित्ततापत्वरास्वेददीर्घनिःश्वसितादिकृत् १८७ (ञ)

यथा।

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढ़ाः कदम्बानिलाः।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते"॥ (ट)

अत्र यत्काव्यप्रकाशकारेण रसस्य प्राधान्यमित्युक्तं तत् रसनधर्मयोगित्वाद् व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन गतार्थं (ठ) मन्तव्यम्।

अथ उन्मादः।

चित्तसम्मोह उन्मादः कामशोकभयादिभिः।
अस्थानहासरुदितगीतप्रलपनादिकृत्॥१८८॥(ड)

यथा।

"भ्रातर्द्विरेफ! भवता भ्रमता समन्तात्
प्राणाधिका प्रियतमा मम वीक्षिता किम्?"।

---

कालक्षेपस्य कालविलम्बस्य असहिष्णुता औत्सुक्यं, तत्र चित्तस्य मनसः तापः त्वरा स्वेदः दीर्घनिश्वासादिकं भवति।

(ट) उदाहरति य इति। व्याख्यातं काव्यनिरूपणप्रस्तावे। १२ पृष्ठायां द्रष्टव्यम्।

(ठ) रसनधर्मयोगित्वादिति। रसनं स्वदनमेव धर्मः तद्योगित्वात् तद्धर्मवत्त्वात् व्यभिचारिभावस्य औत्सुक्यस्य गतार्थं कृतार्थम्।

(ड) उन्मादमाह चित्तेति। कामशोकभयादिभिः हेतुभिः चित्तस्य सम्मोहः उन्मादः, तत्र अस्थाने हासः रुदितं गीतं प्रलपनं प्रलापः इत्यादिकं भवति।

(ढ) उदाहरति भ्रातरिति। हे भ्रातः द्विरेफ! भ्रमर! समन्तात्

भृङ्गारमनुभूय सानन्दम् ।

"ब्रूषे किमोमिति ? सखे ! कथयाशु तन्मे
किं किं व्यवस्यति ? कुतोऽस्ति च कीदृशीयम्" ? ॥ (ढ)

अथ शङ्का ।

**परक्रौर्य्यात्मदोषाद्यैः शङ्कानर्थस्य तर्कणम् ।**
**वैवर्ण्यकम्पवैस्वर्य्यपार्श्वालोकास्यशोषकृत् ॥१८८(ण)**

यथा मम ।

"प्राणेशेन प्रहितनखरेष्वङ्गकेषु क्षपान्ते
जातातङ्का रचयति चिरं चन्दनालेपनानि ।
धत्ते लाक्षामसकृदधरे दत्तदन्तावघाते
क्षामाङ्गीयं चकितमभितश्चक्षुषी विक्षिपन्ती" ॥ (त)

अथ स्मृतिः ।

**सदृशज्ञानचिन्ताद्यैर्भ्रूसमुन्नमनादिकृत् ।**

---

चतुर्दिक्षु भ्रमता भवता मम प्राणाधिका प्रियतमा किं वीक्षिता दृष्टा ? हे सखे ! ओम् इति किं ब्रूषे ? तत् तर्हि आशु शीघ्रं मे मह्यं कथय ब्रूहि इयं किं किं व्यवस्यति करोति कुतः कुत्र अस्ति कीदृशी च वर्त्तते इति । वसन्ततिलकं वृत्तम् ।

(ण) शङ्कामाह परेति । परस्य क्रौर्य्यं क्रूरता तथा आत्मनः दोषः तदेवमादिभिः अनर्थस्य तर्कणं शङ्का, तत्र वैवर्ण्यं कम्पः, वैस्वर्य्यं स्वरभङ्गः पार्श्वालोकः पार्श्वावलोकनम् आस्यस्य मुखस्य शोषश्च भवति ।

(त) उदाहरति प्राणेशेनेति । इयं क्षामाङ्गी कृशाङ्गी क्षपान्ते रात्र्यवसाने प्राणेशेन कान्तेन प्रहितनखरेषु दत्तनखविलेखनेषु अङ्गकेषु जातातङ्का सती चिरं चन्दनालेपनानि रचयति, दत्तदन्तावघाते अधरे अभितः सर्वतः चक्षुषी विक्षिपन्ती सती असकृत् पुनः पुनः लाक्षां धत्ते अर्पयति । मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधि रसनगैर्मो भनौ तौ गयुग्मम् इति तल्लक्षणात् ।

स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते ॥१८०॥ (थ)

यथा मम

"मयि सकपटं किञ्चित् क्वापि प्रणीतविलोचने
किमपि नयनं प्राप्ते तिर्य्यग्विजृम्भिततारकम् ।
स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं
कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननम्" ॥ (द)

अथ मतिः ।

नीतिमार्गानुसृत्यादे-
रर्थनिर्द्धारणं मतिः ।
स्मेरता धृतिसन्तोषौ
बहुमानश्च तद्भवाः ॥ १८१ ॥ (ध)

यथा ।

"असंशयं क्षत्रपरिग्रहक्षमा यदार्य्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" ॥ (न)

---

(थ) स्मृतिमाह स्मृतिरिति । सदृशज्ञानेन चिन्ताभिश्च पूर्वानुभूतस्य विषयस्य वस्तुनः ज्ञानं स्मृति उच्यते, तत्र सुखी समुन्नमनादिकं भवति ।

(द) उदाहरति मयीति । प्रोषितस्य नायकस्य सखायं प्रत्युक्तिः । मयि सकपटं क्वापि कुत्रापि कामिनीजने इति भावः किञ्चित् ईषत् प्रणीतविलोचने निक्षिप्तनयने किमपि नयन प्राप्ते दृष्टिपथं गते सति तिर्य्यक् विजृम्भिता तारका यस्य तादृशं तथा स्मितं सहास्यं यथा तथा उपगताम् उपस्थिता सखीं दृष्ट्वा सलज्जम् अवाञ्चितम् अवनमितं कुवलयदृशः नीलोत्पलाक्ष्याः स्मेरं तत् आननं स्मरामि ।

(ध) मतिमाह नीतीति । नीतिमार्गः नीतिशास्त्रं तस्य अनुसृत्यादेः अनुसरणादेः हेतोः अर्थानां कार्य्याणां निर्द्धारणं निर्णयः मतिः तत्र स्मेरता धृतिः सन्तोषः बहुमानश्च भवति ।

(न) उदाहरति असंशयमिति । इयं शकुन्तला असंशयं निश्चितं क्षत्रस्य

अथ व्याधिः।

**व्याधिर्ज्वरादिर्वाताद्यै-**

**र्भूमीच्छोत्कम्पनादिकृत् ॥ १९२ ॥ (प)**

तत्र दाहमयत्वे भूमीच्छादयः। शैत्यमयत्वे उत्कम्पनादयः। स्पष्टमुदाहरणम्।

अथ त्रासः।

**निर्घातविद्युदुल्काद्यैस्त्रासः कम्पादिकारकः१९३(फ)**

यथा।

"परिस्फुरन्मीनविघट्टितोरवः
सुराङ्गनास्त्रासविलोलदृष्टयः।
उपाययुः कम्पितपाणिपल्लवाः
सखीजनस्यापि विलोकनीयताम्" ॥ (ब)

---

क्षत्रियजातेः परिग्रहे क्षमा योग्या, यत् यस्मात् आर्य्यं साधु मे मम मनः अस्याम् अभिलाषि समुत्सुकं, हि यत सन्देहपदेषु सन्दिग्धेषु वस्तुषु सतां साधूनाम् अन्तःकरणप्रवृत्तयः आन्तराणि तत्त्वानि प्रमाणं। साधुमनसा यत् काम्यते तदवश्यमेव कामयितव्यं नात्र वैफल्यसम्भव इति भावः। वंशस्थविलं वृत्तम्।

(प) व्याधिमाह व्याधिरिति। वाताद्यैः वायुपित्तकफादिप्रकोपैरित्यर्थः ज्वरादिः व्याधिः, तत्र भूमीच्छा भूपतनेच्छा उत्कम्पनादिकञ्च भवति।

(फ) त्रासमाह निर्घातेति। निर्घातः, यदन्तरीक्षे बलवान् मारुतो मरुताहतः। पतत्यधः स निर्घातो जायते वायुसम्भवः॥ इत्येवरूपः सुदारुणः शब्दविशेषः, विद्युत् तथा उल्का एवमादिभिः हेतुभिः कम्पादिकारकः त्रासः भयं भवति।

(ब) उदाहरति परिस्फुरदिति। जलक्रीडावर्णनमिदम्। सुराङ्गनाः अप्सरसः परिस्फुरद्भिः परितः सञ्चरद्भिः मीनैः मत्स्यैः विघट्टिताः ऊरवः यासां ताः अतएव त्रासेन विलोलाश्चञ्चलाः दृष्टयः यासां तथाभूताः तथा कम्पिताः

अथ व्रीड़ा।

**धार्ष्ट्याभावो व्रीड़ा**

**वदनानमनादिकृद् दुराचारात् ॥१६४॥ (भ)**

यथा।

"मयि सकपटमित्यादि"।

अथ हर्षः।

**हर्षस्त्विष्टावाप्तेर्मनः-**

**प्रसादोऽश्रुगद्गदादिकरः ॥१६५॥ (म)**

यथा।

"समीक्ष्य पुत्रस्य चिरात् पिता मुखं
निधानकुम्भस्य यथैव दुर्गतः।
मुदा शरीरे प्रबभूव नात्मनः
पयोधिरिन्दूदयमूर्च्छितो यथा" ॥ (य)

---

शाखिपल्लवा. यासां तथोक्ताः सत्यं सखीजनस्यापि किं पुनर्विलासिनामित्यपि-शब्दार्थः। त्रिलोकनीयता दर्शनीयताम् आययुः आपुः। वंशस्थविलं वृत्तम्।

(भ) व्रीडामाह धार्ष्ट्याभाव इति। दुराचारात् दुर्व्यवहारात् वदनस्य आनमनादिकारी धार्ष्ट्याभावः अधृष्टता अप्रागल्भ्यं कुण्ठितता इत्यर्थः व्रीडा लज्जा।

(म) हर्षमाह हर्ष इति। इष्टस्य प्रियस्य वस्तुनः अवाप्तेः लाभात् अश्रु नेत्रजलं गद्गदमस्पष्टभाषणं तत्करः मनसः चित्तस्य प्रसादः प्रसन्नता हर्षः।

(य) उदाहरति समीक्ष्येति। दुर्गतः दरिद्रः निधानकुम्भस्य निधिगर्भकलसस्य यथा पिता दिलीपः चिरात् पुत्रस्य मुखं निरीक्ष्यैव इन्दूदयेन चन्द्रोदयेन मूर्च्छितः वृद्धिङ्गतः पयोधिः समुद्र इव मुदा हर्षेण आत्मनः स्वस्य शरीरे न प्रबभूव अपरिमितहर्षवानासीदित्यर्थः। वंशस्थविलं वृत्तम्।

अथ असूया।

असूयान्यगुणर्द्धीना-
मौद्धत्यादसहिष्णुता।
दोषोद्घोषभ्रूविभेदा-
वज्ञाक्रोधेङ्गितादिकृत् ॥१९६॥ (र)

यथा।

"अथ तत्र पाण्डुतनयेन
सदसि विहितं मधुद्विषः।
मानममृष्यत न चेदिपतिः
परवृद्धिमत्सरि मनो हि मानिनाम्" ॥ (ल)

अथ विषादः।

उपायाभावजन्मा तु
विषादः सत्त्वसंक्षयः।

---

(र) असूयामाह असूयेति। औद्धत्यात् उद्धतस्वभावत्वात् अन्येषां गुणस्य ऋद्धीनां सम्पदाम् असहिष्णुता असूया, तत्र दोषाणाम् अपरनिष्ठानाम् उद्घोषः उत्कीर्त्तनं भ्रूविभेदः भ्रूभङ्गः अवज्ञा क्रोधः इङ्गितादिकञ्च क्रियते।

(ल) उदाहरति अथेति। अथ अनन्तरं तत्र सदसि सभायां चेदिपतिः शिशुपालः पाण्डुतनयेन युधिष्ठिरेण विहितं कृतं वर्द्धितमित्यर्थः, मधुद्विषः कृष्णस्य मानं सम्मानं न अमृष्यत। हि तथाहि मानिनां मानवतां मनः परेषां वृद्धौ अभ्युदये मत्सरि विद्वेषि भवति। उद्गतावृत्तं, प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम्। यद्यथ भनजलगाः स्युरथो सजसा जगौ च भवतीयमुद्गतेति तल्लक्षणात्।

(व) विषादमाह उपायेति। उपायानामभावात् जन्म यस्य तादृशः

निःश्वासोच्छ्वासहृत्ताप-

सहायान्वेषणादिकृत् ॥१९७॥ (व)

यथा मम ।

"एषा कुडिलघणेण

चिउर कडापेण तुह णिबद्धा वेणी ।

मह सहि ! दारइ दंसइ

आअसजट्ठिव्व कालउरइव्व हिअअं" ॥ (श)

अथ धृतिः ।

ज्ञानाभीष्टागमाद्यैस्तु सम्पूर्णस्पृहता धृतिः ।

सौहित्यवचनोल्लाससहासप्रतिभादिकृत् ॥१९८॥(ष)

यथा मम ।

ज्ञात्वा दीननिपीडनां निजजने बद्धा वचोविग्रहं

नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः ।

---

सत्त्वसंचय, उत्साहह्रासः विषादः, तत्र निःश्वासः उच्छ्वासः हृत्तापः सहायान्वेषणादिकञ्च भवति ।

(श) उदाहरति एषा इति । एषा कुटिलघनेन चिकुरकलापेन तव निबद्धा वेणी । मम सखि ! दारयति दशत्यायसयष्टिरिव कालोरगीव हृदयम् ॥ इति संस्कृतम् । हे सखि ! एषा तव वेणी कुटिलघनेन कुञ्चितनिविडेन चिकुरकलापेन कुन्तलसमूहेन निबद्धा आयसयष्टिरिव लौहदण्ड इव असिरिव वा मम हृदयं दारयति खण्डयति तथा कालोरगीव कृष्णसर्पीव मम हृदयं दशति ।

(ष) धृतिमाह ज्ञानेति । ज्ञानस्य तथा अभीष्टस्य आगमः एवमादिभिः हेतुभिः सम्पूर्णस्पृहता पूर्णकामत्वं धृतिः, तत्र सौहित्यं तृप्तिः, वचनानामुल्लासः, सहासा प्रतिभा एवं मिश्च भवति ।

द्रव्यौघाः परिसञ्चिताः खलु मया यस्याः कृते साम्प्रतं
नीवाराञ्जलिनापि केवलमहो ! सेयं कृतार्था तनुः" ॥ (स)

अथ चपलता ।

**मात्सर्य्यद्वेषरागादेश्चापल्यं त्वनवस्थितिः ।**
**तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ॥१९९॥ (ह)**

यथा ।

"अन्यासु तावदुपमर्दसहासु भृङ्ग !
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमालिकायाः ?" ॥ (च)

---

(स) उदाहरति कृतेति । दीनानां दरिद्राणां प्रजानामिति भावः निपीडनाम् उत्पीडनमित्यर्थः कृत्वा निजजने बन्धुजने वचसा विग्रहं कलहं बद्धा कृत्वेत्यर्थः चिरात् बहुकालिकीरित्यर्थः गरीयसीः अतिमहतीः आमुष्मिकीः पारलौकिकीः यातनाः नारकीयाः अमीति भावः, नैव आलोच्य अगणयित्वा इत्यर्थः यस्याः तन्वाः कृते निमित्तं मया द्रव्यौघाः धनराशयः परिसञ्चिताः सङ्गृहीताः खलु साम्प्रतं सा इयं तनुः शरीरं केवलं नीवाराञ्जलिना एकाञ्जलि-मितेन नीवारधान्येन अपि कृतार्था पुष्यते इति भावः अहो आश्चर्य्यम् । पूर्वं संसारा-र्थम् अज्ञानतः बहूनि पापानि कृत्वा पश्चात् चरमे वयसि ज्ञानवता सर्वं परित्यज्य अरण्यवासिना उक्तमिदम् । शार्दूलविक्रीडितं वृत्तम् ।

(ह) चपलतामाह मात्सर्य्येति । मात्सर्य्यात् द्वेषात् रागादेः अनुरागादेश्च हेतोः अनवस्थितिः एकत्रानवस्थानं चापल्यं, तत्र भर्त्सनं, पारुष्यं, तथा स्वच्छन्द-चारित्वं भवति ।

(च) उदाहरति अन्यास्विति । हे भृङ्ग । अन्यासु उपमर्दसहासु सम्भोगक्षमासु सुमनोलतासु कुसुमवल्लीषु लोलं चपलं मनः तावत् विनोदय प्रीणय । नवमालिकायाः मुग्धाम् अभिनवाम् अजातरजसम् अनुद्गतपरागाम् अजातार्त्तवामिति ध्वनिः कलिकां कोरकं, "कलिका कोरकः पुमान्" इत्यमरः ।

अथ ग्लानिः।

रत्यायासमनस्ताप-

क्षुत्पिपासादिसम्भवा।

ग्लानिर्निष्प्राणताकम्प-

कार्श्यानुत्साहतादिकृत् ॥२००॥ (क)

यथा।

"किसलयमिव मुग्धं बन्धनाद्विप्रलूनं

हृदयकुसुमशोषी दारुणो दीर्घशोकः।

ग्लपयति परिपाण्डु क्षाममस्याः शरीरं

शरदिज इव घर्मः केतकीपत्रगर्भम्" ॥ (ख)

अथ चिन्ता।

ध्यानं चिन्ता हितानाप्तेः

शून्यताश्वासतापकृत् ॥२०१॥ (ग)

---

अकाले असमये किं कथं व्यर्थं निरर्थकं कदर्थयसि क्लेशयसि? वसन्ततिलकं वृत्तम्।

(क) ग्लानिमाह रत्यायासेति। रत्यायासेन सुरतपरिश्रमेण मनस्तापेन क्षुधा पिपासादिना च समुद्भूता निष्प्राणता असामर्थ्यमित्यर्थः ग्लानिः, तत्र कम्पः कार्श्यम् अनुत्साहतादिकञ्च स्यात्।

(ख) उदाहरति किसलयमिवेति। शरदिजः शरत्कालीनः घर्मः निदाघः केतकीपत्रगर्भमिव केतकीकुसुमोदरमिव हृदयमेव कुसुमं शोषयतीति तथोक्तः दारुणः तीव्रः दीर्घशोकः महाशोकः बन्धनात् वृन्तात् विप्रलूनं छिन्नं मुग्धं नवं किसलयं पल्लवमिव अस्याः सीतायाः परिपाण्डु परितः पाण्डुवर्णं क्षामं कृशं शरीरं ग्लपयति ग्लानिं नयति।

(ग) चिन्तामाह ध्यानमिति। हितस्य मनोरथस्य अलाभात् शून्यताश्वासतापानां कारणं ध्यानं चिन्ता।

यथा मम।

"कमलेन विहसिएण
संजोएंती बिरोहिणं ससिबिम्बम्।
करअलपल्लत्थमुही किं चिंतसि ?
सुमुहि ! अन्तराहिअहिअआ" ॥ (च)

अथ वितर्कः।

**तर्को विचारः सन्देहाद्**
**भ्रूशिरोऽङ्गुलिनर्त्तकः ॥२०२॥ (ङ)**

यथा।

"किं रुद्धः प्रिययेत्यादि"। "एते च त्रयस्त्रिंशद्व्यभिचारिभेदाः" इति यदुक्तं तदुपलक्षणमित्याह (च)।

**रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः॥२०३॥[छ]**

---

(च) उदाहरति कमलेति। कमलेन विकसितेन संयोजयन्ती विरोधिनं शशिविम्बम्। करतलपर्य्यस्तमुखी कि चिन्तयसि सुमुखि। अन्तराहितहृदया॥ इति संस्कृतम्। हे सुमुखि। अन्तराहितम् अन्तरभिनिविष्टं हृदयं यस्याः तादृशी, तथा करतले वामे इति भावः पर्य्यस्तं स्थितं मुखं यस्यास्तथाभूता, अतएव विकसितेन कमलेन पद्मेन विरोधिनं स्वभाववैरिणं शशिविम्बं संयोजयन्ती सती किं चिन्तयसि ? अत करतलं कमलं मुखं शशिविम्बमित्यतिशयोक्तिभेदेऽप्यभेदरूपालङ्कृतिर्बोद्धव्या।

(ङ) वितर्कमाह तर्क इति। सन्देहात् संशयात् हेतोः भ्रूवोः शिरसः अङ्गुलीनाञ्च नर्त्तकः विचारः तर्कः।

(च) उपलक्षणं स्वप्रतिपादकत्वे सति इतरप्रतिपादको धर्मविशेषः तथच त्रयस्त्रिंशद्भेदातिरिक्ता अपि व्यभिचारिणः स्युरिति भावः।

(छ) रत्यादयः इति। रत्यादयः रतिहासादयः अनियते अनिर्द्धारिते रसे व्यभिचारिणः स्युः।

तथाहि शृङ्गारे अनुच्छिद्यमानतयावस्थानात् रतिरेव स्थायिशब्दवाच्या। हासः पुनरुत्पद्यमानो व्यभिचार्य्येव व्यभिचारिलक्षणयोगात्। तदुक्तं "रसावस्थः परं भावः स्थायितां प्रतिपद्यते" इति। तत् कस्य स्थायिनः कस्मिन् रसे सञ्चारित्वमित्याह—

शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः।
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः।
इत्याद्यन्यत् समुन्नेयं स्वयं भावितबुद्धिभिः॥२०४॥(ज)

अथ स्थायी भावः।

अविरुद्धा विरुद्धा वा
यं तिरोधातुमक्षमाः।
आस्वादाङ्कुरकन्दोऽसौ
भावः स्थायीति सम्मतः॥२०५॥ [झ]

यदुक्तम्।

"स्रक्सूत्रवृत्त्या भावानामन्येषामनुगामुकः
न तिरोधीयते स्थायी तैरसौ पुष्यते परमिति"॥ (ञ)

---

(ज) शृङ्गारेति। शृङ्गारवीरयोः हासः, तथा वीरे क्रोधः, शान्ते जुगुप्सा, व्यभिचारितया कथिता। इत्यादि अन्यत् भावितबुद्धिभिः स्वयं समुन्नेयं बोद्धव्यम्।

(झ) स्थायिभावमाह अविरुद्धा इति। अविरुद्धाः अविरोधिनः विरुद्धाः विरोधिनो वा भावाः य तिरोधातुम् आच्छादयितुम् अक्षमाः आस्वादस्य रसस्य अङ्कुरः प्ररोहः तस्य कन्द मूलम् असौ भाव स्थायीति सम्मत।

(ञ) स्रगिति। स्रक्सूत्रवृत्त्या माल्यान्तरसूत्रन्यायेन अन्यथा भावानाम्

तद्भेदानाह।

रतिर्हासश्च शोकश्च
क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेत्थ-
मष्टौ प्रोक्ताः शमोऽपि च ॥२०६॥

तत्र।

रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्।
वागादिवैकृताच्चेतोविकासो हास इष्यते ॥
इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्।
प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते ॥
कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते।
रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम् ॥
दोषेक्षणादिभिर्गर्हा जुगुप्सा विषयोद्भवा।
विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु ॥

---

अनुगामुकः अनुगतः असौ स्थायी तैः भावैः न तिरोधीयते न आच्छाद्यते परं किन्तु पुष्यते पुष्टिं नीयते।

(ट) रत्यादीनाह मनोऽनुकूले मनसः चित्तस्य अनुकूले प्रीतिकरे अर्थे वस्तुनि, "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। मनसः चित्तस्य प्रवणायितं प्रेमरसार्द्रत्वमित्यर्थः रतिः। वागादीनां वचनप्रभृतीनां वैकृतात् विकृतिभावात् चेतसः मनसः विकासः स्फुरणं हास इष्यते। इष्टस्य प्रियस्य नाशादिभिः हेतुभिः चेतसः वैक्लव्यं व्याकुलीभावः शोकः। प्रतिकूलेषु विरुद्धेषु तैक्ष्ण्यस्य उग्रतायाः अवबोधः दारुणबुद्धिविशेष इत्यर्थः क्रोध इष्यते। कार्य्यारम्भेषु स्थेयान् स्थिरतरः संरम्भः समावेशः उत्साहः। रौद्रशक्त्या तीव्रसामर्थ्येन जनितम्

विस्फारश्चेतसो यस्तु
स विस्मय उदाहृतः।
शमो निरीहावस्थाया-
मात्मविश्रामजं सुखम् ॥२०७॥ (ट)

यथा मालतीमाधवे रतिः। लटकमेलके हासः। रामायणे शोकः। महाभारते शमः। एवमन्येऽपि। एते हि एतेषु अन्तरा उत्पद्यमानैः तैस्तैर्विरुद्धैरविरुद्धैश्च भावैरनुच्छिन्नाः प्रत्युत परिपुष्टा एव सहृदयानुभवसिद्धाः (ठ)।

किञ्च।

नानाभिनयसम्बन्धान्
भावयन्ति रसान् यतः।
तस्माद्भावा अमी प्रोक्ताः
स्थायिसञ्चारिसात्त्विकाः ॥२०८॥ (ड)

---

उत्पादिव चित्तस्य वैक्लव्यद व्याकुलतापादक मनोवृत्तिविशेष इत्यर्थ, भयम्। दोषेक्षणादिभिः दोषदर्शनादिभि' कारणैः विषयोद्भवा विषयेषु समुत्पन्ना गर्हा कुत्सा जुगुप्सा। विविधेषु नानाविधेषु लोकसीमातिवर्त्तिषु अलौकिकेषु पदार्थेषु चेतस. चित्तस्य यस्तु विस्फार' विकास स विस्मय उदाहृत' कथित। निरीहावस्थाया निष्पृहदशायाम् आत्मनि परमतत्त्वे विश्रामज विश्रामजनित सुख शम'।

(ठ) एतेष्वन्तरेति। एतेषु रत्यादिषु एते रत्यादय' अन्तरा मध्यत अनुच्छिन्नाः उच्छेदं न प्रापिता.। सहृदयाना सामाजिकानाम् अनुभवे सिद्धा।

(ड) नानेति। नाना विविधानित्यर्थ. अभिनयसम्बन्धान् अभिनयव्यक्तानित्यर्थ. रसान् यतः भावयन्ति व्यञ्जयन्ति तस्मात् अमी स्थायिसञ्चारिसात्त्विका भावाः प्रोक्ताः कथिताः।

यदुक्तं

"सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्"। (ढ)

अथ रसस्य भेदानाह।

शृङ्गारहास्यकरुण-
रौद्रवीरभयानकाः।
बीभत्सोऽद्भुत इत्यष्टौ
रसाः शान्तस्तथा मतः ॥२०९॥ (ण)

तत्र शृङ्गारः।

शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥
परोढ़ां वर्जयित्वात्र वेश्याञ्चाननुरागिणीम्।
आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः॥
चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः॥
त्यक्त्वौग्र्यमरणालस्य-
जुगुप्साव्यभिचारिणः।

---

(ढ) भावमाह सुखेति। सुखदुःखादिभिः भावैः धर्मविशेषैः तादृग्भवस्य भावनं भावः।

(ण) शृङ्गारेति। स्पष्टम्।

(त) शृङ्गारमाह तत्रेति। मन्मथस्य कामस्य उद्भेदः उद्रेकः शृङ्गं हि, तस्य आरः आगमः यस्मात् असौ शृङ्गारः, ऋगतावित्यस्य घञ् प्रत्ययनिष्पन्नस्य गमनार्थत्वात्। उत्तमा उत्कृष्टा प्रकृतिः प्रधानपुरुषः नायक इत्यर्थः प्रायेण यस्य तथोक्तः, "प्रधानं प्रकृतिः स्त्रियाम्" इत्यमरः। अत्र शृङ्गाररसे परोढ़ां पुर-

**स्थायी भावो रतिः श्याम-**

**वर्णोऽयं विष्णुदैवतः ॥२१०॥ [त]**

यथा। "शून्यं वासगृहमित्यादि"। अत्र उक्तस्वरूपः पतिरुक्तस्वरूपा च बाला आलम्बनविभावौ। शून्यं वासगृहमुद्दीपनविभावः। चुम्बनमनुभावः। लज्जाहासौ व्यभिचारिणौ। एतैरभिव्यक्तः सहृदयरतिभावः शृङ्गाररसरूपतां भजते। तद्भेदावाह।

**विप्रलम्भोऽथ सम्भोग**

**इत्येष द्विविधो मतः ॥२११॥**

तत्र।

**यत्र तु रतिः प्रकृष्टा**

**नाभीष्टमुपैति विप्रलम्भोऽसौ ॥२१२॥ (थ)**

अभीष्टं नायकं नायिकां वा।

**स च पूर्वरागमान-**

**प्रवासकरुणात्मकश्चतुर्धा स्यात् ॥२१३॥**

---

कीयाम् अननुरागिणीं वेश्याञ्च वर्जयित्वा अन्या नायिका, आलम्बन तदाख्य-विभावा इत्यर्थ, तथा दक्षिणाद्याः दक्षिणानुकूलधृष्टशठा नायकाः स्युः। चन्द्र. चन्दनं रोलम्बस्य भ्रमरस्य रुतम् आदिपदेन कोकिलकूजनादय उच्यन्ते। उद्दीपनं तदाख्यविभाव इत्यर्थं मत कथितम्। भ्रुवौः विक्षेप कटाक्षादिश्च अनुभाव. प्रकीर्त्तित। उग्रतां मरणम् आलस्यं जुगुप्साञ्च त्यक्ता अन्ये भावाः व्यभिचारिणः स्युः। रतिः पूर्वोक्तः स्थायी भावः। अयं रसः श्यामवर्णः, विष्णुर्देवता यस्य तथोक्तः।

(थ) विप्रलम्भमाह यत्रेति। यत्र शृङ्गारे रतिः अनुरागः प्रकृष्टा प्रकर्षं गता, तु किन्तु अभीष्टम् अभिलषितं नायिका नायकं वा न उपैति न प्राप्नोति असौ विप्रलम्भः।

तत्र ।

श्रवणाद्दर्शनाद्वापि मिथः संरूढ़रागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥ (द)
श्रवणन्तु भवेत् तत्र दूतवन्दिसखीमुखात् ।
इन्द्रजाले च चित्रे च साक्षात् स्वप्ने च दर्शनम् ॥

अभिलाषश्चिन्ता—
स्मृतिगुणकथनोद्वेगसम्प्रलापाश्च ।
उन्मादोऽथ व्याधि-
र्जड़तामृतिरिति दशात्र कामदशाः ॥ (ध)

अभिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनम् ।
उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि ॥ (न)
अलक्ष्यवाक् प्रलापः स्याच्चेतसो भ्रमणाद्भृशम् (प)
व्याधिस्तु दीर्घनिःश्वासपाण्डुताकृशतादयः ।
जड़ता हीनचेष्टत्वमङ्गानां मनसस्तथा ॥२१४॥

---

(द) पूर्वरागमाह श्रवणादिति। श्रवणात् दर्शनात वा मिथः परस्परं संरूढरागयो सञ्जातानुरागयोः स्त्रीपुंसयो. अप्राप्तौ अन्योन्यमलाभे यः दशाविशेष. अवस्थाभेद., स पूर्वराग उच्यते ।

(ध) कामदशा आह अभिलाष इति। स्पष्टम् ।

(न) उन्मादमाह उन्माद इति। चेतनाचेतनेषु सजीवनिर्जीवेषु अपि अपरिच्छेदः अविवेकः उन्मादः।

(प) प्रलापमाह अलक्ष्यवागिति। भृशम् अत्यर्थं चेतसः भ्रमणात् अभीष्टं प्रति धावनात् या अलक्ष्या विना लक्ष्यमित्यर्थः वाक् वचन सः प्रलापः स्यात् ।

शेषं स्पष्टम्। क्रमेण उदाहरणानि।

"प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयाः
तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणात्
आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः" ॥ (फ)

अत्र मालतीसाक्षाद्दर्शनप्ररूढरागस्य माधवस्याभिलाषः।

"कथमीक्षे कुरङ्गाक्षीं साक्षाल्लक्ष्मीं मनोभुवः।
इति चिन्ताकुलः कान्तो निद्रां नैति निशीथिनीम्" ॥ (ब)

अत्र कस्याश्चित् नायिकाया इन्द्रजालदर्शनरूढरागस्य नायकस्य चिन्ता। इदं मम। "मयि सकपटम्" इत्यादौ नायकस्य स्मृतिः। "नेत्रे खञ्जनगञ्जने" इत्यादौ गुणकथनम्। "श्वासान् मुञ्चति" इत्यादौ उद्वेगः।

---

(फ) प्रेमार्द्रा इति। मुग्धे सुन्दरे मनोहरे इत्यर्थः. दृशौ यस्यास्तथाभूतायाः प्रेमार्द्राः प्रेम्णा आन्तरस्नेहविशेषेण आर्द्राः सिक्ता इत्यर्थः, प्रणयस्पृशः प्रणयः सद्भावः तत्स्पृशः तत्पूर्णा इत्यर्थः, परिचयात् पुनः पुनर्दर्शनादिव्यापारात् उद्गाढः उद्रिक्तः रागस्य अनुरागस्य उदयः आविर्भावः यासु ताः, निसर्गमधुराः प्रकृतिमनोज्ञाः ताः ताः चेष्टाः अपाङ्गप्रेक्षणादिकाः मयि भवेयुः पुनर्भवन्तु इत्यर्थः, आशंसा मनोरथः तया परिकल्पितासु विरचितासु अपि यासु चेष्टासु क्षणात् क्षणमात्रेण मनोरथकल्पनामात्रेणेत्यर्थः बाह्यं बहिर्भवं यत् करणम् इन्द्रियं चक्षुरादिकं तस्य व्यापारः स्वस्वविषयग्रहणं तस्य रोधी अवरोधकः अन्तःकरणस्य अन्तरिन्द्रियस्य मनस इत्यर्थः, आनन्देन सान्द्रः निविडः घन इत्यर्थः लयः विलय इत्यर्थः, भवति अन्तःकरणमानन्दसलिले विलीनं भवतीति फलितार्थः। शार्दूलविक्रीडितं वृत्तम्।

(ब) कथमिति। साक्षात् मूर्तिमतीमित्यर्थः. मनोभुवः कामस्य लक्ष्मीं कुरङ्गाक्षीं मृगनयनां कथं केन प्रकारेण ईक्षे पश्यामि? इति चिन्तया आकुलः कान्तः निशीथिनीं रात्रिं व्याप्य निद्रां न एति प्राप्नोति।

"त्रिभागशेषासु निशासु च क्षणं
निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ ! व्रजसीत्यलक्ष्यवाक्
असत्यकण्ठार्पितबाहुबन्धना" ॥ (भ)

अत्र प्रलापः । "भ्रातर्द्विरेफ" इत्यादौ उन्मादः ।

"पाण्डु क्षामं वदनं हृदयं सरसं तवालसञ्च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः" ॥ (म)

अत्र व्याधिः ।

"भिसिणीदलसअणीए णिहिअं सव्वं सुणिच्चलं अङ्गम् ।
दीहो णीसासहरो एसो साहेइ जीवइ परं" ॥ (य)

अत्र जडता । इदं मम ।

**रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते ।**

---

(भ) त्रिभागेति । तृतीयो भाग त्रिभाग सङ्ख्याशब्दस्य वृत्तिविषये क्वचित् पूरणार्थत्वमिष्यते इति बोध्यम् । स शेषो यासा तासु तृतीयभागावशिष्टासु इत्यर्थः निशासु रात्रिषु इय पार्वतीति अध्याहार्य्यं क्षण नेत्रे निमील्य निद्रायेत्यर्थः हे नीलकण्ठ ! हर ! क्व व्रजसि इति अलक्ष्या विना लक्ष्यमित्यर्थः वाक् वचन यस्या, तथाभूता असत्ये कण्ठे अर्पित बाह्वोर्बन्धन यया तादृशी अभवदिति शेष । वंशस्थविल वृत्तम् ।

(म) पाण्ड्विति । हे सखि ! तव पाण्डु क्षाम कृशं वदन सरसं प्रेमावेशपूर्ण हृदयम् अलस सर्वविषयनिवृत्तसुकमित्यर्थः वपु शरीरञ्च हृदन्त, हृदयाभ्यन्तरे नितान्त गाढ क्षेत्रियरोगम् एतच्छरीराचिकित्सनीय व्याधिम् आवेदयति प्रकटयति ।

(य) भिसिणीति । बिसिनीदलशयनीये निहितं सर्वं सुनिश्चलमङ्गम् । दीर्घो निःश्वासभर एष साधयति जीवति परम् ॥ इति संस्कृतम् । कस्याश्चिन्नायिकाया अवस्था दृष्ट्वा कस्यचित् कमपि प्रति उक्तिः । बिसिनीदलशयनीये पद्मपत्रशय्यायां निहितम् अर्पित सर्वम् अङ्गं शरीर सुनिश्चलं स्पन्दरहितं, दीर्घः आयत, निःश्वासभरः निःश्वासातिशयः जीवतीति पर केवल साधयति व्यनक्ति ।

जातप्रायन्तु तद्वाच्यं चेतसाकाङ्क्षितं तथा ॥
वर्ण्यं तेऽपि यदि प्रत्युज्जीवनं स्याददूरतः ॥२१५॥

तत्र आद्यं यथा ।

"शेफालिकां विदलितामवलोक्य तन्वी
प्राणान् कथञ्चिदपि धारयितुं प्रभूता ।
आकर्ण्य सम्प्रति रुतं चरणायुधानां
किं वा भविष्यति न वेद्मि तपस्विनी सा" ॥ (र)

द्वितीय यथा ।

"रोलम्बाः परिपूरयन्तु हरितो झङ्कारकोलाहलैः
मन्दं मन्दमुपैतु चन्दनवनीजातो नभस्वानपि ।
माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं
प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी" ॥ (ल)

---

(र) शेफालिकामिति । दूत्या नायकं प्रति उक्तिरियम् । सा तन्वी कृशाङ्गी तपस्विनी वराकी शेफालिका विदलिता विकसिताम् अवलोक्य कथञ्चिदपि कृच्छ्रेणापि प्राणान् धारयितुं प्रभूता शक्ता समर्था अभूदित्यर्थः, सम्प्रति चरणायुधानां कुक्कुटानां रुतं रवमाकर्ण्य किं वा भविष्यति तत् न वेद्मि न जानामि । रात्रेर्मध्यभागे शेफालिका विकसन्ति, तद्दर्शनेऽपि कान्तागमनं प्रति आशासम्भवः, कुक्कुटरुतश्रवणस्य तु रात्र्यवसानसूचकत्वात् नैराश्यमिति भावः । वसन्ततिलकं वृत्तम् ।

(ल) रोलम्बा इति । रोलम्बाः भ्रमराः, झङ्कारकोलाहलैः हरितः दिशः परिपूरयन्तु । चन्दनवनीजातः नभस्वान् वायुरपि मन्दं मन्दम् उपैतु वहतु । केलीपिकाः क्रीडार्थं पोषिताः कोकिलाः चूतशिखरे आम्रतरुशिरसि स्थिताः इति शेषः माद्यन्तः चूताङ्कुरस्वादेन उल्लसन्त इत्यर्थः पञ्चमं स्वरविशेषं कलयन्तु गायन्तु । अमी अश्मसारः लौहः तद्वत् कठिनाः प्राणाः सत्वरं शीघ्रं गच्छन्तु गच्छन्तु । शार्दूलविक्रीडितं वृत्तम् ।

समेतौ। तृतीयं यथा।

कादम्बर्य्यां महाश्वेतापुण्डरीकवृत्तान्ते। एष च प्रकारः करुणविप्रलम्भविषय इति वक्ष्यामः। केचित् तु "नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः। निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः। उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः" (व) इत्याहुः। तत्र च।

आदौ वाच्यः स्त्रिया रागः
पुंसः पश्चात्तदिङ्गितैः ॥२१६॥ (श)

इङ्गितान्युक्तानि यथा रत्नावल्यां सागरिकावत्सराजयोः। आदौ पुरुषानुरागे सम्भवत्यप्येवमधिकं हृदयङ्गमं भवति।

नीलीकुसुम्भमञ्जिष्ठाः पूर्वरागोऽपि च त्रिधा।
न चातिशोभते यन्नापैति प्रेम मनोगतम् ॥ २
तन्नीलीरागमाख्यान्ति [ष]
२ यथा श्रीरामसीतयोः।

---

(व) नयनप्रीतिरिति। नयनप्रीतिः चक्षुरागः, चित्तस्य मनसः आसङ्गः आसक्तिः, सङ्कल्पः एवमेव करिष्यामीत्येवंरूपः मनोरथविशेषः, निद्राच्छेदः जागरणम्, तनुता कार्श्यम्, विषयनिवृत्तिः बाह्यवस्तुवैमुख्यं, त्रपानाशः निर्लज्जता। अन्यत् स्पष्टम्।

(श) आदाविति। आदौ अग्रतः स्त्रियाः नायिकायाः रागः नायकं प्रति अनुरागः वाच्यः वर्णनीय इत्यर्थः, पश्चात् तदनन्तरं तस्याः इङ्गितैः चेष्टाविशेषैः नेत्रविक्षेपादिभिः पुंसः नायकस्य रागः वाच्य इति शेषः।

(ष) नीलीरागमाह नीलीति। यत् मनोगतं प्रेम न च अतिशोभते नातिमात्रं वर्द्धते इत्यर्थः, न अपैति न नश्यति च, तत् नात्युद्रिक्तमविचलितमित्यर्थः नीलीरागम् आख्यान्ति कथयन्ति।

कुसुम्भरागं तं प्राहुर्यदपैति च शोभते ॥ [स]
मञ्जिष्ठारागमाहुस्तं यन्नापैत्यतिशोभते ॥२१७॥ (ह)

अथ मानः ।

मानः कोपः स तु द्वेधा
प्रणयेर्ष्यासमुद्भवः ।
द्वयोः प्रणयमानः स्यात्
प्रमोदे सुमहत्यपि ॥
प्रेम्णः कुटिलगामित्वात् (च)
कोपो यः कारणं विना ॥२१८॥

द्वयोरिति नायकस्य नायिकायाश्च उभयोः प्रणयमानो वर्णनीयः । उदाहरणम् । तत्र नायकस्य यथा ।
"अलोअपसुत्तअ ! विणिमीलिअच्छ ! देसु सुहअ ! मज्झ ओआसं ।
गण्डपरिउम्बणपुलइअङ्ग ! ण उणो चिराइस्सं" ॥ (क)

---

(स) कुसुम्भरागमाहु कुसुम्भरागमिति । यत् प्रेम अपैति नश्यति शोभते च, तत् उद्रिक्त चपलमित्यर्थं कुसुम्भराग प्राहु ।

(ह) मञ्जिष्ठारागमाहु मञ्जिष्ठेति । यत् प्रेम न अपैति न नश्यति अतिशोभते च, तत अविचलमत्युद्रिक्तमित्यर्थः मञ्जिष्ठारागम् आहुः कथयन्ति ।

(च) कुटिलगामित्वात् कुटिलनायकनायिकागतत्वादित्यर्थं यत्र नायक-नायिका वा कुटिलः कुटिला वा तत्र अन्योन्य मानस्य सम्भव इति भाव ।

(क) अलोअ इति । अलीकप्रसुप्तक ! विनिमीलिताक्ष ! देहि सुभग ! मह्यमवकाशम् । गण्डपरिचुम्बनपुलकिताङ्ग ! न पुनश्चिरयिष्यामि ॥ इति संस्कृतम् । नायिकागमने विलम्बमसहमान कपटनिद्रित नायकं प्रति नायिकाया उक्तिरियम् । हे अलीकप्रसुप्तक ! कपटनिद्रित ! विशेषेण निमीलिते अक्षिणी येन तत्सम्बुद्धौ । हे सुभग ! प्रियतम ! गण्डस्य परिचुम्बनेन

नायिकाया यथा कुमारसम्भवे सन्ध्यावर्णनावसरे ।

उभयोर्यथा ।

"पणअकुविआणं दोह्णवि अलिअपसुत्ताणं माणइल्लाणं ।

णिच्चलणिरुद्धणीसासदिण्णकण्णाणं को मल्लः" ॥ (ख)

**पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते ।**

**ईर्ष्यामानो भवेत् स्त्रीणां तत्र त्वनुमितिस्त्रिधा ।**

**उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसम्भवा ॥२१६॥(ग)**

तत्र दृष्टे यथा ।

"विनयति सुदृशो: दृशो: परागं
प्रणयिनि कौसुममाननानिलेन ।
तदहितयुवतेरभीक्ष्णमक्ष्णो:
द्वयमपि रोषरजोभिरापुपूरे" ॥ (घ)

---

पुलकितानि रोमाञ्चितानि अङ्गानि यस्य ततसम्बोधने । एतेन अलीकनिद्रेति व्यज्यते । मह्यम् अवकाश स्थान देहि, पुन: इव, परं न चिरयिष्यामि न निर्गमिष्ये । अत्र नायिकाया विलम्बेन नायकस्य मान इति अलीकस्वप्रवशात् कौटिल्यञ्च बोध्यम् ।

(ख) पणअ इति । प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानिनो: । निश्चल-निरुद्ध निश्वासदत्तकर्णयो: को मल्ल । इति संस्कृतम् । प्रणयेन प्रेम्णा कुपितयो: कोप गतयो: अतएव अलीकप्रसुप्तयो: कपटनिद्रितयो: द्वयो: उभयो मानिनो: मानवतो: निश्चल यथा तथा निरुद्धे नि:श्वासे दत्तकर्णयो: स्थिरकर्णयोरित्यर्थ: दम्पत्योरिति शेष: को मल्ल मानभङ्गसमर्थ: ? न कोऽपीत्यर्थ: ।

(ग) पत्युरिति । पत्यु: प्रियस्य अन्यप्रियासङ्गे अपरनायिकासक्तौ दृष्टे श्रुते अथवा अनुमिते सति स्त्रीणाम् ईर्ष्यामान भवेत्, तत्र तेषु त्रिविधेषु मध्ये इत्यर्थ: अनुमिति: अनुमान त्रिधा भवति, उत्स्वप्नायित स्वप्ने तदुक्तोच्चारणं, भोगाङ्क सम्भोगचिह्नं, तथा गोत्रस्खलनं नामव्यतिक्रम: एतत्त्रयस्य कारणत्वात् ।

(घ) विनयतीति । प्रणयिनि कान्ते आननानिलेन मुखमारुतेन सुदृश: सुनयनाया: दृशोर्नयनयो: पतितमिति शेष: कौसुमं परागं रज: विनयति निरस्यति

सम्भोगचिह्नेनानुमिते यथा।

"नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम्।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम्?" ॥ (ङ)

अनुनयपर्य्यन्तासहने (च) त्वस्य न विप्रलम्भभेदता, किन्तु सम्भोगसञ्चारीर्य्यास्वभावत्वम्। यथा।

"भ्रूभेदे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते।
कार्कश्यं गमितेऽपि चेतसि तनूरोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने" ॥ (छ)

---

इति तस्याः सुहृद्‌। अहितयुवते विपक्षकामिन्याः, सपत्न्याः इति यावत्, अक्ष्णोर्द्वयं नेत्रयुगलमपि अभीक्ष्णं तत्क्षणं रोषरज्यौः कोपपरागैः आपुपूरे आपूरितं, कोपकलुषितमभूदिति भावः। पुष्पिताग्रावृत्तम्।

(ङ) नवेति। नवानि नखपदानि नखाङ्कचिह्नानि यस्मिन् तादृशम् अङ्गम् अंशुकेन वसनेन गोपयसि, दन्तदष्टम् ओष्ठं पुनः पाणिना करपल्लवेन स्थगयसि तिरोदधासि, प्रतिदिशम् अपरस्त्रीसङ्गशंसी अन्यकान्तासम्भोगसूचकः विसर्पन् व्याप्नुवन् नवपरिमलगन्धः नूतनविमर्दजनितसौरभविशेषः, "विमर्दोत्थे परिमलः" इत्यमरः। केन प्रकारेण वरीतुं गोपयितुं शक्यः? न केनापीत्यर्थः। मालिनीवृत्तम्।

(च) अनुनयपर्य्यन्तासहने प्रियवचनादिना मानभञ्जनानुकूलव्यापारः अनुनयः, तत्पर्य्यन्तस्य असहने सोढुमशक्यत्वे।

(छ) भ्रूभेदे इति। तस्मिन् जने दृष्टे सति मानस्य कथं निर्वहणं निर्वाहः, मानावलम्बनमित्यर्थः, कथं केन प्रकारेण भविष्यति? न केनापीत्यर्थः। तथाहि, भ्रूभेदे भ्रूभङ्गे रचिते कृतेऽपि दृष्टिः अधिकं सोत्कण्ठं समुत्सुकं यथा तथा उद्वीक्षते उच्चैः पश्यति। वाचि वचने रुद्धायामपि मौनीभावेऽपीत्यर्थः इदं दग्धाननं सस्मितं ईषद्धास्यसहितं जायते। चेतसि चित्ते कार्कश्यं काठिन्यं

यथा वा ।

"एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतोः
अन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषोः
भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः" ॥ (ञ)

एवमन्यत्र ।

साम भेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम् ।
तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात् ॥
तत्र प्रियवचः साम भेदस्तत्सख्युपार्जनम् ।
दानं व्याजेन भूषादेः पादयोः पतनं नतिः ॥
सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम् ।

---

गमितेऽपि तनु शरीरं रोमाञ्चम् आलम्बते रोमाञ्चिता भवति। मानाकरणे तिरस्कुर्वती सखी प्रति कस्याश्चिदुक्तिः । शार्दूलविक्रीडितं वृत्तम् ।

(ञ) एकस्मिन्निति । एकस्मिन् शयने शय्यायां पराङ्मुखतया परिवृत्त्य शयिततया वीतोत्तरं विगतोत्तरवचनं यथा तथा ताम्यतोः क्लिश्यतोः अन्योन्यस्य परस्परस्य अनुनये अनुनयाभिलाषे इत्यर्थः हृदि मनसि स्थितेऽपि गौरवं मानं रक्षतोः मानभङ्गमनिच्छतोरित्यर्थः शनकैः क्रमशः अपाङ्गवलनात् तिर्य्यक् नेत्रान्तचालनात् मिश्रीभवन्ति चक्षूंषि ययोः तादृशयोः दम्पत्योः स्त्रीपुंसयोः मानकलिः प्रणयकलहः सहासं यथा तथा रभसेन वेगेन हर्षेण वा, "रभसो वेगहर्षयोः" इत्यमरः । व्यासक्तः दत्तः कण्ठग्रहः कण्ठाश्लेषः तत्र तथाविधः सन् भग्नः गतः । शार्दूलविक्रीडितं वृत्तम् ।

(झ) मानभञ्जनोपायानाह सामेति । पतिः तस्य मानस्य भङ्गाय खण्डनाय सामादीनि षट् उपायान् क्रमात् पूर्वपूर्वस्य निरासे इति भावः कुर्य्यात् अवलम्बेत । तत्र तेषु प्रियवचः प्रियवाक्यं साम, तस्याः सख्याः उपार्जनम् आयत्तीकरणं भेदः, व्याजेन छलेन भूषादेः अर्पणं दानं, पादयोः पतनं नतिः, इत्थं सामादौ उपाये परिक्षीणे क्षयं प्राप्ते विफले इत्यर्थः अवधीरणं किमपि

सम्भोगचिह्नेनानुमिते यथा।

"नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम्।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम्?" ॥ (ङ)

अनुनयपर्य्यन्तासहने (च) त्वस्य न विप्रलम्भभेदता, किन्तु सम्भोगसञ्चारीर्ष्यास्वभावत्वम्। यथा।

"भ्रूभेदे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते।
कार्कश्यं गमितेऽपि चेतसि तनूरोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने" ॥ (छ)

---

इति तस्याः सुहृदः. अहितयुवते विपक्षकामिन्याः सपत्न्या इति यावत् अभ्योदयं नेत्रयुगलमपि अभीक्ष्णं तत्क्षणं रोषरञ्जिभिः कोपपरागैः आपुपूरे आपूरितं, कोपकलुषितमभूदिति भावः। पुष्पिताग्रावृत्तम्।

(ङ) नवेति। नवानि नखपदानि नखाङ्कचिह्नानि यस्मिन् तादृशम् अङ्गम् अंशुकेन वसनेन गोपयसि, दन्तदष्टम् ओष्ठं पुनः पाणिना करपल्लवेन स्थगयसि तिरोदधासि, प्रतिदिशम् अपरस्त्रीसङ्गशंसी अन्यकान्तासम्भोगसूचकः विसर्पन् व्याप्नुवन् नवपरिमलगन्धः नूतनविमर्दजनितसौरभविशेषः, "विमर्दोत्थे परिमलः" इत्यमरः। केन प्रकारेण वरीतुं गोपयितुं शक्यः? न केनापीत्यर्थः। मालिनीवृत्तम्।

(च) अनुनयपर्य्यन्तासहने प्रियवचनादिना मानभञ्जनानुकूलव्यापारः अनुनयः तत्पर्य्यन्तस्य असहने सोढुमशक्यत्वे।

(छ) भ्रूभेदे इति। तस्मिन् जने दृष्टे सति मानस्य कथं निर्वहणं निर्वाहः मानावलम्बनमित्यर्थः, कथं केन प्रकारेण भविष्यति? न केनापीत्यर्थः। तथाहि, भ्रूभेदे भ्रूभङ्गे रचिते कृतेऽपि दृष्टिः अधिकं सोत्कण्ठं समुत्सुकं यथा तथा उद्वीक्षते उच्चैः पश्यति। वाचि वचने रुद्धायामपि मौनीभावेऽपीत्यर्थः इदं दग्धाननं सस्मितं ईषद्धास्यसहितं जायते। चेतसि चित्ते कार्कश्यं काठिन्यं

अरुचिर्वस्तुवैराग्यं सर्वत्रारागिताऽधृतिः ।
अनालम्बनता चापि शून्यता मनसः स्मृता ॥
तन्मयं तत्प्रकाशो हि वाह्याभ्यन्तरतस्तथा ॥२२२(ट)

शेषं स्पष्टम् । एकदेशतो यथा मम तातपादानाम् ।

"चिन्ताभिः स्तिमितं मनः करतले लीना कपोलस्थली
प्रत्यूषक्षणदेशपाण्डु वदनं श्वासैकखिन्नोऽधरः ।
अम्भःशीकरपद्मिनीकिशलयैर्नोपैति तापः शमं
कोऽस्याः प्रार्थितदुर्लभोऽस्ति सहते दीनां दशामीदृशीम्" ॥(ठ)

भावी भवन् भूत इति त्रिधा स्यात्तत्र कार्य्यजः२२३

कार्य्यजस्य बुद्धिपूर्वकत्वात् त्रैविध्यम् ।

तत्र भावी यथा मम ।

"यामः सुन्दरि ! याहि पान्थ । दयिते ! शोकं वृथा मा कृथाः
शोकस्ते गमने कुतो मम ?—ततो वाष्पं कथं मुञ्चसि ? ।

---

ज्वरः व्याधिं तापं । पाण्डुता पाण्डुवर्णत्वं दुःखेन शरीरस्य निस्तेजस्कतया श्वेतीभाव इत्यर्थः, कृशता दौर्बल्यम् अरुचिः वस्तुषु वैराग्यं विगतस्पृहत्वं, सर्वत्र सर्वस्मिन् वस्तुनि अरागिता असन्तोष, अधृतिः मनसः शून्यता, अनालम्बनता अवलम्बनराहित्यं स्मृता । वाह्याभ्यन्तरतः तस्य अभीष्टस्य प्रकाशः तन्मयम् ।

(ठ) चिन्ताभिरिति । मनः अन्तरिन्द्रियं चिन्ताभिः ध्यानैः स्तिमितं स्थिरं, कपोलस्थली गण्डदेशः करतले लीना स्थिता । वदनं प्रत्यूषस्य यः क्षणदेशश्चन्द्रः तद्वत् पाण्डु मलिनश्वेतीभावमापन्नमित्यर्थः, अधरः श्वासेन एकं केवलं खिन्नः क्लान्तः । तापः अन्तःसन्तापः अम्भसां शीकरैः विन्दुभिः पद्मिनीकिशलयैः कमलपत्रैः शमं शान्तिं न उपैति न प्राप्नोति । अतएव अस्याः नायिकायाः कः जनः प्रार्थितश्चासौ दुर्लभश्चेति तथाभूतः प्रार्थितः सन् दुर्लभ इत्यर्थः अस्ति ? यः ईदृशीं दशां न सहते न सोढुं शक्नोतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ड) याम इति । दम्पत्योरुक्तिप्रत्युक्ती । हे सुन्दरि ! यामः गच्छामः,

शीघ्रं न व्रजसीति ? मां गमयितुं कस्मादियं ते त्वरा ?
भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे सम्भ्रमः" ॥ (ड)

भवन् यथा ।

"प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं नतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता-
गन्तव्ये सति जीवित ! प्रियसुहृत् सार्थः किमु त्यज्यते ?" ॥ (ढ)

भूतो यथा । "चिन्ताभिः स्तिमितम्" इत्यादि । शापाद् यथा । "तां जानीयाः" इत्यादि । सम्भ्रमो दिव्यमानुषनिर्घातोत्पातादिजः । यथा विक्रमोर्वश्यामुर्वशीपुरूरवसोः ।

अत्र पूर्वरागोक्तानामभिलाषादीनामत्र उक्तानाञ्च अङ्गसौष्ठवादीनामपि दशानामुभयेषामपि उभयत्र सम्भवेऽपि चिरन्तनप्रसिद्ध्या विविच्य प्रतिपादनम् ।

---

हे पान्थ ! पथिक ! याहि गच्छ, हे दयिते ! प्रिये ! वृथा शोकं मा कृथाः न कुरु, ते तव गमने मम शोक कुत किमर्थम् ? ततस्तर्हि कथं वाष्पं नेत्रजलं मुञ्चसि त्यजसि रोदिषीत्यर्थः, शीघ्रं सत्वरं न व्रजसि न गच्छसि इति हेतोः वाष्पं मुञ्चामीति शेष । मां गमयितुं ते तव इयं त्वरा कस्मात् किमर्थम् ? त्वया सह जिगमिषोः गन्तुमिच्छोर्मे मम अस्य जीवस्य जीवनस्य भूयान् महान् अयं सम्भ्रम. व्यग्रतेत्यर्थ. । शार्दूलविक्रीडितं वृत्तम् ।

(ढ) प्रस्थानमिति । प्रियतमे यातुं विदेशं गन्तुं निश्चितचेतसि स्थिरचित्ते सति वलयै. प्रस्थान कृतं दुर्भावनया अङ्गाना कार्श्येन हस्ताभ्यां स्खलनादिति भावः, प्रियसखै. अस्रैः अश्रुभिः अजस्रं नतं पतितमित्यर्थः, प्रियसखानां मति इष्टापि यदि प्रियतमो न गच्छेदिति भावः, धृत्या धैर्येण क्षणं क्षणमात्रमपि न आसित स्थितम् अधैर्यां अभूदिति भाव., चित्तेन मनसा पुर अग्रत. गन्तुं व्यवसितम् उद्युक्तं, यत्र यत्र प्रियतमस्तत्र तत्रैव मनसः स्थितेरिति भावः, इत्थं सर्वे वलयादय इत्यर्थः समं युगपत् प्रस्थिताः प्रचलिताः । हे जीवित !

अथ करुणः ।

**यूनोरेकतरस्मिन्**
**गतवति लोकान्तरं पुनर्लभ्ये ।**
**विमनायते यदैक-**
**स्तदा भवेत् करुणविप्रलम्भाख्यः ॥२२४॥ [ण]**

यथा कादम्बर्य्यां पुण्डरीकमहाश्वेतावृत्तान्ते । पुनरलभ्ये शरीरान्तरेण वा लभ्ये तु करुणाख्य एव रसः। किन्त्व अत्राकाशसरस्वतीभाषानन्तरमेव शृङ्गारः। सङ्गमप्रत्याशया रतेरुद्भवात् । अयन्तु "करुणः" इत्यभियुक्ता(त) मन्यन्ते । यच्चात्र "सङ्गमप्रत्याशानन्तरमपि भवतो विप्रलम्भशृङ्गारस्य प्रवासाख्यो भेद एव" इति केचिदाहुः । तदन्ये मरणरूप-विशेषसम्भवाद्भिन्नमपि मन्यन्ते ।

अथ सम्भोगः ।

**दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।**

---

गन्तव्ये एकस्मिन् समये अवश्य गन्तव्यमिति स्थिते सति प्रियसुहृत्सार्थ. सङ्गी मलयादिरित्यर्थ. किन्तु कथ त्यज्यते ? त्यक्तु न युज्यते इत्यर्थ.। शार्दूलविक्रीडित वृत्तम् ।

(ण) करुणविप्रलम्भमाह अथेत्यादि। यूनोर्दम्पत्यो. लोकान्तरं गतवति एकस्मिन् एकतरे पुनर्लभ्ये प्राप्ये सति एक. तयोरेकतर इत्यर्थ. यत् यदेत्यन्वयं विमनायते विमना इव आचरति शोकार्त्त. सन् विलापादिकं करोतीत्यर्थः असौ करुणविप्रलम्भो नाम ।

(त) पुनरलभ्ये इति। अत्र रतेर्नाशात् उत्कटशोकसम्भवादिति भाव: । अयन्तु करुण: करुणविप्रलम्भ इत्यर्थः। अभियुक्ता' मान्या ।

(थ) सम्भोगमाह अथेत्यादि। यत्र अन्योन्यमनुरक्तौ अनुरागिणौ विला-

यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृतः ॥२२५॥ [थ]

आदिशब्दादन्योन्याधरपानचुम्बनादयः। यथा "शून्यं वासगृहम्" इत्यादि।

सङ्ख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात्।
अयमेक एव धीरैः कथितः सम्भोगशृङ्गारः॥
तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथोदयास्तमयः।
जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृतिः॥
अनुलेपनभूषाद्या वाच्यं शुचि मेध्यमन्यच्च ॥२२६॥

तथाच भरतः। "यत्किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तत् सर्वं शृङ्गारेणोपमीयते उपयुज्यते।" किञ्च।

कथितश्चतुर्विधोऽसा-
वानन्तर्य्यात् तु पूर्वरागादेः ॥२२७॥ [द]

यदुक्तम्।

"न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते।
कषायिते हि वस्त्रादौ भूयान् रागो विवर्द्धते" ॥ (ध)

---

सिनौ विलसनशीलौ दम्पती दर्शनस्पर्शनादीनि निषेवेते कुरुतः अय सम्भोगः तदाख्यशृङ्गार उदाहृत कथित।

(द) कथित इति। असौ सम्भोगः पूर्वरागादे. आनन्तर्य्यात् अनन्तर-भावित्वादित्यर्थ. चतुर्विध कथित. पूर्वरागानन्तरः मानानन्तर. प्रवासानन्तर. करुणानन्तर इति।

(ध) नेति। विप्रलम्भेन विना सम्भोग. न पुष्टिम् अश्नुते प्राप्नोति, विप्रलम्भ-पूर्वको हि पुष्टिं प्राप्नोतीति भाव.। हि तथाहि वस्त्रादौ कषायिते कषायजलेन सिक्ते इत्यर्थ. भूयान् महान् रागः विवर्द्धते वृद्धिं गच्छति।

तत्र पूर्वरागानन्तरं सम्भोगो यथा कुमारसम्भवे पार्वतीपरमेश्वरयोः। प्रवासानन्तरं सम्भोगो यथा मम तातपादानाम्।

"क्षेमं ते ननु पक्ष्मलाक्षि ! किमस्रं क्षेमं मदङ्गं दढं
एतादृक् कृशता कुतस्तुह पुणो पुट्टं सरीरं जदो।
केनाहं पृथुलः प्रिये ! पणइणीदेहस्स सम्मीलणात्
त्वत्तः सुभ्रु ! न कापि मे जइ इयं क्षेमं कुदो पुच्छसि"॥ (न)*

एवमन्यत्रापि ऊह्यम्।

---

(न) क्षेममिति। हे पक्ष्मलाक्षि ! प्रशस्तलोमशोभितनयने। ते तव क्षेमं कुशलं ननु किम्? किमस्रमिति क्षमक क्षेम मदङ्गं दृढम्। दृढम् अत्यर्थं क्षमक शोर्यं मम अङ्गं क्षेम कुशल ममाङ्गस्य कार्श्यमेव क्षेममिति भाव। एतादृक् कृशता कार्श्यं तवेति शेषः कुतः किमर्थम्? तुह इति तव पुन पुष्ट शरीर यत इति संस्कृतम्। यत. यस्मात् तव शरीर पुष्टं नायिकान्तरसम्भोगेनेति भावः। हे प्रिये। अह केन हेतुना पृथुल स्थूलाङ्ग अभवमिति शेष। पणइणी इति प्रणयिनीदेहस्य सम्मीलनात् प्रणयिन्या अपरकान्ताया देहस्य सम्मीलनात् सङ्गात्। हे सुभ्रु ! सुन्दरि ! त्वत्त. अपेक्षाया पञ्चमी त्वदपेक्षया इत्यर्थ. कापि मे न प्रणयिनीति शेष। जइ इति यदि इद क्षेम कुत पृच्छसि, यदि इदम् अहमेव प्रणयिनीत्येवम् अस्ति, ततस्तदा कुत कस्मात् क्षेम पृच्छसि एतदेव मे कुशलम् अतस्तव क्षेमजिज्ञासा निरवकाशेति भाव'।

---

* अपरो यथा।

"पदप्रणतमालोक्य कान्तमेकान्तकातरम्।
मुञ्चन्ती वाष्पसन्तानं सुमुखी तेन चुम्बिता॥ १॥
कान्ते धीरकृतान्तवक्त्रकुहरात् त्व पुण्यपुञ्जेन मे
मुक्ता क्षान्त तदर्जनश्रमभरं प्रत्यङ्गमालिङ्ग्य माम्।
इत्याकर्ण्य निमीलितार्द्धनयन कीरं शनैरागत
सोल्लास वदनाम्बुजं मृगदृश. स्वैरं चुचुम्बे प्रिय."॥ २॥

अथ हासः।

विकृताकारवाग्वेशचेष्टादेः कुहकाद्भवेत् ।
हासो हास्यस्थायिभावः श्वेतः प्रमथदैवतः ॥
विकृताकारवाक्चेष्टं यदालोक्य हसेज्जनः ।
तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् ॥
अनुभावोऽक्षिसङ्कोचवदनस्मेरतादिकः ।
निद्रालस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः ॥ (प)

ज्येष्ठानां स्मितहसिते
मध्यानां विहसितावहसिते च ।
नीचानामपहसितं
तथाऽतिहसितञ्च षड् भेदाः ॥

ईषद्विकासि नयनं स्मितं स्यात् स्पन्दिताधरम् ।
किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥

---

(प) हास्यरसमाह भवेत्यादि। विकृतः आकारः, वाक् वेशः चेष्टादिश्च यस्य तादृशात् कुहकात् नटात् उपलक्षणमेतत् श्रव्यकाव्यादेरपि बोध्यं हास्यः तदाख्यः रसः समुद्भवतीति शेषः, तस्य स्थायिभावो हासः, देवता प्रमथः शिवानुचरः। कुतुकादिति पाठे कौतुकजनकात् विकृताकारवाक्चेष्टादेर्विशिष्यादित्यर्थः। यत् विकृताकारवाक्चेष्टं वस्तु आलोक्य दृष्ट्वा जनः हसेत् तत् अत्र रसे आलम्बनं प्राहुः, तथा तस्य चेष्टा विकृताकारादिरूपा उद्दीपनं मतम्। अक्ष्णोः सङ्कोचः वदनस्य स्मेरतादिकञ्च अत्र अनुभावः। निद्रा आलस्यम् अवहित्थादयश्च व्यभिचारिणः।

(फ) ईषदिति। ईषत् विकासिनी नयने यत्र तत् तथा स्पन्दितः अधरो यस्मिन् तथाभूतं हास्यं स्मितं स्यात्। तत्र किञ्चित् ईषत् लक्ष्याः दृश्याः

मधुरस्वरं विहसितं
सांसशिरःकम्पमवहसितम् ।
अपहसितं सास्राक्षं
विक्षिप्ताङ्गं भवत्यतिहसितम् ॥२२८॥(फ)

यथा मम ।

गुरोर्गिरः पञ्च दिनान्यधीत्य
वेदान्तशास्त्राणि दिनत्रयञ्च।
अमी समाघ्राय च तर्कवादान्
समागताः कुक्कुटमिश्रपादाः ॥ (ब)

अस्य नटकमेलकप्रभृतिषु परिपोषो द्रष्टव्यः (भ) ।

अत्र च ।

यस्य हासः स चेत् क्वापि साक्षान्नैव निबध्यते ।
तथाप्येष विभावादिसामर्थ्यादुपलभ्यते ॥

---

द्विजाः दन्ताः, यत्र तादृश, "दन्तविप्राण्डजा द्विजा" इत्यमरः । हास्य बुधै हसित कथितम् । मधुरः मनोहरः स्वरो यस्य तादृशं हास्यं विहसितम्, असस्य स्कन्धस्य शिरसश्च कम्पेन सहितं हास्यम् अवहसितम् । सासाक्षम् अश्रुपूर्णनयनं हास्यम् अपहसित, विक्षिप्तानि अङ्गानि यस्मिन तादृश हास्यम् अतिहसित भवति ।

(ब) गुरोरिति । अमी कुक्कुटमिश्रपादाः, गुरोः प्रभाकरस्य गिरः मीमांसाशास्त्राणीत्यर्थः, पञ्च दिनानि पञ्चभिर्दिनैरित्यर्थः, वेदान्तशास्त्राणि शारीरक-मीमांसाग्रन्थान् दिनत्रय त्रिभिर्दिनैरित्यर्थः तथा तर्कवादान् तर्कशास्त्राणि न्यायदर्शनादीत्यर्थः, समाघ्राय घ्राणेन्द्रियेण शिथिलमित्यर्थः समागताः । उपजाति-वृत्तम् ।

(भ) परिपोषः बाहुल्यम् । अत्र हास्यरसे इत्यर्थः ।

(म) यस्येति । यस्य नायकस्य इत्यर्थः, हासः वर्ण्यते इति शेषः चेत् यदि स क्वापि उदाहरणे साक्षात् नैव निबध्यते विरच्यते तथापि एष नायक इत्यर्थः

अभेदेन विभावादिः साधारण्यात् प्रतीयते ।
सामाजिकैस्ततो हास्यरसोऽयमनुभूयते ॥२२६॥ (म)

एवमन्येष्वपि रसेषु बोद्धव्यम् ।

अथ करुणः ।

इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः ॥
शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम् ।
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः ॥ (य)
अनुभावा दैवनिन्दा भूपातक्रन्दितादयः ।
वैवर्ण्योच्छ्वासनिःश्वासस्तम्भप्रलपनानि च ॥
निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः ।
विषादजड़तोन्मादचिन्ताद्या व्यभिचारिणः॥२३०॥

शोच्यं विनष्टबन्धुप्रभृति । यथा मम राघवविलासे ।

"विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः ।

---

विभावादीनां सामर्थ्यात् अर्थात् अन्यथानुपपत्तेरित्यर्थः उपलभ्यते माध्यन । ततश्च साधारण्यात् साधारणीकरणव्यापारात् विभावादिः अभेदेन तादात्म्येन प्रतीयते ततः साधारण्यात सामाजिकैः अयं हास्यरसः अनुभूयते । अत्रोदाहरणे हास्यरसनायकस्य निबन्धनेऽपि आक्षेपादेव तदुपादानमिति भावः ।

(य) करुणरसमाह इष्टेत्यादि । इष्टस्य प्रियस्य वस्तुनः नाशात् अनिष्टस्य प्राप्तेः लाभात् करुणाख्यः करुणो नाम रसः भवेत् । अयं धीरैः पण्डितैः कपोतवर्णः तथा यमदैवत कथित । अत्र रसे शोकः स्थायिभावः स्यात्, शोच्यं शोकविषयीभूतं वस्तु आलम्बनं मतम्, तस्य शोच्यस्य दाहादिका अवस्था उद्दीपनं भवे( । अन्यत् स्पष्टम् ।

(र) विपिन इति । विपिने वने जटानिबन्धनं जटाधारणं क्व ? इदं

अनयोर्घटनाविधेः स्फुटं ननु खड्गेन शिरीषकर्त्तनम्" ॥ (र)

अत्र हि रामवनवासजनितशोकार्त्तस्य दशरथस्य (ल) दैवनिन्दा। एवं बन्धुवियोगविभवनाशादौ अप्युदाहार्य्यम्। परिपोषस्तु महाभारते स्त्रीपर्वणि द्रष्टव्यः।

अस्य करुणविप्रलम्भाद्भेदमाह।

**शोकस्थायितया भिन्नो विप्रलम्भादयं रसः।**
**विप्रलम्भे रतिः स्थायी पुनः सम्भोगहेतुकः॥२३१ (व)**

अथ रौद्रः।

**रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः।**
**आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम्॥**
**मुष्टिप्रहारपतनविकृतच्छेदावदारणैश्चैव।**
**संग्रामसम्भ्रमाद्यैरस्योद्दीप्तिर्भवेत् प्रौढ़ा॥**
**भ्रूविभङ्गोष्ठनिर्दंशबाहुस्फोटनतर्जनाः।**
**आत्मावदानकथनमायुधोत्क्षेपणानि च॥**

---

मनोहरं सुकोमलं वपुश्च क्व? अनयोः जटाधारणमनोहरशरीरयोः विधेः विधातुः घटना योजना खड्गेन शिरीषस्य तदाख्यस्य पुष्पस्य कर्त्तनं छेदनं ननु खलु। उपेन्द्रवज्रावृत्तम्।

(ल) अत्र दशरथ एव नायको बोद्धव्यः।

(व) शोकेति। अयं रसः करुण इत्यर्थः शोकस्थायितया विप्रलम्भात् करुणविप्रलम्भात् भिन्नः. विप्रलम्भे करुणविप्रलम्भे पुनः सम्भोगहेतुकः स्थायिभावः रतिरस्तीति शेषः।

(श) रौद्ररसमाह अथेत्यादि। क्रोधः स्थायिभावो यस्य तादृशः रक्तः रक्तवर्णः रुद्रः अधिदैवता यस्य तथोक्तः रसः रौद्रः नाम। तत्र रौद्रे रसे अरिः शत्रुः आलम्बनं, तस्य अरेश्चेष्टा उद्दीपनं मतं, मुष्टिप्रहारेण पतनेन विकृत-

**अनुभावास्तथाक्षेपक्रूरसन्दर्शनादयः।**
**उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः।**
**मोहामर्षादयश्चात्र भावाः स्युर्व्यभिचारिणः॥२३२॥ (श)**

यथा।

"कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्"॥ (ष)

अस्य युद्धवीराद्भेदमाह।

**रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः॥२३३॥ (स)**

---

च्छेदनेन विदारणेन सग्रामसम्भ्रमाद्यैः युद्धव्यग्रतादिभिश्च अस्य रौद्रस्य प्रौढा प्रवृद्धा उद्दीप्तिः उद्दीपनं भवेत्, मुष्टिप्रहारादयः उद्दीपनविभावा इति भावः। भ्रूभङ्गः औष्ठदंशनं बाहुस्फोटनं तर्जनम् आत्मनः अवदानकथनं कृतकर्मणः प्रशंसनमित्यर्थः, आयुधानामस्त्राणाम् उत्क्षेपणानि उच्चैर्निक्षेपणानि आक्षेपः तिरस्कारः, क्रूरसन्दर्शनानि कुटिलावलोकनानि च इत्येवमादयः अनुभावाः, उग्रता आवेगः रोमाञ्चः स्वेदः वेपथुः कम्पश्च एते भावाः पूर्वोक्ता व्यभिचारिणः स्युः।

(ष) उदाहरति यथेत्यादि। पितृनिधनार्त्तस्य अश्वत्थाम्न उक्तिरियम्। यैः निर्मर्य्यादैः अतिक्रान्तस्थितिभिः गुरुनिपातनाच्छिष्टाचारवर्जितैरित्यर्थः मनुजेषु मनुष्येषु पशुभिः पशुवत् कार्य्याकार्य्यविमूढैरित्यर्थः, उदायुधैः उद्यतशस्त्रैः शस्त्रपाणिभिरित्यर्थः, भवद्भिः इदं गुरु महत् पातकम् आचार्य्यनिधनरूपं महापापमित्यर्थः, कृतम् अनुमतं वा दृष्टम् अयमहं नरकरिपुणा नरकासुरनिसूदनेन कृष्णेन इत्यर्थः, सार्द्धं सह सभीमकिरीटिना भीमार्जुनसहितानां तेषां भवताम् असृङ्मेदोमांसैः रुधिरवसापिशितैः दिशां बलिम् उपहारं करोमि। दिशः पूजयामीत्यर्थः। हरिणीवृत्तं, "न समरसला गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात्। अत्र नायकोऽश्वत्थामा बोद्धव्यः।

(स) रक्तास्येति। रक्तं रक्तवर्णम् आस्यं नेत्रञ्च यस्मिन् तस्य भावः तत्ता,

अथ वीरः ।

उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः ॥
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः ।
आलम्बनविभावास्तु विजेतव्यादयो मताः ॥
विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः ।
अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ॥
सञ्चारिणस्तु धृति-
मतिगर्वस्मृतितर्करोमाञ्चाः ।
स च दानधर्मयुद्धै-
र्दयया च समन्वितश्चतुर्द्धा स्यात् ॥२३४॥ (ह)

स च वीरः दानवीरो धर्मवीरो दयावीरो युद्धवीरश्चेति चतुर्विधः । तत्र दानवीरो यथा परशुरामः । "त्यागः सप्तसमुद्र-

---

अत्र रसे युद्धवीरात भेदिनी भेदकारिणी युद्धवीरे मुखस्य नेत्रस्य च रक्तत्वं न स्यात, अत्र तु नायकस्य तथेति भेद इति भावः ।

(ह) वीररसमाह अथेत्यादि । वीरः वीरो रसः उत्तमप्रकृतिः उत्कृष्टभावक इत्यर्थं, कर्त्तव्यार्थेषु स्थेयान् उद्यमः उत्साहः, स स्थायिभावो यस्य तथोक्तः । अयं रसः महेन्द्रः देवता यस्य तथाविध, तथा हेमवर्णः सुवर्णवर्णः समुदाहृतः कथितः । विजेतव्यादयः आलम्बनविभावाः विजेतव्यादीनां चेष्टाद्याः तस्य वीरस्य उद्दीपनविभावाः । प्रथमादिपदेन दानीयधर्मानुकम्पनीयानां ग्रहणं, द्वितीयादिपदेन दाने अध्यवसायस्य धर्मे धर्मशास्त्रादेः दयायां दीनस्य कातरोक्त्यादेर्ग्रहणम् । तत्र वीरे अनुभावास्तु सहायानां सहकारिणाम् अन्वेषणादयः अनुसन्धानादयः सहकारिणश्चात्र युद्धे सैन्यानि दाने धनानि धर्मे तत्तद्व्यापि मन्त्राश्च दयायां त्यागशीलतादयश्च यथायथं ज्ञातव्याः । अन्यत् स्पष्टम् ।

मुद्रितमहीनिर्व्याजदानावधि" इति। (च) अत्र परशुरामस्य त्यागे उत्साहः स्थायी भावः। सम्प्रदानभूतैर्ब्राह्मणैरालम्बनविभावैः सत्त्वाध्यवसायादिभिश्च उद्दीपनविभावैर्विभावितः सर्वस्वत्यागादिभिरनुभावैरनुभावितो हर्षधृत्यादिभिः सञ्चारिभिः पुष्टिं नीतो दानवीरतां भजते।

धर्मवीरो यथा युधिष्ठिरः।

"राज्यञ्च वसु देहश्च भार्य्या भ्रातृसुताश्च ये।
यच्च लोके ममायत्तं तद्धर्माय सदोद्यतम्" ॥ (क)

युद्धवीरो यथा श्रीरामचन्द्रः।

"भोः लङ्केश्वर। दीयतां जनकजा रामः स्वयं याचते
कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किञ्चित् कृतम्।
नैवञ्चेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः" ॥ (ख)

---

(च) त्याग इति। सप्तभि समुद्रैः मुद्रिता वेष्टिता या मही तस्याः निर्व्याजम् अकपटं दानम् अवधिः यस्य तथाविधं।

(क) राज्यमिति। राज्यं वसु धनं देहः भार्य्या भ्रातरः सुताश्च किं बहुना लोके जगति यत् वस्तु मम आयत्तम् अधीनं तत् सर्वं सदा धर्माय उद्यतं निरूपितमित्यर्थः मयेति शेषः। अत्र युधिष्ठिरस्य धर्मकर्मणि उत्साहः तथाविधोक्त्यादिभिरनुभावेनाक्षिप्तेन च विभावादिना आस्वादपदवीं गतः सामाजिकानां रसतया परिणमतीति बोध्यम्।

(ख) भो इति। भो लङ्केश्वर। जनकजा सीता दीयतां प्रत्यर्प्यतां रामः स्वयं याचते न तु परमुखेनेति भावः, ते तव अयं मतिविभ्रमः कः? नयं नीतिं स्मर अद्यापि किञ्चित् न कृतं मयेति शेषः, चेत् यदि एनां न, न ददासि चेदित्यर्थः, खरस्य दूषणस्य त्रिशिरसश्च कण्ठासृजा कण्ठरुधिरेण पङ्किलः लिप्त इत्यर्थः, धनुषः ज्याबन्धेन मौर्वीयोजनेन बन्धूकृतः, मम एष पत्री शरः न सहिष्यते त्वामिति शेषः। शार्दूलविक्रीडितं वृत्तम्। अत्र रामस्य युद्धे उत्साहः यथायथमुन्नापितैः विभावाद्यैः आस्वाद्यमानः रसतामापद्यते इति बोद्धव्यम्।

दयावीरो यथा जीमूतवाहनः।

"शिरामुखैः स्यन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि तवापि तावत्
किं भक्षणात् त्वं विरतो गरुत्मन्?" ॥ (ग)

एष्वपि विभावादयः पूर्वोदाहरणवदूह्याः।

अथ भयानकः।

**भयानको भयस्थायिभावः कालाधिदैवतः।**
**स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः॥**
**यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम्।**
**चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः॥**
**अनुभावोऽत्र वैवर्ण्यं गद्गदस्वरभाषणम्।**
**प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः॥**
**जुगुप्सावेगसम्मोह-**
**सन्त्रासग्लानिदीनताः।**

---

(ग) शिरामुखैरिति। जीमूतवाहनस्य स्वदेहं भक्षयन्तं गरुडं प्रत्युक्तिरियम्। हे गरुत्मन्! शिराणां मुखैः रक्तं स्यन्दत एव क्षरत्येव, अद्यापि मम देहे मांसमस्ति, तवापि तावत् तृप्तिम् उदरपूर्त्तिजनितं परितोषमित्यर्थः न पश्यामि किं कथं त्वं भक्षणात् विरतः निवृत्तः? अत्र जीमूतवाहनस्य परदुःखहरणेच्छारूपायां दयायाम् उत्साहः तत्तद्विभावानुभावसञ्चारिभिः परिपुष्टः रसतामाप्नोतीति ज्ञेयम्।

(घ) भयानकरसमाह भयेत्यादि। भयमेव स्थायिभावः यस्य तादृशः कालः यमः अधिदेवता यस्य तथोक्तः, स्त्री नीचः निकृष्टो लोकश्च प्रकृतिः प्रधानं यस्य तादृशः, कृष्णवर्णः तत्त्वविशारदैः तत्त्वज्ञैः जनैः मतः कीर्त्तितः। यस्मात् भीतिः भयम् उत्पद्यते अत्र रसे तत् आलम्बनं मतं, तस्य भयकारणस्य

शङ्कापस्मारसम्भ्रान्ति-
मृत्य्वाद्या व्यभिचारिणः ॥२३५॥ (घ)

यथा ।

"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपाम् ।
अन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ॥"

इत्यादि । (ङ)

अथ बीभत्सः ।

जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः ।
नीलवर्णो महाकालदैवतोऽयमुदाहृतः ॥
दुर्गन्धमांसपिशितमेदांस्यालम्बनं मतम् ।
तत्रैव कृमिपाताद्यमुद्दीपनमुदाहृतम् ॥ (च)
निष्ठीवनास्यवलननेत्रसङ्कोचनादयः ।

---

घोरतरा' अतिभीषणा' चेष्टा, उद्दीपनं भवेत् । अत्र रसे वैवर्ण्यं गद्गदस्वरेण भाषणं, प्रलय नष्टचित्तता, स्वेद घर्मजलं, रोमाञ्च कम्प, दिक्प्रेक्षणादयः इत-स्ततो दृष्टिपातादयश्च अनुभावा । जुगुप्साद्या मरणान्ता व्यभिचारिण. ।

(ङ) नष्टमिति । अत्र वर्षवरादीनां भयं स्थायिभाव मन्दुरातः निर्गतो वानरभयहेतुरालम्बनविभाव', तस्य उत्कम्पनादिव्यापारा उद्दीपनानि, त्रासा-दयो व्यभिचारिण, अनुभावाश्च पलायनादयः, एतैरभिव्यक्त सामाजिकानां रसतामापद्यते इति बोध्यम् ।

(च) बीभत्सरसमाह अथेत्यादि । जुगुप्सा घृणा स्थायिभाव' यस्य तादृशः रस बीभत्स. कथ्यते, अयं रस' नीलवर्ण' तथा महाकालो देवता यस्य तथोक्तः उदाहृत उक्तः । दुर्गन्धमांसानि रुधिराणि मेदांसि च आलम्बन मत, तत्र दुर्गन्धमांसादिषु एव कृमिपाताद्यम् उद्दीपनम् उदाहृत कथितम् । अन्यत् स्पष्टम् ।

अनुभावास्तत्र मता-
स्तथा स्युर्व्यभिचारिणः ॥
मोहोऽपस्मार आवेगो
व्याधिश्च मरणादयः ॥२३६॥

यथा ।

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
अन्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कात्
अङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति" ॥ (छ)

अथाद्भुतः ।

अद्भुतो विस्मयस्थायिभावो गन्धर्वदैवतः ।
पीतवर्णो वस्तु लोकातिगमालम्बनं मतम् ।

---

(छ) उदाहरति यथेत्यादि । प्रेतरङ्क प्रेताधमः प्रथम कृत्ति चर्म उत्कृत्य उत्कृत्य छित्त्वा छित्त्वा अथ अनन्तर पृथुना महता उच्छोथेन स्फीततया भूयांसि प्रचुराणि अंस स्कन्ध स्फिक् नितम्बः पृष्ठपिण्डादयः अवयवाश्च तेषु सुलभानि उग्रपूतीनि उत्कटदुर्गन्धानि मांसानि जग्ध्वा भक्षयित्वा अन्तः शवदेहाभ्यन्तरे पर्य्यस्ते पतिते नेत्रे यस्य तादृशः, तथा प्रकटिताः दशनाः दन्ताः येन तथोक्तः सन् अङ्कस्थात् उत्सङ्गनिहितात् करङ्कात् अस्थिशेषात् शवात् अस्थिसंस्थं स्थपुट-गतम् अस्थ्नो सन्धिस्थापनगतमपि क्रव्य मांसम् अव्यग्रं नि ग्रह यथा तथा अत्ति भक्षयति । अत्र तथाविधशवप्रेतौ आलम्बनविभावौ, पूतिगन्धादिकान्युद्दीपनविभावाः, तत्तदुक्तयः अनुभावाः, आक्षेपलभ्याश्च व्यभिचारिणो, यथायथम् ज्ञेयाः । एतैरभि-व्यक्तः माधवस्य जुगुप्सारूपस्थायिभावः सहृदयानां रसतया परिणमति । शार्दूलवि-क्रीडित वृत्तम् ।

(ज) अद्भुतरसमाह अथेत्यादि । विस्मयः स्थायिभावो यस्य तादृशः, गन्धर्वः देवता यस्य तादृशः, तथा पीतवर्णः रसः अद्भुतः । लोकातिगम्

गुणानां तस्य महिमा भवेदुद्दीपनं पुनः ॥ (ज)
स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसम्भ्रमाः ।
तथा नेत्रविकासाद्या अनुभावाः प्रकीर्त्तिताः ॥
वितर्कावेगसम्भ्रान्तिहर्षाद्या व्यभिचारिणः ।

यथा ।

"दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतः
टङ्कारध्वनिरार्य्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्य्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो! नाद्यापि विश्राम्यति?"॥(झ)

अथ शान्तः ।

शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः ।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ॥

---

अलौकिकं वस्तु अत्र आलम्बनं मतं, तस्य आलम्बनस्य गुणानां महिमा उद्दीपनं भवेत् । अन्यत् स्पष्टम् ।

(झ) उदाहरति यथेत्यादि । हरधनुर्भङ्गध्वनिमाकर्ण्य विस्मितस्य लक्ष्मणस्य उक्तिरियम् । दोर्दण्डाभ्यां बाहुदण्डाभ्याम् आञ्चितः आकुञ्चितः यः चन्द्रशेखरस्य हरस्य धनुर्दण्डः तस्य अवभङ्गात् खण्डनात् उद्यतः उद्गतः, आर्य्यस्य रामस्य बालचरितप्रस्तावनायां शिशुचरितप्रसङ्गे डिण्डिमः वाद्यविशेषस्वनरूपः इत्यर्थः टङ्कारध्वनिः द्राक् झटिति पर्य्यस्तेन पतितेन कपालसम्पुटेन पिधानपात्रविशेषेणेत्यर्थः मिलत् यत् ब्रह्माण्डमेव भाण्डं पात्रविशेषः तस्य उदरे अभ्यन्तरे भ्राम्यन् पिण्डितः एकत्र विस्तृतः चण्डिमा चण्डत्वं यस्य तथोक्तः सन् कथमद्यापि इदानीमपि बहुक्षणधनुर्भङ्गेऽपीति भावः न विश्राम्यति? अहो किमाश्चर्य्यमिदमित्यर्थः । शार्दूलविक्रीडितं वृत्तम् । अत्र धनुष्टङ्कारः आलम्बनं, तस्यातिदीर्घत्वमुद्दीपनं, तदुक्तिश्चानुभावः, यथायथमाक्षिप्ताश्च व्यभिचारिणः, एतैरभिव्यक्तः लक्ष्मणस्य विस्मयः सामाजिकानां रसतामेतीति बोध्यम् ।

अनित्यत्वादिनाऽशेषवस्तुनिःसारता तु या ।
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते ॥ (ञ)
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ।
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः ॥
रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः ।
निर्वेदहर्षस्मरणमतिभूतदयादयः ॥२३८॥

यथा ।

"रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासञ्च सकौतुकञ्च सदयं दृष्टस्य तैर्नागरैः ।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कं करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ?" ॥ (ट)

---

(ञ) शान्तरसमाह शमेत्यादि । शमः शान्तिरेव स्थायिभावो यस्य तथोक्तः, उत्तमा प्रकृतिः नायकः यस्य तादृशः, कुन्दं कुसुमविशेषः इन्दुश्चन्द्रश्च तद्वत् सुन्दरी छाया कान्तिर्यस्य तथाभूतः, कुन्दवर्णः चन्द्रवर्णो वेत्यर्थः, श्रीनारायणः दैवतं यस्य तथाविधः रसः शान्तः । अनित्यत्वादिना विनश्वरत्वादिना अशेषाणां वस्तूनां पदार्थानां विषयाणामित्यर्थः, या निःसारता साररहित्यं वा परमात्मस्वरूपं तस्य शान्तस्य आलम्बनमिष्यते । अन्यत् स्पष्टम् ।

(ट) उदाहरति यथेत्यादि । कस्यचित् निर्विण्णस्योक्तिरियम् । करटः काकः, कदा रथ्यायाः पथः अन्तः पथिमध्ये इत्यर्थः, चरतः भ्रमतः, धृतः गृहीतः जरन् जीर्णः कन्थायाः लवः छिन्नकन्थाखण्डं येन तथोक्तस्य, अध्वगैः पथि गच्छद्भिः तैः नागरैः नगरवासिभिः सत्रासं सकौतुकं सदयञ्च यथा तथा दृष्टस्य, मा स्पृश पिशाचोऽयमिति केषाञ्चित् भयं, किमयं क्षिप्तो इति दिदृक्षया केषाञ्चित् कौतुकम्, अहो वराकोऽसौ क्लेशमनुभवतीति केषाञ्चित् दयेति भावः । तथा निर्व्याजीकृता अकपटीकृता चित् ज्ञानमेव सुधा अमृतं तस्य रसः आस्वादनं तेन या मुत् हर्षः तया ततः ज्ञानाद्वैतपावनपरिद्धानिद्रितेन आनन्दे-

पुष्टिस्तु महाभारतादौ द्रष्टव्या।

निरहङ्काररूपत्वाद्दयावीरादिरेष नो ॥२३८॥ [ठ]

दयावीरादौ हि जीमूतवाहनादौ अन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्त्तित्वाद्याप्तेर्दर्शनादहङ्कारोपशमो न दृश्यते। शान्तस्तु सर्वप्रकारेणाहङ्कारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति। अतश्च नागानन्दे शान्तरसप्रधानत्वमपास्तम्। ननु।

"न यत्र दुःखं न सुखं न चिन्ता
न द्वेषरागौ न च काचिदिच्छा।
रसः स शान्तः कथितो मुनीन्द्रैः
सर्वेषु भावेषु शमः प्रधानः" ॥ (ड)

---

नेत्यर्थः, निद्रायमाणस्य निद्रितस्यैव बाह्यविषयेषु नाचरत इत्यर्थः, मे मम करपुटीभिक्षां करपुटस्थिता केनचित् दत्ता भिक्षाम् अन्नादिमित्यर्थः, निःशङ्क निर्भयं यथा तथा ताडनाभावादिति भावः, भिक्षुःभक्ष्यति विशेषेण हरिष्यतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्। अत्र तथाविधनिर्विसत्त्व शमरूपस्थायिभावः परमात्मध्यानेन मिथ्यारूपवस्तुनःसारताज्ञानेन आलम्बनेन यथाकदलादितेन च उद्दीपनेन तपदुक्तिरूपेणानुभावेन आक्षिप्तेन च निर्वेदादिना व्यभिचारिणा अभिव्यक्तः सामाजिकानां रसत्वेन आस्वाद्यते इति बोध्यम्।

(ठ) निरहङ्कारेति। एष शान्तरसः निरहङ्काररूपत्वात् सर्वथा अहङ्काराहित्यात् दयावीरादिर्न, ततश्च साहङ्कारा दया एव दयावीरादौ, अत्र तु न तथेति अनयोर्भेदः।

(ड) नेति। यत्र रसे न दुःखं, न सुखं, न चिन्ता न द्वेषः शत्रुनिर्य्यातनेच्छा, न रागः प्रियेष्वनुरक्तिः, न च काचित् कापि कमपि विजयमवलम्ब्येति भावः, इच्छा अभिलाषः, तथा सर्वेषु भावेषु वस्तुषु सत्सु अपीत्यर्थः, शमः शान्तिः बाह्यविषयनिवृत्तिरित्यर्थः, प्रधानः श्रेष्ठः स शान्तो रसः मुनीन्द्रैः महर्षिभिः कथितः। मोक्षावस्थाया मुक्तिदशायाम् आत्मस्वरूपापत्तिलक्षणायां

इत्यैवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात् तत्र सञ्चार्य्यादीनामभावात् कथं रसत्वम् ? इत्युच्यते ।

युक्तवियुक्तदशाया-
मवस्थितो [ढ] यः शमः स एव यतः ।
रसतामेति तदस्मिन्
सञ्चार्य्यादेः स्थितिश्च न विरुद्धा ॥२४०॥

यच्च अस्मिन् सुखाभावोऽपि उक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः । उक्तं हि ।

यच्च कामसुखं लोके यच्च दिव्यं महासुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ (ण)
सर्वाकारमहङ्काररहितत्वं व्रजन्ति चेत् ।
अत्रान्तर्भावमर्हन्ति दयावीरादयस्तदा" ॥

आदिशब्दात् धर्मवीर-दानवीरदेवताविषयरतिप्रभृतयः । तत्र देवताविषया रतिर्यथा ।

---

परमात्मस्वरूपप्राप्तिरूपायामित्यर्थः, सञ्चार्य्यादीनां निर्वेदादीनाम् असद्भावात् अस्मिनरित्यर्थः ।

(ढ) युक्तवियुक्तदशायामिति युक्तः विषयेभ्यः मनः समाकृष्य परमात्मनि संयोज्य स्थितः । वियुक्तः जितेन्द्रियः प्रायेण सिद्धिमान् तद्दशाया तादृशावस्थायामित्यर्थः ।

(ण) यच्चेति । लोके पृथिव्यां यत् कामसुखं भोगजं सुखं, यत् दिव्यं स्वर्गीयं महासुखम् एते द्वे, तृष्णाक्षयः निस्पृहता तेन यत् सुखं तस्य षोडशीं कलाम् अंशम् न अर्हतः ।

"कदा वाराणस्यामिह सुरधुनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम्।
अयि गौरीनाथ! त्रिपुरहर! शम्भो! त्रिनयन!
प्रसीदेति क्रोशन् निमिषमिव नेष्यामि दिवसान्" ॥ (त)

अथ मुनीन्द्रोऽप्याह।

वत्सलञ्च रस इति तेन स दशमो रसः।
स्फुटं चमत्कारितया वत्सलञ्च रसं विदुः।
स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम्॥
उद्दीपनानि तच्चेष्टाविद्याशौर्य्यदयादयः।
आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम्॥
पुलकानन्दवाष्पाद्या अनुभावाः प्रकीर्त्तिताः।
सञ्चारिणोऽनिष्टशङ्का हर्षगर्वादयो मताः॥
पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः॥२४१॥ [थ]

यथा।

"यदाह धात्र्या प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलीम्।

---

(त) कदेति। शैवोक्तिरियम्। कदा इह वाराणस्यां सुरधुनीरोधसि गङ्गातीरे वसन् कौपीनं वसानः परिदधानः अथ शिरसि अञ्जलिपुटं निदधानः सन्, अयि गौरीनाथ! त्रिपुरहर! शम्भो! त्रिनयन! प्रसीद प्रसन्नो भव इति क्रोशन् वदन् दिवसान् निमिषमिव नेष्यामि अतिवाहयिष्यामि। शिखरिणीवृत्तम्। अत्र भगवद्विषया रतिः, कौपीनपरिधानतः सर्वप्रकाराहङ्कारगलितत्वस्य प्रकटनेन पर्यवसानात् शमस्थायिभावः शान्तरसतामापद्यते इति बोध्यम्।

(थ) स्फुटमिति। स्फुटं सुव्यक्तम्। वत्सलता प्रियता तथा स्नेहः स्थायी। लोकमातरः ब्राह्म्यादयः। अन्यत् स्पष्टम्।

अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः" ॥ (द)

एवञ्च रसानां परस्परविरोधमाह।

आद्यः करुणबीभत्सरौद्रवीरभयानकैः।
भयानकेन करुणेनापि हास्यो विरोधभाक्।
करुणो हास्यशृङ्गाररसाभ्यामपि तादृशः॥
रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि।
भयानकेन शान्तेन तथा वीररसः स्मृतः॥
शृङ्गारवीररौद्राख्यहास्यशान्तैर्भयानकः।
शान्तस्तु वीरशृङ्गाररौद्रहास्यभयानकैः॥
शृङ्गारेण तु बीभत्स
इत्याख्याता विरोधिता ॥२४२॥ [ध]

---

(द) वत्सलरसमुदाहरति यदिति। धात्र्या उपमात्रा प्रथमम् उदितं कथितं वचः मातापित्रेत्यादिरूपं यत् आह ब्रवीति, तदीया धात्रीसम्बन्धिनीम् अङ्गुलीमवलम्ब्य आश्रित्य यत् ययौ गच्छति स्म, प्रणिपातशिक्षया एवमेवं प्रणन्तव्यमित्युपदेशेन यच्च नम्रः आनतमस्तकः अभूत्, तेन हेतुना सः अर्भकः शिशुः रघुः पितुर्दिलीपस्य मुदं हर्षं ततान विस्तारयामास। वत्सलस्थलमिदम्। अत्र दिलीपस्य स्नेहः पुत्ररूपेणालम्बनेन तदीयार्द्धस्फुटवचनेन उद्दीपनेन यथायथमाक्षिप्तेन अनुभावादिना च आस्वाद्यमानः रसतामापद्यते इति बोध्यम्।

(ध) आद्य इति। आद्यः प्रथमः रसः शृङ्गार इत्यर्थः। विरोधं भजते इति विरोधभाक् विरोधीत्यर्थः. हास्यः हास्यरसः। तादृशः विरोधभागित्यर्थः। इति इत्थं विरोधिता परस्परविरोधः आख्याता कथिता।

ख्यः शृङ्गारः । एवमन्ये समावेशप्रकारा वक्ष्यन्ते ।

कुतोऽपि कारणात् क्वापि
स्थिरतामुपयन्नपि ।
उन्मादादिर्न तु स्थायी
न पात्रे स्थैर्य्यमेति यत् ॥२४३॥ (न)

यथा विक्रमोर्वश्यां चतुर्थेऽङ्के पुरूरवस उन्मादः ।

रसभावौ तदाभासौ भावस्य प्रशमोदयौ ।
सन्धिः शबलता चेति सर्व्वेऽपि रसनाद्रसाः ॥२४४॥ (प)

रसनधर्म्मयोगित्वाद्भावादिष्वपि रसत्वमुपचारादित्यभिप्रायः ।

भावादय उच्यन्ते ।

सञ्चारिणः प्रधानानि देवादिविषया रतिः ।

(न) यत्र तु शृङ्गारादावपि उन्मादादिनेत्यादेरस्थिरीभावो दृश्यते तत्र उन्मादादीनां स्थायित्वमस्तु इत्याशङ्क्याह कुत इति । कुतः कस्मादपि कारणात् क्वापि रसे उन्मादादि स्थिरता व्यापकत्वमुपयन्नपि लभमानोऽपि न तु स्थायी नैव स्थायिपदवाच्यः, यत यस्मात् पात्रे आधारभूते नायकादौ सः स्थैर्य्यं स्थिरताम् अविनश्वरत्वमित्यर्थः न एति न प्राप्नोति । परन्तु तदपायादिति भावः, रत्यादिस्तु तिरोभूततया तिष्ठत्येवेति सुधीभिर्विभाव्यम् ।

(प) रसेति । तदाभासौ तस्य रसस्य भावस्य च आभासौ रसाभासः भावाभासश्च इत्यर्थः, भावस्य प्रशमः भावप्रशमः, भावस्य उदयः भावोदयः, सन्धिः भावसन्धिरित्यर्थः, शबलता भावशबलता इत्यर्थः, एते सर्व्वेऽपि रसनात् आस्वादनरूपगुणयोगात् रसाः गौणाः रसा इत्यर्थः उच्यन्ते इति शेषः । रसस्तु विभावादिभिरभिव्यक्तचिदानन्दचमत्काररूपतां भजते, भावादिस्तु लौकिककार्य्यकारणादिभिरिति विशेषो बोध्यः ।

(फ) सञ्चारिण इति । प्रधानानि आपाततः प्राधान्येन रत्याद्यपेक्षयेति

।उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते॥२३५(म)

"न भावहीनोऽस्ति रसो न भावो रसवर्जितः।

परस्परकृता सिद्धिरनयोः रसभावयोः"॥ (ब)

इत्युक्तदिशा परमालोचनया परमविश्रान्तिस्थानेन रसेन सहैव वर्त्तमाना अपि राजानुगतविवाहप्रवृत्तभृत्यवद् आपाततो यत्र प्राधान्येनाभिव्यक्ता व्यभिचारिणो देवमुनिगुरुनृपादिविषया रतिः उद्बुद्धमात्रा विभावादिभिरपरिपुष्टतया रसरूपतामनापद्यमानाश्च स्थायिनो भावा भावशब्दवाच्याः। तत्र व्यभिचारी यथा। "एवं वादिनि देवर्षौ" इत्यादि। अत्रावहित्था;देवविषया रतिः (भ)।

यथा मुकुन्दमालायाम्।

"दिवि वा भुवि वा ममास्तु वासो

नरके वा नरकान्तक ! प्रकामम्।

---

भावः, अभिव्यक्ताः सञ्चारिणः प्रागुक्ता निर्वेदादयः देवादिविषया रतिः अनुरागः, तथा उद्बुद्धमात्रः उद्रिक्त एव न तु विभावादिभिः परिपोषित इति भावः स्थायी रत्यादिः भाव इत्यभिधीयते। यदि चात्र देवताविषयकरतेरपि रतिरस्ति तथाप्यसौ स्थायिशब्देनोच्यते, नायिकादिविषयरत्यादेरेव स्थायिशब्देनाभिव्यक्तत्वादिति चिन्त्यम्।

(ब) नेति। रसः भावहीनः भावेन व्यभिचारिणा हीनः वर्जितः न अस्ति, तथा भावः न रसवर्जितः रसहीनः, अनयोः रसभावयोः सिद्धिः स्वरूपनिष्पत्तिः परस्परकृता परस्परेण सिद्धिं लभेते खलु एतौ इत्यर्थः। भावेन रसः पुष्यते रसोऽपि भावेनेति भावः।

(भ) प्रधानसञ्चारिरूप भावमुदाहरति एवमिति। अत्र अवहित्थाख्यसञ्चारिणः रत्यादिस्थायिनः प्राधान्येन अभिव्यक्तः भावशब्दवाच्यत्वं भवते इति ध्येयम्।

(म) दिवीति। हे नरकान्तक! नरकासुरनिसूदन! कृष्ण। दिवि स्वर्गे वा भुवि पृथिव्यां वा नरके वा मम प्रकामं सम्यक् वासः स्थितिः अस्तु

अवधीरितशारदारविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि" ॥ (म)

मुनिविषया रतिर्यथा।

"विलोकनेनैव तवाऽमुना मुने!
कृतः कृतार्थोऽस्मि निबर्हितांहसा।
तथापि शुश्रूषुरहं गरीयसी-
र्गिरोऽथवा श्रेयसि केन तृप्यते?" ॥ (य)

राजविषया रतिर्यथा मम।

"त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम्।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः" ॥ (र)

एवमन्यत।

उद्बुद्धमात्रस्थायी भावो यथा।

"हरस्तु किञ्चित्परिवृत्तधैर्य्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे विम्बफलाधरोष्ठे व्यापारयामास विलोचनानि" ॥ (ल)

---

भवतु। तव नैव मे चतिरित्याह अवेति। मरणे मृत्युकालेऽपि अवधीरितम् अवज्ञातं शारदारविन्दं शरत्कालीनकमलं याभ्यां तादृशौ ते तव चरणौ चिन्तयामि ध्यायामि।

(य) विलोकनेनेति। नारदं प्रति कृष्णस्य उक्तिरियम्। हे मुने! तव निवर्हितं निराकृतम् अंहः पापं येन तादृशेन अमुना विलोकनेन दर्शनेन कृतार्थः सिद्धमनोरथः कृतः अस्मि। तथापि विलोकनेन कृतार्थत्वेऽपीत्यर्थः, अहं गरीयसीः गुर्वर्थप्रतिपादिकाः गिरः वाचः शुश्रूषुः श्रोतुमिच्छुः, अथवा किंवा केन जनेन श्रेयसि कल्याणे तृप्यते? न केनापीत्यर्थः। वंशस्थविलं वृत्तम्।

(र) त्वदिति। हे राजन्! हरः शिवः भूरिभारभिया अत्यधिकभार-त्रासेन हेतुना शिरसा तव वाजिराजिभिः अश्वसमूहैः निर्धूतैः चिप्तैः धूलिपटलैः रजोराशिभिः पङ्किलां सञ्जातपङ्कां तां गङ्गां न धत्ते न धारयति।

(ल) हर इति। हरस्तु, चन्द्रोदये अम्बुराशिः समुद्र इव, किञ्चित् परिवृत्तं धैर्य्यं यस्य तथोक्तः ईषद् विलुप्तधैर्य्यः सन् विम्बफलवत् अधरोष्ठौ यस्य

अत्र पार्वतीविषया भगवतो रतिः। ननूक्तं "प्रपानकरसवद्विभावादीनामेकोऽवभासो रस इति" तत्र सञ्चारिणः पार्थक्याभावात् कथं प्राधान्येनाभिव्यक्तिः? इत्युच्यते।

यथा मरीचखण्डादे-
रेकीभावे प्रपानके।
उद्रेकः कस्यचित् क्वापि
तथा सञ्चारिणो रसे ॥२४६॥ (व)

अथ रसाभासभावाभासौ।

अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः॥२४७॥(श)

अनौचित्यञ्च अत्र रसानां भरतादिप्रणीतलक्षणानां सामग्रीरहितत्वे सत्येकदेशयोगित्वोपलक्षणपरं बोध्यं, तच्च बालव्युत्पत्तये (ष) एकदेशतो दर्श्यंते।

---

तादृशे उमामुखे विलोचनानि नेत्राणि व्यापारयामास साभिलाषमद्राक्षीदिति भाव। उपजाति वृत्तम्। अत्र पार्वतीविषया भगवती रति' स्थायिभावः अनुभावादिभिरपरिपुष्टतया रसतामप्राप्य स्थित इत्यस्य उद्बुद्धमात्रत्वम्। वस्तुतस्तु अत्र रति पार्वतीमुखविलोकनरूपेणानुभावेन अधरोष्ठयोर्विम्बफलसाम्यकथनरूपेण उद्दीपनविभावेन समाचितेन च वसन्तोदयेन लज्जादिना च व्यभिचारिणा परिपोषिता रसतामेतोति बोध्यम्।

(व) यथेति। यथा मरीचखण्डादे एकीभावे मिश्रणेऽपि प्रपानके पानीयद्रव्यविशेषे कस्यचित् वस्तुनः उद्रेक स्फुरण भवति तथा क्वापि रसे सञ्चारिणः कस्यचित उद्रेक. भवति इति सञ्चारिणः प्रधानानीत्युक्त ज्ञेयम्।

(श) अनौचित्येति। रसभावयोः अनौचित्यप्रवृत्तत्वे अनुचितभावेन वर्त्तमानत्वे आभास रसाभास भावाभासश्च इत्यर्थ।

(ष) सामग्रोरहितत्वे इति। सामग्री कारणकूट' तद्राहित्ये तदभावे सति एकदेशयोगित्वोपलक्षणपरम् एकदेशयोगित्व' किञ्चित् लक्षणसम्बन्ध, तदुप-

उपनायकसंस्थायां, मुनिगुरुपत्नीगतायाञ्च ।
बहुनायकविषयायां रतौ तथाऽनुभयनिष्ठायाम् ॥
प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्य्यगादिगते ।
शृङ्गारेऽनौचित्यं रौद्रे गुर्व्वादिगतकोपे ॥
शान्ते च हीननिष्ठे गुर्व्वाद्यालम्बने हास्ये ।
ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे ॥
उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र ॥२४८॥(स)

तत्र रतेरुपनायकनिष्ठत्वे यथा मम ।

"स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी
क्षोणीमावृणुते तमालमलिनच्छायातमः सन्ततिः ।

---

अवयवतीति तत्पर कियदंशे तत्तत्त्वयोग कियदंशे च अयोग इत्यर्थः । बाल-
व्युत्पत्तये बालानाम् अज्ञानां व्युत्पत्तये बोधाय ।

(स) उपनायकेति । शृङ्गारे रसे रतौ उपनायके उपपतौ तत्संस्थायां
तत्र स्थितायां मुनिगुरुपत्नीगतायां मुनिपत्नीगुरुपत्नीनिष्ठायां बहुनायकनिष्ठायाम्
अनुभयनिष्ठायां नायकगतत्वे नायिकायामसद्भावे तथा नायिकागतत्वे नायके
असद्भावे इत्यर्थः प्रतिनायकः नायकप्रतिपक्षः तद्गतायां तथा नीचपात्रतिर्य्यगा-
दिनिष्ठायाम् अनौचित्यम् उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते इति अंशस्य एतेषु
अयोगात् अन्यांशस्य योगादिति बोध्यम् । रौद्रे रसे कोपे गुर्व्वादिषु गते सति
शान्ते रसे हीननिष्ठे निकृष्टव्यक्तिनिष्ठे सति हासे रसे गुर्व्वादिरूपे आलम्बने
सति तथा वीरे रसे ब्रह्मवधादिषु अधमपात्रगते वा उत्साहे सति तथा भयानके
रसे भयस्य उत्तमपात्रगतत्वे सति अनौचित्यं ज्ञेयम् । एवमन्यत्र रसे यत् यत्
औचित्यादन्यत् तत्तदनौचित्यं बोद्धव्यमिति भावः ।

(ह) स्वामीति । हे कृष्ण ! स्वामी पतिः ममेति शेषः मुग्धतरः अतिमूढः
एतेनास्य सुरतानभिज्ञत्वं विलम्बे कोपावेगात् प्रहारशीलत्वञ्च ध्वनितम् । इदं
वनं घनं निविडम् एतेन सुरतयोग्यस्थानमेतदिति सूचितम् । अहम् एकाकिनी

तन्वे सुन्दर! मुञ्च कृष्ण! सहसा वर्त्मेति गोप्या गिरः
श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः" ॥(छ)

बहुनायकनिष्ठत्वे यथा।

"कान्तास्त एव भुवनत्रितयेऽपि मन्ये
येषां कृते सुतनु! पाण्डुरयं कपोलः" ॥ (च)

अनुभयनिष्ठत्वे यथा मालतीमाधवे नन्दनस्य मालत्याम्। "पश्चादुभयनिष्ठत्वेऽपि प्रथममेकनिष्ठत्वे रतेराभासत्वम्" इति श्रीमल्लोचनकाराः।

तत्रोदाहरणं यथा रत्नावल्याम्। सागरिकाया अन्योन्य-सन्दर्शनात् प्राक् वत्सराजे रतिः।

प्रतिनायकनिष्ठत्वे यथा। हयग्रीववधे हयग्रीवस्य जल-क्रीडावर्णने।

अधमपात्रगतत्वे यथा।

"जघनस्थलनद्धपत्रवल्ली-
गिरिमल्लीकुसुमानि कापि भिल्ली।

---

बाला एतेन मया सह स्वच्छन्दं रन्तुं युक्तमिति सूच्यते। तमालवत् मलिना छाया कान्तिर्यस्याः तादृशी तमसा तिमिराणां सन्ततिः समूहः, चौणीं पृथिवीम् आवृणुते आच्छादयति, एतेन कोऽप्यावां न पश्येदिति सूचितम्। तस्मात् हे सुन्दर! मनोहर! एतेन त्वं मे मनो हृतवान् अतस्त्वां विहाय न यन्तुं शक्नोमीति सूचितम्। वर्त्म पन्थानं मुञ्च त्यज, एतेन सन्मार्गं परनारीस्पर्शाभावरूपमाचारं त्यजेति च ध्वनितम्। इति इत्थं गोप्याः गोपनार्याः कस्याश्चित् गिरः वाचः श्रुत्वा हरिः कृष्णः तां गोपीं परिरभ्य आश्लिष्य मन्मथकलायां कामव्यापारे आसक्तः सन् वः युष्मान् पातु रक्षतु। शार्दूलविक्रीडितं वृत्तम्।

(च) कान्ता इति। हे सुतनु! शुभाङ्गि! भुवनत्रितये त एव जनाः कान्ताः रम्याः येषां कृते निमित्तम् अयं ते कपोलः पाण्डुः विरहात् मलिनश्चेति भाव-मापन्न इत्यर्थः, इत्यहं मन्ये सम्भावयामि। अत्र ते इति येषामिति च बहुनिर्देशात् अस्याः बहुनायकत्वम्।

अवचित्य गिरौ पुरो निषण्णा
स्वकचानुत्कचयाञ्चकार भर्त्तुः ॥ (क)

तिर्य्यग्गतत्वे यथा ।

"मल्लीमतल्लीषु वनान्तरेषु वल्ल्यन्तरे वल्लभमाह्वयन्ती ।
चञ्चद्विपञ्चीकलनादभङ्गी सङ्गीतमङ्गीकुरुते स्म भृङ्गी" ॥ (ख)

आदिशब्दात् तापसादयः ।

रौद्राभासो यथा ।

"रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहु-
र्मुक्त्वा कर्णमपेतभीर्धृतधनुर्वाणो हरेः पश्यतः ।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्त्तयन्
अंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्ज्जुनः" ॥ (ग)

---

(क) अवचेति । जघनस्थले नद्धा बद्धा पल्लवलता पत्रलता यया तादृशी कापि भिल्ली किराती गिरौ पर्वते गिरिमल्लीकुसुमानि कुटजपुष्पाणि, "कुटजो गिरिमल्लिका" इत्यमरः । अवचित्य पुरः समक्षं भर्त्तुरिति शेषः, निषण्णा उपविष्टा सती स्वामिना स्वकचान् निजकेशान् उत्कचयाञ्चकार बन्धयामास ।

(ख) मल्लीति । भृङ्गी भ्रमरी मल्लीभिः मल्लिकाकुसुमतरुभिः मतल्लीषु अतिप्रशस्तेषु मनोहरेषु इत्यर्थः, "मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनि" इत्यमरः । वनान्तरेषु वल्ल्यन्तरे लतामध्ये स्थितमिति शेषः, वल्लभं पतिं भ्रमरमित्यर्थः, आह्वयन्ती सती चञ्चन्त्याः स्वनन्त्याः विपञ्च्याः वीणायाः कः कलो मधुरास्फुटः नादः तस्य भङ्ग्या अनुसारेण सङ्गीतम् अङ्गीकुरुते स्म गीतवती-त्यर्थः । इन्द्रवज्रावृत्तम् ।

(ग) रक्तोत्फुल्लेति । असौ अर्ज्जुनः रक्ते उत्फुल्ले विशाले लोले चञ्चले नयने यस्य तथोक्तः, मुहुः पुनः पुनः कम्पोत्तराणि कम्पप्रधानानि अङ्गानि यस्य तादृशः सकम्प इत्यर्थः, अपेतभीः निर्भयः, धृतधनुर्वाणः गृहीतधनुःशरः, कटुकोक्तिभिः युधिष्ठिरस्य दुर्वचोभिः आध्मातः आपूरितः क्षोभित इत्यर्थः, पश्यतः हरेः श्रीकृष्णस्य । अनादरे षष्ठी, पश्यन्तं हरिम् अनादृत्य इत्यर्थः, असकृत् पुनः पुनः स्वं दोर्विक्रमं बाहुविक्रमं कीर्त्तयन् कथयन् तथा अंसास्फोटपटुः अंसस्य स्कन्धस्य

भयानकाभासो यथा।

"अशक्नुवन् सोढुमधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम्।
प्रविश्य हेमाद्रिगुहागृहान्तरं
निनाय बिभ्यद्दिवसानि कौशिकः" ॥ (घ)

स्त्रीनीचविषयमेव हि भयं रसप्रकृतिः। एवमन्यत्र।

**भावाभासो लज्जादिके**
**तु वेश्यादिविषये स्यात् ॥२४८॥ (ङ)**

स्पष्टम्।

**भावस्य शान्तावुदये सन्धिमिश्रे तयोः क्रमात्।**
**भावस्य शान्तिरुदयः सन्धिः शबलता मता२४९(च)**

---

आस्फाटे करेण ताडने पटुः तत्परः सन् युधिष्ठिरं हन्तुं प्रविष्टः स्कन्धावारमिति शेषः। एकदा कुरुपाण्डवरणयात्रायां नित्यम् अपदार्थान् कौरवान् निहनिष्यामीत्येवं स्वविक्रमं कीर्त्तयन्तं प्रतिज्ञां निर्वोढुमशक्नुवन्तञ्च अर्जुनं युधिष्ठिरः निर्भर्त्सयामास। तत् सोढुमशक्नुवन् पार्थः यो मां मदायुधं वा तिरस्कुर्यात् तमहं हनिष्यामीति पूर्वप्रतिज्ञामनुस्मृत्य पूज्यतममपि युधिष्ठिरं हन्तुं प्रवृत्त इति पौराणिकी वार्त्ता अत्रानुसन्धेया। अत्र रौद्ररसस्य स्थायिनि कोपे गुरुनिष्ठत्वेन रौद्राभासत्वं बोध्यम्। शार्दूलविक्रीडितं वृत्तम्।

(घ) अशक्नुवन्निति। कौशिकः इन्द्रः पेचक इति ध्वनिः सहस्ररश्मेः सूर्यस्येव यस्य रावणस्य दर्शनं सोढुम् अशक्नुवन् अतएव अधीरलोचनः चञ्चलदृष्टिः बिभ्यत् भयं गच्छन् सन् हेमाद्रिगुहा एव गृहं तस्य अन्तरम् अभ्यन्तरं प्रविश्य दिवसानि निनाय। वंशस्थविलं वृत्तम्। अत्र भयस्य उत्तमप्रकृतिगतत्वेन भयानकाभासत्वम्।

(ङ) भावाभासमाह भावाभास इति। लज्जादिके सञ्चारिणि वेश्यादिविषये वाराङ्गनादिनिष्ठे सति भावाभासः स्यात्। उह्यमुदाहरणम्।

(च) भावशान्त्यादीनाह भावस्येति स्पष्टम्।

क्रमेण यथा।

"सुतनु! जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित् कोप एवंविधोऽभूत्।
इति निगदति नाथे तिर्य्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित्" ॥ (क)

अत्र वाष्पमोचनेन ईर्ष्याख्यसञ्चारिभावस्य प्रशमः।

"चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते।
व्रजति रमणे निःश्वस्योच्चैः स्तनार्पितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता॥" (ज)

अत्र विषादस्योदयः।

"नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम्।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे" (झ)

---

(क) सुतन्विति। हे सुतनु! सुन्दरि! कोपं जहिहि त्यज, पादानतं मां पश्य अवलोकय, कदाचित् तव एवंविधः कोपः न खलु नैव अभूत् इति इत्थं नाथे निगदति कथयति सति तिर्य्यक् यथा तथा आमीलिते अक्षिणी यया तथाभूतया कयाचित् कान्तया अनल्पम् अधिकं नयनजलं मुक्तं त्यक्तं किञ्चित् न उक्तं कथितम्। शिखरिणीवृत्तम्।

(ज) चरणेति। चरणयोः पतनेऽपि तत्प्रत्याख्यानं निराकरणं तस्मात् हेतोः प्रसादपराङ्मुखे अप्रसन्ने इत्यर्थः, निभृतः गूढः कितवाचारः कपटाचारो यस्य तत्सम्बुद्धौ हे निभृतकितवाचार! इति उक्त्वा रुषा कोपेन परुषीकृते कठिनीकृते रमणे कान्ते व्रजति गच्छति सति कयाचित् उच्चैः निःश्वस्य स्तने स्थितः हस्तः यस्याः तथाभूतया तया सखीषु नयनसलिलच्छन्ना अश्रुपूर्णा इत्यर्थः, दृष्टिः निवेशिता अर्पिता, एतेन यौवनस्य अचिरस्थायित्वादिति पादपतनेनापि मया कान्तो निराकृत इत्यतिशयेन अनौचित्यं कृतमिति च सूचितम्। हरिणीवृत्तम्।

(झ) नयनेति। नयनयुगस्य नेत्रद्वयस्य आसेचनकम् अतिसन्तोषकरं, "तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शने" इत्यमरः। मानसवृत्त्यापि दुष्प्रापं मनो-

अत्र हर्षविषादयोः सन्धिः ।

"क्वाकार्य्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो ! कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः ! स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति" ॥(ञ)

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता ।

इति साहित्यदर्पणे रसभावादिनिरूपणो नाम
तृतीयः परिच्छेदः ।

---

यथाविषयमित्यर्थः, मदिराक्ष्याः इद रूपं मे मम हृदयं मदयति आनन्दयति, दुनोति तापयति च । नेत्रतृप्तिकरत्वेन आनन्दजनकत्वम्, अप्राप्यत्वेन तापजनकत्वमित्यत्र हर्षविषादयोः सन्धिरवधेय. ।

(ञ) भावशबलतामुदाहरति क्वेति । उर्वशीवियोगेन उन्मत्तस्य पुरूरवस उक्तिरियम् । अकार्य्यम् आत्महननरूपं क्व ? शशलक्ष्मण. चन्द्रस्य कुलञ्च क्व ? चन्द्रवंशीयोऽहं कथमात्मघाती भवामीति असदृशसमावेशसूचकं क्वद्वयमिति भाव: । सा उर्वशी भूयोऽपि पुनरपि दृश्येत दृष्टिविषयवर्त्तिनी भवेत् । दोषाणाम् अकार्य्यानुष्ठानाना प्रशमाय शान्तये मे मम श्रुतं शास्त्रज्ञान, शास्त्र ज्ञात्वा कथमहमकार्य्यं करोमीति भाव. । अहो ! आश्चर्य्यं कोपेऽपि मुखम् उर्वश्या इति शेष., कान्त मनोहरम् । अपकल्मषा अपापा कृतधियः परिणतबुद्धयः विद्वांस इत्यर्थः किं वक्ष्यन्ति ? एवमकार्य्यकारिणं मामुद्दिश्येति शेष:, मयि घृणा दर्शयिष्यन्तीति भाव: । सा उर्वशी स्वप्नेऽपि लब्धुमशक्या । हे चेत ! स्वास्थ्यम् उपैहि प्राप्नुहि सुस्थिरं भव, क खलु धन्य: पुण्यवान् युवा तरुण: पुरुष: अधरम् उर्वश्या इति शेष:, पास्यति ? शार्दूलविक्रीडितं वृत्तम् । अत्र प्रथमे पादे वितर्कौत्सुक्ये, द्वितीये पादे मतिस्मरणे, तृतीये पादे शङ्कादैन्ये, चतुर्थे धृतिचिन्ते स्थिते, तदेव बहूनामेकत्र समावेशात् शबलता वेदितव्या ।

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता
विमलाख्या साहित्यदर्पणस्य तृतीयपरिच्छेदव्याख्या समाप्ता ।

---

## चतुर्थः परिच्छेदः ।



अथ काव्यभेदमाह (क)

काव्यं ध्वनिर्गुणीभूत-
व्यङ्ग्यञ्चेति द्विधा मतम् ॥२५०॥

तत्र ।

वाच्यातिशयिनि व्यङ्गे
ध्वनिस्तत्काव्यमुत्तमम् ॥२५१॥ (ख)

वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यम् ।

भेदौ ध्वनेरपि द्वा-
वुदीरितौ लक्षणाभिधामूलौ ।
अविवक्षितवाच्योऽन्यो
विवक्षितान्यपरवाच्यश्च ॥२५२॥ (ग)

---

(क) अधुना काव्यभेदं निरूप्यते अथेति। अथ काव्यघटकरसादिनिरूपणानन्तरमित्यर्थः ।

(ख) ध्वनिमाह वाच्येति। व्यङ्गे व्यञ्जनाबोध्ये अर्थे वाच्यातिशयिनि वाच्यार्थात् अधिकचमत्कारिणि सति तत् काव्यमुत्तमं ध्वनि. कथ्यते इति शेषः । ध्वन्यते व्यज्यते इत्यर्थः। ततश्चाधिकचमत्कारि व्यङ्ग्यं काव्यं ध्वनिरिति फलितम् ।

(ग) तद्भेदावाह भेदाविति। ध्वनेरपि लक्षणाभिधामूलौ द्वौ भेदौ

तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः। लक्षणा-मूलत्वादेव अत्र वाच्यमविवक्षितं बाधितस्वरूपम् (घ)। विवक्षितान्यपरवाच्यस्तु अभिधामूलः। अतएव अत्र वाच्यं विवक्षितम्। अन्यपरं व्यङ्ग्यनिष्ठम्। अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः। यथा प्रदीपो घटस्य। अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः।

अविवक्षितवाच्यस्य भेदावाह ।

**अर्थान्तरं सङ्क्रमिते वाच्येऽत्यन्तं तिरस्कृते ।**
**अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति॥२५३(ङ)**

अविवक्षितवाच्यो नाम ध्वनिरर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्च इति द्विविधः। यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति, तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसङ्क्रमितत्वादर्थान्तरसङ्क्रमितवाच्यत्वम्।

यथा।

"कदली कदली करभः करभः
करिराजकरः करिराजकरः।

---

उदीरितौ उक्तौ, तयोरेक लक्षणामूलो ध्वनि. अविवक्षितवाच्य, अन्य द्वितीयः विवक्षितवाच्य ।

(घ) लक्षणामूलत्वात् लक्षणा मूल यस्य तस्य भाव; तस्मात् मुख्यार्थबाध-विषयिणी वृत्तिर्हि लक्षणा तन्मूलत्वात अत्र वाच्यस्य बाधितत्वमिति भाव'।

(ङ) अर्थान्तरमिति। अविवक्षितवाच्योऽपि ध्वनि वाच्ये मुख्येऽर्थे अर्थान्तर सङ्क्रमिते वा अत्यन्ततिरस्कृते सति द्वैविध्यम् ऋच्छति प्राप्नोति।

(च) कदलीति। कदली रम्भायष्टि' कदली अतिशीतेति भाव', करभ' मणिबन्धादाकनिष्ठ करस्य करभो बहिरित्यमरोक्त करभ अतिह्रस्व इति भाव', करिराजकरः हस्तिशुण्डादण्डः करिराजकर, अतिकर्कश इति भावः, अत;

भुवनत्रितयेऽपि बिभर्त्ति तुला-
मिदमूरुयुगं न चमूरुदृशः" ॥ (च)

अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्य-कदल्यादिरूपे मुख्यार्थे बाधिता जाड्यादिगुणविशिष्टकदल्यादि-रूपमर्थं बोधयन्ति, जाड्याद्यतिशयश्च (छ) व्यङ्ग्यः। यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरे परिणमति तत्र मुख्यार्थस्य अत्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम्।

यथा।

"निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते" ॥ (ज)

अत्रान्धशब्दो मुख्यार्थे बाधितोऽप्रकाशरूपमर्थं बोधयति, अप्रकाशातिशयश्च व्यङ्ग्यः। अन्धत्वाप्रकाशत्वयोः सामान्य-विशेषभावाभावान्नार्थान्तरसङ्क्रमितवाच्यत्वम्। (झ)

यथा।

"भम धम्मिअ! वीसत्थो सो सुणहो अज्ज मारिओ देण।
गोलाबरीकच्छकुञ्जवासिणा दरीअसीहेण" ॥ (ञ)

---

चमूरु' मृगविशेषः तस्येव दृशौ यस्यास्तथाभूताया इदम् ऊरुयुग भुवनत्रितयेऽपि तुला सादृश्य' न बिभर्त्ति।

(छ) जाड्याद्यतिशय' शैत्याद्यतिशय', आदिपदेन वृत्तत्वकर्कशत्वातिशयौ बोध्यौ।

(ज) निःश्वासान्ध इति। निश्वासेन अन्ध' अप्रकाशः आदर्शः दर्पण इव चन्द्रमा शशी न प्रकाशते न विराजते।

(झ) मुख्यार्थे चक्षुष्मत्ताविहीने। अन्धत्वाप्रकाशत्वयो. अन्धत्व' चक्षुष्मत्ता-राहित्यम्, अप्रकाशत्वम् अनुज्ज्वलत्व तयो. सामान्यविशेषभावाभावात् व्यापकव्याप्यत्व-भावाभावादित्यर्थं।

(ञ) भ्रम इति। भ्रम धार्मिक। विश्वस्त' स श्वाद्य मारितस्तेन। गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥ इति संस्कृतम्। आश्रमवर्त्तिन्या' कस्या-श्चित् व्यभिचारिण्या गोदावरीकच्छस्थसङ्केतस्थाने प्रत्यह पुष्पचयनेन स्वमनोरथ-

अत्र भ्रम धार्मिकेत्यतो भ्रमणस्य विधिः प्रकृतेऽनुपयुज्यमानतया भ्रमणनिषेधे पर्य्यवस्यतीति विपरीतलक्षणाशङ्का न कार्य्या। यत्र खलु विधिनिषेधावुत्पद्यमानावेव निषेधविध्योः पर्य्यवस्यतस्तत्रैव तदवसरः। यत्र पुनः प्रकरणादिपर्य्यालोचनेन विधिनिषेधयोर्निषेधविधी अवगम्येते तत्र ध्वनित्वमेव (ट)। तदुक्तम्।

"क्वचिद्बाध्यतया ख्यातिः क्वचित् ख्यातस्य बाधनम्।
पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु" ॥ (ठ)

अत्राद्ये मुख्यार्थस्यार्थान्तरे सङ्क्रमणं प्रवेशः न तु तिरोभावः, अतएव अत्र अजहत्स्वार्थलक्षणा। द्वितीये तु स्वार्थस्यात्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था।

विवक्षिताभिधेयोऽपि
द्विभेदः प्रथमं मतः।

---

सङ्केतकारिणा रूपेरितकुञ्जगोपद्रवेण अप्यनिवृत्तं धार्मिक प्रत्युक्तिरियम्। हे धार्मिक! विश्रब्धः निःशङ्कः सन् भ्रम पुष्पचयनार्थं पर्य्यट, अद्य स श्वा कुक्कुरः यस्त्वां प्रति प्रत्यहमुपद्रवतीति भावः। तेन गोदावर्य्याः कच्छः तीरं तत्र यः कुञ्जः लतादिपिहितं स्थानं तत्र वासिना दृप्तसिंहेन प्रचण्डकेशरिणा मारितः निहतः।

(ट) प्रकृते कुलटायाः स्वैरविहारे इत्यर्थः, पर्य्यवस्यति परिणमति इति शेषः। उत्पद्यमानौ उत्पत्तिं लभमानौ श्रूयमाणावेवेति भावः, निषेधविध्योः पर्य्यवस्यतः परिणमतः विधिवाक्यं श्रूयमाणमेव निषेधं निषेधवाक्यं श्रूयमाणमेव विधिं बोधयतीत्यर्थः, तत्रैव तथाविधे एव स्थले इत्यर्थः। तदवसरः विपरीतलक्षणावसरः। ध्वनित्वं अभिधामूलध्वनित्वमित्यर्थः।

(ठ) क्वचिदिति। क्वचित् बाध्यतया अनुपपन्नतया ख्यातिः आपातमात्रेण बोधः, क्वचित् ख्यातस्य उपपन्नतया प्रतीतस्य बाधनं विपरीतलक्षणा, उत्तरत्र ख्यातस्य बाधनस्थले इत्यर्थः, अभिधैव अभिधामूलध्वनिरेव इत्यर्थः।

असंलक्ष्यक्रमो यत्र
व्यङ्ग्यो लक्ष्यक्रमस्तथा ॥ २५४ ॥ (ड)

विवक्षितान्यपरवाच्योऽपि ध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः ।

तत्राद्यो रसभावादि-
रेक एवात्र गण्यते ।
एकोऽपि भेदोऽनन्तत्वात्
सङ्ख्येयस्तस्य नैव यत् ॥ २५५ ॥ (ढ)

उक्तस्वरूपो रसभावादिरसंलक्ष्यक्रमव्यङ्ग्यः । अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणकत्वात् क्रमोऽवश्यमस्ति किन्तु उत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते (ण) । एषु रसादिषु च एकस्यापि भेदस्यानन्तत्वात् सङ्ख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमेवोक्तम् । तथाहि एकस्यैव

---

(ड) विवक्षितेति । विवक्षितं वक्तुरिष्टम् अबाधितस्वरूपमित्यर्थः, अभिधेयं वाच्यं यत्र तादृशः ध्वनिः प्रथमः द्विभेदः द्विप्रकारो मतः । यत्र व्यङ्ग्यः व्यञ्जनाबोध्योऽर्थः असंलक्ष्यक्रमः न संलक्ष्यः सम्यगनुभूयमानः क्रमः पौर्वापर्यं यस्य तादृशः स असंलक्ष्यक्रमव्यङ्ग्य इत्यर्थः, यत्र लक्ष्यक्रमः व्यङ्ग्यः स संलक्ष्यक्रमव्यङ्ग्य इत्यर्थः ।

(ढ) तत्रेति । तत्र तयोर्मध्ये आद्यः [illegible] असंलक्ष्यक्रम इत्यर्थः, रसभावादिः एक एव एकविध एव अत्र ध्वनौ गण्यते [illegible] तस्य व्यङ्ग्यस्य एकोऽपि भेदः विशेषः अनन्तत्वात् अतिबाहुल्यात् न [illegible] सङ्ख्यातुं न शक्य इत्यर्थः ।

(ण) विभावादीति । विभावादीनां प्रतीतिः क्रमिकः बोधः कारणं यस्य तत्त्वात् विभावादिसमूहालम्बनज्ञानस्यैव रसत्वादिति भावः । व्यतिभेदः सम्मेलनेन भेदनं तद्वत् लाघवात् अतिशीघ्रजन्यत्वादित्यर्थः संलक्ष्यते रस इति शेषः ।

हि शृङ्गारस्य एकोऽपि सम्भोगरूपो भेदः परस्परालिङ्गनाधर-पानचुम्बनादिभेदात् प्रत्येकञ्च विभावादिवैचित्र्यात् सङ्ख्यातुमशक्यः का गणनात्र सर्वेषाम् ।

शब्दार्थोभयशक्त्युत्थे
व्यङ्ग्येऽनुस्वानसन्निभे ।
ध्वनिर्लक्ष्यक्रमव्यङ्ग्य-
स्त्रिविधः कथितो बुधैः ॥ २५६ ॥ (त)

क्रमलक्ष्यत्वादेवानुरणनरूपो यो व्यङ्ग्यस्तस्य शब्दशक्त्युद्भवत्वेन अर्थशक्त्युद्भवत्वेन शब्दार्थशक्त्युद्भवत्वेन च त्रैविध्यात् संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यम् । तत्र

वस्त्वलङ्काररूपत्वा-
च्छब्दशक्त्युद्भवो द्विधा ॥ २५७ ॥ (थ)

अलङ्कारशब्दस्य पृथगुपादानादनलङ्कारं वस्तुमात्रं गृह्यते ।

तत्र वस्तुरूपशब्दशक्त्युद्भवो व्यङ्ग्यो यथा ।

"पथिअ ! ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअपओहरं पेक्खिअ उण जइ वससि ता वससु" ॥ (द)

---

(त) लक्ष्यक्रमव्यङ्ग्यमेदं निरूपयति शब्देति । अनुस्वानं अनुरणनं तत्सन्निभे तदनुरूपे व्यङ्ग्ये शब्दार्थोभयशक्त्युत्थे शब्दशक्त्या उत्थिते अर्थशक्त्या उत्थिते उभयशक्त्या उत्थिते इत्यर्थः सति लक्ष्यक्रमव्यङ्ग्यः ध्वनिः बुधैः विद्वद्भिः त्रिविधः शब्दशक्त्युत्थः अर्थशक्त्युत्थः उभयशक्त्युत्थश्चेति त्रिविधः कथितः ।

(थ) वस्त्विति । शब्दशक्त्युद्भवः व्यङ्ग्यः वस्तुरूपत्वात् अलङ्कारत्वाच्च द्विधा भवति, ततश्च शब्दशक्त्युत्थो वस्तुध्वनिः, शब्दशक्त्युत्थोऽलङ्कारध्वनिरिति ।

(द) पथिअ इति । पथिक ! नात्र स्रस्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे । उन्नतपयोधरं प्रेक्ष्य पुनर्यदि वससि तद्वस ॥ इति संस्कृतम् ।

अत्र सत्थरादिशब्दशक्त्या (ध) यद्युपभोगक्षमोऽसि तदास्स्वेति वस्तु व्यज्यते ।

अलङ्काररूपो (न) यथा । "दुर्गालङ्घितविग्रहः" इत्यादि । अत्र प्राकरणिकस्य उमानाममहादेवीवल्लभभानुदेवनामनृपतेर्वर्णने द्वितीयार्थसूचितमप्राकरणिकस्य पार्वतीवल्लभस्य वर्णनमसम्बद्धं मा प्रसाङ्क्षीदितीश्वरभानुदेवयोरुपमानोपमेयभावः (प) कल्प्यते । तदत्र उमावल्लभ उमावल्लभ इवेत्युपमालङ्कारो व्यङ्ग्यः ।

यथा वा ।

"अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो ।
अहितः सहितः साधुयशोभिरसतामसि" ॥ (फ)

अत्रामित इत्यादावपिशब्दाभावाद्विरोधाभासो व्यङ्ग्यः । व्यङ्ग्यस्यालङ्कार्यत्वेऽपि ब्राह्मणश्रमणन्यायादलङ्कारत्वमुपचर्यते (ब) ।

---

वासार्थिनं पथिकं प्रति कस्याश्चिदुक्तिरियम् । हे पथिक ! अत्र प्रस्तरस्थले पाषाणबहुले ग्रामे मनाक् अल्पोऽपीत्यर्थः सस्तरं शय्याकटं न अस्ति प्रस्तरेष्वेव वयं स्वपिमः, नात्र अन्यः शय्याविधाननियम इति भावः । उन्नतपयोधरम् उन्नतमेघम् उन्नतस्तनामिति ध्वनि दृष्ट्वा यदि वससि तत् तदा वस ।

(ध) सत्थरादीत्यादिपदेन सत्थरशब्दः गृह्यते । प्राकृते शास्त्रे सत्थरशब्देन शास्त्रं तच्चात्र परदारगमननिषेधायकं बोध्यम् । शक्त्या सामर्थ्येन ।

(न) अलङ्काररूपः शब्दशक्त्युत्थव्यङ्ग्य इति शेषः ।

(प) मा प्रसाङ्क्षीत् प्रसक्तं मा भूदित्यर्थः ।

(फ) अमित इति । हे प्रभो ! त्वं साधुयशोभिः सत्कीर्त्तिभिः अमितः अपरिमितः अपर्य्याप्त इत्यर्थः, समितः युद्धात् प्राप्तैः लब्धैः उत्कर्षैः हर्षद लोकानन्दकर इत्यर्थः, तथा असताम् अहितः शत्रुः असि भवसि ।

(ब) ननु रसस्य प्रकर्षकतया उपमादेः यदा शोभकत्वं तदैवालङ्कारत्वम् उक-

वस्तु वालङ्कृतिर्वापि द्विधार्थः सम्भवी स्वतः।
कवेः प्रौढ़ोक्तिसिद्धो वा तन्निबद्धस्य चेति षट्॥
षड्भिस्तैर्व्यंज्यमानस्तु
वस्त्वलङ्काररूपकः।
अर्थशक्त्युद्भवो व्यङ्ग्यो
याति द्वादशभेदताम्॥ २५८॥ (भ)

---

एव निरूपयिष्यते, अत्र तु व्यङ्ग्यत्वेनास्वाद्यतया मुख्यत्वे कथमलङ्कारत्वमित्याशङ्क्याह व्यङ्ग्यस्येति ब्राह्मणेति। ब्राह्मणोऽसौ श्रमण सन्यासीति ब्राह्मणश्रमण. तस्य न्याय तस्मात सन्यासदशाया तस्य ब्राह्मणत्वाभावेऽपि यथाऽसौ ब्राह्मण इति व्यपदिश्यते तथा अलङ्कारस्यात्र व्यङ्ग्यत्वेऽपि अलङ्कारत्वव्यपदेश इति भाव।

(भ) अर्थशक्त्युत्थभेदमाह वस्त्विति। वस्तु वा अलङ्कृति वा इत्येष द्विधा द्विप्रकारोऽय स्वत सम्भवी स्वभावसिद्ध इत्यर्थ, कवे' प्रौढोक्त्या सिद्ध तथा कविनिबद्धस्य जनस्य प्रौढोक्तिसिद्ध इति षट्प्रकारो भवति। तै षडभि व्यज्यमान प्रतीयमान' वस्त्वलङ्काररूपक: वस्तुरूपो वा अलङ्काररूपो वा इत्यर्थ, अर्थशक्त्या उत्थित' व्यङ्ग्य: द्वादशभेदता याति प्राप्नोति। ततश्च स्वत सम्भविना वस्तुना व्यज्यमानो वस्तुरूपव्यङ्ग्य इत्येक। स्वत सम्भविना वस्तुना व्यज्यमानो अलङ्काररूपव्यङ्ग्य इति द्वितीय। स्वत सम्भविना अलङ्कारेण व्यज्यमानो वस्तुरूपव्यङ्ग्य इति तृतीय। स्वत सम्भविना अलङ्कारेण व्यज्यमानोऽलङ्काररूपव्यङ्ग्य इति चतुर्थ। कविप्रौढोक्तिसिद्धेन वस्तुना व्यज्यमान वस्तुरूपव्यङ्ग्य इति पञ्चम। कविप्रौढोक्तिसिद्धेन वस्तुना व्यज्यमानो अलङ्काररूपव्यङ्ग्य इति षष्ठ। कविप्रौढोक्तिसिद्धेन अलङ्कारेण व्यज्यमानो वस्तुरूपव्यङ्ग्य इति सप्तम। कविप्रौढोक्तिसिद्धेन अलङ्कारेण अलङ्काररूपव्यङ्ग्य इति अष्टम। कविनिबद्धव्यक्तिप्रौढोक्तिसिद्धेन वस्तुना व्यज्यमानो वस्तुरूपव्यङ्ग्य इति नवम। कविनिबद्धव्यक्तिप्रौढोक्तिसिद्धेन वस्तुना व्यज्यमानोऽलङ्काररूपव्यङ्ग्य इति दशम। कविनिबद्धव्यक्तिप्रौढोक्तिसिद्धेन अलङ्कारेण व्यज्यमानो वस्तुरूपव्यङ्ग्य इति एकादश। कविनिबद्धव्यक्तिप्रौढोक्तिसिद्धेन अलङ्कारेण व्यज्यमानोऽलङ्काररूपव्यङ्ग्य: द्वादश इति फलितम्।

स्वतःसम्भवी औचित्याद्बहिरपि सम्भाव्यमानः। प्रौढोक्तिसिद्धो न त्वौचित्येन। तत्र क्रमेण यथा।

"दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः॥ (स)

अनेन स्वतःसम्भविना वस्तुमात्रेण एतत्प्रतिपादिकाया भाविपरपुरुषोपभोगजनखक्षतादिगोपनरूपं वस्तुमात्रं व्यज्यते (य)।

"दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे"॥ (र)

अनेन स्वतःसम्भविना (ल) वस्तुना रवितेजसो रघुप्रतापोऽधिक इति व्यतिरेकालङ्कारो व्यज्यते।

---

(स) क्रमेणोदाहरति दृष्टिमित्यादि। कस्याश्चिन्नायिकायाः कामपि प्रतिवेशिनीं प्रत्युक्तिरियम्। हे प्रतिवेशिनि! क्षणम् इह अस्मद्गृहे दृष्टिं दास्यसि। अस्य शिशोः बालकस्य पिता मद्भर्त्ता इत्यर्थः विरसाः निःस्वादाः कौपीः कूपभवाः अपः प्रायेण न पास्यति। तत् एकाकिनी अपि इतः अस्मात् प्रदेशात् सत्वरं तमालाकुलं तमालवनवेष्टितं स्रोतः नदीमित्यर्थः, यामि गच्छामि, नीरन्ध्राः निविडाः, जरठच्छेदाः कठिनावयवाः नलग्रन्थयः नलानां तृणविशेषाणां ग्रन्थयः पर्वाणि तनुं शरीरम् आलिखन्तु खण्डयन्तु। शार्दूलविक्रीडितं वृत्तम्।

(य) अनेनेति। अनेन वाक्यार्थेन स्वतःसम्भविना स्वभावसिद्धेन औचित्यात् अकुलटाया अपि वक्तुं शक्येनेत्यर्थः। एतत् भाविपरपुरुषोपभोगरूपं वस्तु अस्याः नायिकाया वैशिष्ट्याद् बोद्धव्यम्।

(र) दिशीति। दक्षिणस्यां दिशि रवेः सूर्यस्यापि तेजः मन्दायते मन्दीभवति, पाण्ड्याः तदाख्यक्षत्रियभेदाः तस्यामेव दक्षिणस्यामेव दिशि रघोः प्रतापं दण्डजं तेजः, "स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्" इत्यमरः। न विषेहिरे न सोढुं शक्ता इत्यर्थः।

"आपतन्तममुं दूरादूरीकृतपराक्रमः।
बलोऽवलोकयामास मातङ्गमिव केसरी" ॥ (व)

अत्र उपमालङ्काररूपेण स्वतःसम्भविना (श) व्यञ्जकार्थेन बलदेवः क्षणेनैव वेणुदारिणः क्षयं करिष्यतीति वस्तु व्यज्यते।

"गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम्" ॥ (ष)

अत्र स्वतःसम्भविना विरोधालङ्कारेणाधरो निर्दष्टः शत्रवो व्यापादिताश्च इति समुच्चयालङ्कारो व्यङ्ग्यः।

"सज्जेइ सुरहिमासो ण आपणेइ जुअइजणलक्खसहे।
अहिणअसहआरसुहे णअपल्लवपत्तले अणङ्गस्स सरे" ॥ (स)

---

(ल) स्वतःसम्भविना दक्षिणायनप्रभावात् अवश्यम्भाविनेत्यर्थः वस्तुना रवितेजसो मन्दीभावेनेत्यर्थ।

(व) आपतन्तमिति। उरीकृत. अवलम्बित, पराक्रम, येन तथोक्तः पराक्रमितुमुद्यत इत्यर्थ, बल हलधर, केशरी सिंह मातङ्ग गजमिव, दूरात् आपतन्तम् आगच्छन्तम् अमु वेणुदारिणम् अवलोकयामास।

(श) स्वत सम्भविना लोकप्रसिद्ध न।

(ष) गाढेति। य युधि युद्धे निजाधर निर्दशन् सन् रुषा क्रोधा अरिवधूजनस्य ओष्ठ एव विद्रुमस्य प्रवालस्य दलानि तानि गाढं यत् कान्ताना दशनक्षत दन्तदंशनक्षत तेन या व्यथा सा सङ्कट विपत तस्मात अमोचयत् मुक्तानि अकरोत, निजौष्टदशनेन शत्रुनारीणा निहतस्वामिकत्वात् तासा सुरतकालकदशनक्षताभावादित्यर्थ.। अधरदशनेन व्यथा एव जायते न तु तन्मोचनमित्यापाततो विरोध।

(स) सज्जेइ इति। सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यसहान्। अभिनवसहकारमुखान् नवपल्लवपत्रलाननङ्गशरान्॥ इति संस्कृतम्। सुरभिमासः वसन्तमासः, युवतिजना एव लक्ष्याणि तत्सहान् तदुपयुक्तान्, अभिनव नूतन 'रसाल' सहकार' आम्रः मुखम् आदिर्येषा तान्, नवपल्लव एव पत्र पक्षः तत् लाति गृह्णन्तीति तथोक्तान्, अनङ्गशरान् सज्जयति प्रस्तुतान्

अत्र वसन्तः शरकारः कामो धन्वी युवतयो लक्ष्यं पुष्पाणि शरा इति कविप्रौढोक्तिसिद्धं वस्तु प्रकाशीभवन्मदनविजृम्भणरूपं वस्तु व्यनक्ति।

"रजनीषु विमलभानोः करजालेन प्रकाशितं वीर।
धवलयति भुवनमण्डलमखिलं तव कीर्त्तिसन्ततिः सततम्" ॥ (ङ)

अत्र कविप्रौढोक्तिसिद्धेन वस्तुना कीर्त्तिसन्ततेश्चन्द्रकरजालादधिककालप्रकाशकत्वेन व्यतिरेकालङ्कारो व्यङ्ग्यः।

"दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः।
मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुबिन्दवः" ॥ (च)

अत्र कविप्रौढोक्तिसिद्धेनापह्नुत्यलङ्कारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते।

"धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं
हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः।

---

करोति न वा नैव अर्पयति अनङ्गाग्नि [illegible]। मदनविजृम्भणरूपं कामस्य विशेषेण वर्द्धनरूपं व्यनक्ति प्रकटयति। एतच्च सदसद्वोपमाति कविप्रौढोक्तिसिद्धत्वं बोध्यम्।

(ङ) रजनीष्विति। हे वीर! रजनीषु रात्रिषु विमलभानोः श्वेतकिरणस्य चन्द्रस्य करजालेन किरणसमूहेन प्रकाशितम् अखिलं समग्रं भुवनमण्डलं तव कीर्त्तिसन्ततिः यशोराशिः सततं दिवारात्रिरित्यर्थः धवलयति प्रकाशयतीत्यर्थः। अत्र वस्तुना दिवारात्रं सम कीर्त्तिसन्ततीना विराजनेन इत्यर्थः।

(च) दशाननेति। ततक्षणं रामजन्मक्षणे इत्यर्थः, राक्षसानां श्रियः लक्ष्म्याः अश्रुबिन्दवः दशाननस्य रावणस्य किरीटेभ्यः मुकुटेभ्यः मणिव्याजेन रत्नपतननिमित्तेन पृथिव्यां पर्य्यस्ताः पतिताः, रावणमुकुटेभ्यः रत्नानि पेतुरित्यर्थः। अत्रापह्नुत्यलङ्कारस्य अवास्तवत्वेन कविप्रौढोक्तिसिद्धत्वमिति भावः। तेन च भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते प्रतीयते।

(छ) धम्मिल्ले इति। हे विक्रमिन्द्रभूमितिलक! एकोऽपि तव कीर्त्ति-

एकोऽपि त्रिकलिङ्गभूमितिलक। त्वत्कीर्त्तिराशिर्ययौ
नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे'' ॥ (क)

अत्र कविप्रौढोक्तिसिद्धेन रूपकालङ्कारेण "भूमिष्ठोऽपि स्वर्गस्थानामुपकारं करोषि'' इति विभावनालङ्कारो व्यज्यते।

"शिखरिणि क्व नु नाम कियच्चिरं
किमभिधानमसावकरोत् तपः।
सुमुखि! येन तवाधरपाटलं
दशति बिम्बफलं शुकशावकः'' ॥ (ख)

अत्र अनेन कविनिबद्धस्य कस्यचित् कामिनः प्रौढोक्तिसिद्धेन वस्तुना तवाधरः पुण्यातिशयलभ्य इति वस्तु प्रतीयते।

"सुभगे! कोटिसङ्ख्यत्वमुपेत्य मदनाशुगैः।
वसन्ते पञ्चता त्यक्ता पञ्चतासीद्वियोगिनाम्'' ॥ (ग)

---

राशिः यशःपुञ्जः पुरन्दरपुरी अमरावती तत्र स्थिता या वामभ्रुवः सुन्दर्यः तासां विग्रहे शरीरे नानामण्डनतां विविधालङ्कारत्वं ययौ प्राप। तथाहि धम्मिल्ले संयतकेशे, "धम्मिल्लः संयताः कचाः'' इत्यमरः। नवमल्लिकानां समुदयः समूहः, हस्ते सितं शुभ्रम् कम्बुकं, कण्ठतटे हारः, पयोधरयुगे स्तनद्वये घनः सान्द्रः श्रीखण्डलेपः चन्दनविलेपनं, सञ्जातः तव कीर्त्तिराशिरिति भावः। शार्दूलविक्रीडितं वृत्तम्। अत्र कीर्त्तिराशेरन्यस्य कविसमयसिद्धत्वात् नवमल्लिकादितादात्म्येन अध्यवसायात् रूपकालङ्कारः। स्वर्गोपरिस्थितेन स्वर्गस्थानामुपकारकर्तुः तदभावेऽपि तान् यशोदिना उपकरोषीति विभावनेति भावः।

(ख) शिखरिणीति। हे सुमुखि! असौ शुकशावकः क्व नु खलु शिखरिणि पर्वते चिरं कियत् किमभिधानं किमाख्यं तपः अकरोत् अनुष्ठितवान् नाम सम्भावनायां सम्भाव्यते इदं सर्वमिति भावः, येन तव अधरवत् पाटलं रक्तं बिम्बफलं दशति। द्रुतविलम्बितं वृत्तं, "द्रुतविलम्बितमाह नभौ भरौ'' इति लक्षणात्।

(ग) सुभगे इति। हे सुभगे! वसन्ते मदनाशुगैः कामशरैः कोटिसङ्ख्यत्वम् असङ्ख्यत्वमित्यर्थः, उपेत्य प्राप्य पञ्चता पञ्चसङ्ख्याकत्वमित्यर्थः त्यक्ता, सा तु पञ्चता वियोगिनां विरहिणाम् आसीत् विरहिणः कामशरार्त्ता मृता इति भावः।

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन कामशराणां कोटिसङ्ख्यत्वप्राप्त्या निखिलवियोगिमरणेन वस्तुना शराणां पञ्चता शरान् विमुच्य वियोगिनः श्रितेत्युत्प्रेक्षालङ्कारो व्यज्यते।

"मल्लिकामुकुले चण्डि! भाति गुञ्जन् मधुव्रतः।
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव" ॥ (घ)

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन उत्प्रेक्षालङ्कारेण कामस्य अयमुन्मादकः कालः प्राप्तस्तत् कथं "मानिनि। मानं न मुञ्चसि" इति वस्तु व्यज्यते।

"महिलासहस्सभरिए तुह हिअए सुहअ। सा अमाअन्ती।
अणुदिणमणण्णकम्मा अङ्गं तणुअं पि तणुएइ" ॥

अत्र "अमाअन्ती" इति कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्त्तते इति विशेषोक्त्यलङ्कारो व्यज्यते। न खलु कवेः कविनिबद्धस्येव रागाद्याविष्टता। अतः कविनिबद्धवक्तृप्रौढोक्तिः कविप्रौढोक्तेरधिकं सहृदयचमत्कारिणीति पृथक् प्रतिपादिता।

---

(घ) मल्लिकेति। हे चण्डि! कोपने! मल्लिकामुकुले गुञ्जन् मधुव्रतः भ्रमरः पञ्चबाणस्य कामस्य प्रयाणे विजययात्रायां शङ्खम् आपूरयन्निव भाति राजते। मल्लिकामुकुले भाति गुञ्जन्मत्तमधुव्रत इति पाठं केचिदाहुः। तन्मते मधुव्रतस्य मत्तेति विशेषणस्य अयमभिप्रायः यत् शङ्खापूरणे कर्त्तव्ये शङ्खस्य मार्गदेशमेव मुखेन पूर्य्यते, अनेन तु सम्मुखभाग इति स्थिते मधुकरस्य तद्विपर्य्ययादिति।

(ङ) महिलेति। महिलासहस्रभरिते तव हृदये सुभग! सा अमान्ती। अनुदिनमनन्यकर्मा अङ्गं तनुमपि तनूकरोति॥ इति संस्कृतम्। दूत्या नायकं प्रत्युक्तिरियम्। हे सुभग! सा तव कान्ता महिलानां नारीणां सहस्रेण भरिते पूरिते, एतेन स्थानाभावः सूचितः। तव हृदये अमान्ती अवकाशमलभमाना इत्यर्थः अनुदिनं निरन्तरम् अनन्यकर्मा त्यक्तकार्य्यान्तरा सती तनु कृशमपि

एषु च अलङ्कृतिव्यञ्जनस्थले रूपेणोत्प्रेक्षणव्यतिरेचनादिमात्रस्य प्राधान्यं सहृदयसंवेद्यं न तु रूप्यादीनामित्यलङ्कृतेरेव मुख्यत्वम् (ङ) ।

एकः शब्दार्थशक्त्युत्थे ॥ २५९ ॥ (च)

उभयशक्त्युद्भवे व्यङ्ग्ये एको ध्वनिर्भेदः ।

यथा ।

"हिममुक्तचन्द्ररुचिरः सपद्मको
मदयन् द्विजान् जनितमीनकेतनः ।
अभवत् प्रसादितसुरो महोत्सवः
प्रमदाजनस्य स चिराय माधवः" ॥ (छ)

---

अङ्ग तनूकरोति कृशीकरोति, तनो' काश्यातिशये यदि स्थान प्राप्नुयादिति भाव । तव विरहे सा निरा कृशा जाता तदेनामनुगृहाणेति भाव. । तनो' शरीरस्य तनूकरणेऽपि कृशीकरणेऽपीत्यर्थं । रागाद्याविष्टता प्रणयिता इत्यर्थः । प्रतिपादिता गृहीता । एषु चादयभेदेषु मध्ये अलङ्कृतिव्यञ्जनस्थले यत्रालङ्कारो व्यञ्जकस्तत्रेत्यर्थ । सहृदयसंवेद्य सामाजिकगम्यम् । रूप्यादीनाम् आरोप्यमाणाना नवमल्लिकासमुदयप्रभृतीनामित्यर्थं ।

(च) एक इति । शब्दार्थशक्त्युत्थे शब्दार्थयो शक्त्यो सामर्थ्येन उत्थे उत्पन्ने व्यङ्ग्ये एक भेद इति शेष । शब्दार्थोभयशक्त्युत्थ संलक्ष्यक्रमव्यङ्ग्यएकभेद एवेत्यर्थ ।

(छ) हिमेति । हिममुक्त हिमावरणशून्य इत्यर्थ यश्चन्द्र तद्वत् रुचिर' मनोहर अन्यत्र तेन रुचिर, पद्मया लक्ष्म्या सह वर्त्तमान सपद्मक. अन्यत्र पद्मयुक्त', द्विजान् ब्राह्मणान् अन्यत्र पक्षिण मदयन् हर्षयन् जनित उत्पादित' मीनकेतन काम प्रद्युम्न इत्यर्थ येन तथोक्त अन्यत्र कामवर्द्धन, प्रसादिता' अनुगृहीता' सुरा देवा येन स दैत्यविध्वंसनादिनेति भाव:, अन्यत्र प्रसादिता. विमलीकृता. सुरा मद्यानि यस्मिन् तथाविध', स माधव कृष्ण: अन्यत्र वसन्त, चिराय प्रमदाजनस्य नारीजनस्य महोत्सव: महानन्दस्वरूप अभवत् । मञ्जुभाषिणीवृत्तम्, "सजसा जगौ च यदि मञ्जुभाषिणी" इति तल्लक्षणात् ।

अत्र माधवः कृष्णो माधवो वसन्त इवेत्युपमालङ्कारो व्यङ्ग्यः। एवञ्च व्यङ्ग्यभेदादेव व्यञ्जकानां काव्यानां भेदः। (ज)

तदष्टादशधा ध्वनिः ॥२६०॥

अविवक्षितवाच्योऽर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्च इति द्विविधः। विवक्षितान्यपरवाच्यस्तु असंलक्ष्यक्रमव्यङ्ग्यत्वेनैकः। संलक्ष्यक्रमव्यङ्ग्यवाच्यत्वेन च शब्दार्थोभयशक्तिमूलतया पञ्चदशेति (झ) अष्टादशभेदो ध्वनिः। एषु च (ञ)।

वाक्ये शब्दार्थशक्त्युत्थ-
स्तदन्ये पदवाक्ययोः ॥२६१॥ (ट)

तत्र अर्थान्तरसङ्क्रमितवाच्यो ध्वनिः पदगतो यथा।

"धन्यः स एव तरुणो नयने तस्यैव नयने च।
युवजनमोहनविद्या भवितेयं यस्य सम्मुखे सुमुखी"॥ (ठ)

अत्र द्वितीयनयनशब्दो भाग्यवत्तादिगुणविशिष्टनयनपरः।

(ज) एवञ्चेति उक्तरीत्या इत्यर्थः व्यङ्ग्यभेदात् व्यङ्ग्यस्य व्यञ्जनाजन्यबोधविषयस्य अर्थस्य भेदात् पार्थक्यात्। व्यञ्जयन्तीति व्यञ्जकानि तेषाम्।

(झ) शब्दार्थोभयशक्तिमूलतया पञ्चदशेति वस्त्वलङ्कारमूलत्वात् शब्दशक्तिमूलौ द्वौ, अर्थशक्तिमूला अनन्तरोक्ता द्वादश, उभयशक्तिमूल एक इति पञ्चदशधा।

(ञ) एषु अष्टादशसु भेदेषु मध्ये इत्यर्थः।

(ट) वाक्ये इति। शब्दार्थोभयशक्त्युत्थो ध्वनिः वाक्ये केवलं वाक्यगत इत्यर्थः तदन्ये तस्मादन्ये सप्तदश भेदाः पदवाक्ययोः पदगता वाक्यगताश्च। ततश्च उभयशक्तिजो भेद एक एव अन्ये सप्तदश पदवाक्यगतत्वेन द्विविधत्वात् चतुस्त्रिंशत् मिलित्वा पञ्चत्रिंशद् भेदा इति बोध्यम्।

(ठ) धन्य इति। स एव तरुणः युवा धन्यः पुण्यवानित्यर्थः, तस्यैव नयने नयने च, इयं युवजनमोहनविद्या सुमुखी यस्य सम्मुखे भविता स्थास्यतीत्यर्थः।

वाक्यगतो यथा।

"त्वामस्मि वच्मि विदुषां समुदायोऽत्र तिष्ठति।
आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत्" ॥ (ड)

अत्र प्रतिपाद्यस्य सम्मुखीनत्वादेव लब्धे प्रतिपाद्यत्वे "त्वाम्" इति पुनर्वचनमन्यव्यावृत्तिविशिष्टं (ढ) त्वदर्थं लक्षयति। एवं वच्मीत्यनेनैव कर्त्तरि लब्धे "अस्मि" इति पुनर्वचनमन्यव्यावृत्तिविशिष्टं मदर्थं लक्षयति। तथा "विदुषां समुदायः" इत्यादिवचनेनैव वक्तुः प्रतिपादने सिद्धे पुनः "वच्मि" इति वचनम् "उपदिशामि" इति वचनविशेषरूपमर्थं लक्षयति। एतानि च लक्षितानि स्वातिशयं व्यञ्जयन्ति। एतेन मम वचनं तवात्यन्तं हितं तदवश्यमेतत् कर्त्तव्यमित्यभिप्रायः। तदेवमयं वाक्यगतोऽर्थान्तरसङ्क्रमितवाच्यो ध्वनिः। अत्यन्ततिरस्कृतवाच्यः पदगतो यथा। "निःश्वासान्ध इव" इत्यादि। वाक्यगतो यथा। "उपकृतं बहु तत्र" इत्यादि, अन्येषां वाक्यगतत्वे उदाहृतम्।

पदगतत्वे यथा।

"लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः।
तदा सुधास्पदमभूदधुना तु ज्वरो महान्" ॥ (ण)

---

(ड) त्वामिति। अमीराज्यम अहमित्यर्थं त्वा वच्मि ब्रवीमि, अत्र विदुषां समवायः सङ्घः तिष्ठति, तत् तस्मात् आत्मीयाम् आत्मने हिता मतिम् आदाय आश्रित्य इत्यर्थः अत्र [illegible] कुरु।

(ढ) अन्यव्यावृत्तिविशिष्टं त्वां लक्षयति न तु अन्यमिति भावः। अन्यव्यावृत्तिविशिष्टमिति अहमेव नान्य इति भावः।

(ण) लावण्यमिति। कस्याश्चिद् वियोगिन उक्तिरियम्। तत् लावण्यम् अङ्गप्रभाविशेषः, असौ कान्तिः औज्ज्वल्यम्, तत् रूपं सौन्दर्य्यं, स वयसा क्रमः परिपाटी भङ्गीत्यर्थः, तदा तस्मिन् काले अविरहे इत्यर्थः सुधास्पदम् अमृत-

अत्र लावण्यादीनां तादृगनुभवैकगोचरताव्यञ्जकानां तदादिशब्दानामेव प्राधान्यम्। अन्येषान्तु तदुपकारित्वमेवेति तन्मूल एव ध्वनिव्यपदेशः। तदुक्तं ध्वनिकृता।

"एकावयवसंस्थेन भूषणेनेव कामिनी।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती" ॥ (त)

एवं भावादिष्वपि ऊह्यम् (थ)।

"भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः" ॥ (द)

अत्र सदागमशब्दः सन्निहितमुपनायकं प्रति सच्छास्त्रार्थमभिधाय "सतः पुरुषस्यागमः" इति वस्तु व्यनक्ति। ननु

---

प्रावम् अभूत्। अधुना तु विरहे इत्यर्थः, महान् ज्वरः व्याधिः तत्तत्स्मरणस्य अतीवसन्तापकत्वादिति भावः।

(त) ध्वनिव्यपदेशः ध्वनिसंज्ञा। यदि च तत्तत्पदानाम् अपरपदसाहाय्यकं विना व्यञ्जकत्वं नोपपद्यते अतो वाक्यगत एव ध्वनिर्वास्तव, तथापि प्राचीनमतमनुसृत्य तथोक्तं ग्रन्थकृता। तत्र प्राचीनसंवादं प्रमाणत्वेनाह एकेति। एकावयवसंस्थेन एकाङ्गस्थितेन भूषणेन अलङ्कारेण कामिनीव पदद्योत्येन पदप्रकाश्येन ध्वनिना व्यङ्ग्येन सुकवेः भारती वाणी भाति राजते।

(थ) एवं भावादिष्वपीति। तथा रसरूपासंलक्ष्यक्रमव्यङ्ग्यानि काव्यान्युदाहृतानि तथा भावरूपासंलक्ष्यक्रमव्यङ्ग्यानामपि उदाहरणानि मृग्याणीति भावः।

(द) भुक्तीति। जनसन्निधावुपनायके आगते शास्त्रप्रशंसाव्याजेन हर्षं सूचयन्त्याः कस्याश्चिदुक्तिरियम्। भुक्तिं भोगं स्वर्गादिसुखमित्यर्थः, मुक्तिरपवर्गः तयोः कृत् प्रदायक इत्यर्थः, अन्यत्र भुक्तिः सुरतसुखसम्भोगः मुक्तिः गृहकर्मत्यागः, तयोः कर्त्ता। एकान्ते निर्जने समादेशने बन्धोपदेशे तत्परः निर्जनोपासनाया एव आत्मीयत्वादिति भावः, अन्यत्र एकान्ते जनशून्यसङ्केतस्थाने समादेशने स्थित्यनुमतौ तत्परः, सदागमः सच्छास्त्रम् अन्यत्र सत्पुरुषस्य भवादृशस्य आगमः उपस्थितिः कस्य जनस्य आनन्दनिस्यन्दम् आनन्दातिशयं न विदधाति करोति अपि तु सर्वस्यैवेति।

"सदागमः सदागमः इव" इति न कथमुपमा ध्वनिः । सदागमशब्दार्थयोरुपमानोपमेयभावाविवक्षणाद् रहस्यसङ्गोपनार्थमेव हि द्व्यर्थपदप्रतिपादनं, प्रकरणादिपर्य्यालोचनेन च सच्छास्त्राभिधानस्य असम्बन्धत्वात् (ध) ।

"अनन्यसाधारणधीर्धृताखिलवसुन्धरः ।
राजति कोऽपि जगति स राजा पुरुषोत्तमः" ॥ (न)

अत्र पुरुषश्रेष्ठः पुरुषोत्तम इवेत्युपमाध्वनिः । अनयोः शब्दशक्तिमूलौ संलक्ष्यक्रमभेदौ ।

"सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः ।
आश्चर्य्यं तव सौकुमार्य्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति तेनासितुम्" ॥ (प)

---

(ध) सदागमेति । सदागमशब्दार्थयोः सच्छास्त्रसत्पुरुषयोः उपमानोपमेयभावस्य अविवक्षणात् वक्तुमनभिलाषात् द्व्यर्थपदप्रयोगस्य रहस्यगोपनार्थताया एव विवक्षितत्वादिति भावः । अत्र शब्दशक्तिमूलो वस्तुध्वनि ।

(न) अनन्येति । न अन्यथा साधारणी धीर्यस्य तादृश, धृता पालिता हर्षेनोद्धृता च वसुन्धरा पृथ्वी येन तथाविध. स पुरुषोत्तम पुरुषश्रेष्ठ' कोऽपि राजा जयति । अत्र पुरुषोत्तमपदस्यैव प्राधान्यमिति पदद्योत्य उपमाध्वनिरिति बोध्यम् ।

(प) सायमिति । पथि उपनायकेन भुक्ता स्नातागता सखी प्रति कस्याश्चिदुक्तिरियम् । साय सन्ध्याकाले स्नानम् उपासितं कृतं मलयजेन चन्दनेन अङ्ग समालेपितम्, एतेन अध्वक्लान्तिपरिहार सूचित । अम्बरमणि. सूर्य्य अस्ताचलचूडा यातः । अतः अत्र मत्समीपे इत्यर्थ. विस्रब्ध नि शङ्क स्वच्छन्दमित्यर्थ' यथा तथा आगति, आगमन साय सूर्य्यस्य अस्तगतत्वात् आतपक्लेशोऽपि नास्तीति सूचितम् । तथापि तव सौकुमार्य्यं मार्दवम् आश्चर्य्यम् अद्भुतम् अनन्यसाधारणमित्यर्थ. येन सौकुमार्य्येण हेतुना अधुना अभितः सर्वथा क्लान्तासि अतस्तव नेत्रद्वन्द्व नयनयुगलम् अमीलनव्यतिकर नास्ति मीलनस्य सङ्कोचनस्य

अत्र स्वतःसम्भविना वस्तुना कृतपरपुरुषपरिचया स्नाताऽसीति वस्तु व्यज्यते । तच्च अधुना क्लान्ताऽसि न तु पूर्वं कदाचिदपि तव एवंविधः क्लमो दृष्टः इति बोधयतोऽधुना पदस्य एवेतरपदार्थोत्कर्षादधुना पदस्यैव पदान्तरापेक्षया वैशिष्ट्यम् (फ) ।

"तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥
चिन्तयन्ती जगत्सूतिं परं ब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका" ॥ (ब)

अत्र अशेषचयपदप्रभावादनेकजन्मसहस्रभोग्यदुष्कृत-सुकृतफलराशितादात्म्याध्यवसिततया भगवद्विरहदुःखचिन्ता-

---

व्यतिकरः सम्बन्धः यस्मिन् तत् यथा तथा आसितुम् अवस्थातुं न शक्नोति न पारयति । शार्दूलविक्रीडितं वृत्तम् ।

(फ) अत्रेत्यादि । स्वतःसम्भविना स्वभावतः सम्भवितुं योग्येन वस्तुना वाक्यार्थरूपेण । तच्च व्यङ्ग्यमित्यर्थः. इतरपदार्थोत्कर्षात् अपरपदार्थानामुत्कर्षं अपेक्ष्य इत्यर्थः । अत्र अधुना पदार्थप्रधानेन वाक्यार्थेन तत्तत्पदानामपि व्यञ्जकत्वं तथा च सायन्तनस्नाननिमित्तान्तरानुपलब्धेः अचिरागमनमेव परपुरुष-संसर्गं मलयजलेपनं तत्सम्भोगगोपनं सूर्य्यास्तगमनञ्च अन्यविधभोगलक्षणादर्शनं प्रत्याययतीति बोध्यम् ।

(ब) तदिति । रासोत्सवे गुरुजनोपरोधेन कृष्णसमीपं गन्तुमशक्ताया अपि गोपकन्याया मुक्तिलाभवर्णनमिदम् । तस्य कृष्णस्य अप्राप्तिः अलाभ एव महादुःखं तेन विलीनानि अशेषाणि पातकानि यस्याः सा दुःखभोगोऽपि पापफलं तद्भोगेनैव पापध्वंसोऽभूदिति भावः । तस्य कृष्णस्य या चिन्ता ध्यानं तया च विपुलः महान् आह्लादः सुखं तेन क्षीणाः पुण्यानां चयाः समूहाः यस्याः तथोक्ता, सुखभोगो हि पुण्यफलं तद्भोगेनैव पुण्यक्षयोऽभूदिति भावः । जगतां सूतिः उत्पत्तिः यस्मात् तं परब्रह्मस्वरूपिणं परमात्मरूपं कृष्णं चिन्तयन्ती ध्यायन्ती अन्या गुरुजनोपरुद्धा इत्यर्थः, गोपकन्यका निरुच्छ्वासतया निरुद्धप्राणतया मुक्तिं गता । मुक्तिं प्रति ब्रह्मज्ञानं पापपुण्यक्षयसहकृतस्यैव हेतुत्वादिति भावः ।

ह्लादयोः प्रत्यायनमित्यतिशयोक्तिद्वयप्रतीतिरश्लेषचयपदद्वयद्योत्या। अत्र च व्यञ्जकस्य प्रौढ़ोक्तिमन्तरेणापि (भ) सम्भवात् स्वतःसम्भविता।

"पश्यन्त्यसङ्ख्यपथगां त्वद्दानजलवाहिनीम्।
देव! त्रिपथगात्मानं गोपयत्युग्रमूर्द्धनि" ॥ (म)

इदं मम। अत्र "पश्यन्ती" इति कविप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण न केऽप्यन्ये दातारस्तव सदृशा इति व्यतिरेकालङ्कारोऽसङ्ख्यपदद्योत्यः। एवमन्येषु अप्यर्थशक्तिमूलसंलक्ष्यक्रमभेदेषु उदाहार्य्यम्। तदेव ध्वनेः पूर्वोक्तेषु अष्टादशसु भेदेषु मध्ये शब्दार्थशक्त्युत्थो व्यङ्ग्यो वाक्यमात्रे भवन्नेकः। अन्ये पुनः सप्तदश, वाक्ये पदे चेति चतुस्त्रिंशदिति पञ्चत्रिंशद्भेदाः।

प्रबन्धेऽपि मतो धीरै-
रर्थशक्त्युद्भवो ध्वनिः ॥२६२॥ (य)

---

(भ) अत्राश्लेषेत्यादि। तादात्म्याध्यवसिततया अभेदाध्यवसायेन इत्यर्थः. तथा च भगवद्भिरकुत्रमशेषपापफल भगवच्चिन्ताह्लाद अशेषपुण्यफलसिद्धिप्रतीतिरतिशयोक्तिप्रयोजिकेति बोध्य, सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते इति वक्ष्यमाणत्वात ध्येयम्। व्यञ्जकस्य द्योतकस्य वाक्यस्य प्रौढोक्तिं कवेरीरित श्लेष अन्तरेण विना।

(म) पश्यन्तीति। हे देव। त्रिपथगा गङ्गा तव दानजलवाहिनीम् असङ्ख्यपथगां बहुमार्गगामिनी पश्यन्ती आत्मानम् उग्रस्य हरस्य मूर्द्धनि शिरसि गोपायति। काव्यलिङ्गालङ्कारेण हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति लक्षणोक्तेन पश्यन्तीति हेतुगर्भविशेषणरूपेण इत्यर्थः।

(य) प्रबन्धे इति। अर्थशक्त्युद्भवः ध्वनिः धीरैः विद्वद्भिः प्रबन्धे महावाक्येऽपि मतः कथितः। ततश्च पञ्चत्रिंशद्भेदाः पूर्वोक्ताः प्रबन्धगतश्च द्वादशेति मिलित्वा सप्तचत्वारिंशद्भेदा इति बोध्यम्।

प्रबन्धो महावाक्यम्। अनन्तरोक्तद्वादशभेदोऽर्थशक्त्युत्थः। यथा महाभारते गृध्रगोमायुसंवादे।

"अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे॥
न चेह जीवितः कश्चित् कालधर्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी"॥ (र)

इति दिवसे शक्तस्य गृध्रस्य श्मशाने मृतं बालमुपादाय तिष्ठतां दिवसे तं परित्यज्य गमनमिष्टम्।

"आदित्योऽयं स्थितो मूढाः। स्नेहं कुरुत साम्प्रतम्।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।
गृध्रवाक्यात् कथं बालास्त्यजध्वमविशङ्किताः"॥ (ल)

इति निशि समर्थस्य गोमायोर्दिवसे परित्यागोऽनभिलषित इति वाक्यसमूहेन द्योत्यते। अत्र स्वतःसम्भवो व्यञ्जकः। एवमन्येषु एकादशभेदेषु उदाहार्य्यम्। एवं वाच्यार्थ-

---

(र) अलमिति। गृध्रैः गोमायुभिः शृगालैश्च सङ्कुले व्याप्ते कङ्काला बहुला यत्र तादृशे सर्वेषां प्राणिनां भयङ्करे घोरे दारुणे अस्मिन् श्मशाने स्थित्वा अलं स्थितिर्न कर्त्तव्येत्यर्थः। कालधर्मं पञ्चत्वं तत् उपागतः प्राप्तः। प्रियो वा द्वेष्योऽप्रियो वा यदि वा कश्चित् इह श्मशाने न च जीवितः। प्राणिनां गतिः ईदृशी एवम्प्रकारा।

(ल) आदित्योऽयमिति। हे मूढाः। अयम् आदित्यः सूर्य्यः स्थितः नेयं रात्रिरिति भावः, साम्प्रतं स्नेहं कुरुत, अयं मुहूर्त्तः बहुविघ्नः विघ्नपूर्ण इत्यर्थः, कदाचन जीवेदपि। हे बालाः। अज्ञा इत्यर्थः, कनकवर्णाभं काञ्चनकान्तिम् अप्राप्तयौवनं किशोरम् अमुं बालं गृध्रस्य वाक्यात् अविशङ्किताः सन्तः कथं त्यजध्वम्?

(व) अत्र स्वतःसम्भवौ व्यञ्जकः इति व्यञ्जकौ वाक्यम्। अनयोः स्वतः-

व्यञ्जकत्वे उदाहृतम्। लक्ष्यार्थस्य यथा। "निःशेषच्युत चन्दनम्" इत्यादि। व्यङ्ग्यार्थस्य यथा। "उअ णिच्चल" इत्यादि। अनयोः स्वतःसम्भविनोर्लक्ष्यव्यङ्ग्यार्थौ व्यञ्जकौ। (व)। एवमन्येषु एकादशभेदेषु उदाहार्य्यम्।

**पदांशवर्णरचनाप्रबन्धेष्वस्फुटक्रमः।**
**असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिस्तत्र पदांशकः॥२६३॥(श)**

प्रकृतिप्रत्ययोपसर्गनिपातादिभेदादनेकविधः।

यथा।

"चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती"॥ (ष)

---

सम्भविना वस्तुना महावाक्यगतेन वस्तु व्यज्यते। निःशेषेत्यादि। लक्ष्यार्थस्य तस्यान्तिकमेव गतासीति विपरीतलक्षणया बोधितस्य इत्यर्थः, अनेन स्वतःसम्भविना वस्तुना रमणरूपं वस्तु व्यज्यते इति बोध्यम्। उअ इत्यत्र स्वतःसम्भविभ्यां लक्ष्यार्थव्यङ्ग्यार्थाभ्यां वस्तुभ्यां सङ्केतस्थानरूपं वस्तु व्यज्यते इति बोध्यम्।

(श) पदांशेति। अस्फुटक्रमः असंलक्ष्यक्रमव्यङ्ग्यः पदांशे वर्णे रचनायां प्रबन्धे च भवति।

(ष) पदांशगतमुदाहरति चलेति। हे मधुकर! भ्रमर! त्वं चलौ चञ्चलौ अपाङ्गौ यस्याः तादृशीं वेपथुमतीं चपलां दृष्टिं बहुशः पुनः पुनः स्पृशसि, कर्णान्तिकचरः कर्णसमीपचारी सन् रहस्याख्यायीव गुप्तभाषीव मृदु स्वनसि शब्दायसे, तथा करं व्याधुन्वत्याः कम्पयन्त्याः निवारणार्थमिति भावः, अस्याः शकुन्तलायाः रतिसर्वस्वं सुरतसर्वधनम् अधरं पिबसि, अतः वयं तत्त्वस्य याथार्थ्यस्य कस्येयं सुता, किमियं मां प्रति खलु रज्येत वा, ऋषिकन्येयमित्यादिरूपस्य अन्वेषणात् चिन्तनात् हताः वञ्चिता इत्यर्थः, त्वं खलु त्वमेव कृती कृतकार्य्यो जातोऽसीत्यर्थः। शिखरिणीवृत्तम्। अत्र हता इत्यनेन दुःखातिशयो व्यज्यते, दुःखं प्राप्तवन्त इति प्रयोगेण तथा न प्रतीयते इति भावः।

अत्र "हताः" इति न पुनर्दुःख प्राप्तवन्त इति हन्प्रकृतेः ।

"मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितन्तु" ॥ (स)

अत्र "तु" इति निपातस्यानुतापव्यञ्जकत्वम्। "न्यक्कारो ह्ययमेव मे यदरयः" इत्यादौ "अरयः" इति बहुवचनस्य, "तापसः" इत्येकवचनस्य, "अत्रैव" इति सर्वनाम्नः, "निहन्ति" इति "जीवति" इति च तिङः, "अहो" इत्यव्ययस्य, "ग्रामटिका" इति कद्रूपतद्धितस्य, "विलुण्ठना" इति व्युपसर्गस्य, "भुजैः" इति बहुवचनस्य व्यञ्जकत्वम् (ह) ।

---

(स) मुहुरिति। मुहु पुन पुन अङ्गुल्या संवृतौ आच्छादितौ अधरौष्ठौ यस्य तत्, प्रतिषेधाक्षरे निवारणवचने विक्लवेन व्याकुलतया अभिराम मनोहर, तथा असे स्कन्धे विवर्त्तते तिर्य्यक् तिष्ठतीति तथोक्त, पक्ष्मलाक्ष्या घनलोमावृतनयनाया शकुन्तलाया. मुखं कथमपि उन्नमितम् उत्क्षिप्य धृत न चुम्बित न तु चुम्बितमित्यर्थ ।

(ह) अरय इति बहुवचनस्य इत्यादिक व्यञ्जकत्वमित्यनेनान्वय'। अरीणा बहुत्वेन स्वस्य दुर्जयत्वमिति। तापस इत्येकवचनेन एकतापसनिग्रहे सर्वरक्षा स्यात् सोऽपि कर्त्तुं न शक्यते इति। अत्रेति इदमुपटेन शत्रुदमनार्थं दूरगमनादिप्रयासो नास्ति तथापि तत् कर्त्तुं न शक्यते इति। निहन्तीति वर्त्तमानापकारकथनेन रिपुनिग्रहे विलम्बासहिष्णुत्वमिति। जीवतीति जीवनस्य वर्त्तमानत्वख्यापनेन इत पूर्वमेव मे मरणमनुचित, तथा सति ईदृश पराभवो न अभविष्यदिति। अहो। इति अव्ययस्य एतादृशपरिभवेऽपि जीवनमत्यन्तमनुचितमिति। स्वर्गग्रामटिकेति स्वर्गस्य क्षुद्रग्रामत्वख्यापनेन तल्लुण्ठनमपि यस्य श्लाघायै न, सोऽपि तापसेन पराभूयते इति व्युपसर्गस्य इति लुण्ठनस्य वैशिष्ट्यकथनेन सुरपतेरपि पराभवकारिणो मम एकतापसेन पराभव इति। बहुवचनस्येति भुजाना बहुत्वख्यापनेन रिपुनिग्रहे मम एतादृशसाधनसत्त्वेऽपि स कर्त्तुं न शक्यते इति।

"आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं तदेतदपरं यच्चैकतानं मनः।
मौनञ्चेदमिदञ्च शून्यमधुना यद्विश्वमाभाति ते
तद् ब्रूयाः सखि! योगिनी किमसि? भोः! किं वा वियोगिन्यसि?" (च)

अत्र तु "आहार" इति विषयसप्तम्याः, "समस्तेति"

---

एते संलक्ष्यक्रमव्यङ्ग्या अपि निर्वेदाख्य व्यभिचारिभावस्य पोषका इति भावप्रधानत्वात् असंलक्ष्यक्रमत्वमवगन्तव्यम्।

(च) आहारे इति। भो' सखि! आहारे भोजने विरति' अप्रवृत्तिरित्यर्थ, समस्तविषयाणा सर्ववस्तूना ग्रामे समूहे परा आत्यन्तिकी निवृत्ति, नासाग्रे नयन तिष्ठतीति शेष चिन्तास्तिमितत्वादिति भाव, यच्च एकतानम् एकाग्र मन तदेतत् अपरमन्यत। इद मौन तूष्णीम्भावश्च इदञ्च विश्व यत् ते तव शून्यम् आभाति, तत् तस्मात् योगिनी असि किम? वा अथवा कि वियोगिनी असि? अत्र आहारे इति विषयसप्तम्या इति योगिन्या वैधाहारे प्रवृत्तिरस्ति वियोगिन्यास्तु सर्वस्मिन्नेवाहारे वीतरागतेति भाव। समस्तेति योगिन्या सर्वविषयनिवृत्तिर्न दृश्यते शरीरधारणोपयोगिषु तस्या प्रवृत्तिदर्शनाद् वियोगिन्यास्तु सर्वेष्वेति भाव। परेति योगिन्या निवृत्तेरात्यन्तिकत्व नास्ति वियोगिन्यास्तु आत्यन्तिकतेति भाव। यच्चैकतानमिति योगिन्या ध्यानसमये एव मनस एकतानत्व वियोगिन्यास्तु सर्वदैवेति बोध्यम। मौनञ्चेदमिति। योगिन्या ध्यानसमयेऽपि इङ्गितादिना अर्थसूचन सम्भवति वियोगिन्यास्तु तदपि नास्तीति भाव। आभातीति आ सम्यक्प्रकारेण भातीत्यर्थ, योगिन्या' विश्वस्य शून्यत्वेन ज्ञान परमात्मानवच्छिन्नस्य तु न, वियोगिन्यास्तु सब्रह्मविश्वमेव शून्यमिति भाव। सखीति योगिन्या अनुरागिणि जने प्रणयो नास्ति वियोगिन्यास्तु सोऽस्तीति भाव। असि भो इति सोपहासोत्प्रासस्य न खलु योगिनी कोऽप्यपहसति पर वियोगिनीमेव इति भाव। कि वेति पूर्वपदेन चरितार्थत्वे उत्तरपदोपादानस्य वैफल्य स्यादिति उत्तरपदग्रहण पूर्वपदस्य असारत्वसूचनायेति भाव। वर्त्तमानोपदेशस्य वर्त्तमानत्वख्यापनस्य। न खलु सहसा कापि योगिनी भवति योगस्याभ्यासबलसाध्यत्वेन क्रमसाध्यत्वात्, वियोगिनी तु सहसैव भवतीति वर्त्तमानत्वमिति भाव.।

"परेति" च विशेषणद्वयस्य, "मौनं चेदमिति" प्रत्यक्षपरामर्शिनः सर्वनाम्नः, "आभातीति" उपसर्गस्य, "सखीति" प्रणयस्मारणस्य," "असि भो" इति सोपहासोत्प्रासस्य, "किंवा" इत्युत्तरपक्षदार्ढ्यसूचकस्य वाशब्दस्य, "असीति" वर्त्तमानोपदेशस्य तत्तद्विशेषव्यञ्जकत्वं सहृदयसंवेद्यम्। वर्णरचनयोरुदाहरिष्यते (क)। प्रबन्धे महाभारते शान्तः। रामायणे करुणः। मालतीमाधवरत्नावल्यादौ शृङ्गारः। एवमन्यत्र।

**तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः। (ख)**
**सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।**
**वेदखाग्निशराः शुद्धैरिषुवाणाग्निसायकाः॥२६४॥(ग)**

---

(क) वर्णरचनयोरिति। वर्णस्य रचनायाश्च माधुर्यादिगुणव्यञ्जकत्वादिति भावः।

(ख) तदेवमिति। तत् तस्मात् एव रीत्या तस्य पूर्वोक्तस्य ध्वने एकपञ्चाशत् भेदा मता.। तथाहि, लक्षणामूलध्वनि अर्थान्तरसङ्क्रमितवाच्य अत्यन्ततिरस्कृतवाच्य इति द्विविधोऽपि पदवाक्यगतत्वेन चतुर्विध। असंलक्ष्यक्रमव्यङ्ग्य पदपदांशवर्णरचनावाक्यमहावाक्यगतत्वेन षड्विध शब्दशक्त्युत्थः संलक्ष्यक्रमव्यङ्ग्य वस्त्वलङ्काररूपत्वेन द्विविधोऽपि पदवाक्यगतत्वेन चतुर्विध। अर्थशक्त्युत्थ संलक्ष्यक्रमव्यङ्ग्य वस्त्वलङ्कारयो' स्वत सिद्धकविप्रौढोक्तिसिद्धकविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वेन षड्विधयो. वस्त्वलङ्कारोभयव्यञ्जकत्वेन द्वादशविधोऽपि पदवाक्यमहावाक्यगतत्वेन त्रैविध्यात् षट्त्रिंशत्प्रकारः। उभयशक्त्युत्थस्तु वाक्यगत एवेति एकविध एवेति मिलित्वा एकपञ्चाशद्विधो ध्वनिरिति फलितार्थ.।

(ग) सङ्करेणेति। त्रिरूपेण त्रिविधेन अङ्गाङ्गिभावसन्देहैकाश्रयानुप्रवेशरूपेण वक्ष्यमाणेन सङ्करेण एकरूपया एकविधया संसृष्ट्या वक्ष्यमाणरूपया संसृष्ट्या च ते एकपञ्चाशद्भेदा वेदखाग्निशरा ५३०४ चतुरधिकानि त्रिपञ्चाशच्छतानि इत्यर्थ, शुद्धै. अविमिश्रैरित्यर्थ', एकपञ्चाशता मिलिता इति शेष ५३५५ पञ्चपञ्चाशदधिकानि त्रिपञ्चाशत् शतभेदा इत्यर्थ। तथाहि, प्रथमस्य सजातीयेन एकेन विजातीयैश्च पञ्चाशता त्रिरूपे सङ्करे संसृष्टौ चैकरूपायां प्रत्येक पञ्चाश-

शुद्धैः शुद्धभेदैरेकपञ्चाशता योजनेत्यर्थः। दिङ्मात्रं तु उदाह्रियते।

"अत्युन्नतस्तनयुगा तरलायताक्षी
द्वारि स्थिता तदुपयानमहोत्सवाय।
सा पूर्णकुम्भनवनीरजतोरणस्रक्-
सम्भारमङ्गलमयत्नकृतं विधत्ते"॥ (घ)

अत्र "स्तनावेव पूर्णकुम्भौ दृष्टय एव नवनीरजस्रजः" इति रूपकध्वनिरसध्वन्योरेकाश्रयानुप्रवेशः सङ्करः।

"धिन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि
धूताध्वनीनहृदयानि मधोर्दिनानि।
निस्तन्द्रचन्द्रवदनावदनारविन्द-
सौरभ्यसौहृदसगर्वसमीरणानि"॥ (ङ)

---

दिति शतद्वयम्। द्वितीयस्य सजातीयैरेकेन विजातीयैश्च ऊनपञ्चाशता सङ्करेण संसृष्ट्या च योगे ऊनपञ्चाशदिति षण्णवत्यधिकं शतम्। तथा तृतीयस्य सजातीयविजातीयसम्मेलनेन सङ्करसंसृष्टिरूपत्वात् चातुर्विध्येन द्विनवत्यधिकं शतमित्यादि।

(घ) अत्युन्नतेति। प्रवासादागतं पतिं दृष्ट्वा द्वारि स्थितायाः नायिकायाः वर्णनमिदम्। अत्युन्नतं स्तनयुगं यस्याः सा, तरले चञ्चले आयते च अक्षिणी यस्याः तथोक्ता, सा द्वारि स्थिता सती तस्य पत्युः उपयानम् उपस्थितिरेव महोत्सवः तस्मै अयत्नकृतं विना प्रयासेन जनितं पूर्णकुम्भौ नवनीरजानां पद्मानां तोरणस्रक् द्वारभूमिशोभार्थं माल्यं तेषां सम्भारः आहरणमेव मङ्गलं विधत्ते करोति। अत्र रसः शृङ्गारः एव ध्वनिः, स च स्तनरूपपूर्णकुम्भदृष्टिरूपकमलानां नायकरतेरुद्दीपकत्वात् व्यङ्ग्य इति बोध्यम्। अत्र वसन्ततिलकं वृत्तम्।

(ङ) धिन्वन्तीति। मदेन हर्षेण मूर्च्छन्तः वृद्धिं गच्छन्तः अलीनां भ्रमराणां ध्वनयः येषु तानि, धूतानि कम्पितानि अध्वनीनानां हृदयानि यैः तथोक्तानि, तथा निस्तन्द्रः पूर्ण इति यावत् यः चन्द्रः, स इव वदनं यासां तासां वदनारविन्दानां मुखपद्मानां यत् सौरभ्यं सौगन्ध्यं तेन यत् सौहृदं सख्यं सम्बन्ध इति यावत्, तेन सगर्वः साहङ्कारः मनोहर इति यावत्, समीरणो वायुर्येषु

अत्र निस्तन्द्रेत्यादिलक्षणामूलध्वनीनां संसृष्टिः ।

अथ गुणीभूतव्यङ्ग्यम् ।

अपरन्तु (च) गुणीभूत-

व्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये ॥२६५॥

अपरं काव्यम् । अनुत्तमत्वं न्यूनतया साम्येन च सम्भवति ।

तत्र स्यादितराङ्गं काक्वाक्षिप्तञ्च वाच्यसिद्ध्यङ्गम् ।
सन्दिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढ़म् ।
व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ ॥२६६॥(छ)

इतरस्य रसादेरङ्ग रसादिव्यङ्ग्यं यथा ।

"अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।

---

तथाविधानि मधो वसन्तस्य दिनानि धिन्वन्ति प्रीणयन्ति लोकान्निति शेष । वसन्ततिलक वृत्तम् । अत्र निस्तन्द्रेत्यादि निस्तन्द्रस्तन्द्रारहित इति मुख्यार्थं स कथ चन्द्रे वर्त्तते इति तद्बाध., तस्मात् लक्षणया निस्तन्द्रशब्द प्रकाशमयरूपार्थं बोधयति प्रकाशातिशयबोधश्च प्रयोजनम् । एव सौहृदगर्वशब्दौ चेतनभाव-धर्मत्वात् प्रकृते असम्भवन्तौ लक्षणया ससर्गोत्कर्षरूपौ अर्थौ बोधयत, ससर्गाति-शय उत्कर्षातिशयश्च प्रयोजनम् । तस्मात् अत्र वाच्यार्थानामत्यन्ततिरस्कृतत्वात् अत्यन्ततिरस्कृतवाच्यलक्षणामूलध्वनीना ससृष्टि. हृदयगम्येति ।

(च) अपरमिति । अपर ध्वनिभिन्नम् ।

(छ) तत्रेति । तत्र गुणीभूतव्यङ्ग्ये व्यङ्ग्यम् इतराङ्गम् इतरस्य अपरस्य रसादेरङ्ग पोषकमित्यर्थं, काक्वाक्षिप्त काकुर्ध्वनिविकारविशेष. तेन आक्षिप्तम् आहृत झटिति प्रतीयमानमित्यर्थः, वाच्यसिद्ध्यङ्ग वाच्यस्य मुख्यार्थस्य सिद्धेरङ्ग साधकमित्यर्थः, सन्दिग्धप्राधान्य सन्दिग्धं संशयित प्राधान्य प्रधानभाव यस्य तादृशम्, तुल्यप्राधान्य समानप्रधानभावम्, अस्फुट स्फटित्यप्रतीयमानमित्यर्थः, अगूढ स्फुटतया वाच्यवत् प्रतीयमानम्, असुन्दर चमत्कारिताशून्य स्यात् । इत्येवं रीत्या तस्य गुणीभूतव्यङ्ग्यस्य अष्टौ भेदा. उदीरिताः कथिता. ।

नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः” ॥ (ञ)

अत्र शृङ्गारः करुणस्याङ्गम् ।

“मानोन्नतां प्रणयिनीमनुनेतुकामः
त्वत्सैन्यसागररवोद्गतकर्णतापः ।
हा ! हा ! कथं नु भवतो रिपुराजधानी-
प्रासादसन्ततिषु तिष्ठति कामिलोकः” ॥ (झ)

अत्रौत्सुक्यत्राससन्धिसंस्कृतस्य करुणस्य राजविषयरतौ अङ्गभावः ।

---

(ञ) इतराङ्गमुदाहरति अयमिति। भूरिश्रवसः समरपतितं छिन्नं हस्तं दृष्ट्वा तत्पत्न्याः शोकार्त्तायाः वचनमिदम्। रसनां काञ्चीं मध्यघनस्थितामिति भावः, उत्कर्षयति आक्षिपतीति तथोक्तः, पीनौ स्तनौ विमर्दयतीति तथोक्तः, नाभिम् ऊरू जघनञ्च स्पृशतीति तादृशः, तथा नीवीविस्रंसनः कटिदेशात् वसनग्रन्थिच्यावनः अयम् ईदृगवस्थः स करः । अत्र आलम्बनविच्छेदेन रतेरपरिपुष्टतया स्मर्यमाणानां तदङ्गानां शोकोद्दीपकतया करुणरसस्य पोषकत्वं न शृङ्गारस्येति वाच्यार्थस्य प्राकरणिकशोकोद्दीपकत्वेन चमत्कारित्वं, शृङ्गारस्येति व्यङ्ग्यतया गुणीभूतव्यङ्ग्यत्वं बोध्यम्। यदि च अत्र शृङ्गारस्य अपरिपुष्टतया न पूर्णरसत्वं तथापि अस्य खण्डरसत्वमस्त्येवेति परत्र निर्णेष्यते।

(झ) इतरस्य “रसादेरङ्गम्” इत्यत्रादिपदेन भावादीनां ग्रहणात् भावाङ्गमाह मानोन्नतामिति। राजस्तुतिरियम्। हे राजन्! भवतः रिपुराजधानीप्रासादसन्ततिषु स्थितः इति शेषः, कामिलोकः मानोन्नताम् उन्नतमानां प्रणयिनीं कान्ताम् अनुनेतुकामः अनुनिनीषुरित्यर्थः, तव सैन्यसागरस्य रवेण कोलाहलेन उद्गतः जनितः कर्णतापः श्रोत्रपीडा यस्य तादृशः सन् अहो आश्चर्यं कथं नु तिष्ठति? अतिकष्टेन वर्त्तते इत्यर्थः। वसन्ततिलकं वृत्तम्। अत्र मानोन्नतामिति प्रथमे पादे औत्सुक्यं, त्वत्सैन्येति द्वितीये त्रासः, तयोः सन्धिना मयोगेन समावेशेनेत्यर्थः संस्कृतस्य पुष्टस्य इत्यर्थः। ततश्च भावसन्धिः करुणस्याङ्गं करुणश्च राजविषयकरतिरूपस्य भावस्येति बोध्यम्। अत्र तु मुख्यार्थं करुणनिरपेक्ष एव भावव्यञ्जकः, करुणस्तु वाच्यसापेक्षहाहापदव्यङ्ग्यः सन् तत्प्रकर्षक इति वाच्यार्थात् व्यङ्ग्यस्य न्यूनत्वमवधेयम्।

"जनस्थाने भ्रान्तं कनकमृगतृष्णान्वितधिया
वचो वैदेहीति प्रतिपदमुदश्रुप्रलपितम्।
कृता लङ्काभर्त्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता"॥

अत्र रामत्वं प्राप्तमित्यवचनेऽपि शब्दशक्तेरेव रामत्वमवगम्यते। वचनेन तु सादृश्यहेतुकतादात्म्यारोपणमाविष्कुर्वता तद्गोपनमपाकृतम्। तेन वाच्यं सादृश्यं वाक्यार्थान्वयोपपादकतयाऽङ्गतां नीतम् (ञ)।

(ञ) जनस्थाने इति। धनार्थं चेष्टमानस्य कस्यचिदुक्तिरियम्। मया जनकस्य धनस्य इत्यर्थ. मृगे अन्वेषणे, "मृग पशौ कुरङ्गे च करिनक्षत्रभेदयोः। अन्वेषणे च याच्ञायाम्" इति मेदिनी। या तृष्णा लोभः तया अन्यत्र कनकमृगे तद्रूपधारिणि मारीचे या तृष्णा लोभः तद्ग्रहणेच्छा इत्यर्थः, तया अन्विता आच्छन्ना विलुप्ता इत्यर्थ, धीर्यस्य तादृशेन सता जनानां धनिनामित्यर्थः, स्थाने समीपे अन्यत्र तदाख्यदण्डकारण्यप्रदेशविशेषे भ्रान्तं पर्यटितम्। प्रतिपदं पदे पदे देहीति वच, ऐशब्द निश्चितार्थ. पादपूरणार्थो वा। अन्यत्र वैदेहि। हे विदेहवंशसम्भूते सीते! इति वच. उदश्रु रुजत्नयन यथा तथा प्रलपितम् अनर्थकमुक्त, "प्रलापोऽनर्थकं वच." इत्यमरः। भर्त्तुः धनस्वामिनः वदनपरिपाटीषु वदनस्य मुखस्य परिपाटीषु सन्तोषासन्तोषसूचकविविधभङ्गीषु इत्यर्थः, का घटना परिचय. अत्यर्थं कृता? न कापीत्यर्थ.। भर्त्तुः क्रोधोदयो वा सन्तोषाविर्भाव. अस्तु तद्विषयेषु कोऽपि विचारो न कृत इति भाव:। केचित्तु भर्त्तुः परिपाटीषु सन्तोषासन्तोषभङ्गीषु अलम् अतिशयेन का घटना न कृता? वद अपि तु तद्रञ्जनार्थं विविधोपायः कृत इति भाव इति व्याचक्षु:। अन्यत्र लङ्काभर्त्तुः रावणस्य वदनपरिपाटीषु मुखश्रेणीषु इषुघटना वाणयोजना कृता। अतः मया तत्तत्साधर्म्येण रामत्वम् आप्तं प्राप्त, कुशलवसुता कुशलं दारिद्र्यहरणे समर्थमित्यर्थः वसु धन यस्य तद्भाव:, अन्यत्र कुशलवौ सुतौ यस्याः सा सीतेत्यर्थः, न तु अधिगता प्राप्ता। शिखरिणीवृत्तम्। अत्र रामत्व रामसादृश्यमित्यर्थ:। वचनेन रामत्वमाप्तमिति वाक्येन आविष्कुर्वता प्रकटयता अपाकृतं निराकृतं तेन सादृश्यगोपनाकरणेन वाच्यं वाच्यवत् झटिति प्रतीयमानं वाक्यार्थेति वाक्यार्थस्य रामसादृश्यप्राप्तिरूपस्य अन्-

काक्वाक्षिप्तं यथा।

"मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन" ॥ (ट)

अत्र "मथ्नाम्येव इत्यादि" व्यङ्ग्यं वाच्यस्य निषेधस्य सह-भावेनैव स्थितम्।

"दीपयन् रोदसीरन्ध्रमेष ज्वलति सर्वतः।
प्रतापस्तव राजेन्द्र! वैरिवंशदवानलः" ॥ (ठ)

---

वोपपादकतया अन्वयसम्पादकतया अङ्गता पोषकता नीत प्रापितम्। अत्र साद-श्यस्य गूढत्वापाकरणेन अधिकचमत्कारित्वस्य खण्डनात् गुणीभूतव्यङ्ग्यत्वं नोप-माध्वनिरित्यवधेयम्।

(ट) मथ्नामीति। सहदेवं प्रति भीमसेनोक्तिरियम्। समरे युद्धे कोपात् कौरवाणां कुरुवंशीयानां धृतराष्ट्रसुतानामित्यर्थः, शतं न मथ्नामि न मर्दयामि, न नाशयामीत्यर्थः। दुःशासनस्य उरस्तः वक्षसः रुधिरं रक्तं न पिबामि? गदया सुयोधनस्य ऊरू न सञ्चूर्णयामि? अपितु मथ्नाम्येव पिबाम्येव सञ्चूर्णयाम्येवेत्यर्थः। भवतां नृपतिः पणेन सन्धिं करोतु। वसन्ततिलकं वृत्तम्। अत्र काकुवशात् व्यङ्ग्यं वाच्यार्थेन सहैव प्रतीयते इति चमत्कारित्वस्यापगमात् गुणीभूतव्यङ्ग्यत्व-मिति बोध्यम्।

(ठ) वाच्यसिद्ध्यङ्गमुदाहरति दीपयन्निति। राज्ञः स्तुतिरियम्। हे राजेन्द्र! वैरिणां शत्रूणां वंशेषु कुलेषु वा वैरिणः शत्रवः एव वंशाः वेणवः तेषु दवानलः दावाग्निः एषः तव प्रतापः कोषदण्डजं तेजः, "स प्रभावः प्रतापश्च यत्तेजः कोष-दण्डजम्" इत्यमरः। रोदसीरन्ध्रं द्यावापृथिव्योरन्तरालं दीपयन् भासयन् सर्वतः सर्वासु दिक्षु ज्वलति। अत्र अन्वयस्य वंशस्य दावानलत्वारोपस्य सिद्धेः अङ्गं साधकम् उपपादकमित्यर्थः, अन्यथा प्रतापे दावानलत्वारोपणमसङ्गतं स्यादिति भावः। यत्र व्यङ्ग्यं विना वाच्यार्थस्य नोपपत्तिस्तत्रैव वाच्यसिद्ध्यङ्गस्यावसरः यत्र तु न तथा तत्र इतराङ्गमित्यनयोर्भेद इति वाच्यार्थस्य साधकतया च अस्य व्यङ्ग्यस्य न तथा चमत्कारित्वमिति गुणीभूतव्यङ्ग्यत्वमिति च ध्येयम्।

अत्र अन्वयस्य वेणुत्वारोपणरूपो व्यङ्ग्यः। प्रतापस्य दवानलत्वारोपसिद्ध्यङ्गम्। "हरस्तु किञ्चित् परिवृत्तेत्यादौ" विलोचनव्यापारचुम्बनाभिलाषयोः प्राधान्ये सन्देहः (ड)।

"ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।

जामदग्न्यस्य वो मित्रमन्यथा दुर्मनायते" ॥ (ढ)

अत्र परशुरामो रक्षःकुलक्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम्।

"सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः"।

अल्लापदीनन्टपतौ न सन्धिर्न च विग्रहः ॥ (ण)

अत्र अल्लापदीनाख्ये नृपतौ दानसामादिमन्तरेण नान्यः प्रशमोपायः। व्यङ्ग्यं व्युत्पन्नानामपि झटित्यस्फुटम्।

---

(ड) सन्दिग्धप्राधान्यमाह हर इति। अत्र विलोचनव्यापारो वाच्य चुम्बनाभिलाषश्च व्यङ्ग्य। अत्र विलोचनव्यापारस्य रतेरनुभावरूपत्वेन शृङ्गार-व्यञ्जनेन प्रधानं वा चुम्बनाभिलाषव्यञ्जकत्वेन अङ्गमिति, तथा चुम्बनाभिलाष-सम्भाव्यत्वेन अप्रधानम् उत आस्वादविषयत्वेन शृङ्गारव्यञ्जकतया प्रधानमित्यनयो सन्देह इति भावः। प्राधान्यनिश्चयाभावादेव व्यङ्ग्यस्य अनधिकचमत्कारितया गुणीभूतव्यङ्ग्यत्वमवधेयम्।

(ढ) तुल्यप्राधान्यमुदाहरति ब्राह्मणेति। भार्गवजयार्थिनं दशाननं प्रति तन्मन्त्रिणामुक्तिरियम्। ब्राह्मणस्य जामदग्न्यस्य अतिक्रम' आक्रमणं तस्य त्यागः, अनाक्रमणमित्यर्थ' भवतां भूतये कल्याणाय एव। अन्यथा अतिक्रमे इत्यर्थ', वः युष्माकं मित्रम् एकाचार्य्यतया सतीर्थत्वादिति भाव', जामदग्न्यः दुर्मनायते विद्वेष-माचरतीत्यर्थः। अत्र जामदग्न्यस्य दौर्मनस्य व्यङ्ग्यो रक्षःकुलनाशः वाच्यश्च तन्मैत्री-रक्षणरूपः। अनयोः प्राधान्यस्य समत्वात् गुणीभूतव्यङ्ग्यत्वमिति बोध्यम्।

(ण) अस्फुटमुदाहरति सन्धौ इति। अल्लापदीनन्टपतौ राजनि विषये सन्धौ सर्वस्वहरणं सर्वधनदानमित्यर्थः, सर्वधनदानं विना न कोऽपि अल्लापदीन-नृपेण सह सन्धिं कर्त्तुं शक्नोतीति भावः। विग्रहे युद्धे प्राणनिग्रहः प्राणदण्डः अल्लापदीनेन सह सङ्ग्रामे प्राणनाशो भवेदिति भावः। तस्मात् तत्र न सन्धिः

"अनेन लोकगुरुणा सतां धर्मोपदेशिना ।
अहं व्रतवती स्वैरमुक्तेन किमतः परम्" ॥ (त)

अत्र प्रतीयमानोऽपि शाक्यमुनेस्तिर्य्यक्‌योषिति बलात्कारोपभोगः स्फुटतया वाच्यायमान इत्यगूढम् ।

"वाणीरकुडङ्गुड्डीणसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावडाए वहूए सीअन्ति अङ्गाइं" ॥ (थ)

अत्र दत्तसङ्केतः कश्चिल्लतागृहं प्रविष्ट इति व्यङ्ग्यात् 'सीदन्त्यङ्गानि" इति वाच्यस्य चमत्कारः सहृदयसंवेद्य इत्यसुन्दरं, किञ्च यो दीपकतुल्ययोगितादिषु उपमाद्यलङ्कारो व्यङ्ग्यः स गुणीभूतव्यङ्ग्य एव। काव्यस्य दीपकादिमुखेनैव चमत्कारविधायित्वात् (द)। तदुक्तं ध्वनिकृता ।

---

नापि विग्रहः युद्धम् । अत्र व्यङ्ग्यं दानसामादिरूपम् । तस्यानधिकचमत्कारित्वा गुणीभूतमिति बोध्यम् ।

(त) अगूढमुदाहरति अनेनेति । शाक्यमुनेस्तिर्य्यग्जातीययोषिति बलात्कारसम्भोगाभावात्तपस्या उक्तिरियम् । सतां साधूनां धर्मोपदेशिना धर्मशिक्षकेण अनेन लोकानां गुरुणा आचार्य्येण व्रतवती व्रतनिष्ठा धर्मपरायणा इत्यर्थः, अहं स्वैरम् भजनीयेत्यर्थः, अतः परम् उक्तेन किम् ? व्रतवत्याः पशुयाः स्वामिदुश्चरितस्य अवक्तव्यत्वादिति भावः । अत्र व्यङ्ग्यस्य अगूढत्वेन चमत्कारित्वाभावात् गुणीभूतत्वमिति बोध्यम् ।

(थ) असुन्दरमुदाहरति वाणीरेति । वाणीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः । गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥ इति संस्कृतम् । वाणीरकुञ्जात् वेतसलतावेष्टितात् स्थानात् उड्डीनानाम् उत्पतितानां शकुनीनां पक्षिणां कोलाहलं कलरवं शृण्वन्त्याः गृहकर्मणि व्यग्रायाः निरतायाः वध्वाः अङ्गानि सीदन्ति अवसादं गच्छन्ति, गृहकर्मणि निवृत्तानि भवन्तीत्यर्थः । अत्र कश्चित् उपनायक इति भावः, वाच्यस्य मुख्यार्थस्य चमत्कारः चित्तरञ्जकत्वमित्यर्थः । तस्मात् व्यङ्ग्यस्य असुन्दरत्वादेव गुणीभूतत्वमिति बोध्यम् ।

(द) दीपकादिमुखेन दीपकादिसम्बन्धेनेत्यर्थः काव्यस्य काव्यार्थस्य चमत्कारविधायित्वात् चित्तरञ्जकत्वात् ।

"अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः" ॥ (ध)

यत्र च शब्दान्तरादिना गोपनकृतचारुत्वस्य विपर्य्यासः ।

यथा ।

"दृष्ट्या केशव ! गोपरागहृतया किञ्चिन्न दृष्टं मया
तेनात्र स्खलितास्मि नाथ ! पतितां किं नाम नालम्बसे ?
एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गतिः
गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम्" ॥ (न)

अत्र गोपरागादिशब्दाना गोपे राग इत्यादिव्यङ्ग्यार्थानां "सलेशम्" इति पदेन स्फुटतयावभासः । सलेशमितिपदस्य

---

(ध) अलङ्कारेति । अलङ्कारान्तरस्य अन्यस्य व्यङ्ग्यभूतस्य अलङ्कारस्य प्रतीतौ व्यञ्जनेऽपि यत्र काव्यस्य तत्परत्वं व्यङ्ग्यालङ्कारतात्पर्य्यकत्व न भासते न प्रकाशते असौ ध्वनेर्मार्गे विषय न मत न कथित । काव्यस्यातत्परत्वेन चमत्कारित्वाविषयत्वादिति भाव. । चारुत्वस्य चमत्कारस्य विपर्य्यास वैपरीत्यम् । तत्रापि गुणीभूतव्यङ्ग्यमेवेति पूर्वेणान्वय ।

(न) दृष्ट्येति । हे केशव ! गोपरागे. गवा रजोभि हृतया आच्छन्नया दृष्ट्या मया न किञ्चित् दृष्ट मार्गादिकमिति शेषः, तेन हेतुना अत्र अग्रत इत्यर्थ, स्खलिता पतितास्मि ! हे नाथ ! पतिता मा किं कथं न अवलम्बसे न धारयसि ? त्वम् एक केवल, विषमेषु सङ्कटेषु खिन्नमनसा क्लान्तचेतसा सर्वेषाम् अबलाना दुर्बलानां जनानां गति. आश्रय, गोप्या एव सलेश सव्याज यथा तथा गोष्ठे गदित अभिहित हरि. कृष्ण. चिरं व. युष्मान् अवतात् रक्षतु । व्यङ्ग्यार्थस्तु केशव एव गोप तस्मिन् राग' अनुराग. तेन हृतया दृष्ट्या ज्ञानेन इत्यर्थ., केशवानुरागेण बाह्यज्ञानस्य तिरोहितत्वादिति भाव., किञ्चित् कुलादिक न दृष्टं न गणितमित्यर्थ । विषमेषुणा पञ्चशरेण खिन्नमनसा सर्वासाम् अबलाना नारीणामिति भाव । शार्दूलविक्रीडितं वृत्तम् । अत्र सलेशमिति पदेन स्फुटतया वाच्यवत् प्रकाशभावेन इत्यर्थ, अवभास प्रतीतिरिति अगूढं गुणीभूत व्यङ्ग्यमिति भाव. । ध्वनित्वमेव तत्र व्यङ्ग्यस्य गूढत्वेन कामिनीकुचकलसवत् अति चमत्कारित्वादिति ध्येयम् ।

परित्यागी ध्वनिरेव। किञ्च यत्र वस्त्वलङ्काररसादिरूपव्यङ्ग्यानां रसाभ्यन्तरे गुणीभावः तत्र प्रधानकृत एव काव्यव्यवहारः। तदुक्तं तेनैव (प)।

"प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्य्यालोचनया पुनरिति"॥ (फ)

तत्र च।

"यत्रोन्मदानां प्रमदाजनाना-
मभ्रलिहः शोणमणीमयूखः।
सन्ध्याभ्रमं प्राप्नुवतामकाण्डे-
ऽप्यनङ्गनेपथ्यविधिं व्यधत्त"॥ (ब)

इत्यादौ रसादीनां नगरीवृत्तादिवस्तुमात्रेऽङ्गत्व, तत्र तेषामतात्पर्य्यविषयत्वेऽपि तैरेव गुणीभूतैः काव्यव्यवहारः (भ)। तदुक्तमस्मत्सगोत्रकविपण्डितमुख्यश्रीचण्डिदासपादैः। "काव्यार्थस्याखण्डबुद्धिवेद्यस्य तन्मयीभावेनास्वाददशाया गुण-

---

(प) गुणीभावः अप्राधान्यऽवस्थितिरित्यर्थः प्राधान्येन व्यपदेशा भवन्तीति न्यायादिति भाव'। तेनैव ध्वनिकारेणैव।

(फ) प्रकार इति। अयं गुणीभूतव्यङ्ग्यः प्रकार अपि रसादिषु यत् तात्पर्य्यं तत्परत्व तस्य पर्य्यालोचनया अनुशीलनेन ध्वनिरूपता धत्ते प्राप्नोति रसादितात्पर्य्यवत्त्वे सति गुणीभूतव्यङ्ग्यस्यापि ध्वनित्वव्यपदेशो भवतीति भाव।

(ब) यत्रेति। नगरीवर्णनमिदम्। यत्र नगर्य्याम् अभ्रलिह गगनस्पर्शी शोणाना मणीना मयूखः किरण. उन्मदाना मदोन्मत्तानाम् अतएव अकाण्डेऽपि असमयेऽपि सन्ध्याभ्रम प्राप्नुवता प्रमदाजनानाम् अनङ्गनेपथ्यविधिं कामजनितवेशभूषादिक व्यधत्त कारयामास। उपजातिवृत्तम्।

(भ) रसादीना नगरीवृत्त।दीति। नगरीवृत्त नगरीवृत्तान्त' तत्प्रभृतिवस्तुन्येव अङ्गत्व नगरीवृत्तान्तपरिपोषकत्वमित्यर्थ, तेषा रसादीनाम् अतात्पर्य्यविषयत्वेऽपि नगरीवृत्तस्यैव तात्पर्य्यविषयत्वादिति भाव, तस्मादत्र इतराङ्ग गुणीभूतं व्यङ्ग्यमिति अवधेयम्।

प्रधानभावावभासस्तावन्नानुभूयते कालान्तरे तु प्रकरणादि-पर्य्यालोचनया भवन्नप्यसौ न काव्यव्यपदेशं व्याहन्तुमीश-स्तस्यास्वादमात्रायत्तत्वादिति" (म)। केचित चित्राख्यं तृतीयं काव्यभेदमिच्छन्ति। तदाहुः।

"शब्दचित्रं वाच्यचित्रमव्यङ्ग्य त्ववरं स्मृतम्"। (य)

इति तन्न। यदि हि अव्यङ्ग्यत्वेन व्यङ्ग्याभावस्तदा तस्य काव्यत्वमपि नास्तीति प्रागेवोक्तम्। ईषद्व्यङ्ग्यत्वमिति चेत्। किं नाम ईषद्व्यङ्ग्यत्वम्? आस्वाद्यव्यङ्ग्यत्वम् अनास्वाद्यव्यङ्ग्यत्वं वा? आद्ये प्राचीनभेदयोरन्तःपातः। द्वितीये त्वकाव्यत्वम्। यदि च आस्वाद्यत्वं तदा क्षुद्रत्वमेव, क्षुद्रतायामनास्वाद्यत्वात्। तदुक्तं ध्वनिकृता।

"प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते।
उभे काव्ये ततोऽन्यद् यत् तच्चित्रमभिधीयते॥" इति (र)

इति साहित्यदर्पणे ध्वनिगुणीभूतव्यङ्ग्याख्यकाव्यभेद-निरूपण नाम चतुर्थ परिच्छेद.।

---

(म) काव्यार्थस्य विभावादिपदार्थनिचयस्य अखण्डबुद्धिवेद्यत्वेन अविच्छिन्नमतिगम्यस्य आस्वाददशायाम् अनुभवावस्थायां गुणप्रधानभावस्य अङ्गाङ्गिभावस्य अवभास प्रतीति.। काव्यव्यपदेशं काव्यसंज्ञा ध्वनिकाव्यमिदं वा गुणीभूतव्यङ्ग्यमिदमिति निर्णीत काव्य नाम इति यावत व्याहन्तु खण्डयितु निराकर्त्तुमित्यर्थः, न ईश शक्त असौ अवभास इत्यर्थ.।

(य) शब्दचित्रमिति। अव्यङ्ग्यं काव्यम् अवरम् अधम स्मृत, तत् द्विविधं शब्दचित्र वाच्यचित्रञ्च।

(र) प्रधानेति। व्यङ्ग्यस्य प्रधानगुणभावाभ्याम् एव रीत्या उभे काव्ये ध्वनि-गुणीभूतव्यङ्ग्यरूपे इत्यर्थ', व्यवस्थिते सिद्धान्तिते तत ताभ्याम् अन्यत् यत् काव्यं तत् चित्रम अभिधीयते कथ्यते न तु तत् काव्यशब्देनोच्यते रसवर्जितत्वात् रसस्यैव काव्यजीवनत्वेनाभिहितत्वादिति बोध्यम्।

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता विमलाख्या साहित्यदर्पणस्य चतुर्थपरिच्छेदव्याख्या समाप्ता।

## पञ्चमः परिच्छेदः ।

—०✳०—

अथ केयमभिनवा व्यञ्जना नाम वृत्तिरित्युच्यते ।

**वृत्तीनां विश्रान्तेरभिधातात्पर्य्यलक्षणाख्यानाम् ।**
**अङ्गीकार्य्या तुर्य्या वृत्तिर्बोधे रसादीनाम्॥२६७(क)**

अभिधायाः सङ्केतितार्थमात्रबोधनविरताया न वस्त्वलङ्काररसादिव्यङ्ग्यबोधने क्षमत्वं, न च सङ्केतितो रसादिः । न हि विभावाद्यभिधानमेव तदभिधानम्, तस्य तदेकरूप्यानङ्गीकारात् । यत्र च स्वशब्देनाभिधानं तत्र प्रत्युत दोष एवेति वक्ष्यामः । क्वचिच्च "शृङ्गाररसोऽयम्" इत्यादौ स्वशब्दाभिधानेऽपि न तत्प्रतीति, तस्य स्वप्रकाशानन्दरूपत्वात् । अभिहितान्वयवादिभिरङ्गीकृता तात्पर्य्याख्या वृत्तिरपि संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी (ख) । यच्च केचिदाहुः ।

---

(क) ननु व्यङ्ग्य तावत् काव्यबीज तच्च व्यञ्जनावृत्तिबोध्य व्यञ्जना चाभिनवा वृत्ति कथमङ्गीक्रियते इत्याशङ्क्याह अथेत्यादि । अभिनवा नव्यैरङ्गीकृता इत्यर्थ. । वृत्तीनामिति । अभिधातात्पर्य्यलक्षणाख्याना वृत्तीना विश्रान्ते. स्वस्वार्थं निर्वाह्य विरामात्, रसादीनाम् इत्यत्रादिपदेन भावादयो वस्तूनि अलङ्काराश्च गृह्यन्ते, बोधे प्रतीतौ तुर्य्या चतुर्थी वृत्ति व्यञ्जना इत्यर्थ अङ्गीकार्य्या स्वीकार्य्या ।

(ख) विभावाद्यभिधानमिति । विभावादीनाम् इत्यत्रादिपदेन अनुभावसञ्चारिणो गृह्यन्ते, अभिधान कथनम् अभिधया प्रतिपादन वा तदभिधान तस्य वस्त्वलङ्काररसादेरभिधान तस्य वस्त्वलङ्काररसादे तदेकरूप्यानङ्गीकारात् विभावाद्यभिन्नरूपताया अस्वीकारात् स्वशब्देन रसादिशब्देन अभिधान कथनं रसादेरिति भाव. प्रत्युत वैपरीत्ये । तत्कथनेऽपि न तस्य प्रतीति । संसर्गमात्रे केवलान्वयबोधे इत्यर्थ', परिक्षीणा गतशक्ति. न तस्या अपरार्थबोधने क्षमत्वमिति भाव. ।

"सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः" इति (ग)।

यच्च ध्वनिकेनोक्तम्।

"तात्पर्य्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः।
यावत्कार्य्यप्रसारित्वात् तात्पर्य्यं न तुलाधृतम्॥" इति(घ)

तयोरुपरि शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभाववादिभिरेव पातनीयो दण्डः। एवञ्च किमिति लक्षणाप्युपास्या? दीर्घदीर्घतराभिधाव्यापारेणापि तदर्थबोधसिद्धेः। किमिति च "ब्राह्मण! पुत्रस्ते जातः, कन्या ते गर्भिणी" इत्यादावपि हर्षशोकादीनामपि न वाच्यत्वम्। यत् पुनरुक्तं "पौरुषेयमपौरुषेयञ्च वाक्यं सर्व्वमेव कार्य्यपरम्, अतत्परत्वेऽनुपादेयत्वादुन्मत्तवाक्यवत्, ततश्च काव्यशब्दानां निरतिशयसुखास्वादव्यतिरेकेण प्रतिपाद्यप्रतिपादकयोः प्रवृत्त्यौपयिकप्रयोजनान्तरानुपलब्धेर्निरतिशयसुखास्वाद एव कार्य्यत्वेनावधार्य्यते, "यत्परः शब्दः स शब्दार्थः" इति न्यायादिति। तत्र

---

(ग) शब्दश्रवणानन्तरं यावन्तोऽर्थाः प्रतीयन्ते तावत्स्वेव अभिधा एव व्यापार इति मतमुत्थाप्य दूषयति सोऽयमिति। अतिदीर्घः इषुव्यापारः यथा एकं लक्ष्यं भित्त्वा लक्ष्यान्तरं भिनत्ति तथा एकैवाभिधा मुख्यार्थं बोधयित्वा व्यङ्ग्यार्थमपि बोधयतीति भावः।

(घ) तात्पर्य्येति। तात्पर्य्यस्य अव्यतिरेकात् अभिन्नत्वात् व्यञ्जकत्वस्य व्यञ्जनाया न ध्वनिः न नाम न व्यञ्जनानाम्नी वृत्तिरङ्गीकार्य्या इत्यर्थः, तात्पर्य्यवृत्तिरेव व्यङ्ग्यबोधिनीत्यर्थः। तात्पर्य्यं यावत्कार्य्यप्रसारित्वात् यावन्ति कार्य्याणि यावत्कार्य्यं, तत्र प्रसारित्वात् व्यापकत्वात् तुलया तोलनदण्डेन धृतं न, तात्पर्य्यम् एतावत्कार्य्यं साधयेत् नान्यदिति नेति भावः।

(ङ) तयोरिति। तयोः इषुवत् अभिधाव्यापारवादियावत्कार्य्यप्रसारितात्पर्य्यवादिनोरित्यर्थः। शब्देति। शब्दः घटादिः एकमर्थं बोधयित्वा विरतः नान्यमर्थं बोधयितुं शक्नोति, बुद्धिः एकमर्थं विषयीकृत्य नान्यमर्थं विषयीकर्त्तुं शक्नोति तथा गमनादिरूपं कर्म एकमर्थं ग्रामादिकं निष्पाद्य न अपरं निष्पादयितुं

प्रष्टव्यम्—किमिदं तत्परत्वं नाम? तदर्थत्वं वा तात्पर्य्यवृत्त्या तद्बोधकत्वं वा? आद्ये न विवादः, व्यङ्ग्यत्वेऽपि तदर्थतानपायात्। द्वितीये तु केयं तात्पर्य्याख्या वृत्तिः? अभिहितान्वयवादिभिरङ्गीकृता वा तदन्या वा? आद्ये दत्तमेवोत्तरम्। द्वितीये तु नाममात्रे विवादः। तन्मतेऽपि तुरीयवृत्तिसिद्धेः। नन्वस्तु युगपदेव तात्पर्य्यशक्त्या विभावादिसंसर्गस्य रसादेश्च प्रकाशनमिति चेन्न, तयोर्हेतुफलभावाङ्गीकारात्। यदाह मुनिः—"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति। सहभावे च कुतः सव्येतरविषाणयोरिव कार्य्यकारणभावः, पौर्वापर्य्यविपर्य्ययात्। "गङ्गायां घोषः" इत्यादौ तटाद्यर्थमात्रबोधनविरताया लक्षणायाश्च

---

शक्नोति। यथा ग्रामं गच्छति इत्यनेन काशीं गच्छतीति न प्रतीयते। अभिधादिव्यापारस्तु बुद्धिरेवेति बोध्यम्। ननु बुद्ध्यादयो विरता नान्यमर्थं बोधयितुं शक्नुवन्तीति नोपपद्यते, एकस्यैव बुद्ध्या शब्दादिना न बहुकार्य्यसाधनस्य अनेकार्थादिबोधनस्य च सर्वदैव प्रसिद्धेरित्यस्वरसमाशङ्क्याह एवञ्चेति। तदर्थस्य लक्षणाजन्यबोधविषयस्य लक्ष्यार्थस्य इत्यर्थः, बोधसिद्धे प्रतीतिसिद्धेः। ननु लक्षणाया अपि अस्वीकारे का हानिरिति सामान्यतः समाशङ्क्याह किमितीति। कन्या अनूढा दुहिता। पौरुषेयं पुरुषप्रयुक्तं लौकिकमित्यर्थः, अपौरुषेयम् अलौकिकं वेदस्वरूपम्। कार्य्यपरं प्रयोजनसाधननिरतं, यथा जलमानय इति वाक्यं जलाहरणरूपकार्य्यतत्परम्, एवम् अश्वमेधेन यजेतेति वाक्यं स्वर्गसाधनरूपकार्य्यतत्परम्। अतत्परत्वे कार्य्यपरत्वाभावे इत्यर्थः, उन्मत्तवाक्यवत् चित्तप्रयुक्तवचनवत् अनुपादेयत्वात् अग्राह्यत्वात्, यथा उन्मत्तवाक्यं न कोऽपि गृह्णाति तथा निष्प्रयोजनं वाक्यमिति भावः। प्रतिपाद्यप्रतिपादकयोः श्रोतृपाठकयोः प्रवृत्तिः काव्यश्रवणपाठयोरिच्छा इत्यर्थः, तस्याः औपयिकं युक्तियुक्तं साधकमित्यर्थः, प्रयोजनान्तरं निरतिशयानन्दात् अन्यत् प्रयोजनं तस्य अनुपलब्धेः शब्देनानुपस्थितेः इतीः अवधार्य्यते निर्णीयते तात्पर्य्येणेति भावः। यत्पर इति शब्दः यत्परः यदर्थं यद्बोधेच्छया इत्यर्थः प्रयुक्तः स शब्दार्थः इति, ततश्च तात्पर्य्येणैव रसादिप्रतीतिर्भवेत् न तदर्थं व्यञ्जनाङ्गीकार्य्या इति भावः। तदर्थतानपायात्

कुतः शीतत्वपावनत्वादिव्यङ्ग्यबोधकता ? तेन तुरीया वृत्ति-रूपाख्यैवेति निर्विवादमेतत् (ङ)।

किञ्च।

बोद्धृस्वरूपसङ्ख्या-
निमित्तकार्य्यप्रतीतिकालानाम्।
आश्रयविषयादीनां
भेदाद्भिन्नोऽभिधीयते व्यङ्ग्यः ॥२६८॥ (च)

वाच्यार्थव्यङ्ग्यार्थयोर्हि पदतदर्थमात्रज्ञाननिपुणैर्वैयाकरणै-रपि सहृदयैरेव च संवेद्यतया बोद्धृभेदः, "भम धम्मिअ!" इत्यादौ क्वचिद्वाच्ये विधिरूपे निषेधरूपतया। क्वचित् "निःशेषच्युतचन्दनम्" इत्यादौ निषेधरूपे विधिरूपतया च स्वरूपभेदः। "गतोऽस्तमर्कः" इत्यादौ च वाच्योऽर्थ एक एव

---

दर्थतया तत्परतया अनपायात् अनपगमात्। तयोः विभावादिससर्गस्य सादेश्च हेतुफलभावाङ्गीकारात् कारणकार्य्यभावास्वीकारात् विभावादिससर्गं रसप्रतीतौ हेतु रसश्च कार्य्यं तत् कथं द्वयोर्यौगपद्ये प्रतीति, कार्य्यकारणयो पौर्वापर्य्यनियमात् न हि कार्य्यं कारणञ्च युगपद् भवतीति भावः। सहभावे युगपदुत्पत्तौ सव्येतरविषाणयोः वामदक्षिणशृङ्गयोरिव कुतः कथं कार्य्यकारणभावः? शृङ्गयो समकाले उत्पन्नयोर्यथा परस्परं कार्य्यकारणभावो न स्यात् तथा विभा-वादिससर्गरसयो, तथात्वे मुनिवचनविरोध इति भावः। ननु लक्षणया रसादि-बोध स्यादित्याशङ्क्याह गङ्गायामिति। तुरीया चतुर्थी।

(च) अभिधेयव्यङ्ग्यार्थयोर्भेद दर्शयति किञ्चेत्यादि। बोद्धा ज्ञाता स्वरूपं स्वस्य रूप लक्षण चिह्नमित्यर्थः, सङ्ख्या द्वित्वबहुत्वादिरूपा गणना निमित्तं हेतु कार्य्यं प्रयोजनं प्रतीति. काल समय. तेषां तथा आश्रयः अवलम्बनं विषय प्रतिपाद्यादिरूप इत्यादीना भेदात् भिन्नत्वात् व्यङ्ग्यः व्यञ्जनाबोध्य अर्थः अभि-धेयत अभिधाबोध्यात् अर्थात् वाच्यार्थादित्यर्थ. भिन्नः पृथक्।

(छ) बोद्धृभेद दर्शयति वाच्यार्थव्यङ्ग्यार्थयोरिति। वैयाकरणा वाच्यार्थ-

प्रतीयते, व्यङ्ग्यस्तु तद्बोद्धृादिभेदात्; क्वचित् "कान्तमभिसरेति","गावो निरुध्यन्तामिति" नायकस्य भयमागमनावसर इति सन्तापोऽधुना नास्तीत्यादिरूपेणानेक इति सङ्ख्याभेदः । वाच्यार्थः शब्दोच्चारणमात्रेण वेद्यः । एष तु तथाविधप्रतिभानैर्मल्यादिनेति निमित्तभेदः । प्रतीतिमात्रचमत्कारकरणाच्च कार्य्यभेदः । केवलरूपतया चमत्कारितया च प्रतीतिभेदः । पूर्वपश्चाद्भावेन च कालभेदः । शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसङ्घटनाश्रयत्वेन च आश्रयभेदः (छ) ।

"कस्स ण वा होइ रोसो दट्ठुण पिआइ सव्वणं अहरम् ।
सभमरपञ्भ्माग्घाइणि ! वारिअवामे ! सहस्स दाणीम्" ॥

इति सखीतत्कान्तविषयत्वेन विषयभेदः तस्मान्नाभिधेय एव व्यङ्ग्यः (ज) ।

---

मेव न तु व्यङ्ग्यार्थं बोद्धुं शक्नुवन्ति सहृदयास्तु उभयमेवेति वाच्यार्थबोद्धारो वैयाकरणाः व्यङ्ग्यार्थबोद्धारस्तु सहृदया एवेति भाव.। स्वरूपभेदं दर्शयति। "भम धम्मिअ" इत्यादि वाच्यार्थः विधिरूप. व्यङ्ग्यार्थः निषेधरूप इति वाच्यव्यङ्ग्ययो. स्वरूप सुमहत् भिन्नमिति भावः। सङ्ख्याभेद दर्शयति गत इति। अत्र एक एव वाच्यार्थ., व्यङ्ग्यस्तु बहुविध इति भाव । निमित्तभेदं दर्शयति वाच्यार्थ इति। शब्दस्य उच्चारणं ज्ञान तन्मात्रेण मात्रशब्देन प्रतिभानैर्मल्यादिव्यवच्छेदः। कार्य्यभेदं दर्शयति प्रतीतीति। वाच्यार्थे प्रतीतिमात्र बोधमात्र मात्रशब्देन चमत्कारव्यवच्छेदः, व्यङ्ग्यार्थे. चमत्कारकरण चित्तोल्लासविधानम्। प्रतीतिभेदं दर्शयति केवलेति। कालभेद दर्शयति पूर्वेति। वाच्यार्थः प्रथम प्रतीयते व्यङ्ग्यस्तु पर्य्यालोचनया परत इति भावः। आश्रयभेद दर्शयति शब्दाश्रयत्वेनेति। वाच्यार्थ. केवल शब्दमाश्रयति व्यङ्ग्यार्थस्तु शब्दादिमिति।

(ज) विषयभेद दर्शयति कस्य इति। "कस्य न वा भवति रोषो दृष्ट्वा प्रियाया. सव्रणमधरम्। सभ्रमरपद्माघ्रायिणि। वारितवामे। सहस्वेदानीम् ॥" इति संस्कृतम्। उपपतिना दष्टाधरां भार्य्यां प्रति क्रुद्धं नायक प्रतारयन्त्यास्तत्सख्या उक्तिरियम्। हे वारितवामे! वारिता निवारितापि वामा प्रतिकूला तत्-

तथा।

**प्रागसत्त्वाद्रसादेर्नो बोधिके लक्षणाभिधे।**
**किञ्च मुख्यार्थबाधस्य विरहादपि लक्षणा॥२६९॥(भ)**

न बोधिकेति शेषः। नहि कोऽपि रसनात्मकव्यापाराद् भिन्नो रसादिपदप्रतिपाद्यः पदार्थः प्रमाणसिद्धोऽस्ति यमिमे लक्षणाभिधे बोधयेताम्। किञ्च यत्र "गङ्गायां घोषः" इत्यादावुपात्तशब्दार्थानां बुभूषन्नेवान्वयोऽनुपपत्त्या बाध्यते तत्रैव हि लक्षणायाः प्रवेशः। यदुक्तं न्यायकुसुमाञ्जलावुदयनाचार्य्यैः।

"श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति।
पदार्थान्वयवैधुर्य्यात् तदाक्षिप्तेन सङ्गतिः"॥ (ञ)

---

सम्बुद्धौ, सभ्रमर पद्म जिघ्रतीति तत्सम्बोधने, प्रियाया अधरं सव्रणं व्रणयुक्तं दृष्ट्वा कस्य जनस्य रोषः क्रोधः न भवति ? सर्व्वस्यैव भवतीत्यर्थः। इदानीं सहस्व भर्त्तृतर्जना व्रणवेदनाञ्चेति शेषः। सखी तत्कान्तविषयत्वेनेति। अत्र वाच्यार्थबोधे सखी उद्देश्या। उपपतिना नाधरो दष्ट इति व्यङ्ग्यार्थबोधे उद्देश्यस्तत्पतिरिति भावः।

(भ) प्रागिति। रसादेः प्राक् असत्त्वात् अविद्यमानत्वात् लक्षणाभिधे लक्षणाख्यवृत्तिरभिधाख्यवृत्तिश्चेत्यर्थः. नो बोधिके बोधयितुं न शक्नुत इत्यर्थः. लक्षणा अभिधा च प्रमाणसिद्धमेव वस्तु बोधयति प्रमाणासिद्धं रसादिकं नेति भावः। किञ्च अन्यच्च मुख्यार्थबाधस्य विरहात् अभावादपि लक्षणा नो बोधिका। लक्षणया मुख्यार्थबाधे हि प्रमाणसिद्धं वस्तु बोध्यते रसादिबोधे तु न मुख्यार्थबाधः नापि रसादि प्रमाणसिद्धमिति भावः।

(ञ) श्रुतेति। श्रुतान्वयात् श्रुतानां शब्दोपात्तानाम् अन्वयात् अन्वयबोधजनकात् अनाकाङ्क्षम् आकाङ्क्षारहितं वाक्यम् अन्यत् अर्थान्तरं न इच्छति। पदार्थान्वयवैधुर्य्यात् पदार्थानाम् अन्वयानुपपत्तियद्वात् मुख्यार्थबाधादित्यर्थः, तदाक्षिप्तेन मुख्यार्थसम्बन्धितया गृहीतेन अर्थेनेति शेषः, सङ्गतिः उपपत्तिः भवतीति शेषः।

न पुनः "शून्यं वासगृहम्" इत्यादौ मुख्यार्थबाधः । यदि च "गङ्गायां घोषः" इत्यादौ प्रयोजनं लक्ष्यं स्यात्, तीरस्य मुख्यार्थत्वं बाधितत्वञ्च स्यात्, तस्यापि च लक्ष्यतया प्रयोजनान्तरं तस्यापि प्रयोजनान्तरमित्यनवस्थापातः । न चापि प्रयोजनविशिष्टे एव तीरे लक्षणा । विषयप्रयोजनयोर्युगपत्प्रतीत्यनभ्युपगमात् । नीलादिसंवेदनानन्तरमेव हि ज्ञाततायाः अनुव्यवसायस्य वा सम्भवः (ट) ।

**नानुमानं रसादीनां व्यङ्ग्यानां बोधनक्षमम् ।**
**आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः॥२७०(ठ**

---

(ट) प्रयोजनं लक्ष्यं स्यादिति प्रयोजन शैत्यपावनत्वातिशयः लक्ष्य लक्षणाजन्यबोधविषयः स्यात् तदा तीरस्य मुख्यार्थत्वं गङ्गाशब्दस्य तीरमेव मुख्यार्थ. बाधितत्व तन्मुख्यार्थस्य बाधश्च स्यात् । इष्टापत्तावाह तस्यापीति । तस्यापि शैत्यपावनत्वादिरूपस्य लक्ष्यार्थस्यापि लक्ष्यतया विशेषणे तृतीया लक्ष्यमित्यर्थः, प्रयोजनान्तरम् अन्यत् प्रयोजनम् । अनवस्थापात असीमत्वात् लक्ष्यप्रयोजनाना न क्वापि व्यवस्थेति भाव. । विषयप्रयोजनयोरिति । विषयः कारणीभूतज्ञानं प्रयोजनं फलीभूतज्ञान तयोर्युगपत् समकालिकी या प्रतीति' तस्या. अनभ्युपगमात् अनङ्गीकारात्, न हि कारणज्ञानं कार्य्यज्ञानञ्च समकाले भवतीति भाव. । एतदेव समर्थयति नीलादीति । नीलादीना संवेदनानन्तरमेव प्रत्यक्षात् परमेव, न तु पूर्वं वा प्रत्यक्षसमकाले इत्यर्थः, ज्ञाततायाः मीमांसकमतानुयायिना सङ्केतविशेषः, यथा नीलो ज्ञात इत्यादिरूपः तस्या वा अनुव्यवसाय. नैयायिकमतानुयायिना सङ्केतविशेषः, यथा नीले प्रत्यक्षे नीलमहं जानामीत्येव रूप' तस्य । ततश्च नीलादिप्रत्यक्ष कारण तदनन्तर ज्ञानता वा अनुव्यवसाय' तस्य फल तयोर्यौगपद्यं न केऽप्यङ्गीकुर्वन्ति । प्रकृते तीरज्ञानात् परमेव शैत्यपावनत्वादिप्रतीतिः न तु समकालिकीति फलितार्थः ।

(ठ) अनुमानप्रमाणलभ्यत्वं रसादेर्निराकरोति नेति । हेतूनां कारणानाम् आभासत्वेन दुष्टत्वेन व्यभिचरितत्वेनेत्यर्थः, अनुमानं रसादीनां व्यङ्ग्याना

व्यक्तिविवेककारेण हि "यापि विभावादिभ्यो रसादीनां प्रतीतिः सानुमान एवान्तर्भवितुमर्हति। विभावानुभावव्यभिचारिप्रतीतिर्हि रसादिप्रतीतेः साधनमिष्यते। ते हि रत्यादीनां भावानां कारणकार्य्यसहकारिभूतास्ताननुमापयन्त एव रसादीन् निष्पादयन्ति। त एव हि प्रतीयमाना आस्वादपदवीं गताः सन्तो रसा उच्यन्ते, इत्यवश्यम्भावी तत्प्रतीतिक्रमः केवलमाशुभावितया असौ न लक्ष्यते, यतोऽयमव्याप्यभिव्यक्तिक्रमः" इति यदुक्तं तत्र प्रष्टव्यम्। किं शब्दाभिनयसमर्पित-विभावादिप्रत्ययानुमित-रामादिगत-रागादिज्ञानमेव

---

व्यञ्जनाजन्यबोधविषयाणां न बोधने चम समर्थं तथा स्मृतिः संस्कारविशेषः रसादीनां धी ज्ञानसाधनं न।

(ङ) अनुमान एवेति। एवकारात् व्यञ्जनाव्यवच्छेदः। ते विभावादयः। अनुमापयन्त अनुमानेन बोधयन्तः। यथा पर्वतो वह्निमान् धूमादित्यत्र वह्निव्याप्यधूमवान् पर्वत इति प्रतीतिः तथा शून्यं वासगृहमित्यादि काव्यं शृङ्गाररसवत् तत्तद्विभावादिमत्त्वादित्यनुमितौ शृङ्गाररसव्याप्यविभावादिमत् काव्यमिति प्रतीतिर्भवेदिति भावः। त एव विभावादयः। ननु अनुमितौ कार्य्यकारणकल्पनेन रसप्रतीतेः क्रमानुभवनीयत्वात् असंलक्ष्यक्रमव्यङ्ग्यत्वहानिरित्यत आह अवश्यमिति। तस्य रसादेः प्रतीतौ क्रमः पौर्वापर्य्यम्। अवश्यम्भावी अन्यथा कथं विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति सङ्गच्छते। आशुभावितया शीघ्रोत्पन्नत्वेन असौ क्रमः न लक्ष्यते नानुभूयते। यतः अयम् अव्यापि रसादेर्व्यङ्ग्यत्वस्वीकारेऽपि अभिव्यक्तेः प्रतीतेः क्रमः। यथा प्रथमं विभावादिप्रतीतिः ततः साधारण्याभिमानः ततो रसानुभव इति क्रमसत्त्वेऽपि आशुभावित्वेन भवद्भिरसंलक्ष्यक्रमव्यङ्ग्यत्वं स्वीक्रियते तथानुमानवादिनामपीति भावः। शब्देति। शब्देन श्रव्येण अभिनयेन दृश्येन इत्यर्थः समर्पितः उत्पादितः यः विभावादीनां प्रत्ययः प्रतीतिः तेन अनुमितः रामादिगतः यः रागादिः सीतादिविषयकः प्रणयादिः तस्य ज्ञानं प्रतीतिः। तद्भावनया तस्य रामादिगतरागादिध्यानेन भावकैः सहृदयैः भाव्यमानः आस्वाद्यमानः। व्याप्तिग्रहणाभावादिति। अव्यभिचरितहेतुसत्त्वेन कार्य्यस्य अवश्यम्भाविता हि व्याप्तिः। सा तु अनु-

रसत्वेनाभिमतं भवतः, तद्भावनया भावकैर्भाव्यमानः स्वप्रकाशानन्दो वा ? आद्ये न विवादः, किन्तु रामादिगत-रागादिज्ञानं रससंज्ञया नोच्यतेऽस्माभिरित्येव विशेषः। द्वितीयस्तु व्याप्तिग्रहणाभावाद्धेतोराभासतयाऽसिद्ध एव। यच्चोक्तं तेनैव। "यत्र यत्र एवंविधानां विभावानुभावसात्त्विकसञ्चारिणामभिधानमभिनयो वा तत्र तत्र शृङ्गारादिरसाविर्भावः" इति। सुग्रहैव व्याप्तिः पक्षधर्मता च (ड)। तथा।

"याऽर्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनम्।
सैवानुमितिपक्षे नो गमकत्वेन सम्मता" इति (ढ)॥

इदमपि नो न विरुद्धम्। नहि एवंविधा प्रतीतिरास्वाद्यत्वेन अस्माकमभिमता, किन्तु स्वप्रकाशमात्रविश्रान्तः

---

मानप्रमाणस्य साधिकेति स्थितिः। अत्र तु श्रोत्रियजरन्मीमांसकादीनां विभावादिप्रत्ययसत्त्वेऽपि स्वप्रकाशानन्दमयरसास्वादस्य अदर्शनात् हेतुर्व्यभिचारीति कथमनुमानं सम्भवतीति भावः। प्रकारान्तरेण व्याप्तिग्रहं साधयित्वा अनुमानसिद्धत्वं रसादेः साधयति यच्चोक्तमिति। तेनैव व्यक्तिविवेककारेणैव। एवंविधानां तत्तद्व्यापारशालिनामित्यर्थः, अभिधानं शब्देनोपस्थानम् अभिनयः अङ्गादिचेष्टया उपस्थितिः। श्रोत्रियजरन्मीमांसकादयोऽपि विभावादीन् रत्यादेः कारणकार्य्यसहकारिरूपान् जानन्ति परं रत्यादेर्विशेषेण आस्वादाङ्कुरयोग्यतानयनं विभावनम्। तादृशस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनम् अनुभावनम्। तथाभूतस्य तस्य सम्यक्चारणं सञ्चारणं पूर्वमुक्तम् एतद्व्यापारभागिनस्तान् न अनुभवन्ति, एतदनुभवस्यैव रसास्वादत्वादिति भावः। व्याप्तिः अव्यभिचारिहेतुत्वरूपा पक्षधर्मता पक्षसत्ता पक्षे विद्यमानता इत्यर्थः। यथा पर्वतो वह्निमानित्यत्र पक्षः पर्वतः तत्र वह्नेः सत्तास्ति तथात्र सामाजिकानाम् अहं रसवान् इत्येवं प्रतीतौ रसिकजनः पक्षः रसस्य तत्सत्तास्तीत्यवधेयम्।

(ढ) येति। अर्थान्तरस्य भवन्मते व्यङ्ग्यस्य अभिव्यक्तौ प्रकटने वः युष्माकं या सामग्री कारणकूटः निबन्धनं प्रधानम् इष्टा अभिलषिता सैव सामग्री नः अस्माकम् अनुमितिपक्षे गमकत्वेन सम्मता। सा च सामग्री शब्दबोधरूपेति बोध्यम्।

सान्द्रानन्दनिर्भरः। तेन अत्र सिषाधयिषितादर्थादर्थान्तरस्य साधनाद्धेतोराभासता (ण)। यच्च "भम धम्मिअ।" इत्यादौ प्रतीयमान वस्तु।

"जलकेलितरलकरतलमुक्तः पुनः पिहितराधिकावदनः।
जगदवतु कोकयूनोर्विघटनसङ्घटनकौतुकी कृष्णः"॥

इत्यादौ च रूपकालङ्कारादयोऽनुमेया एव। तथाहि, अनुमानं नाम पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टा-लिङ्गाल्लिङ्गिनो ज्ञानम्। ततश्च वाच्यादसम्बन्धोऽर्थस्तावन्न प्रतीयते अन्यथातिप्रसङ्गः स्यादिति बोध्यबोधकयोरर्थयोः कश्चित् सम्बन्धोऽस्त्येव। ततश्च बोधकोऽर्थो लिङ्गं बोध्यश्च लिङ्गी बोधकस्य चार्थस्य पक्षसत्त्वं निबद्धमेव। सपक्षसत्त्व-

---

(ण) इदमपि एवरूपमपि अनुमानं न अस्माकं न विरुद्धं न विपरीतम्, अस्माभिः स्वीक्रियते इति भाव। सिषाधयिषितात् साधयितुमिष्टात् अर्थात् व्यङ्ग्यरूपादित्यर्थः, अर्थान्तरस्य अन्यरूपस्य अस्मादनभिप्रेतस्येत्यर्थः, अर्थस्य भवदुक्त-रूपस्य रसस्य साधनात् निष्पादनात् हेतोः आभासता दुष्टहेतुत्वमित्यर्थः। अनु-मितौ तु येन हेतुना यत् कार्य्यं साध्यते तदेव कार्य्यमवश्यम्भावि, यदि तेन हेतुना अभिप्रेतकार्य्यं साध्यते तदेव तस्य हेतोराभासत्वं नियतहेतुका ह्यनुमिति-रिति बोध्यम्।

(त) वस्त्वलङ्कारयोरपि अनुमेयत्वं वदतो व्यक्तिविवेककारमतानुयायिनो दूषयति यच्चेत्यादि जलेति। जलकेलौ वारिविहारे तरलाभ्यां चञ्चलाभ्यां कर-तलाभ्यां मुक्तः त्यक्तः पुनः पिहितम् आच्छादितं राधिकायाः वदनं येन तादृशः अतएव कोकयूनोः चक्रवाकदम्पत्योः विघटने सङ्घटने वियोगसंयोगौ तयोः कौतुकी कुतूहलवान् कृष्णः जगत अवतु रक्षतु। अत्र चन्द्रोदये रात्रौ चक्रवाक-वियोगः, तस्यानुदये दिवा संयोग इति प्रसिद्धिरत्रानुसन्धेया। राधिकावदने चन्द्रत्वारोपः अनुमेय एव नालमत्र व्यञ्जनास्वीकारेण। एतदेव उपपादयति तथाहीत्यादि पक्षे साध्यवति सत्त्वं विद्यमानता पक्षसत्त्वं, पक्षतुल्ये वस्तुनि सत्त्वं विद्यमानता, पक्षसत्त्वं विपक्षात् विरुद्धपक्षात् व्यावृत्तत्वं निवृत्तिः, एतद्विशिष्टात्

विपक्षव्यावृत्तत्वे अनिबद्धेऽपि सामर्थ्यादनुमेये। तस्मादत्र यद् वाच्यार्थाल्लिङ्गरूपाल्लिङ्गिनो व्यङ्ग्यार्थस्यावगमस्तदनुमान एव पर्य्यवस्यतीति"। तन्न। तथाहि अत्र "भम धम्मिअ।" इत्यादौ गृहे श्वनिवृत्त्या विहितं भ्रमणं गोदावरीतीरे सिंहो-पलब्धेरभ्रमणमनुमापयतीति यद्वक्तव्यं तत्र नैकान्तिको हेतुः। भीरोरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण च गमनस्य सम्भवात्। पुंश्चल्या वचनं प्रामाणिकं न वेति सन्दिग्धासिद्धश्च। "जलकेलीत्यत्र" य आत्मदर्शनाभ्यां चक्र-वाकविघटनसङ्घटनकारी स चन्द्र एवेति अनुमितिरेवेयमिति न वाच्यम्, उल्लासकादावनैकान्तिकत्वात्। एवंविधोऽर्थ एवंविधार्थबोधक एवंविधार्थत्वाद् यन्नैवं तन्नैवमित्यनुमानेऽपि आभाससमानयोगक्षेमो हेतुः। एवंविधार्थत्वादिति हेतुना एवंविधानिष्टार्थसाधनस्याप्युपपत्तेः। तथा यत् "दृष्टिं हे

---

लिङ्गात् साधनात् लिङ्गिनः साध्यस्य ज्ञानं प्रतीतिः अनुमानम्। यथा पर्वतो वह्निमान् धूमादित्यत्र पर्वतः पक्षः वह्निः साध्यः धूमो लिङ्गम्। यथा पर्वतः साध्यवानिति पक्षः तथा महानसेऽपि वह्निरस्तीति महानसः सपक्षः, ह्रदादौ वह्निर्नास्तीति ह्रदो विपक्ष इत्यादि। वाच्यात् अभिधेयार्थात् असम्बन्धः सम्बन्ध-वर्जितः अन्यथा असम्बन्धार्थप्रतीतौ इत्यर्थः, अतिप्रसङ्गः अतिव्याप्तिः अलक्ष्ये लक्षण-गमनरूप इत्यर्थः। यथा, "भम धम्मिअ!" इत्यत्र यथा भ्रमणाभावः प्रतीयते तथा घटाभावोऽपि प्रतीयेत इति। "भम धम्मिअ!" इत्यत्र बोध्यबोधकयोरर्थयोर्वैपरीत्य-लक्षणः सम्बन्धो बोध्यः। निबद्धमेव वर्णितमेव। सामर्थ्यात् योग्यताबलात् अव-सेये प्रत्येतव्ये एतत् सदृशसन्दर्भे सपक्ष, विपरीतस्तु विपक्ष इति भावः। वाच्या-र्थात् अभिधेयार्थात् लिङ्गरूपात् साधनरूपात् लिङ्गिनः साध्यरूपस्य व्यङ्ग्यस्य अव-गमः प्रतीतिः। ततश्च "भम धम्मिअ!" इत्यादौ श्वनिवृत्त्या विहित भ्रमण वैपरी-त्यसम्बन्धेन अभ्रमणार्थवत् गोदावरीतीरे सिंहोपलब्धेरित्यनुमानप्रकार इति भावः। अनैकान्तिकः व्यभिचारीत्यर्थः। गमनस्य सम्भवादिति अभ्रमणानुमापकेन लिङ्गेन साध्याभावस्य दर्शनादिति भावः। अनुमितेर्दोषान्तरं दर्शयति सन्दिग्ध-

प्रतिवेशिनि। "चणमिहाप्यस्मदित्यादौ" नलग्रन्थीनां तनूलिखनम् एकाकितया च स्रोतोगमनं तस्याः परकामुकोपभोगस्य लिङ्गिनो लिङ्गमित्युच्यते, तच्च तत्रैवाभिहितेन स्वकान्तस्नेहेनापि सम्भवतीति अनैकान्तिको हेतुः। यच्च "निःशेषच्युतचन्दनम्" इत्यादौ दूत्यास्तत्कामुकोपभोगोऽनुमीयते तत् किं प्रतिपाद्यया दूत्या तत्कालसन्निहितैर्वान्यैः तत् काव्यार्थभावनया वा सहृदयैः? आद्ययोर्न विवादः। तृतीये तु तथाविधाभिप्रायविरहस्थले व्यभिचारः। ननु वक्त्राद्यवस्थासहकृतत्वेन विशेष्यो हेतुरिति न वाच्यम्, एवंविधव्याप्त्यनुसन्धानस्याभावात्। किञ्च एवंविधानां काव्यानां कविप्रतिभामात्रजन्मनां प्रामाण्यानावश्यकत्वेन सन्दिग्धासिद्धत्वं हेतोः। व्यक्तिवादिना चाधमपदसहायानामेवैषां पदार्थानां व्यञ्जकत्वमुक्तं, तेन च तत्कान्तस्याधमत्वं प्रामाणिकं न वेत्यपि

---

सिद्धेरिति। इदं वाक्यं धार्मिकस्य भयोत्पादकं वा कुक्कुरस्पर्शसङ्गासङ्कुचितस्य तस्य स्वच्छन्दभ्रमणविधायकमिति सामाजिकानां सन्देहात् भीरुत्वसन्देह इति हेतोः सन्दिग्धत्वेन असिद्धेः अनिष्पत्तेः। अनुमितौ असन्दिग्धो हेतुरावश्यकः, अत्र तु न तथेति हेतोः सन्दिग्धत्वात् न अत्रानुमानमिति भावः। अलङ्कृत्यनुमानं दूषयति जलकेलीति उत्त्रासकादाविति उत्त्रासकः भयप्रदः। आदिना वियोगकारणान्तरस्यापि ग्रहणम्। यदि कश्चित् भयं प्रदर्शयति तदापि वियोगस्य सम्भव इति चन्द्रोदयरूपस्य हेतोरभावेऽपि हेत्वन्तरेण वियोगदर्शनात् हेतोर्व्यभिचार इति भावः। अनुमानञ्च कदापि व्यभिचारभयात् पञ्चमात्रवृत्ति भवति, तेनैव इष्टसिद्धिं कुर्वतोऽपि दूषयति एवमिति आभाससमानेति। आभासस्य दुष्टहेतुरूपव्यभिचारस्य समानी योगक्षेमं कार्यसाधको हेतुः। तथा च एवंविधं "सूर्योऽयमस्तं गतः" इत्यादिरूपं एवंविधार्थानां "गावो निरुध्यन्तां" सन्ध्यावन्दनावसर इत्यादिरूपाणां बोधकं एवंविधार्थत्वात् एवंविधार्थबोधाय प्रयुक्तत्वादित्यर्थः, यत् वस्तु नैवं न एवंप्रकारम् एवंविधार्थबोधकत्वाभाववदित्यर्थः, तत् वस्तु नैवम् एवंविधार्थबोधकत्वाभाववदित्यर्थः। तत्र एवंविधार्थत्वात् इत्यनेन एवंविधानिष्टार्थ-

कथमनुमानम्। एतेनार्थापत्तिवेद्यत्वमपि व्यङ्ग्यानामपास्तम्। अर्थापत्तेरपि पूर्वसिद्धव्याप्तिच्छायामुपजीव्यैव प्रवृत्तेः। यथा। "यो जीवति स कुत्राप्यवतिष्ठते जीवति चात्र गोष्ठ्यामविद्यमानश्चैत्रः" इत्यादि (त)।

किञ्च वस्त्रक्रयादौ तर्जनीतोलनेन दशसङ्ख्यादिवत् सूचनबुद्धिवेद्योऽप्ययं न भवति, सूचनबुद्धेरपि सङ्केतादिलौकिकप्रमाणसापेक्षत्वेनानुमानप्रकारताङ्गीकारात्। यच्च "संस्कारजन्यत्वाद्रसादिबुद्धिः स्मृतिः" इति केचित्, तत्रापि प्रत्यभिज्ञायामनैकान्तिकतया हेतोराभासता। "दुर्गालङ्घितेत्यादौ"

---

साधनत्वादित्यपि वक्तुं शक्यते तथात्वे पक्षमात्रवृत्त्यनुमानेऽपि हेतोर्दुष्टत्वमिति भावः। अनुमानं पक्षमात्रवृत्त्यापि दुष्टे हेतौ नैव भवतीति भावः। यदि हेत्वाभासेन अनुमितिर्न सम्भवति, तदा व्र विशिष्टो हेतुर्वाच्य इति मतं दूषयति नन्विति वक्त्रादीत्यादि तद्गुणसंविज्ञानबहुव्रीहिणा प्रतिपाद्यदूतीपरिग्रहः। अवस्था कामुकत्वादिवैशिष्ट्यम्। एवंविधेति एवंविधा या व्याप्तिः तस्याः अनुसन्धानस्य अभावात् शब्देनानुपस्थानात् प्रमाणान्तरस्य च असद्भावादिति भावः, कविप्रतिभामात्रजन्मनां कवीनां प्रतिभा बुद्धिनैर्मल्यं तन्मात्रेण जन्म उत्पत्तिर्येषां तादृशानां प्रामाण्यस्य याथातथ्यरूपानुसन्धानस्य अनावश्यकत्वेन हेतौ सन्दिग्धासिद्धत्वं किमियं परपुरुषार्थिनी स्रोतसि जलाहरणार्थं गता उत स्वकान्तस्नेहेनेति सन्देहः, तेन हेतोर्न प्रामाण्यं तत् कथमेवानुमानं सम्भवतीति भावः। एतेषां पदार्थानां निःशेषच्युतचन्दनमित्यादीनामित्यर्थः व्यञ्जकत्वं व्यङ्ग्यबोधकत्वम्। प्रामाणिकं तथ्यम्। एतेन हेतोराभासत्वेन इत्यर्थः। पूर्वेति, पूर्वं सिद्धा निर्णीता इत्यर्थः, या व्याप्तिः तस्याः छायाम् आश्रयमित्यर्थः उपजीव्य अवलम्ब्य इत्यर्थः। अर्थस्य अपरार्थस्य आपत्तिः आक्षेपः अर्थापत्तिः, यथा जीवतीति, यतो जीवति अतः कुत्रापि, गोष्ठीभिन्नेऽपि स्थाने अवतिष्ठते इति अर्थापत्त्या प्रतीयते। अत्र जीवति इति व्याप्तिग्राहकमित्यवधेयम्।

(थ) तर्जनीतोलनेन तर्जन्याः उत्क्षेपेण। सूचनबुद्धिवेद्यः सूचनं सङ्केतः तद्विषयिणी या बुद्धिः तद्वेद्यः अयं व्यङ्ग्यरूपोऽर्थ इत्यर्थः; सूचनबुद्धेरपि लौकिकप्रमाणसापेक्षत्वेन अयं भावः, यदि काचित् पूर्वं व्यवहारार्थं व्यवहारिकेण सह

च "द्वितीयार्थो नास्त्येव" इति यदुक्तं महिमभट्टेन; तदनुभवसिद्धमपलपतो गजनिमीलिकैव (थ)। तदेवमनुभवसिद्धस्य तत्तत् रसादिलक्षणार्थस्याशक्यापलापतया तत्तत् शब्दाद्यन्वयव्यतिरेकानुविधायितया च अनुमानादिप्रमाणावेद्यतया च अभिधादिवृत्तित्रयाबोध्यतया च तुरीया वृत्तिरुपास्यैवेति सिद्धम्। इयञ्च व्याख्याद्यनुसन्धानं विनापि भवतीत्यखिलं निर्मलम्। तत् किंनामिकेयं वृत्तिरित्युच्यते—

सा चेयं व्यञ्जना नाम
वृत्तिरित्युच्यते बुधैः।
रसव्यक्तौ पुनर्वृत्तिं
रसनाख्यां परे विदुः॥२७१॥ (द)

एतच्च विविच्योक्तं रसनिरूपणप्रस्ताव इति सर्वमवदातम्।

इति साहित्यदर्पणे व्यञ्जनाव्यापारस्थापनं नाम
पञ्चमः परिच्छेदः।

---

साधारणजनगोपनार्थम् एव व्यवस्थापयति यत मम तर्जनीतोलने दुष्टाभिदंशशङ्का बोद्धव्येति। तदा तत्सूचनेन तस्य व्यवहारः सिध्यति, तत्र च सूचने प्रामाण्यस्य सद्भावेन अनुमानप्रकारताङ्गीकारादिति सा सूचनबुद्धिरनुमानविशेष एवेति भावः। प्रकृते वक्तृशक्तिवैचित्र्यविशेष एव हेतुः, तेन व्यङ्ग्यार्थप्रतीतिर्व्याप्तिग्रहेणैव भवतीति कथं व्यञ्जनास्वीकार इत्यापत्तिरपि न भवति। वक्तृशक्तिविशेषवैचित्र्यसत्त्वेऽपि सर्वेषामेव श्रोतॄणामनभिज्ञतया व्यङ्ग्यार्थानवबोधस्थले व्यभिचारदर्शनादिति बोध्यम्। प्रत्यभिज्ञायां सोऽयमित्याकारकप्रतीतौ अनैकान्तिकतया साध्यं विना विद्यमानतया हेतौ संस्कारजन्यज्ञानत्वरूपस्य आभासता व्यभिचारिता दुष्टता इत्यर्थः। अपलपतः निह्नुवानस्य महिमभट्टस्य इत्यर्थः, गजनिमीलिका हस्तिवत् मूर्खता इति भावः।

(द) सा चेयमिति। रसव्यक्तौ रसप्रकटने इत्यर्थः, परे अन्ये विद्वांसः रसनाख्यां वृत्तिं विदुः। व्यञ्जनया वस्त्वलङ्काररूपव्यङ्ग्यार्थावगतिः रसनया तु

# षष्ठः परिच्छेदः ।



एवं ध्वनिगुणीभूतव्यङ्ग्यत्वेन काव्यस्य भेदद्वयमुक्त्वा पुन-र्दृश्यश्रव्यत्वेन भेदद्वयमाह—

**दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।**

**दृश्यं तत्राभिनेयं (क) ॥२७२॥**

तस्य रूपकसंज्ञाहेतुमाह—

**तत् रूपारोपात्तु रूपकम् ॥२७३॥**

तत् दृश्य काव्य नटे रामादिस्वरूपारोपाद्रूपकमित्युच्यते ।

कोऽसावभिनय इत्याह—

**भवेदभिनयोऽवस्था-**

**नुकारः स चतुर्विधः ।**

**आङ्गिको वाचिकश्चैव-**

**माहार्य्यः सात्त्विकस्तथा ॥२७४॥ (ख)**

---

रसादिरूपार्थावगतिरिति परमत ग्रन्थकृतस्तु सामान्येन व्यञ्जनयैव सर्वव्यङ्ग्यार्थाव-गम इति बोध्यम् ।

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता विमलाख्या साहित्यदर्पणस्य पञ्चम-परिच्छेदव्याख्या समाप्ता ।

---

(क) अभिनीयते इति अभिनेयं, कर्मणि यत्प्रत्यय, नटाद्यभिनीय-मानं नायकादिचरितमित्यर्थः ।

(ख) अवस्थायाः अनुकार. अनुकरणम् अभिनयः । स चतुर्विधः, आङ्गिकः

नटैरङ्गादिभिः रामयुधिष्ठिरादीनामवस्थानुकरणमभिनयः।

रूपकस्य भेदानाह—

नाटकमथ प्रकरणं
भाणव्यायोगसमवकारडिमाः।
ईहामृगाङ्कवीथ्यः
प्रहसनमिति रूपकाणि दश ॥२७५॥ (ग)

किञ्च।

नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम्।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥
संलापकं श्रीगदितं शिल्पकञ्च विलासिका।
दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥
अष्टादश प्राहुरुपरूपकाणि मनीषिणः।
विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्॥२७६(घ)

सर्वेषां प्रकरणादिरूपकाणां नाटिकाद्युपरूपकाणाञ्च।

---

अङ्गेन निष्पन्नः, वाचिकः वचनेन निष्पन्नः, आहार्य्यं आहरणीयं वेशरचनादिरूपं, सात्त्विकं सत्त्वोद्रेकात् जनितं स्तम्भस्वेदादिः।

(ग) नाटकमिति। नाटकं प्रकरणं भाणः व्यायोगः समवकारः डिमः ईहामृगः अङ्कः वीथी प्रहसनमिति दशरूपकाणि भवन्ति।

(घ) विनेति। विशेषं विना सर्वेषां रूपकाणाम् उपरूपकाणाञ्च लक्ष्म लक्षणं स्वरूपमित्यर्थः, नाटकवत् मतं कथितम्।

तत्र।

नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्।
विलासर्द्ध्यादिगुणवद् युक्तं नानाविभूतिभिः॥
सुखदुःखसमुद्भूतिनानारसनिरन्तरम्।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।
दिव्योऽथ दिव्यादिव्यो वा गुणवान् नायको मतः॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा।
अङ्गमन्ये रसाः सर्वे कार्य्यं निर्वहणेऽद्भुतम्॥
चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः।
गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्त्तितम्॥२७७(ङ)

ख्यातं रामायणादिप्रसिद्धं वृत्तम्। यथा रामचरितादि। सन्धयो वक्ष्यन्ते। नानाविभूतिभिर्युक्तमिति महासहायम्। सुखदुःखसमुद्भवत्वं रामयुधिष्ठिरादिवृत्तान्तेषु अभिव्यक्तम्। राजर्षयो दुष्मन्तादयः। दिव्याः श्रीकृष्णादयः। दिव्यादिव्यो यो दिव्योऽप्यात्मनि नराभिमानी। यथा

(ङ) नाटकमिति। ख्यातवृत्तं प्रसिद्धवृत्तान्त न तु स्वकपोलकल्पितमिति भाव.। पञ्चभि वक्ष्यमाणै. सन्धिभि. मुखादिभि. समन्वित सम्बद्धम्। विलासर्द्ध्यादिगुणवत् विलास "धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मित वच." इति लक्षणोक्तपुरुषगुणविशेष, ऋद्धिरभ्युन्नति. आदिना धैर्य्यगाम्भीर्य्यादिग्रहण तद्वत् तद्युक्तम्। सुखस्य दु खस्य च समुद्भूत्या कदाचित् कदाचित् उद्भवेन नाना विविधाः ये रसा. आस्वादव्यापाराः तैः निरन्तर सान्द्रं पूर्णमित्यर्थं। अङ्गी प्रधानम्, अङ्गम् अप्रधानम्। निर्वहणे निर्वहणाख्ये सन्धौ अद्भुतं विस्मयजनकव्यापार. कार्य्यं वर्णनीयम्। बन्धनं रचनम्।

श्रीरामचन्द्रः । "गोपुच्छाग्रसमाग्रमिति क्रमेणाङ्काः सूक्ष्माः कर्त्तव्याः" इति केचित् । अन्ये त्वाहुः । "यथा गोपुच्छे केचिद् बाला ह्रस्वाः केचिद्दीर्घाः तथेह कानिचित् कार्य्याणि मुखसन्धौ समाप्तानि कानिचित् प्रतिमुखे । एवमन्येष्वपि कानिचित्" इति ।

प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।
भवेदगूढ़शब्दार्थः क्षुद्रचूर्णकसंयुतः ॥
विच्छिन्नावान्तरैकार्थः किञ्चित् संलग्नबिन्दुकः ।
युक्तो न बहुभिः कार्य्यैर्वीजसंहृतिमान् न च ॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।
आवश्यकानां कार्य्याणामविरोधाद्विनिर्मितः ॥
नानेकदिननिर्वर्त्त्यकथया सम्प्रयोजितः ।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥
दूराह्वानं बधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापोत्सर्गौ मृत्यूरतं तथा ॥
दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीड़ाकरञ्च यत् ।
शयनाधरपानादि नगराद्यवरोधनम् ॥

---

(च) अङ्कमाह प्रत्यचेति । अङ्कः परिच्छेदविशेषः, प्रत्यच प्रत्यक्षवत् आभासमानं नेतु नायकस्य चरित यत्र स, रसेन भावेन च समुज्ज्वलः, अगूढ़-स्फुटः शब्दार्थः यत्र तथाविध', क्षुद्रेण चूर्णकेन गद्येन संयुतः, विच्छिन्नः विच्छेदं प्राप्त अवान्तरं सन्दर्भैकदेश एव एक' अर्थः प्रयोजन यस्मिन् तथोक्तः, किञ्चित् ईषत् संलग्नाः बिन्दव' वक्ष्यमाणलक्षणाः यस्मिन् तथोक्तः, बहुभिः कार्य्यः

स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः।
देवोपरिजनादि न ामात्यवणिजामपि॥
प्रत्यक्षचित्रचरि…ै क्तो भावरसोद्भवैः।
अन्तर्निष्क्रान्तनि ंखिलपात्रोऽङ्क इति कीर्त्तितः
॥२७८॥ (च)

विन्दादयो वक्ष्यन्ते। आवश्यकं सन्ध्यावन्दनादि।

अङ्क प्रस्तावाद् गर्भाङ्कमाह—

अङ्कोदरप्रविष्टो यो
रङ्गद्वारामुखादिमान्।
अङ्कोऽपरः स गर्भाङ्कः
सबीजः फलवानपि॥२७९॥ (छ)

यथा बालरामायणे रावणं प्रति—कञ्चुकी।

"श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः।

---

व्यापारे न युक्त, न च बीजस्य ग्रन्थप्रकृतिरूपस्य मूलकारणस्य सङ्कृति संहार' -द्वान्, नानाविधाने विविधे' विहितकर्मभि सयुक्त, नातिप्रचुरपद्यवान् अति-बहुभि' पद्यै न संयुत, आवश्यकाना कार्य्याणा सन्ध्यावन्दनादीनाम् अवि-रोधात् अव्याघातात् विनिर्मित विरचित, नानेकदिनै अबहुदिनै निर्वर्त्त्या निष्पाद्या या कथा तया सम्प्रयोजितः आसन्न समीपवर्त्ती नायको यस्य तथोक्त, त्रिचतुरैः पात्रै -युत, अन्ते शेषे निष्क्रान्तानि निखिलानि समग्राणि पात्राणि यस्य तथाविध.। अन्यत् स्पष्टम्।

(छ) गर्भाङ्कमाह अङ्कोदरेति। रङ्गद्वारं सूत्रधारक्रियमाणं मङ्गलम् आमुख प्रस्तावना आदिना कथा।पूजादिग्रहणं तद्वान् अङ्कस्य उदर मध्य प्रविष्ट., सबीज' मूलकारणयुक्त., फलवान् प्रयोजनान्वितः अपर. अङ्क. स: गर्भाङ्क।

भवदर्थमिव निबद्धं नाट्यं सीतास्वयम्वरणम्" ॥ (ज)

इत्यादिना विरचितः सीतास्वयवरो नाम गर्भाङ्कः ।

तत्र पूर्वं पूर्वरङ्गः
सभापूजा ततः परम् ।
कथनं कविसंज्ञादे-
र्नाटकस्याप्यथामुखम् ॥२८०॥ (झ)

तत्रेति नाटके—

यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥

प्रत्याहारादिकान्यङ्गा-
न्यस्य भूयांसि यद्यपि ।
तथाप्यवश्यं कर्त्तव्या
नान्दी विघ्नोपशान्तये ॥२८१॥ (ञ)

---

(ज) श्रवणैरिति । सीतास्वयंवरणं तदाख्यं नाट्यम् अनेकैः श्रवणैः कर्णं पेयं सर्वजनैः सादरं श्रवणीयमित्यर्थः, बहुभिः दीर्घैः आयतैः नेत्रैः दृश्यं सर्वजनदर्शनीयमित्यर्थः, अतएव भवदर्थमिव तव निमित्तमिव दशाननतया बहुकर्णनेत्रत्वादिति भावः निबद्धं रचितम् । आर्य्यावृत्तम् ।

(झ) तत्रेति । तत्र नाटके पूर्वं प्रथमं पूर्वरङ्गः वक्ष्यमाणलक्षणः, तदनन्तरं सभापूजा सभाप्रशंसनं ततः कविसंज्ञादेः नाटकस्यापि कथनं कीर्त्तनम् अथ अनन्तरम् आमुखं प्रस्तावना निबद्धव्येति शेषः ।

(ञ) पूर्वरङ्गमाह यदिति । रङ्गः नृत्यस्थानं तस्य विघ्नोपशान्तये अन्तरायनिवर्त्तनाय नाट्यवस्तुनः नाटकेतिवृत्तप्रस्तावात् पूर्वं कुशीलवाः नटाः यत् प्रकुर्वन्ति सः पूर्वरङ्गः मङ्गलाचरणमित्यर्थः, उच्यते । यद्यपि अस्य पूर्वरङ्गस्य

अस्याः स्वरूपमाह ।

**आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।**
**देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥**
**मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।**
**पदैर्युक्ता द्वादशभिरष्टभिर्वा पदैरुत ॥२८२॥ (ट)**

अष्टपदा यथा । अनर्घराघवे "निष्प्रत्यूहम्" इत्यादि ।
द्वादशपदा यथा मम तातपादानां पुष्पमालायाम्—

"शिरसि धृतसुरापगे स्मरारा-
वरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री ।
अथ चरणयुगानते स्वकान्ते
स्मितसरसा भवतोऽस्तु भूतिहेतुः" ॥ (ठ)

एवमन्यत्र । "एतन्नान्दी" इति कस्यचिन्मतानुसारेणोक्तम् ।

---

प्रत्याहारादिकानि ध्यानधारणाप्रभृतीनि भूयांसि बहूनि अङ्गानि सन्ति, तथापि विघ्नोपशान्तये नान्दी अवश्य कर्त्तव्या ।

(ट) आशीरिति । यस्मात् देवद्विजनृपादीनाम् आशीः शुभचिन्तनं तद्वचनेन संयुक्ता स्तुतिः गुणकीर्त्तनं प्रयुज्यते तस्मात् सा नान्दी इति संज्ञिता कथिता, नन्दयतीति व्युत्पत्तियोगात् देवद्विजनृपप्रभृतीनामानन्दयित्री स्तुतिर्नान्दीति फलितार्थः । नृपादीनामित्यादिपदेन गुर्वादिपरिग्रहः । स्तुतिरित्यत्र नित्यमिति पाठे स्तुतिरध्याहार्या । सा तु मङ्गल्यं मङ्गलाय हितं शङ्खचन्द्रादि शंसयति सूचयतीति तथोक्ता, क्वचित् द्वादशभिः पदैः सुप्तिङन्तरूपैः क्वचिद्वा अष्टभिः पदैः चरणैः युक्ता ।

(ठ) तत्र द्वादशपदामुदाहरति शिरसीति । स्मरारौ हरे शिरसि धृता सुरापगा गङ्गा येन तादृशे सति अरुणा रक्ता मुखेन्दोः मुखचन्द्रस्य रुचिः कान्तिर्यस्यास्तथाभूता, अथ अनन्तरं स्वकान्ते तस्मिन् चरणयुगानते अपराधं स्वीकृत्य पदतलपतिते सति स्मितेन मन्दहासेन सरसा सद्भावार्द्रा गिरीन्द्रपुत्री गौरी भवतः तव भूतिहेतुः कल्याणदायिनी अस्तु भवतु । एतत् पद्यं द्वादशभिः पदैः रचितम् ।

वस्तुतस्तु "पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गम्" इत्युच्यते (ड)।

यदुक्तम्—

"यस्मादभिनयो ह्यत्र प्राथम्यादवतार्य्यते।
रङ्गद्वारमतो ज्ञेय वागङ्गाभिनयात्मकम्" इति॥ (ढ)

उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात् प्रथमं नटैरेव कर्त्तव्यतया न महर्षिणा निर्द्देशः कृतः (ण)।

कालिदासादिमहाकविप्रबन्धेषु च।

"वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः" ॥ (त)

---

(ड) केचित्तु रत्नवल्यादौ श्लोकत्रयरूपाया नान्द्या दर्शनात् अत्र प्रथमपदशब्दस्यापि श्लोकचतुर्थभागपरत्वं व्याचक्षु, तन्न। "इद गुरुभ्य पूर्वेभ्यो नमोवाक प्रशास्महे। विन्देम देवता वाचममृतामात्मन. कलाम्" इत्युत्तरचरितनाटके द्वादशपदायाः नान्दीत्वानुपपत्तेरिति विभिन्नमालोच्योक्तम् एतदिति पूर्वरङ्गस्य सामान्यमङ्गलाचरणरूपस्य रङ्गद्वारम् अभिधान यस्य तादृशम्। अङ्ग विशेष।

(ढ) यस्मादिति। यस्मात् यत' प्राथम्यात् अत्र अभिनयः नाट्यव्यापार अवतार्य्यते प्रारभ्यते इत्यर्थ अत वाक् च अङ्गञ्च तयोरभिनयात्मक क्रियमाण मङ्गल रङ्गद्वारं ज्ञेयम्।

(ण) उक्तप्रकारायाः कथितरूपाया आशीर्वचनसंयुक्तेतिलक्षणोक्ताया'। महर्षिणा भरतेन, निर्द्देशो नियम.। ग्रन्थारम्भात् प्रागेव सा नान्दी निर्विघ्न ग्रन्थसमाप्तये कविनापि क्रियते इति भाव.।

(त) वेदान्तेष्विति। वेदान्तेषु उपनिषत्सु, रोदसी द्यावापृथिव्यौ व्याप्य स्थित यम् एकम् अद्वितीय पुरुषम् आहु' कथयन्ति, बुधा इति शेष, यस्मिन् ईश्वर इति अनन्यविषय तन्मात्रप्रतिपादक. शब्दः यथार्थानि व्युत्पाद्यानि इत्यर्थ., अक्षराणि यस्य तादृश. योगार्थनिरूढ इत्यर्थ', यश्च नियमिता संयमिताः प्राणादय. शरीरस्थपञ्चवायवः यैः तादृशै. मुमुक्षुभि. मोक्तुमिच्छुभिः योगिभि.

एवमादिषु नान्दीलक्षणायोगात्। उक्तञ्च—"रङ्गद्वारमारभ्य कविः कुर्य्यात्" इति। अतएव प्राक्तनपुस्तकेषु "नान्द्यन्ते सूत्रधारः" इत्यनन्तरमेव "वेदान्तेषु" इत्यादिश्लोकलिखनं दृश्यते। यच्च पश्चात् "नान्द्यन्ते सूत्रधारः" इति लिखनं तस्यायमभिप्रायः। "नान्द्यन्ते सूत्रधार इदं प्रयोजितवान् इतः प्रभृति मया नाटकमुपादीयत इति कवेरभिप्रायः सूचितः" इति।

**पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते।**
**प्रविश्य स्थापकस्तद्वत् काव्यमास्थापयेत् ततः॥**
**दिव्यमर्त्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः।**
**सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा २८३(थ)**

काव्यस्यार्थस्य स्थापनात् स्थापकः। तद्वदिति सूत्रधारसदृशगुणाकारः। इदानीं पूर्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयतीति व्यवहारः। स स्थापको दिव्यं वस्तु दिव्यो भूत्वा मर्त्त्यं मर्त्त्यो भूत्वा मिश्रञ्च दिव्यमर्त्त्ययोरन्यतरो भूत्वा सूचयेत्।

वस्तु इतिवृत्तम्। यथा उदात्तराघवे—

"रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम्।

---

इत्यर्थः, अन्तः अन्तःकरणमध्ये मृग्यते अन्विष्यते, स्थिरा निश्चला या भक्तिः तस्या योगेन सुलभः सुदृढभक्तिमात्रलभ्य इत्यर्थः, स स्थाणुः शिवः वः युष्माकं निःश्रेयसाय मङ्गलाय वा कैवल्याय अस्तु निःश्रेयसदायी भवतु इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(थ) पूर्वरङ्गमिति। सूत्रधारः पूर्वरङ्गं विधाय कृत्वैव निवर्त्तते। ततः स्थापकः तदाख्यः द्वितीयो नटः प्रविश्य रङ्गमिति शेषः आस्थापयेत् प्रकटयेत्, सभापूजादिपुरःसरं सूचयेत् इति भावार्थः। अन्यत् स्पष्टम्।

तौ सुग्रीवविभीषणावनुगतौ नीतौ परां सम्पदं
प्रोत्सिक्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः" ॥ (द)

बीज यथा रत्नावल्याम्—

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः" ॥ (ध)

अत्र हि समुद्रे वणिग्भङ्गमग्नोत्थिताया रत्नावल्या अनुकूलदैवलालितो वत्सराजगृहप्रवेशो यौगन्धरायणव्यापारमारभ्य रत्नावलीप्राप्तौ बीजम्। मुखं श्लेषादिना (न) प्रस्तुत वृत्तान्तप्रतिपादको वाग्विशेषः।

यथा।

"आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तिः।
उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः"। (प)

---

(द) वस्तु उदाहरति राम इति। रा[...] मालामिव गुरोः पितुः आज्ञा मूर्ध्नि शिरसि निधाय गृहीत्वा काननम् अगात्। भरतेन तद्भक्त्या तस्मिन् रामे या भक्तिः अनुरागविशेषस्तया मात्रा जनन्या सहैव अखिलं समग्रं राज्यम् उज्झितं त्यक्तम्। तौ प्रसिद्धौ अनुगतौ आश्रितौ सुग्रीवविभीषणौ परां सम्पदं राज्यरूपमित्यर्थः नीतौ प्रापितौ वालिदशाननवधात् रामेणेति शेषः। प्रोत्सिक्ताः अतिगर्विताः दशकन्धरप्रभृतयः समस्ताः द्विषः शत्रवः ध्वस्ताः विनष्टाः। शार्दूलविक्रीडितं वृत्तम्। अत्र समस्तं रामचरितं प्राधान्येन सूचितम्।

(ध) द्वीपादिति। अभिमुखीभूतः अनुकूलतां प्राप्तो विधिः अन्यस्मात् निजावासभिन्नात् द्वीपात् सर्वतो जलवेष्टितभूभागादपि जलनिधेः समुद्रस्य मध्यादपि दिशः अन्तादपि अभिमतम् अभिलषितं वस्तु आनीय शीघ्रं घटयति सङ्गमयति।

(न) वहित्रम् अर्णवयानम्। अनुकूलदैवलालितः अनुकूलदैववशात् सञ्जातः। श्लेषादिना शब्दानामनेकार्थकत्वादिना।

(प) आसादितेति। शरद्वर्णनमिदम्। आसादितः प्राप्तः प्रकटः परिस्फुटः निर्मलस्य चन्द्रस्य हासः विकासो येन तथोक्तः अन्यत्र आसादितः

पात्रं यथा शाकुन्तले ।

"तवास्मि गीतिरागेण हारिणा प्रसभं हृतः ।

एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा" ॥ (फ)

**रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।**

**रूपकस्य कवेराख्यां**

**गोत्राद्यपि स कीर्त्तयेत् ।**

**ऋतुञ्च कञ्चित् प्रायेण**

**भारतीं वृत्तिमाश्रितः ॥ २८४ ॥ (ब)**

स स्थापकः । प्रायेणेति क्वचिदृतोरकीर्त्तनमपि ।

यथा रत्नावल्याम् । भारतीवृत्तिस्तु ।

**भारती संस्कृतप्रायो**

**वाग्व्यापारो नराश्रयः ॥ २८५ ॥**

---

प्राप्त रावणवधादिति भाव', प्रकट समुज्ज्वल निमल शाणित इत्यर्थ, चन्द्रहासः तदाख्य रावणस्य असिविशेष येन तादृश, विशुद्धा समुज्ज्वला कान्ति, नक्षत्रादीनाम् अन्यत्र स्वस्य इति भाव यस्य तथोक्त, तथा सम्भृतानि सम्यक् पोषितानि विकासितानि इत्यर्थ', बन्धुजीवानि तदाख्यपुष्पाणि येन स, अन्यत्र सम्भृता' मरक्षिता, बन्धूना विभीषणसुग्रीवादीना जीवा प्राणा राक्षसेभ्य इति भाव यन तथाभूत, एष शरत्समय दशास्यमिव रावणमिव उग्र भीषण गाढतमस निबिडान्धकारम् अन्यत्र तमोगुणाच्छन्न घनकाल मेघसमय वर्षाकालमित्यर्थ, अन्यत्र अतिकृष्णवर्णम् उत्खाय उन्मूल्य राम इव प्राप्त उपस्थित.। अत्र श्लेषेण रामायणरूपप्रस्तुतवृत्तान्त सूचित ।

(फ) तवेति। हारिणा मनोहरेण तव गीतिरागेण सङ्गीतरागेण अतिरंहसा अतिवेगेन सारङ्गेण एष राजा दुष्मन्त इव हृत. आकृष्ट. अस्मि। अत्र दुष्मन्तनेपथ्यधारिण पात्रस्य प्रवेश. सूचितः ।

(ब) रङ्ग सामाजिकसमूह, प्रसाद्य प्रीणयित्वा। श्लोकैरिति बहुवचनमविवक्षितमाद्यर्थं वा, तेन गद्यस्यापि ग्रहणम्। रूपकस्य नाटकादे, ।

संस्कृतबहुलो वाक्प्रधानो व्यापारो भारती।

**तस्याः (भ) प्ररोचना वीथी**
**तथा प्रहसनामुखे।**
**अङ्गान्यत्रोन्मुखीकारः**
**प्रशंसातः प्ररोचना॥ २८६॥**

प्रस्तुताभिनयेषु प्रशंसातः श्रोतृणां प्रवृत्त्युन्मुखीकरणं प्ररोचना।

यथा रत्नावल्याम्—

"श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम्।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः"॥ (म)

वीथीप्रहसने वक्ष्येते।

**नटी विदूषको वापि पारिपार्श्विक एव वा।**
**सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥**

---

(भ) तस्या इति। तस्याः भारत्याः वृत्तेः।

(म) श्रीहर्ष इति। श्रीहर्षः निपुणः सुदक्षः कविः काव्यरचयिता, एषा परिषत् सभापि गुणग्राहिणी गुणग्रहणे तत्परा न तु दोषग्रहणे इत्यर्थः, वत्सराजस्य चरितं लोके जगति हारि मनोहरञ्च, वयञ्च नाट्ये अभिनयव्यापारे दक्षाः निपुणाश्च, इह अस्मिन् जगति एकैकमपि वस्तु कवित्वादिकं वाञ्छितफलस्य इष्टसिद्धेः पदं स्थानं, किं पुनः वक्तव्यमिति भावः, मम भाग्यस्य उपचयात् अभ्युन्नतेः हेतोः अयं सर्वः गुणानां कवित्वनाट्यदक्षत्वादिरूपाणामित्यर्थः. गणः समूहः समुदितः सम्यक् उदयं प्राप्तः। अत्र कविप्रभृतीनां प्रशंसया सभ्यानामुन्मुखीकरणरूपा प्ररोचना।

(य) आमुखमाह नटीति। नटी विदूषकः वापि अथवा पारिपार्श्विकः

चित्रैर्वाक्यैः स्वकार्य्योत्थैः
प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयं
नाम्ना प्रस्तावनापि सा ॥२८७॥ (य)

सूत्रधारसदृशत्वात् स्थापकोऽपि सूत्रधार उच्यते। तस्य अनुचरः पारिपार्श्विकः। तस्मात् किञ्चिदूनो नटः।

उद्घात्यकः कथोद्घातः
प्रयोगातिशयस्तथा।
प्रवर्त्तकावलगिते
पञ्च प्रस्तावनाभिदाः ॥ २८८ ॥ (र)

तत्र।

पदानि त्वगतार्थानि
तदर्थगतये नराः।
योजयन्ति पदैरन्यैः
स उद्घात्यक उच्यते ॥ २८९ ॥ (ल)

---

पार्श्ववर्त्ती नटविशेष, एते सूत्रधारेण सहिता यत्र चित्रैः मनोज्ञैः, स्वकार्य्यात् स्वकर्त्तव्यव्यापारात् उत्थैः उद्भूतैः प्रस्तुताक्षेपिभिः प्रकृतवृत्तसुत्थापयद्भिः वाक्यैः, मिथः अन्योन्य सलाप कुर्वते तत् तु आमुखं विज्ञेय, सा नाम्ना प्रस्तावनापि विज्ञेयेति शेष।

(र) प्रस्तावनाभेदानाह उद्घात्यक इति। स्पष्टम्।

(ल) उद्घात्यकमाह पदानीति। अगतार्थानि अबोधितार्थानि पदानि तदर्थगतये तस्य अबोधितार्थस्य गतये बोधाय नरा. अन्यैः पदैः यत् योजयन्ति स उद्घात्यक उच्यते।

यथा मुद्राराक्षसे सूत्रधारः ।

"क्रूरग्रहः स केतुश्चन्द्र सम्पूर्णमण्डलमिदानीम् ।
अभिभवितुमिच्छति बलात्" इति । अनन्तरं नेपथ्ये "आः क एष मयि जीवति सति चन्द्रगुप्तमभिभवितुमिच्छति" इति ।

अत्र अन्यार्थवन्त्यपि पदानि हृदिस्थार्थगत्या अर्थान्तरे सङ्क्रमय्य पात्रप्रवेशः (व) ।

सूत्रधारस्य वाक्यं वा
समादायार्थमस्य वा ।
भवेत् पात्रप्रवेशश्चेत्
कथोद्घातः स उच्यते ॥ २९० ॥

वाक्यं यथा रत्नावल्याम् । "द्वीपादन्यस्मादपि" इत्यादि सूत्रधारेण पठिते नेपथ्ये एवमेतत् कः सन्देहः । "द्वीपादन्यस्मादपि" इत्यादि पठित्वा यौगन्धरायणस्य प्रवेशः ।

---

(व) क्रूरग्रह इति । क्रूर अनिष्टफलदत्वेन निष्ठुर. ग्रह स केतु. राहुरित्यर्थ' यद्यपि दैत्यविशेषस्य शिरोभागः राहु अपरो भाग. केतुरुच्यते तथापि चन्द्रग्रासे शिरोभागस्यावश्यकत्वात् केतुशब्दोऽत्र राहुपरो बोध्यः.। अन्यत् स्पष्टम् । अत्र अन्यार्थवन्ति यथा क्रूरः ग्रह आग्रहो यस्य तथोक्त सकेतु. मलयकेतुना सह वर्त्तमान राक्षस इत्यर्थ, सम्पूर्णमण्डल वशीकृतराज्यमण्डलमित्यर्थः, चन्द्र चन्द्रगुप्तम् । इत्यादीनि अभिप्रेतार्थप्रतिपादकान्यपि पदानि हृदिस्थस्य अभिमतस्य अर्थस्य द्वितीयार्थरूपस्य गत्या अबोधेन, द्वितीयार्थस्य प्रतिपादनं नासीदिति बुद्ध्या इत्यर्थः, अर्थान्तरे द्वितीयार्थे सङ्क्रमय्य तत्तच्छब्दात् स्पष्टत अभिधाय इत्यर्थ., पात्रस्य नटस्य चाणक्यनेपथ्यभूतस्य प्रवेश इति शेषः ।

वाक्यार्थं यथा वेण्याम्—

"निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः" ॥ (श)

इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा नेपथ्ये आः दुरात्मन्! वृथा मङ्गलपाठक! कथं स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः? ततः सूत्रधारो निष्क्रान्तः। भीमसेनस्य प्रवेशः।

**यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते।**
**तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा २९१(ष)**

यथा कुन्दमालायाम्। "नेपथ्ये इत इतोऽवतरत्वार्य्या। सूत्र०। कोऽयं खलु आर्य्याह्वानेन (स) सहायकं मे सम्पादयति। विलोक्य। कष्टमतिकरुणं वर्त्तते"।

---

(श) निर्वाणेति। पाण्डुतनया पाण्डवा, माधवेन कृष्णेन सह अरीणां शत्रूणां प्रशमात् सन्धिकरणे शत्रुभावापगमात् अन्यत्र युद्धे निधनात् निर्वाणः शमित वैरं विद्वेष एव दहनः अग्निः येषां तथाभूताः सन्तः नन्दन्तु आनन्दमनुभवन्तु। सभृत्याः सानुजीविनः कुरुराजसुताः धृतराष्ट्रपुत्रा' दुर्य्योधनादय, रक्ता अनुरक्ता प्रसाधिता अलङ्कृता भूः पृथिवी यैः तादृशा, अन्यत्र रक्तेन स्वगात्ररुधिरेण प्रसाधिता अलङ्कृता भूः यैः तथाभूताः, तथा क्षतः विनष्टः विग्रहः कलहः सन्धिकरणादिति भावः येषां तादृशा, अन्यत्र क्षताः विनष्टाः विग्रहाः शरीराणि येषां युद्धप्रहारादिति भावः, तथाभूताः सन्तः स्वस्थाः सुखिनः अन्यत्र स्वर्गस्था' भवन्तु।

(ष) प्रयोगातिशयमाह यदीति। यदि एकस्मिन् प्रयोगे अन्यः प्रयोगः प्रयुज्यते तेन द्वितीयेन प्रयोगेण पात्रस्य नटस्य प्रवेशः चेत् भवति तदा प्रयोगातिशयो भवति।

(स) आर्य्यापदेनात्र सूत्रधारः स्वभार्य्याह्वानं मन्यमानः वदति कोऽयमित्यादि।

"लङ्केश्वरस्य भवने सुचिरं स्थितेति
रामेण लोकपरिवादभयाकुलेन।
निर्व्वासिता जनपदादपि गर्भगुर्व्वी
सीता वनाय परिकर्षति लक्ष्मणोऽयम्" ॥

अत्र नृत्यप्रयोगार्थं स्वभार्य्याह्वानमिच्छता सूत्रधारेण "सीता वनाय परिकर्षति लक्ष्मणोऽयम्" इति सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः (ङ)।

**कालं प्रवृत्तमाश्रित्य**
**सूत्रधृग् यत्र वर्णयेत्।**
**तदाश्रयश्च पात्रस्य**
**प्रवेशस्तत् प्रवर्त्तकम्॥ २९२ ॥** (च)

यथा "आसादितेत्यादि"। ततः प्रविशति यथानिर्द्दिष्टो रामः।

---

(ङ) लङ्केश्वरस्येति। लङ्केश्वरस्य रावणस्य भवने सुचिरं दीर्घकालं दशमासानित्यर्थः स्थिता सीतेति शेषः, इति इत्थं लोकानां परिवादः दोषारोपणं तस्मात् भयं तेन आकुलः कातरस्तेन रामेण जनपदात् देशात् निर्व्वासिता ताडिता गर्भेण गुर्व्वी भारवती गुरुगर्भभराक्रान्तामित्यर्थः, सीतां लक्ष्मणः वनाय वनं नेतुमित्यर्थः, परिकर्षति आकर्षति। वसन्ततिलकं वृत्तम्। अत्र नृत्यप्रयोगे सीतालक्ष्मणयोः प्रवेशसूचनरूपः प्रयोगः स्वप्रयोगं नृत्यरूपम् अतिशयानः अतिक्रामन् प्रयोजित इत्यर्थः।

(च) कालमिति। यत्र प्रवृत्तम् उपस्थितं कालम् आश्रित्य सूत्रधृक् सूत्रधारः वर्णयेत् तत्र चेत् यदि तदाश्रयः तदाश्रित्येत्यर्थः, पात्रस्य नटस्य प्रवेशः भवति तत् प्रवर्त्तकम्।

वस्तु इतिवृत्तम्।

इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते।
आधिकारिकमेकं स्यात् प्रासङ्गिकमथापरम्॥"

अधिकारः फले स्वाम्यम्
अधिकारी च तत्प्रभुः।
तस्येतिवृत्तं कविभिः
आधिकारिकमुच्यते॥ २९६॥ (घ)

फले प्रधानफले। यथा बालरामायणे रामचरितम्।

अस्योपकरणार्थन्तु प्रासङ्गिकमितीष्यते॥२९७॥(ङ)

अस्याधिकारिकेतिवृत्तस्य उपकरणनिमित्तं यच्चरितं तत् प्रासङ्गिकम्। यथा सुग्रीवादिचरितम्।

पताकास्थानकं योज्यं
सुविचार्य्येह वस्तुनि॥ २९८॥ (च)

---

आकाशभाषित समाश्रित्यापि आमुख प्रस्तावना कर्त्तव्यम्। एषाम् आमुखभेदाना मध्योक्ताना नखकुट्टीकाना वा एक कञ्चित् प्रयोजयेत् विदध्यात्। तूवष्टक् सूत्रधार तेन अर्थम् अथवा पात्र समाक्षिप्य प्रस्तावनान्ते निर्गच्छेत् रङ्गादिति शेष., तत अनन्तर वस्तु इतिवृत्त प्रयोजयेत् उपस्थापयेत।

(घ) इदमिति। इद वस्तु बुधै द्विविध परिकल्प्यते विभज्यते, एक वस्तु आधिकारिकम् अपर प्रासङ्गिक स्यात्। फले कार्य्यस्य प्रधानफले स्वाम्य स्वामित्वम् अधिकार', तस्य स्वाम्यस्य प्रभुश्च अधिकारी। तस्य अधिकारिण इतिवृत्त कविभि विद्वद्भि आधिकारिकम् उच्यते।

(ङ) अस्येति। अस्य आधिकारिकेतिवृत्तस्य उपकरणार्थम् उपकाराय तन्तु प्रासङ्गिकम् इति इष्यते।

इह नाट्ये।

यत्रार्थे चिन्तितेऽन्यस्मिन्
तल्लिङ्गोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन
पताकास्थानकन्तु तत् ॥२९९॥ (छ)

तद्भेदानाह।

सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम् ३०० (ज)

यथा रत्नावल्यां "वासवदत्तेयम्" इति राजा यदा तत्कण्ठ-पाशं मोचयति तदा तदुक्त्या "सागरिकेयम्" इति प्रत्यभिज्ञाय "कथं प्रिया मे सागरिका अलमलमतिमात्रम्" इत्यादि फल-रूपार्थसम्पत्तिः पूर्वापेक्षया उपचारातिशयात् (झ) गुणवती उत्कृष्टा।

---

(च) पताकेति। इह वस्तुनि नाट्यरूपे इतिवृत्ते सुविचार्य सम्यक् विविच्य पताकास्थानकं योज्यं प्रयोक्तव्यम्।

(छ) यत्रेति। यत्र अन्यस्मिन् अर्थे चिन्तिते तल्लिङ्गः तस्य अर्थस्य लक्षणान्वितः अन्यः अर्थः आगन्तुकेन अतर्कितेन भावेन रूपेण प्रयुज्यते चेदित्यध्याहार्य्य तत् पताकास्थानकम्।

(ज) सहसेति। उपचारतः अतर्कितभावोपनतत्वात् सहसा गुणवती परमप्रीतिकरी अर्थसम्पत्तिः फललाभः प्रथमम् आद्यं पताकास्थानं परिकीर्त्तितम्।

(झ) फलरूपार्थसम्पत्तिः फलरूपस्य अर्थस्य सागरिकारूपस्य सम्पत्तिर्लाभः। पूर्वापेक्षया वासवदत्तालाभापेक्षया इत्यर्थः, उपचारातिशयात् अतर्कितोपनतत्वातिशयात्।

वचः सातिशयश्लिष्टं
नानाबन्धसमाश्रयम्।
पताकास्थानकमिदं
द्वितीयं परिकीर्त्तितम्॥ ३०१ ॥ (ञ)

यथा वेण्या सूत्र:।

"रक्तप्रसाधितभुव. क्षतविग्रहाश्च।
स्वस्था भवन्तु कुरुराजसुता: सभृत्या:"॥

अत्र रक्तादीना रुधिरशरीरार्थहेतुकश्लेषवशेन वीजार्थप्रतिपादनात् नेतृमङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानम् (ट)।

अर्थोपक्षेपकं (ठ) यत्तु
लीनं सविनयं भवेत्।
श्लिष्टप्रत्युत्तरोपेतं
तृतीयं तदिदमुच्यते॥ ३०२ ॥

---

(ञ) वच इति। सातिशयम् अतिमात्र यथा तथा श्लिष्ट नानार्थ, नानाविधो यो बन्ध रचना तत्समाश्रय वच वचन द्वितीयम् इद पताकास्थानक परिकीर्त्तितम्।

(ट) रक्तेति। वीजार्थप्रतिपादनात् भीमसेनक्रोधोपचित्तौ युधिष्ठिरोत्साह सन्दर्भस्य वीज तस्य अर्थ प्रयोजन फल शत्रुनिपातनरूप तस्य प्रतिपादनात् सूचनात् नेतु नायकस्य युधिष्ठिरस्य मङ्गलप्रतिपत्तौ मङ्गलानुष्ठाने प्रतिनायकस्य दुर्य्योधनस्य मङ्गले चिन्तिते आगन्तुकेन भावेन नेतृमङ्गलप्रतिपत्तिरिति पताकास्थानक बोध्यम्।

(ठ) अर्थोपक्षेपकमिति। अर्थस्य कार्य्यस्य फलरूपस्य उपक्षेपकम् उपस्थापक सूचकमित्यर्थ.।

लीनमव्यक्तार्थं श्लिष्टेन सम्बन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतं सविनयं विशेषनिश्चयप्राप्त्या सहितं सम्पद्यते यत् तत् तृतीयं पताकास्थानम्।

यथा वेण्यां द्वितीयेऽङ्के—

“( कञ्चुकी ) देव ! भग्नं भग्नम्। ( राजा ) केन ? (कञ्चु) भीमेन। (राजा) कस्य ? (कञ्चु) भवतः। (राजा) आः ! किं प्रलपसि ? ( कञ्चु ) [ सभयं ] देव ! ननु ब्रवीमि भग्नं भीमेन भवतः। (राजा) धिक् ! वृद्धापसद ! कोऽयमद्य ते व्यामोहः ? (ड) (कञ्चु) देव ! न व्यामोहः सत्यमेव।

भग्नं भीमेन भवतो मरुता रथकेतनम्।
पातितं किङ्किणीजालबद्धाक्रन्दमिव क्षितौ” ॥ (ढ)

अत्र दुर्योधनोरुभङ्गरूपप्रस्तुतसङ्क्रान्तमर्थोपक्षेपणम्।

**द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।**
**प्रधानार्थान्तरापेक्षी पताकास्थानकं परम् ॥ २०३(ण)**

---

(ड) वृद्धापसद। वृद्धेषु अपसद अधम ततसम्बुद्धौ। व्यामोहः पीडा रोग इति यावत्।

(ढ) भग्नमिति। भीमेन भयानकेन मरुता वायुना भग्न खण्डित भवत तव रथकेतन रथध्वज' किङ्किण्य क्षुद्रघण्टिका तासा जाल समूह तेन बद्ध कृत आक्रन्द रोदनध्वनिर्येन तथाभूतमिव क्षितौ पातितम्। यथा कोऽपि शत्रुणा आहत क्षितौ पतन् रोदिति तद्वदिति भाव।

(ण) द्व्यर्थ इति। द्व्यर्थं अर्थद्वयसहित सुश्लिष्ट' सुसम्बद्धः। काव्येषु योजितः प्रयोजित काव्यप्रयोगार्ह इत्यर्थः सर्वत्रैव काव्ययोजितस्य विद्यमानत्वेन काव्ययोजितत्वविशेषणस्य निरर्थकत्वापत्तेरिति भाव. प्रधान यत अर्थान्तरम् अर्थविशेष तत् अपेक्षते इति तदपेक्षी तत्सूचक इत्यर्थ. परं चतुर्थं पताका-स्थानकम्।

यथा रत्नावल्याम्—

'उद्दामोत्कलिका विपाण्डुररुचिं प्रारब्धजृम्भां क्षणा-

दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।

अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं

पश्यन् कोपविपाटलद्युतिमुखं देव्याः करिष्याम्यहम्'' ॥

अत्र भाव्यर्थः सूचितः (त)। एतानि चत्वारि पताकास्थानकानि क्वचिन्मङ्गलार्थं क्वचिदमङ्गलार्थमपि सर्वसन्धिषु भवन्ति। काव्यकर्त्तुरिच्छावशाद् भूयोऽपि भवन्ति। यत् पुनः केनचिदुक्तं "मुखसन्धिमारभ्य सन्धिचतुष्टये क्रमेण भवन्ति" इति। तदन्ये न मन्यन्ते, एषामत्यन्तमुपादेयानामनियमेन (थ) सर्वत्रापि सर्वेषामपि भवितुं युक्तत्वात्।

**यत् स्यादनुचितं वस्तु नायकस्य रसस्य वा।**

---

(त) उद्दामेति। अहम् उद्दामम् उत्कट यथा तथा उद्गता' कलिका, कोरका यस्यास्ताम्, अन्यत्र उद्दामा उत्कटा उत्कलिका कान्तार्थमुत्कण्ठा यस्यास्ता, विपाण्डुरा कुसुमविकासात् विशेषेण पाण्डुवर्णा रुचि कान्ति यस्यास्तथाभूताम् अन्यत्र विरहेण पाण्डुकान्ति, प्रारब्धजृम्भा विकासोद्यताम्, अन्यत्र जृम्भा आलस्यभङ्ग, प्रारब्धा जृम्भा यया तादृशी कामाभिलाषव्यञ्जकमिदम्, अविरलै घनै श्वसनोद्गमै वात्याप्रसरै., अन्यत्र नि'श्वासमरुद्भि आत्मन स्वस्य आयास क्लान्तिम् आतन्वती प्रकटयन्तीम् इमामुद्यानलताम् उपवनव्रततिं समदना कामार्त्ताम् अन्याम् अपरा नारीमिव अद्य पश्यन् अवलोकयन् देव्या वासवदत्ताया मुख ध्रुव निश्चित कोपेन विपाटला विशेषरक्ता द्युति यस्य तादृश करिष्यामि, साध्वी स्त्री भर्त्तारम् अपरा प्रत्यवलोकयन्त दृष्ट्वा कुप्यतीति भाव.। शार्दूलविक्रीडित वृत्तम्। अत्र भावी अर्थ । राजान सागरिकासक्त' दृष्ट्वा वासवदत्ता कोप करिष्यतीत्येवरूपप्रधानार्थान्तरमित्यर्थ तत्सूचकमिति बोध्यम्।

(थ) भूयोऽपि पुन. पुनरपि भवन्ति प्रयुक्तानीति शेष.। उपादेयाना सहृदयमनोरम्याणामित्यर्थ, अनियमेन नियम विनेत्यर्थ.।

**विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत्**
**॥ ३०४ ॥ (द)**

अनुचितमितिवृत्तं यथा—रामस्य छद्मना बालिवधः । तच्च उदात्तराघवे नोक्तमेव । सुग्रीववीरचरिते तु बाली रामवधार्थमागतो रामेण हत इत्यन्यथा कृतः ।

**अङ्केष्वदर्शनीया या वक्तव्यैव च सम्मता ।**
**या च स्यात् वर्षपर्य्यन्तं कथा दिनद्वयादिजा ॥**
**अन्या च विस्तरा सूच्या सार्थोपक्षेपकैर्बुधैः**
**॥३०५॥ (ध)**

अङ्केषु अदर्शनीया कथा युद्धादिकथा ।

**वर्षादूर्द्ध्वन्तु यद्वस्तु**
**तत् स्याद्वर्षादधोभवम् ॥ ३०६ ॥ (न)**

उक्तं हि मुनिना—

'अङ्कच्छेदे कार्य्यं मासकृतं वर्षसञ्चितं वापि ।
तत् सर्वं कर्त्तव्यं वर्षादूर्द्ध्वं न तु कदाचित्' ॥ (प)

---

(द) यदिति । यत् वस्तु नायकस्य वा रसस्य अनुचित वा विरुद्ध स्यात तत् परित्याज्य वा अन्यथा प्रकल्पयेत् रचयेत ।

(ध) अङ्केष्विति । या कथा अङ्केषु अदर्शनीया निषेधनीया वक्तुमिति शेषः । सा तु सम्मता चेत् वक्तव्या कथया निर्वाह्या न तु काय्यत इति भाव, या कथा वर्षपर्य्यन्त संवत्सरसाध्येति भाव, सा दिनद्वयादिजा दिवसद्वयादिभि निर्वाह्या इत्यर्थ अन्या या विस्तरा अतिबहुला कथा सा बुधैः पण्डितै अर्थोपक्षेपकै अर्थसूचकै. वाक्यै वक्ष्यमाणैर्विष्कम्भकादिभिरित्यर्थ सूच्या प्रकाश्या ।

(न) वर्षादिति । यत् वस्तु वर्षात् ऊर्द्ध्वं वत्सराधिकसम्पाद्यमित्यर्थ. तत् वर्षात् अधोभव वर्षात न्यूनकालेन निर्वाह्यमित्यर्थ ।

(प) अङ्कच्छेद इति । अङ्कस्य छेदे अवसाने सति यत् कार्य्यं मासकृत

एवञ्च चतुर्दशवर्षव्यापिन्यपि रामवनवासे ये ये विराधवधादयः कथांशाः ते ते वर्षवर्षावयवदिनयुग्मादोनामेकतमेन सूचनोया न विरुद्धाः।

दिनावसाने कार्य्यं यद्
दिनेनैवोपपद्यते।
अर्थोपक्षेपकैर्वाच्य-
मङ्कच्छेदं विधाय तत्॥ ३०७॥ (फ)

के ते अर्थोपक्षेपका इत्याकाङ्क्षायामाह—

अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ।
चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि॥ (ब)
वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः
॥ ३०८॥ (भ)

---

वा वर्षसञ्चित सवत्सरकृतमित्यथ, तत् सर्वं वर्षात् ऊर्द्धं कदाचित् न तु नैव कार्य्यम्।

(फ) दिनेति। यत कार्य्यं दिनेन सम्पूर्णेन दिवसेन उपपद्यते सङ्गच्छते तत् अङ्कच्छेदम् अङ्कविराम विधाय कृत्वा दिवावसाने अर्थोपक्षेपकैः वक्ष्यमाणैः वाच्य वक्तव्यम्।

(ब) अर्थोपक्षेपकानाह अर्थेति। अर्थस्य कार्य्यस्य उपक्षेपकाः उपस्थापयितारः पञ्च—विष्कम्भक, प्रवेशक, चूलिका, अङ्कावतार, तथा अङ्कमुखम्।

(भ) विष्कम्भमाह वृत्तेति। वृत्तवर्त्तिष्यमाणानाम् वृत्तानाम् अतीतानां

तत्र शुद्धो यथा । मालतीमाधवे श्मशाने कपालकुण्डला । सङ्कीर्णो यथा रामाभिनन्दे क्षपणककापालिकौ ।

अथ प्रवेशकः ।

**प्रवेशकोऽनुदात्तोक्त्या**
**नीचपात्रप्रयोजितः ।**
**अङ्कद्वयान्तर्विज्ञेयः**
**शेषं विष्कम्भके यथा ॥ ३०९ ॥ (म)**

अङ्कद्वयस्यान्तरिति प्रथमाङ्केऽस्य प्रतिषेधः । यथा वेण्याम् अश्वत्थामाङ्के राक्षसमिथुनम् ।

अथ चूलिका ।

**अन्तर्जवनिकासंस्थैः**
**सूचनार्थस्य चूलिका ॥ ३१० ॥ (य)**

यथा वीरचरिते चतुर्थाङ्कस्यादौ । "नेपथ्ये भो भो वैमानिकाः ! प्रवर्त्तन्तां रङ्गमङ्गलानि" इत्यादि रामेण परशुरामो जितः इति नेपथ्ये पात्रैः सूचितम् ।

---

वर्त्तिष्यमाणानाम् आगामिनां कथांशानां निदर्शकः सूचकः अङ्कस्य आदौ प्रथमं दर्शितः संक्षिप्तः संक्षेपेणोक्तः यः कथाविभागः स विष्कम्भः । स तु मध्येन मध्यविधेन एकेन पात्रेण वा मध्यमाभ्यां पात्राभ्यां सम्प्रयोजितः चेत् भवति, तदा शुद्धः स्यात् । नीचमध्यमाभ्यां कल्पितश्चेत सङ्कीर्णः विमिश्रः ।

(म) प्रवेशकमाह प्रवेशक इति । नीचपात्रप्रयोजितः अनुदात्तया प्राकृतया उक्त्या भाषया रचितः कथाविभागः प्रवेशकः, स तु अङ्कयोर्द्वयान्तः उभयाङ्कमध्ये इत्यर्थः विज्ञेयः, शेषं संक्षेपोक्त्यादि विष्कम्भके यथा विष्कम्भकवत् ज्ञेयमिति शेषः ।

(य) चूलिकामाह अन्तरिति । जवनिका तिरस्करिणी तस्याः अन्तः मध्ये स्थितैः जनैः या अर्थस्य कार्य्यस्य सूचना सा चूलिका ।

अथ अङ्कावतारः ।

अङ्कान्ते सूचितः पात्रै-
स्तदङ्कस्याविभागतः ।
यत्राङ्कोऽवतरत्येषो-
ऽङ्कावतार इति स्मृतः ॥ ३११ ॥ (र)

यथाभिज्ञाने पञ्चमाङ्के पात्रैः सूचितः षष्ठाङ्कस्तदङ्कस्याङ्गविशेष इवावतीर्णः ।

अथाङ्कमुखम् ।

यत्र स्यादङ्क एकस्मि-
न्नङ्कानां सूचनाऽखिला ।
तदङ्कमुखमित्याहु-
र्बीजार्थख्यापकञ्च तत् ॥ ३१२ ॥ (ल)

यथा मालतीमाधवे । प्रथमाङ्कादौ कामन्दक्यवलोकिते भूरिवसुप्रभृतीनां भाविभूमिकानां परिच्छिन्नकथाप्रबन्धस्य च (व) प्रसङ्गात् सन्निवेशं सूचितवत्यौ ।

अङ्कान्तपात्रैर्वाङ्कास्यं
छिन्नाङ्कस्यार्थसूचनात् ॥ ३१३ ॥ (श)

---

(र) अङ्कावतारमाह अङ्कान्त इति । अङ्कस्य अन्ते अवसाने तदङ्कस्य अविभागतः अविच्छेदेन पात्रैः सूचितः यत्र यः इत्यर्थः, अव्ययमेतत्, अङ्कः अवतरति एषः अङ्कावतारः इति स्मृतः कथितः ।

(ल) अङ्कमुखमाह यत्रेति । यत्र एकस्मिन् अङ्के अखिलानां सर्वेषाम् अङ्कानाम् अखिला समस्ता सूचना स्यात् तत् अङ्कमुखं बीजाप्यस्य मूलीभूतस्य विषयस्य ख्यापकं सूचकञ्च इत्याहुः ।

(व) भाविभूमिकानां भविष्यन्नेपथ्यशालिनाम् । परिच्छिन्नः सञ्चितः यः कथाप्रबन्धः तस्य ।

अङ्कान्तपात्रैरङ्कान्ते प्रविष्टैः पात्रैः। यथा वीरचरिते द्वितीयाङ्कान्ते। "(प्रविश्य सुमन्त्रः) भगवन्तौ वशिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः। (इतरे) क्व भगवन्तौ? (सुमन्त्रः) महाराजदशरथस्यान्तिके। (इतरे) तत् तत्रैव गच्छामः" इत्यङ्कपरिसमाप्तौ "ततः प्रविशन्त्युपविष्टा वशिष्ठविश्वामित्रपरशुरामाः" इत्यत्र पूर्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथाविच्छेदे उत्तराङ्कमुखसूचनादङ्कास्यमिति। एतच्च ध्वनिकमतानुसारेणोक्तम्। अन्ये तु "अङ्कावतारेणैव इदं गतार्थम्" (ष) इत्याहुः।

**अपेक्षितं परित्यज्य नीरसं वस्तु विस्तरम्।**
**यदा सन्दर्शयेच्छेषमामुखानन्तरं तदा॥**
**कार्य्यो विष्कम्भको नाट्य आमुखाक्षिप्तपात्रकः**
**॥३१४॥ (स)**

यथा रत्नावल्याम्। यौगन्धरायणप्रयोजितः।

**यदा तु सरसं वस्तु मूलादेव प्रवर्त्तते।**
**आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः**
**॥ ३१५ ॥ (ह)**

---

(श) अङ्कान्तेति। अङ्कान्ते प्रविष्टैः पात्रैः नटैः छिन्नस्य छेदं प्राप्तस्य अर्थस्य सूचनात् वा अङ्कास्यम् अङ्कमुखम्।

(ष) गतार्थं कृतार्थम्।

(स) अपेक्षितमिति। नीरसं विस्तरं वस्तु परित्यज्य शेषम् अपेक्षितं यदा सन्दर्शयेत् तदा नाट्ये आमुखानन्तरम् आमुखात् प्रस्तावनायाः अनन्तरम् आमुखेन आक्षिप्तम् आकृष्टं पात्रं यस्य तादृशः विष्कम्भकः कार्य्यः।

(ह) यदेति। यदा तु मूलादेव मूलमारभ्यैव सरसं वस्तु प्रवर्त्तते तदा आदौ एव आमुखम् आक्षेपः इति तथोक्तः संश्रयो यस्य तथाभूतः अङ्कः स्यात्।

यथा शाकुन्तले-

विष्कम्भकाद्यैरपि नो
बधो वाच्योऽधिकारिणः ।
अन्योन्येन तिरोधानं
न कुर्य्याद्रसवस्तुनोः ॥३१६॥ (च)

रसः शृङ्गारादिः । यदुक्तं ध्वनिकेन—

"न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत् ।
रसं वा न तिरोदध्याद् वस्त्वलङ्कारलक्षणैः" ॥ इति । (क)

वीजं विन्दुः पताका च
प्रकरी कार्य्यमेव च ।
अर्थप्रकृतयः पञ्च
ज्ञात्वा योज्या यथाविधि ॥ ३१७ ॥ (ख)

अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः । तत्र वीजम् ।

---

(च) विष्कम्भकाद्यैरिति । विष्कम्भकाद्यैरपि अधिकारिणः प्रधानस्य बधः न वाच्य, तथा रसस्य वस्तुन इतिवृत्तस्य अन्योन्येन परस्परेणेत्यर्थं तिरोधान न कुर्य्यात् रसे इतिवृत्तयोगः इतिवृत्ते रसयोग यथा स्यात् तथा रचयितव्य नैतयो. परस्पर विच्छेद' कार्य्य इति भाव ।

(क) नेति । अतिरसत रसस्यातिरेकेणेत्यर्थ' वस्तु इतिवृत्त' दूरम् अत्यर्थं विच्छिन्नता विच्छेद न च नयेत् नैव प्रापयेत्, तथा वस्तुन अलङ्कारलक्षणै अलङ्कृतिरचनैरित्यर्थं रस न तिरोदध्यात् न विच्छेद गमयेदित्यर्थं ।

(ख) वीजमिति । अर्थस्य प्रयोजनस्य प्रकृतय सिद्धिहेतव. पञ्च । यथा— वीज, विन्दु, पताका, प्रकरी, तथा कार्य्यम् । एता ज्ञात्वा यथाविधि विधिमनतिक्रम्य योज्या. प्रयोक्तव्या इत्यर्थ. ।

अल्पमात्रं समुद्दिष्टं
बहुधा यद्विसर्पति ।
फलस्य प्रथमो हेतु-
र्वीजं तदभिधीयते ॥ ३१८ ॥ (ग)

यथा रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुर्दैवानुकूल्य-लालितो यौगन्धरायणव्यापारः । यथा वा वेण्यां द्रौपदी-केशसंयमनहेतुर्भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः (घ) ।

अवान्तरार्थविच्छेदे
विन्दुरच्छेदकारणम् ॥ ३१९ ॥ (ङ)

यथा रत्नावल्यामनङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सति उदयनस्येन्दोरिवोद्वीच्यते इति सागरिका श्रुत्वा सहर्षम् । "कधं एसो सो उदअणणरिंदो" इत्यादिरवान्तरार्थहेतुः (च) ।

व्यापि प्रासङ्गिकं वृत्तं
पताकेत्यभिधीयते ॥ ३२० ॥ (छ)

---

(ग) वीजमाह अल्पमात्रमिति । यत् अल्पमात्र यत्किञ्चित समुद्दिष्टं सत् बहुधा विसर्पति विस्तार गच्छति तत् फलस्य प्रथमो हेतु कारण वीजम् अभिधीयते कथ्यते ।

(घ) रत्नावलीप्राप्तिहेतुरिति रत्नावलीप्राप्तिरत्र फल बोध्यम् । द्रौपदी-केशसंयमनहेतु वेणीसंहारनाटकस्य फल द्रौपद्या केशसंयमन बोध्यम् ।

(ङ) विन्दुमाह अवान्तरेति । अवान्तरस्य महावाक्यरूपसन्दर्भैकदेशस्य विच्छेदे समाप्तौ अच्छेदस्य अविरामस्य कारण विन्दु ।

(च) उदाहरति यथेति । कामपूजारूपस्य सन्दर्भैकदेशस्य समाप्तौ कथं एष स उदयननरेन्द्र इत्यनेन सागरिकाया वत्सराज प्रति अनुरागस्य अविराम ।

(छ) पताकामाह व्यापीति । व्यापि व्यापक निर्वहणपर्यन्तस्थायीत्यर्थ, प्रासङ्गिक प्रसङ्गतः आगत वृत्तं चरितं पताका इति अभिधीयते ।

यथा रामचरिते सुग्रीवादेर्वेण्यां भीमादेः शाकुन्तले विदूषकस्य चरितम् ।

पताका नायकस्य स्यात्
न स्वकीयफलान्तरम् ।
गर्भे सन्धौ विमर्षे वा
निर्वाहस्तस्य जायते ॥ ३२१ ॥ (ञ)

यथा सुग्रीवादेर्राज्यप्राप्त्यादिः । यत्तु मुनिनोक्तम्—

"आगर्भादाविमर्षाद्वा पताका विनिवर्त्तते" ॥ इति । (झ)

तत्र "पताकेति पताका नायकफलं निर्वहणपर्य्यन्तमपि पताकायाः प्रवृत्तिदर्शनात्" इति व्याख्यातमभिनवगुप्तपादैः ।

प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ।

यथा कुलपत्यङ्के रावणस्य जटायुसंवादः ।

प्रकरी नायकस्य स्यान्न स्वकीयं फलान्तरम्
॥ ३२२ ॥ (ञ)

---

(ञ) पताकेति । पताका नायकस्य स्वकीयफलान्तर निजप्रयोजनविशेषोपयोगिनीत्यर्थं न स्यात् गर्भे वा विमर्षे सन्धौ तस्य फलान्तरस्य निर्वाह समाप्ति जायते ।

(झ) आगर्भादिति । आगर्भात गर्भसन्धिपर्य्यन्तम् आविमर्षात् विमर्षसन्धिपर्य्यन्तं पताका विनिवर्त्तते । अत्र पताकाशब्देन पताकानायकफल बोध्यम ।

(ञ) प्रकरीमाह प्रासङ्गिकमिति । प्रासङ्गिक प्रसङ्गतः प्राप्तं प्रदेशस्थम् एकदेशव्यापि चरित प्रकरी मता । सा तु नायकस्य स्वकीय फलान्तर फलविशेष. न स्यात् ।

अपेक्षितन्तु यत्साध्यमारम्भो यन्निबन्धनः।
समापनन्तु यत्सिद्धै तत्कार्य्यमिति सम्मतम्
॥ ३२३ ॥ (ट)

यथा रामचरिते रावणबधः।

अवस्थाः पञ्च कार्य्यस्य
प्रारब्धस्य फलार्थिभिः।
आरम्भयत्नप्राप्त्याशा-
नियताप्तिफलागमाः॥ ३२४ ॥ (ठ)

तत्र।

भवेदारम्भ औत्सुक्यं
यन्मुख्यफलसिद्धये॥ ३२५ ॥ (ड)

यथा रत्नावल्याम्। रत्नावल्यन्तःपुरनिवेशार्थं यौगन्धरायणस्य औत्सुक्यम्। एवं नायकनायिकादीनामपि औत्सुक्यमाकरेषु बोद्धव्यम् (ढ)।

---

(ट) कार्य्यमाह अपेक्षितमिति। यत् साध्य साधनीयम् अपेक्षितम् आकाङ्क्षित, नतु प्रासङ्गिक, यन्निबन्धन यदर्थं आरम्भ उपाये प्रथमप्रवृत्ति. उद्योग इति यावत् तथा यस्य सिद्धै सिद्ध्यर्थं समापन सामग्रीसमवधान तत् कार्य्यमिति सम्मतम्।

(ठ) कार्य्यस्य अवस्थाभेदानाह अवस्था इति। फलार्थिभि फललाभाभिलाषिभि। प्रारब्धस्य कार्य्यस्य पञ्च अवस्था —आरम्भ, यत्न, प्राप्त्याशा, नियताप्ति., तथा फलागम इति।

(ड) आरम्भमाह भवेदिति। मुख्यस्य प्रधानस्य फलस्य सिद्धये यत् औत्सुक्य स आरम्भ. भवेत्।

(ढ) उदाहरति यथेति। अत्र रत्नावलीलाभ एव मुख्य फल बोध्यम्।

प्रयत्नस्तु फलावाप्तौ
व्यापारोऽतित्वरान्वितः ॥३२६॥ (ण)

यथा रत्नावल्याम्। "तहवि ण अत्थि अस्सो दंसणोवाओत्ति जधा तधा आलिहिअ जधासमीहिदं करइस्सं" (त) इत्यादिना प्रतिपादितो रत्नावल्याश्चित्रलेखनादिर्वत्सराजसङ्गमोपायः। यथा च रामचरिते समुद्रबन्धनादिः।

उपायापायशङ्काभ्यां
प्राप्त्याशा प्राप्तिसम्भवः ॥३२७॥ (थ)

यथा रत्नावल्या तृतीयेऽङ्के। वेशपरिवर्त्तनाभिसरणादेः सङ्गमोपायाद्वासवदत्तालक्षणापायशङ्कया च अनिर्द्धारितैकान्तसङ्गमरूपफलप्राप्तिः प्रत्याशा। एवमन्यत्र।

अपायाभावतः प्राप्ति-
र्नियताप्तिस्तु निश्चिता ॥ ३२८ ॥ (द)

अपायाभावान्निर्द्धारितैकान्तफलप्राप्तिर्नियताप्तिः। यथा

---

(ण) यत्नमाह प्रयत्न इति। फलस्य प्रधानफलस्य अवाप्तौ प्राप्त्यर्थम् अतित्वरान्वित व्यापार चेष्टा प्रयत्न ।

(त) उदाहरति यथेति। तहवीति। तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथा आलिख्य यथासमीहित करिष्यामीति संस्कृतम्।

(थ) प्राप्त्याशामाह उपायेति। उपायापायशङ्काभ्याम् उपायस्य अपायस्य विघ्नस्य शङ्का च ताभ्यां प्राप्तौ फलस्येति भाव सम्भव. सम्भावना प्राप्त्याशा।

(द) नियताप्तिमाह अपायेति। अपायस्य विघ्नस्य अभावत. अपगमात् निश्चिता प्राप्ति. फललाभः नियताप्ति.।

रत्नावल्याम्। "राजा। देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं पश्यामि" इति। देवीलक्षणापायस्य प्रसादनेन निवारणान्नियतफलप्राप्तिः सूचिता।

**सावस्था फलयोगः स्याद्**
**यः समग्रफलोदयः ॥३२९॥ (ध)**

यथा रत्नावल्यां रत्नावलीलाभश्चक्रवर्त्तित्वलक्षणफलान्तरलाभसहितः। एवमन्यत्र।

**यथासङ्ख्यमवस्थाभिराभिर्योगात् तु पञ्चभिः।**
**पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः ॥३३०॥(न)**

तल्लक्षणमाह—

**अन्तरैकार्थसम्बन्धः**
**सन्धिरेकान्वये सति ॥ ३३१ ॥ (प)**

---

(ध) फलागममाह सेति। यः समग्रस्य सकलस्य फलस्य उदयः, सा अवस्था फलयोगः फलागमः स्यात्।

(न) यथेति। आभिः पञ्चभिः अवस्थाभिः आरम्भप्रभृतिभिरित्यर्थः यथासङ्ख्यं योगात् इतिवृत्तस्य सन्दर्भवस्तुनः पञ्चधा एव पञ्चप्रकारा एव भागाः पञ्च सन्धयः स्युः। अतश्च आरम्भयोगिनो अवस्था मुखसन्धिः, यत्नयोगिनो अवस्था प्रतिमुखसन्धिः, प्राप्त्याशायोगिनो अवस्था गर्भसन्धिः, नियताप्तियोगिनो अवस्था विमर्षसन्धिः, फलागमयोगिनो अवस्था उपसहृतिसन्धिरिति बोध्यम्।

(प) सन्धिमाह अन्तरैकार्थसम्बन्ध इति। एक एव अन्वयः प्रयोजनं तस्मिन् सति अन्तरा मध्ये एकार्थसम्बन्धः एकेन अपरेणेत्यर्थः अर्थेन सम्बन्धः संयोगः सन्धिः।

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजन-सम्बन्धः सन्धिः। तद्भेदानाह—

मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिः।
इति पञ्चाऽस्य भेदाः स्युः क्रमाल्लक्षणमुच्यते॥
३३२॥

यथोद्देशं लक्षणमाह—

यत्र वीजसमुत्पत्तिर्नानार्थरससम्भवा।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम्॥
३३३॥ (फ)

यथा रत्नावल्यां प्रथमेऽङ्के (ब)।

फलप्रधानोपायस्य मुखसन्धिनिवेशिनः।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत्॥
३३४॥ (भ)

---

(फ) मुखसन्धिमाह यत्रेति। यत्र अंशे नाना अर्था रसाः शृङ्गारादयश्च तेषां सम्भवः, यत्र तादृशी प्रारम्भेण प्रकृष्टयत्नेन समायुक्ता वीजस्य सन्दर्भमूल-कारणस्य समुत्पत्तिः समुद्भवः, तत् मुखं मुखसन्धिरित्यर्थः परिकीर्त्तितम्।

(ब) उदाहरति यथेति। अत्र रत्नावलीवत्सराजयोरनुरागरूपस्य वीजस्य उत्पत्तिः।

(भ) प्रतिमुखसन्धिमाह फलेति। यत्र मुखसन्धिनिवेशिनः मुखसन्धौ स्थितस्य फलप्रधानोपायस्य फलस्य प्रधानफलस्य यः प्रधानम् उपायः तस्य वीज-स्येत्यर्थः लक्ष्यालक्ष्य इव ईषल्लक्ष्य इव उद्भेदः प्रकाशः, तत् प्रतिमुखं प्रतिमुखसन्धिरित्यर्थः।

यथा रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागम-हेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गताविदूषकाभ्यां ज्ञायमानतया किञ्चिल्लक्ष्यस्य वासवदत्ताया चित्रफलकवृत्तान्तेन किञ्चिदुन्नीयमानेऽस्य उद्देशरूप उद्भेदः (म)।

**फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन।**
**गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः॥**
**३३५॥ [य]**

फलस्य गर्भीकरणाद्गर्भः (र)। यथा रत्नावल्यां द्वितीयेऽङ्के सुसङ्गता। "सहि। अदक्खिणा दाणि सि तुमं जा एव भट्टिणा हत्थेण गहिदावि कोव ण मुञ्चसि" (ल) इत्यादौ समुद्भेदः। पुनर्वासवदत्ताप्रवेशे ह्रासः। तृतीयेऽङ्के "तद्वार्त्तान्वेषणाय गतः कथं चिरयति वसन्तकः" इत्यन्वेषणम्। "विदू। ही ही भो! कोसम्बीरज्जलम्भेणावि ण तादिसो पिअवअस्सस्स परितोसो जादिसो मम सआसादो पिअवअणं सुणिअ भविस्सदि" (व) इत्यादौ उद्भेदः। पुनरपि वासवदत्ताप्रत्यभि-

---

(म) उदाहरति यथेति। सागरिकावत्सराजसमागम प्रधानफलम्।

(य) गर्भसन्धिमाह फलेति। यत्र फलस्य प्रधानस्य य प्रधानम् उपाय तस्य प्राक् पूर्वम् उद्भिन्नस्य उद्भेद गतस्य किञ्चिल्लक्ष्यतया प्रकाशितस्य बीजस्येति भाव मुहु पुनः पुन ह्रासान्वेषणवान्, क्वचित् तिरोभाववान्, क्वचिद्वा अनुसन्धानवान् समुद्भेद सम्यक् प्रकाश गर्भः गर्भसन्धिरित्यथ ।

(र) गर्भीकरणात् अन्तर्गतकरणादित्यर्थः।

(ल) सखि अदक्षिणा इदानीमसि त्वं, या एव भर्त्रा हस्तेन गृहीतापि कोप न मुञ्चसीति संस्कृतम्।

(व) ही हीति। कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषो यादृशो मम सकाशात् प्रियवचन श्रुत्वा भविष्यतीति संस्कृतम्।

स्नानात् क्रामः । पुनः सागरिकायाः सङ्केतस्थानगमने अन्वेषणम् । पुनर्लतापाशकरणे उद्भेदः ।

अथ विमर्षः ।

**यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ।**
**शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः ॥**
**३३६ ॥ [श]**

यथा शाकुन्तले चतुर्थाङ्कादौ । "अनुसूया । पिअवदे ! जइवि गान्धव्वेण विवाहेण णिव्वित्तकल्लाणा पिअसही सउंतला तधावि अणुरूअभत्तिभाइणी सव्वुत्तत्ति णिव्वुदं मे हिअअ" (ष) इत्यत आरभ्य सप्तमाङ्कोपक्षिप्तात् प्रागर्थसञ्चयः (स) शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः ।

अथ निर्वहणम् ।

**वीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।**
**एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ॥**
**३३७ ॥ [ह]**

---

(श) विमर्षसन्धिमाह यत्रेति । यत्र मुख्यफलस्य प्रधानफलस्य उपाय गर्भत गर्भसन्धिमपेक्ष्य इत्यर्थ उद्भिन्न प्रकाशित शापाद्यै अभिसम्पातप्रभृतिभि, आद्यशब्देन भयादिग्रहण, सान्तराय सविघ्नश्च स विमर्ष इति स्मृत कथित । भयेन सान्तरायो यथा रत्नावल्यां—सागरिकासङ्गमे समुद्भूतो वत्सराजस्यानुराग वासवदत्ताभयेनास्पृष्ट ।

(ष) पिअवदे इति । प्रियवदे यद्यपि गान्धर्वेण विवाहेन निर्वृत्तकल्याणा प्रियसखी शकुन्तला तथापि अनुरूपभर्त्तृभागिणी सवृत्तेति निर्वृत मे हृदय-मिति संस्कृतम् ।

(स) सप्तमाङ्कोपक्षिप्तात् सप्तमाङ्के उपक्षिप्तम् उपसहृतं तस्मात्, भावे क्तप्रत्ययः । अर्थसञ्चय. फलसमुदाय ।

(ह) निर्वहणसन्धिमाह वीजेति । यत्र यथायथ यथाप्रदेश विप्रकीर्णा.

यथा वेण्याम्। "कञ्चुकी। (उपसृत्य सहर्षम्) महाराज। वर्द्धसे। अयं खलु भीमसेनो दुर्य्योधनक्षतजारुणी-कृतसर्वशरीरो दुर्लक्ष्यव्यक्तिः" इत्यादिना द्रौपदीकेशसंयमनादि-मुखसन्ध्यादिवीजाना निजनिजस्थानोपक्षिप्तानामेकार्थं-योजनम्। यथा वा शाकुन्तले सप्तमाङ्के शकुन्तलाभिज्ञाना-दुत्तरोऽर्थराशिः (च)। एषामङ्गान्याह—

**उपक्षेपः परिकरः परिन्यासो विलोभनम्।**
**युक्तिः प्राप्तिः समाधानं विधानं परिभावना।**
**उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे॥**
**३३८॥ [क]**

यथोद्देशं लक्षणमाह—

**काव्यार्थस्य समुत्पत्ति-**
**रुपक्षेप इति स्मृतः॥ ३३९॥ [ख]**

काव्यार्थ इतिवृत्तलक्षणप्रस्तुताभिधेयः। यथा वेण्यां भीमः।

---

विनिवेशिता वीजवन्त मूलकारणसमन्विता मुखाद्यर्था मुखसन्धिप्रभृतिरूपा अर्था कार्य्याणि एकार्थम् एकप्रयोजनम् उपनीयन्ते प्राप्यन्ते तत् हि निर्वहणं निर्वहणसन्धिरुपसंहार इत्यर्थ।

(च) उदाहरति यथेति। दुर्लक्ष्यव्यक्तिः दुर्लक्ष्या दुःखेन लक्षणीया व्यक्तिः प्रकाशः यस्य तादृशः स एवायमिति निश्चेतुमशक्य इत्यर्थः। शकुन्तला-विज्ञानात् शकुन्तलेयम् इति प्रत्यभिज्ञानात् उत्तरः अनन्तरोक्त इत्यर्थः अर्थराशिः कार्य्यसमुदाय।

(क) मुखसन्धेरङ्गान्याह उपक्षेप इति। स्पष्टम्।

(ख) उपक्षेपमाह काव्येति। काव्यार्थस्य सन्दर्भप्रतिपाद्यस्य समुत्पत्तिः सङ्क्षेपेण उत्क्षेपणम् उत्थापनमित्यर्थः उपक्षेप इति स्मृतः।

"लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्य पाण्डववधूपरिधानकेशान्
सुस्था भवन्ति मयि जीवति धार्त्तराष्ट्राः" ॥ (ग)

समुत्पन्नार्थबाहुल्यं
ज्ञेयः परिकरः पुनः ॥ ३४० ॥ [घ]

यथा तत्रैव—

"प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्य्यो हेतुर्न भवति किरीटी न च युवाम्।
जरासन्धस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा भीमः सन्धिं विघटयति यूयं घटयत" ॥ (ङ)

---

(ग) उदाहरति लाक्षेति। धार्त्त धृतराष्ट्रसुता दुर्य्योधनादयः लाक्षागृहानलविषान्नसभाप्रवेशैः लाक्षागृहानलेन विषान्नप्रयोगेण सभाया द्यूतक्रीडार्थम् आह्वानेन इत्यर्थः प्राणेषु वित्तनिचयेषु धनसमुदायेषु च न अस्मान् प्रहृत्य प्रथमद्वितीयाभ्यां द्वाभ्यामुपायाभ्यां प्राणनिधनार्थं चेष्टयित्वा तृतीयेनोपायेन धनानि हृत्वा इत्यर्थः, पुनश्च तृतीयेन पाण्डवानां या वधूः पाञ्चाली तस्याः परिधानं वस्त्रं केशांश्च आकृष्य मयि जीवति सुस्था भवन्ति ? शार्दूलविक्रीडितं वृत्तम्। अत्र द्रौपदीकेशसंयमनरूपस्य काव्यार्थस्य समुत्थापनम्।

(घ) परिकरमाह समुत्पन्नेति। समुत्पन्नस्य समुत्थितस्य अर्थस्य काव्यार्थस्य बाहुल्यं विस्तारः सूचनमित्यर्थः परिकरः ज्ञेयः।

(ङ) उदाहरति प्रवृद्धमिति। कुरुभिः धार्त्तराष्ट्रैरित्यर्थः शिशोरेव मम यत् वैरं विद्वेषः प्रवृद्धं खलु तत्र वैरे आर्य्यः गुरुत्वात् माननीयः युधिष्ठिरः न हेतुः न कारणं, किरीटी अर्ज्जुनश्च न हेतुः, युवामपि नकुलसहदेवावपीत्यर्थः न हेतू इति शेषः। अहमेव विद्वेषकारणं कुरूणामिति भावः। तस्मात् भीमः क्रुधा कोपेन जरासन्धस्य उरःस्थलमिव विरूढं विशेषेण निश्चितं सन्धिं विघटयति भिनत्ति, यूयं पुनः घटयत योजयत। भवद्भिः कृतमपि सन्धिमहं भेत्स्यामी-

## तन्निष्पत्तिः परिन्यासः ॥ ३४१ ॥ [च]

यथा तत्रैव—

"चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचास्तव देवि भीमः" ॥ (छ)

अत्र उपक्षेपो नाम इतिवृत्तलक्षणस्य काव्याभिधेयस्य सङ्क्षेपेणोपक्षेपणमात्रम्। परिकरस्तस्यैव बहुलीकरणम्। परिन्यासस्ततोऽपि (ज) निश्चयापत्तिरूपतया परितो हृदये न्यसनमित्येषां भेदः। एतानि च अङ्गानि उक्तेनैव पौर्वापर्य्येण भवन्ति। अङ्गान्तराणि तु अन्यथापि।

---

त्यर्थः। युष्माकं सन्ध्युत्पादनप्रयासः व्यर्थेति भावः। सन्धिकरणार्थमुद्यतस्य राज्ञः सन्देशमादाय आवयोः सहदेवं प्रति भीमसेनस्य उक्तिरियम्। शिखरिणीवृत्तम्। अत्र सन्धिविघटनेन वैरनिर्य्यातनस्य समाधिकः सूचनम्।

(च) परिन्यासमाह तन्निष्पत्तिरिति। तस्य काव्यार्थस्य निष्पत्तिः निश्चयेन सङ्कीर्त्तनं परिन्यासः।

(छ) उदाहरति चञ्चदिति। हे देवि। पाञ्चालि। भीमः चञ्चता स्फुरता भुजेन भ्रमिता घूर्णिता या चण्डा भीषणा गदा तस्या अभिघातेन प्रहारेण सञ्चूर्णितं ऊरुयुगलं यस्य तथाविधस्य सुयोधनस्य दुर्य्योधनस्य स्त्यानेन विस्तरेण अवनद्धं संसक्तं यत् घनं गाढं शोणितं तेन शोणः रक्तः पाणिर्यस्य तथाभूतः सन् तव कचान् केशान् उत्तंसयिष्यति अलङ्करिष्यति रक्ताक्तहस्तेन संयमनादिति भावः। वसन्ततिलकं वृत्तम्।

(ज) अत्रेत्यादि। उपक्षेपणमात्रम् उत्थापनमात्रम्। बहुलीकरणं विस्तारेण सूचनम्। उक्तेनैव कथितेनैव। अन्यथा वैपरीत्येन अपिकारात् क्रमेण अपीत्यर्थः।

गुणाख्यानं विलोभनम् ॥३४२॥ [झ]

यथा तत्रैव। "द्रौपदी। णाध। किं दुक्करं तुए परिक्कुविदेण" (ञ)। यथा वा मम चन्द्रकलायां चन्द्रकलावर्णने "सेय तारुण्यस्य विलासः" इत्यादि। यत्तु शाकुन्तलादिषु "ग्रीवाभङ्गाभिरामम्" इत्यादि मृगादिगुणवर्णनं तद्बीजार्थसम्बन्धाभावान्न सन्ध्यङ्गम्। एवमङ्गान्तराणामप्यूह्यम्।

सम्प्रधारणमर्थानां युक्तिः ॥३४३॥ [ट]

यथा वेण्यां सहदेवो भीमं प्रति—"आर्य्य! किं महाराजसन्देशोऽव्युत्पन्न एवार्य्येण गृहीतः" इति। अतः प्रभृति यावद्भीमवचनम्।

युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः।
न लज्जयति दाराणां सभायां केशकर्षणम्" इति॥ (ठ)

प्राप्तिः सुखागमः ॥३४४॥ [ड]

---

(झ) विलोभनमाह गुणाख्यानमिति। गुणानाम् आख्यानं कथनं विलोभनं विशेषेण लोभप्रदर्शनमित्यर्थः उत्तेजनं वा।

(ञ) णाधेति। नाथ। किं दुष्करं त्वया परिकुपितेनेति संस्कृतम्।

(ट) युक्तिमाह सम्प्रधारणमिति। अर्थानां कर्त्तव्यानां सम्प्रधारणं निश्चयः।

(ठ) उदाहरति यथेति। अव्युत्पन्नः अनवहितः। युष्मानिति। लोके जगति क्रोधात् शत्रूणां कुलक्षयः युष्मान् ह्रेपयति लज्जयति, सभायां दाराणां पत्न्याः इत्यर्थः, केशकर्षणं न लज्जयति। अत्र शत्रुकुलक्षयस्य कार्य्यस्य निश्चयेन कर्त्तव्यतासूचनम्।

(ड) प्राप्तिमाह प्राप्तिरिति। सुखस्य आगमः उदयः लाभः इत्यर्थः प्राप्तिः।

यथा तत्रैव—

"मथ्नामि कौरवशतं समरे न कोपात्"

इत्यादि द्रौपदी श्रुत्वा सहर्षम्—"णाध! असुदपुव्वं क्खु एदं वअणं ता पुणो पुणो भणाहि" (ढ)।

**वीजस्यागमनं यत्तु तत्समाधानमुच्यते॥३४५॥[ण]**

यथा तत्रैव—

"नेपथ्ये भो भो! विराटद्रुपदप्रभृतयः! श्रूयताम्"।

"यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्त्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद् द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते"॥ (त)

अत्र "सुस्था भवन्ति मयि जीवति" इति आदिवीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात् समाधानम्।

---

(ढ) णाधेति। नाथ! अश्रुतपूर्वं खल्विद वचन तत् पुन पुनर्भण इति संस्कृतम्।

(ण) समाधानमाह वीजस्येति। वीजस्य मूलकारणस्य आगमन प्रधान-सम्मतत्वेन कीर्त्तनमित्यर्थः यत् तत् समाधानम् उच्यते।

(त) उदाहरति यथेति। यदिति। सत्यव्रतस्य सत्यरक्षणरूपनियमस्य द्वादशवर्षवनवासरूपस्य एकवर्षाज्ञातवासरूपस्य चेत्यर्थः भङ्गात् भीरु मन. यस्य तादृशेन यत्नेन यत् मन्दीकृतं खर्वीकृत कुलस्य शान्तिम् अक्षयतामित्यर्थं. इच्छता शमवता शान्तेन मनसा यत् विस्मर्त्तुमपि ईहितं चेष्टित द्यूतमेव अरणिरग्निमन्थन दारुविशेषः तेन सम्भृत समुत्पन्न नृपसुतायाः द्रौपद्याः केशानां अम्बरस्य वस्त्रस्य

सुखदुःखकृतो योऽर्थ-
स्तद्विधानमिति स्मृतम् ॥३४६॥ [थ]

यथा बालचरिते—

"उत्साहातिशयं वत्स ! तव बाल्यञ्च पश्यतः ।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः" ॥ (द)

यथा वा मम प्रभावत्याम् "नयनयुगासेचनकम्" इत्यादि ।

कुतूहलोत्तरा वाचः
प्रोक्ता तु परिभावना ॥३४७॥ [ध]

यथा वेण्यां "द्रौपदी । युद्धं स्यान्न वा" इति संशयाना-
तूर्य्यशब्दानन्तरम् ।

---

च आकर्षणे, आकर्षणरूपैर्वायुभिरिति भावः उद्दीपितमिति शेषः, तत् महत् इदं युधिष्ठिरस्य इदं यौधिष्ठिर क्रोधज्योतिः कोपाग्निरित्यर्थः कुरुवने जृम्भते परिस्फुरति। शार्दूलविक्रीडित वृत्तम्। अत्र आदिवीजस्य भीमसेनोत्साहरूपस्य इत्यर्थः सम्यगाहितत्वात् सम्पूर्णतया उत्तेजितत्वादित्यर्थः ।

(थ) विधानमाह सुखेति । सुखदुःखाभ्यां कृतः विमिश्रित इत्यर्थः यः अर्थः कार्य्यं तत् विधानमिति स्मृतम् ।

(द) उदाहरति यथेति । उत्साहातिशयमिति । रामं प्रति परशुरामस्योक्ति-रियम् । हे वत्स ! तव उत्साहातिशयं, बाल्यं शैशवञ्च पश्यतः मम मनः हर्षविषा-दाभ्यां युगपत् आक्रान्तम् । तव उत्साहदर्शने भविष्यन्महावीरत्वसम्भावनया हर्षः, बाल्यदर्शनेनाहं कथमनेन सह योत्स्ये इति विषाद इत्युभयोर्विमिश्रणं बोध्यम् ।

(ध) परिभावनामाह कुतूहलेति । कुतूहलम् औत्सुक्यं तदुत्तराः तद्भूयिष्ठा इत्यर्थः, प्रोक्ताः कथिताः वाचः वाक्यानि परिभावना ।

"णाध। किं दाणिं एसो पलअजलहरघणत्थणिदमंसलो क्खणे क्खणे समरदुंदुहो ताडीअदि" (न)।

**वीजार्थस्य प्ररोहः स्यादुद्भेदः ॥३४८॥ [प]**

यथा तत्रैव। "द्रौपदी। णाध। तुम्हेहिं पुणोवि समरादो आअच्छिअ अहं आस्सासइदव्वा (फ)। भीमः।

"भूयः परिभवक्लान्तिलज्जाविधुरिताननम्।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्" ॥ (ब)

**करणं पुनः।**

**प्रकृतार्थसमारम्भः ॥३४९॥ [भ]**

यथा तत्रैव—"देवि! गच्छामो वयमिदानीं कुरुकुलक्षयाय" इति।

---

(न) णाधेति। नाथ। किमिदानीमेष प्रलयजलधरघनस्तनितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताड्यते इति संस्कृतम्। घनस्तनितं निरन्तरगर्जितं तद्वित् मांसलः गभीर इत्यर्थः।

(प) उद्भेदमाह वीजेति। वीजार्थस्य मूलीभूतविषयस्य प्ररोहः अङ्कुरोदयः उद्भेदः स्यात्।

(फ) णाधेति। नाथ। युष्माभिः पुनरपि समरादागत्य अहम् आश्वासयितव्या इति संस्कृतम्।

(ब) भूय इति। परिभवेण शत्रुभ्य अवमानेन या क्लान्तिः ततो या लज्जा तया विधुरितम् अवनतमित्यर्थः, बन्धुरितेति पाठे व्याप्तम्, आननं यस्य तम् अनिःशेषिताः निःशेषतामनीताः कौरव्याः येन तादृशं वृकोदरं भीमं भूयः पुनः न पश्यसि न द्रक्ष्यसीत्यर्थः; भविष्यत्सामीप्ये लट्। अत्र वीजार्थस्य वैरनिर्यातनार्थमुत्पन्नस्य क्रोधस्य प्ररोहः।

(भ) करणमाह करणमिति। प्रकृतस्य प्रस्तुतस्य अर्थस्य विषयस्य समारम्भः सम्यक् आरम्भः उद्योगः करणम्।

**भेदः संहतिभेदनम् ॥३५०॥** [म]

यथा तत्रैव। "अतएव अद्य प्रभृति भिन्नोऽहं भवद्भ्यः।" (य)
केचित्तु "भेदः प्रोत्साहना" इति वदन्ति।

अथ प्रतिमुखाङ्गानि।

**विलासः परिसर्पश्च विधूतं तापनं तथा।**
**नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः॥**
**विरोधश्च प्रतिमुखे तथा स्यात् पर्य्युपासनम्।**
**पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ॥३५१॥** [र]

तत्र।

**समीहा रतिभोगार्था**
**विलास इति कथ्यते ॥ ३५२ ॥** [ल]

रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा, तदर्था समीहा विलासः।

यथा शाकुन्तले।

"कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते" ॥ (व)

---

(म) भेदमाह भेद इति। संहतेः सङ्घातस्य भेदनं पृथक्करणं भेदः स्यात्।

(य) उदाहरति यथेति। भवद्भ्यः भिन्नः युष्मत्तः पृथग्भूतः स्वतन्त्रो जात इत्यर्थः।

(र) प्रतिमुखाङ्गान्याह अथेति। विलासादयस्त्रयोदश प्रतिमुखस्य अङ्गानि।

(ल) विलासमाह तत्रेति। तत्र तेषु मध्ये रतिभोगार्था सुरतसम्भोगविषयिणी समीहा चेष्टा स्पृहा वा विलास इति कथ्यते।

(व) उदाहरति काममिति। प्रिया शकुन्तला कामं सम्यक् न सुलभा न सुप्रापा कथमपीत्यर्थः। मनस्तु तस्या भावदर्शनेन मदनुरागव्यञ्जकचेष्टा-

**इष्टनष्टानुसरणं परिसर्पश्च कथ्यते ॥३५३॥ [ष]**

यथा शाकुन्तले । "राजा । भवितव्यमत्र तया" ।

नमयति ।

"अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा" ॥ (ष)

**कृतस्यानुनयस्यादौ विधूतं त्वपरिग्रहः ॥३५४॥[स]**

यथा तत्रैव । "अलं वो अंतःपुरविरहपज्जुस्सुएण राएसिणा उवरुध्धेण" । केचित्तु "विधूतं स्यादरतिः" इति वदन्ति (ह) ।

---

विशेषदर्शनेन आश्वासि आश्वस्तं प्रिया लभ्येति आशास्ते इत्यर्थः । मनसिजे कामे अकृतार्थे अकृतकार्य्येऽपि उभयो स्त्रीपुरुषयो प्रार्थना अन्योन्यकामना रतिम् अनुरागं कुरुते जनयति । अत्र नायिकासम्भोगविषयिणी स्पृहा प्रदर्शिता ।

(ष) परिसर्पमाह इष्टेति । इष्टस्य अभिलषितस्य नष्टस्य अदर्शनं गतस्य अनुसरणम् अन्वेषणं परिसर्पः कथ्यते ।

(ष) उदाहरति यथेति । अभ्युन्नतेति । अस्य लतामण्डपस्य पाण्डुसिकते द्वारि पुरस्तात् अग्रतः पादाग्रभागे इत्यर्थः, अभ्युन्नता, पश्चात् पार्ष्णिदेशे, जघनगौरवात जघनस्य भारवत्त्वात् अवगाढा अवनता अभिनवा पदपङ्क्तिः प्रतिविम्बितपदन्यासपद्धतिः दृश्यते । अत्र अभिलषितान्वेषणं ज्ञेयम् ।

(स) विधूतमाह कृतस्येति । आदौ अग्रतः कृतस्य अनुनयस्य अपरिग्रहः अवधीरणं विधूतम् ।

(ह) अलमिति । अलं वोऽन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणा उपरुद्धेन इति संस्कृतम् । अन्तःपुरस्य अन्तःपुरवर्त्तिनः महिलाजनस्य विरहेण पर्य्युत्सुकः उत्कण्ठितः तेन राजर्षिणा वः युष्माकम् उपरुद्धेन अनुनीतेन अलम् अनुनयो न कर्त्तव्य इत्यर्थः । अरतिः असन्तोषः ।

उपायादर्शनं यत्तु
तापनं नाम तद्भवेत् ॥२५५॥ [च]

यथा रत्नावल्यां सागरिका ।

"दुल्लहजणाणुराओ लज्जा गुरूई परवसो अप्पा ।
पियसहि ! विसमं पेम्मं मरणं सरणं णवरि एक्कं ॥" (क)

परिहासवचो नर्म ॥२५६॥ [ख]

यथा रत्नावल्याम्—"सुसङ्गता । सहि ! जस्स किदे तुमं आअदा स अयं दे पुरदो चिट्ठदि । सागरिका । (साभ्यसूयम् ) कस्स किदे अहं आअदा ? सुसङ्गता । अइ अस्ससंकिदे । णं चित्तफलअस्स" (ग) ।

धृतिस्तु परिहासजा ।
नर्मद्युतिः ॥२५७॥ [घ]

---

(च) तापनमाह उपायेति । यत्तु उपायस्य अदर्शनं तत् नाम तापनं भवेत् ।

(क) उदाहरति यथेति । दुल्लहेति । दुर्लभजनानुरागो लज्जागुर्वी परवश आत्मा । प्रियसखि । विषमं प्रेम मरणं शरणं केवलमेकम् । इति संस्कृतम् । दुर्लभे दुष्प्राप्ये जने अनुरागः, लज्जा गुर्वी महती, आत्मा परवशः पराधीनः । हे प्रियसखि । प्रेम विषमम् उत्कटं तस्मात् णवरि केवलं मरणं शरणम् आश्रयः । णवरिशब्दः केवलार्थोद्देशी । अत्र इष्टलाभे उपायाभावेन सन्तापः ।

(ख) नर्माह परिहासेति । परिहासवचः परिहासवाक्यं नर्म ।

(ग) सहीति । सखि । यस्य कृते त्वमागता सोऽयं ते पुरतस्तिष्ठति इति संस्कृतम् । कस्य कृते अहमागता ? इति संस्कृतम् । अयि अन्यशङ्किते । ननु चित्तफलकस्य इति संस्कृतम् ।

(घ) नर्मद्युतिमाह धृतिरिति । परिहासजा परिहासेन जाता धृतिः धैर्य्यन्तु नर्मद्युतिः ।

यथा तत्रैव—"सुसङ्गता। सहि। अदक्खिणा दाणिंसि तुमं जा एव भट्टिणा हत्थावलम्बिदावि कोवं ण मुञ्चसि"। सागरिका। (सभ्रूभङ्गमोषद्विहस्य) सुसङ्गदे। दाणिं वि कोलिदुं ण विरमसि" (ङ)।

केचित्तु "दोषस्याच्छादनं हास्यं नर्मद्युतिः" इति वदन्ति।

**प्रगमनं वाक्यं स्यादुत्तरोत्तरम् ॥३५८॥ [च]**

यथा विक्रमोर्वश्याम्—"उर्वशी। जअदु जअदु महाराओ (छ)। राजा। मया नाम जितं यस्य त्वया जय उदीर्य्यते" इत्यादि (ज)।

**विरोधो व्यसनप्राप्तिः ॥३५९॥ [झ]**

यथा चण्डकौशिके। "राजा। नूनमसमीक्ष्यकारिणा मया अन्धेनेव स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समाक्रान्तः" (ञ)।

---

(ङ) सहीति। सखि। अदक्षिणा इदानीमसि त्वं या एव भर्त्रा हस्तावलम्बितापि कोपं न मुञ्चसीति संस्कृतम्। सुसङ्गते। इदानीमपि क्रीडितुं न विरमसीति संस्कृतम्।

(च) प्रगमनमाह प्रगमनमिति। उत्तरोत्तरम् उत्कृष्टतरं वाक्यं प्रगमनं स्यात्।

(छ) जअदु इति। जयति जयति महाराज इति संस्कृतम्।

(ज) मयेति। यस्य मम त्वया जयः उदीर्य्यते कीर्त्त्यते तेन मया जितं नाम जितमेव। नामशब्दोऽत्र अवधारणार्थे।

(झ) विरोधमाह विरोध इति। व्यसनस्य विपदः प्राप्तिः विरोधः।

(ञ) उदाहरति यथेति। असमीक्ष्यकारिणा अविवेचकेन मया अन्धेनेव

कृतस्यानुनयः पुनः।

स्यात्पर्य्युपासनं ॥३६०॥ [ट]

यथा रत्नावल्याम्। "विदूषक। भो! मा कुप्प, एसा हि कदलीघरंतरं गदा" इत्यादि (ठ)।

पुष्पं विशेषवचनं मतम् ॥३६१॥ [ड]

यथा तत्रैव—"(राजा हस्ते गृहीत्वा स्पर्शं नाटयति) विदूषकः। भो वअस्स! एसा अबरुव्वा सिरी तुए समासादिदा (ढ)। राजा। वयस्य। सत्यम्।

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।
कुतोऽन्यथा पतत्येष स्वेदच्छद्मामृतद्रवः" ॥ (ण)

---

दृष्टिहीनेनेव स्फुरन् विराजन् शिखाकलाप अर्चिः समूहो यस्य तथाभूत. ज्वलनः अग्निः पत्न्यां समाक्रान्त दलित। अत्राग्निकल्पस्य कौशिकस्य कोपात् राज्ञः विपत्प्राप्ति।

(ट) पर्य्युपासनमाह कृतस्येति। कृतस्य पुन अनुनय पर्य्युपासन स्यात्।

(ठ) भो। मा कुप्पेति। भो। मा कुप्य, एषा हि कदलीगृहान्तर गतेति संस्कृतम्।

(ड) पुष्पमाह पुष्पमिति। विशेषस्य प्रकर्षस्य वचन पुष्पं मतम्।

(ढ) भो वअस्सेति। भो वयस्य। एषा अपूर्वा श्रीस्त्वया समासादितेति संस्कृतम्।

(ण) श्रीरिति। एषा स्त्री श्रीः लक्ष्मीस्वरूपा, अस्या पाणिरपि हस्तोऽपि पारिजातस्य देवतरुविशेषस्य पल्लव, अन्यथा कुत कथम् एष स्वेदच्छद्मा घर्मव्याज. अमृतद्रवः पतति नि.सरति। अत प्रकर्षवचनम्।

प्रत्यक्षनिष्ठुरं वज्रम् ॥३६२॥ [त]

यथा तत्रैव—"राजा । कथमिह सोऽहं त्वया ज्ञात:" ।

सुसङ्गता । "ण केवलं तुमं समं चित्तफलएण ता जाव गदुअ देवीए णिवेदइस्सं" (थ) ।

उपन्यास: प्रसादनम् ॥३६३॥ (द)

यथा तत्रैव । "सुसङ्गता । भट्टिणो । अलं सङ्काए मएवि भट्टिणो पसादेण कीलिदं ज्जेव्व एदिहिं ता किं कण्णाभरणेण । अदोवि मे गरुअरो पसादो एसो जं तुए अहं एत्थ आलिहिदत्ति कुविदा मे पिअसही सागरिका एसा ज्जेव पसादीअदु" (ध) ।

केचित्तु—

"उपपत्तिकृतो योऽर्थ उपन्यास: स कीर्त्तित:" ।

इति वदन्ति, उदाहरन्ति च तत्रैव "अदिमुहरा क्खु सा गब्भदासी" इति (न) ।

---

(त) वज्रमाह प्रत्यचेति । प्रत्यक्ष साक्षात्, निष्ठुर परुषवचन, वज्रवत् दु:खदत्वाद्वज्रम् ।

(थ) ण केवलमिति । न केवल त्व सम चित्रफलकेन तद्यावद्गत्वा देव्यै निवेदयिष्यामीति सस्कृतम् ।

(द) उपन्यासमाह उपन्यास इति । प्रसादन प्रसन्नतासम्पादनम् उपन्यास ।

(ध) भट्टिणो इति । भर्त्तुरलं शङ्कया मयापि भर्त्तु. प्रसादेन क्रीडितमेव एतै: तत् किं कर्णाभरणेन । अतोऽपि मे गुरुतर प्रसाद एष यत् त्वया अहम् अत्र आलिखिता इति कुपिता मे प्रियसखी सागरिका एषैव प्रसाद्यतामिति सस्कृतम् ।

(न) उपपत्तिरिति । उपपत्ति: युक्ति: तया कृत. अर्थ. वस्तु । अदीति ।

चातुर्वर्ण्योपगमनं
वर्णसंहार इष्यते ॥३६४॥ (प)

यथा वीरचरिते तृतीयेऽङ्के—

"परिषदियमृषीणामेष वीरो युधाजित्
सममृषिभिरमात्यैर्लोमपादश्च वृद्धः ।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामङ्ग ! भो ! याचकास्ते" ॥ (फ)

इत्यत्र ऋषिक्षत्रादीनां वर्णानां मेलनम्। अभिनवगुप्तपादास्तु "वर्णशब्देन पात्राण्युपलक्ष्यन्ते"। "संहारो मेलनम्" इति व्याचक्षते; उदाहरन्ति च रत्नावल्यां द्वितीयेऽङ्के।

"अदोवि मे अअं गरुओ पसादो" इत्यादेरारभ्य "णं हत्थे गेह्णिअ पसादेहि णं" (ब)। राजा। "क्वासौ क्वासौ" इत्यादि।

---

अतिमुखरा खलु एषा गर्भदासीति संस्कृतम्। दासीगर्भजाता दासी गर्भदासी।

(प) वर्णसंहारमाह चातुर्वर्ण्येति। चतुर्णां वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां समाहारः चातुर्वर्ण्यं तस्य उपगमनं मेलनं वर्णसंहार इष्यते।

(फ) उदाहरति परिषदिति। अङ्ग। भो जामदग्न्य! इयम् ऋषीणां परिषत् समूहः, एष वीरो युधाजित्, अयञ्च ऋषिभिरमात्यैश्च समं वृद्धो लोमपादः, अयम् अविरतयज्ञः सततयज्ञानुष्ठायी पुराणः प्राचीनः ब्रह्मवादी वेदनिरतः जनकानां प्रभुः मिथिलाधिपतिरित्यर्थः ते तव याचकाश्च, एते सर्वे समवेता इति शेषः।

(ब) अदोवि इति। अतोऽपि मे अयं गुरुतरः प्रसाद इति, ननु हस्ते गृहीत्वा प्रसादय एनामिति च संस्कृतम्। अत्र राजविदूषकसागरिकासुसङ्गतारूपाणां पात्राणां मेलनम्।

अथ गर्भाङ्गानि।

**अभूताहरणं मार्गो रूपोदाहरणे क्रमः।**
**सङ्ग्रहश्चानुमानञ्च प्रार्थनाक्षिप्तिरेव च॥**
**तोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा।**
**अत्र व्याजाश्रयं वाक्यमभूताहरणं मतम्॥३६५॥(भ)**

यथा अश्वत्थामाङ्के—

"अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा।
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा"॥ (म)

**तत्त्वार्थकथनं मार्गः॥३६६॥ (य)**

यथा चण्डकौशिके "राजा। भगवन्!
गृह्यतामर्जितमिदं भार्य्यातनयविक्रयात्।
शेषस्यार्थे करिष्यामि चाण्डालेऽप्यात्मविक्रयम्"॥ (र)

---

(भ) गर्भसन्ध्यङ्गानि आह अथेति। अभूताहरणमिति। अभूताहरणादीनि त्रयोदश गर्भसन्धेरङ्गानीत्यर्थः। तत्र तेषु मध्ये व्याजाश्रयं कपटाश्रय वाक्यम् अभूतस्य असत्यस्य आहरणमित्यभूताहरण मत कथितम्।

(म) उदाहरति यथेति। अश्वत्थामेति। अश्वत्थामा हत विनाशित इति पृथा कुन्ती तस्याः सूनु सुत. तेन युधिष्ठिरेणेत्यर्थः सत्यवाचा सत्यवादिना सता स्पष्ट सुव्यक्तम् उक्त्वा, शेषे वाक्यावसाने स्वैर मन्द यथा स्यात् तथा गज इति व्याहृतम् उक्त किल। अत्र पार्थवाक्य कपटमयम्।

(य) मार्गमाह तत्त्वेति। तत्त्वार्थस्य यथार्थस्य कथन मार्गः।

(र) उदाहरति यथेति। गृह्यतामिति। भार्य्या च तनयश्च तयोर्विक्रयात् मूल्यग्रहणपूर्वकार्पणात् अर्जित लब्धम् इद धन गृह्यता, शेषस्य अवशिष्टस्य देयस्य स्वर्थः अर्थे निमित्तं चाण्डालेऽपि आत्मविक्रय करिष्यामि। अत्र राज्ञः सत्य-

**रूपं वाक्यं वितर्कवत् ॥ ३६७ ॥ (ख)**

यथा रत्नावल्यां राजा ।

"मनः प्रकृत्यैव चलं दुर्लक्ष्यञ्च तथापि मे ।
कामिनैतत्कथ विद्धं समं सर्वैः शिलीमुखैः." ॥ (ब)

**उदाहरणमुत्कर्षयुक्तं वचनमुच्यते ॥३६८॥ (श)**

यथा अश्वत्थाम्नः—

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात् पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्" ॥(ष)

**भावतत्त्वोपलब्धिस्तु क्रमः स्यात् ॥३६९॥ (स)**

---

(ख) रूपमाह रूपमिति । वितर्कवत् वाक्यं रूपम् ।

(ब) उदाहरति यथेति । मन इति । मन चित्तं प्रकृत्यैव स्वभावेनैव चलं चञ्चलं दुर्लक्ष्यञ्च लक्षयितुं शरव्यीकर्त्तुमशक्यञ्च, तथापि कामिन मे मम एतत् मन समं युगपत् सर्वैं शिलीमुखैः शरैः कथ विद्धम् ? अत्र राज्ञ सवितर्कं वचनम् ।

(श) उदाहरणमाह उदाहरणमिति । उत्कर्षयुक्तं वचनं काव्यम् उदाहरणम् उच्यते कथ्यते ।

(ष) उदाहरति यथेति । य इति । अश्वत्थाम्न उक्तिरियम् । पाण्डवीना चमूना सेनाना मध्ये य यः स्वभुजगुरुमदात् निजबाहुबलस्यातिदर्पादित्यर्थः, स्वभुजगुरुबल इति पाठे बाहुमात्रसहाय , शस्त्र बिभर्त्ति पाञ्चालगोत्रे द्रुपदवंशे य यः शिशु अधिकवया प्रवया वा गर्भशय्या जरायु गतः, य य तस्य कर्मण. पितृनिधनरूपस्य साक्षी साक्षात् द्रष्टा, प्रतीकारार्थं यत्नाभावेन उदासीन इव स्थित इत्यर्थः । यश्च यश्च मयि रणे चरति सति प्रतीपः प्रतिकूलो भविष्यतीत्यर्थं, अहं क्रोधान्धः सन् स्वयं जगताम् अन्तकस्य यमस्यापि तस्य तस्य इह रणभूमौ अन्तक. विनाशकः भविष्यामीति शेषः । स्रग्धरावृत्तं, "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति तल्लक्षणात् ।

यथा शाकुन्तले राजा। "स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि ।

तथाहि ।

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।

पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन" ॥ (ह)

सङ्ग्रहः पुनः ।

**सामदानार्थसम्पन्नः ॥३७०॥ (च)**

यथा रत्नावल्यां—"राजा। साधु वयस्य! इदं ते पारितोषिकम्" इति कटकं ददाति (क)।

**लिङ्गादूहोऽनुमानता ॥ ३७१ ॥ (ख)**

---

(स) क्रममाह भावेति। भावस्य निर्विकारचित्तस्य प्रथमविकृतिरूपस्य "निर्विकारात्मके चित्ते भाव प्रथमविक्रिया" इति तल्लक्षणात्। तस्योपलब्धिः याथार्थ्यानुभव. क्रम. स्यात ।

(ह) उदाहरति यथेति। उन्नमितैकभ्रूलतामिति। उन्नमिता उतक्षिप्ता एका भ्रूलता यत्र तादृश, पदानि सुप्तिङन्तरूपाणि रचयन्त्या अस्या शकुन्तलाया आनन मुख पुलकाञ्चितेन लोमाञ्चितेन कपोलेन मयि अनुराग कथयति प्रकटयति इव। आर्य्याजाति । अत्र शकुन्तलाया प्रथमविकृतिरनुभव । अत्र यद्यपि भावस्य अल्पसलक्ष्यविकारत्वात् हावत्वप्रतीति, तथापि अत्र भावस्य एव विशेषतया स्थिति इति नानुपपत्ति'।

(च) सङ्ग्रहमाह सङ्ग्रहेति। साम्ना प्रियवाक्येन दानेन च अर्थस्य सम्पत्ति समाधानमित्यर्थं सङ्ग्रह ।

(क) उदाहरति साध्विति । स्पष्टम् । अत्र प्रियवचनदानाभ्या प्रियासङ्घटनरूपस्य अर्थस्य समाधानम् ।

(ख) अनुमानमाह लिङ्गादिति। लिङ्गात् पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टात् साधनात् ऊह साध्यज्ञानमित्यर्थ., अनुमानता अनुमानमित्यर्थ । स्वार्थे ताप्रत्ययः ।

यथा जानकीराघवे नाटके रामः—

"लीलागतैरपि तरङ्गयतो धरित्रीम्
आलोकनैर्नमयतो जगतां शिरांसि।
तस्यानुमापयति काञ्चनकान्तिगौर-
कायस्य सूर्य्यतनयत्वमधृष्यताञ्च" ॥ (ग)

**रतिहर्षोत्सवानान्तु**
**प्रार्थनं प्रार्थना भवेत् ॥ ३७२ ॥ (घ)**

यथा रत्नावल्याम्। "प्रिये सागरिके!

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारी करौ
रम्भास्तम्भनिभं तथोरुयुगलं बाहू मृणालोपमौ।
इत्याह्लादकराखिलाङ्गि! रभसान्निःशङ्कमालिङ्ग्य माम्
अङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय" ॥ (ङ)

---

(ग) उदाहरति लीलागतैरिति। लीलागतैः सविलासगमनैः धरित्रीं पृथिवीं तरङ्गयतः कम्पयतः, आलोकनैः दृष्टिभिः जगतां शिरांसि नमयतः नतानि कुर्वतः, काञ्चनस्य स्वर्णस्य या कान्तिः तद्वत् गौरः कायो यस्य तादृशस्य तस्य लक्ष्मणस्य सूर्य्यतनयत्वं सूर्य्यवंशीयत्वम् अधृष्यतां दुरासदत्वञ्च अनुमापयति अनुमानविषयीकरोति। लीलागतमालोकनञ्चेति कर्त्तृपदमध्याहार्य्यम्। वसन्ततिलकं वृत्तम्। अत्र लीलागमनादिप्रयुक्तधरित्रीकम्पनादिरूपात् साधनात् साध्यस्य सूर्य्यतनयत्वस्य अधृष्यत्वस्य च अनुमानम्।

(घ) प्रार्थनामाह रतीति। रतेः अनुरागात् हर्षाच्च उत्सवानां प्रार्थनं याञ्चा प्रार्थना भवेत्।

(ङ) उदाहरति यथेति। शीतांशुरिति। तव मुखं शीतांशुः चन्द्रः, दृशौ नेत्रे उत्पले नीलोत्पले इत्यर्थः, करौ हस्तौ पद्मानुकारौ पङ्कजोपमौ, ऊरुयुगलं रम्भास्तम्भनिभं रम्भागर्भसदृशं तथा बाहू भुजौ मृणालोपमौ। इत्थम् आह्लादकराणि आनन्ददातॄणि अखिलानि सर्वाणि अङ्गानि यस्यास्तत्सम्बुद्धौ। त्वं रभसात् वेगात् हर्षाद्वा, "रभसो वेगहर्षयोः" इत्यमरः। निःशङ्कं यथा स्यात् तथा माम् आलिङ्ग्य

इदञ्च प्रार्थनाख्यमङ्गम्। यन्मते निर्वहणे इह भूताव-सरत्वात् (च) प्रशस्तिनामाङ्गं नास्ति तन्मतानुसारेणोक्तम अन्यथाङ्गाना पञ्चषष्टिसङ्ख्यत्वप्रसङ्गात्।

**रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात् ॥३७३॥ (छ)**

यथा अश्वत्थामाङ्के—

"एकस्यैव विपाकोऽयं दारुणो भुवि वर्त्तते।
केशग्रहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः" ॥ (ज)

**त्रोटकं पुनः।**

**संरब्धवाक् ॥३७४॥ (झ)**

यथा चण्डकौशिके—"कौशिकः। आः! पुनः कथमद्यापि न सम्भृताः (ञ) स्वर्णदक्षिणाः"।

**अधिबलमभिसन्धिश्छलेन यः ॥३७५॥ (ट)**

---

अनङ्गतापविधुराणि मदनसन्तापविक्लवानि मम अङ्गानि निर्वापय शीतलय एहि आगच्छ। शार्दूलविक्रीडित वृत्तम्।

(च) निर्वहणे निर्वहणाख्ये सन्धौ भूतावसरत्वात् प्रार्थनाया प्राप्तविषयत्वात्, अन्यथा निर्वहणे प्रशस्तिसत्त्वे पञ्चषष्टिसङ्ख्यत्वं को दोष इति चेत् सम्प्रदाय-विरोध इति।

(छ) क्षिप्तिमाह रहस्येति। रहस्यस्य गुप्तस्य अर्थस्य उद्भेद प्रकटन क्षिप्ति स्यात।

(ज) उदाहरति यथेति। एकस्यैवेति। भुवि पृथिव्याम् एकस्य द्रौपदी-केशग्रहस्य इत्यर्थ अय दारुणो विपाक दुष्परिणाम वर्त्तते, अस्मिन् द्वितीये केशग्रहे द्रोणकेशाकर्षणे नूनं मन्ये प्रजा निःशेषिता, भविष्यन्तीति शेष। केशानाकृष्य द्रोण निहतवान् धृष्टद्युम्न इति पुराणम्।

(झ) त्रोटकमाह त्रोटकमिति। संरब्धा सकोपा वाक् त्रोटकम्।

(ञ) उदाहरति यथेति। सम्भृता सम्प्राप्ता। भूधातो प्राप्त्यर्थत्वमत्र बोध्यम्।

यथा रत्नावल्यां—"काञ्चनमाला। भट्टिणि! इअं सा चित्तसालिआ वसतअस्स सख्ख करोमि" इत्यादि (ठ)।

नृपादिजनिता भीति-
रुद्वेगः परिकीर्त्तितः ॥३७६॥ (ड)

यथा वेण्याम्—

"प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः।
स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः" ॥ (ढ)

शङ्का-भय-त्रासकृतः
सम्भ्रमो विद्रवो मतः ॥३७७॥ (ण)

यथा।

"कालान्तककरालास्यं क्रोधोद्भूतं दशाननम्।
विलोक्य वानरानीके सम्भ्रमः कोऽप्यजायत" ॥ (त)

---

(ट) अधिबलमाह अधिबलमिति। छलेन कपटेन अभिसन्धि अभिप्रायानुसरणम् अधिबलम्।

(ठ) उदाहरति यथेति। भट्टिणीति। भर्त्ति। इय सा चित्रशालिका, तद् यावत् वसन्तकस्य सञ्ज्ञा करोमीति संस्कृतम्। चित्रशालिका आलेख्यगृह, सञ्ज्ञा सङ्केतम्।

(ड) उद्वेगमाह नृपादीति। नृपादे सकाशात् जनिता उत्पादिता भीति. भयम् उद्वेग परिकीर्त्तित।

(ढ) उदाहरति प्राप्ताविति। दुर्य्योधन प्रति तदीयपुरुषस्य उक्तिरियम्। स कर्णारि कर्णशत्रुः अर्जुन स च क्रूर निष्ठुर वृककर्मा वृको व्याघ्रविशेष तद्वत् कर्म यस्य तादृश, दुःशासनोरस्थलात् रुधिरपानादिति भाव, वृकोदर, भीम, एकम् अद्वितीय रथमारूढौ इतस्तत त्वा पृच्छन्तौ प्राप्तौ आगतौ। अत्र भीमार्ज्जुनाभ्या भीति।

(ण) विद्रवमाह शङ्केति। शङ्कया अनिष्टाशङ्कया भयेन त्रासेन भयाकुलव्यापारेण च सम्भ्रमः आवेगः विद्रव. मतः कथित.।

अथ विमर्षाङ्गानि ।

**अपवादोऽथ सम्फेटो व्यवसायो द्रवो द्युतिः ।**
**शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम् ॥**
**प्ररोचना विमर्षे स्यादादानं छादनं तथा ।** (थ)
**दोषप्रख्याऽपवादः स्यात्** ॥३७८॥ (द)

यथा वेण्या—"युधिष्ठिरः । पाञ्चालक ! क्वचिदासादिता तस्य दुरात्मनः पदवी । पाञ्चालकः । न केवलं पदवी स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः" । (ध)

**सम्फेटो रोषभाषणम्** ॥३७९॥ (न)

यथा तत्रैव—"राजा । अरे रे मरुत्तनय ! वृद्धस्य राज्ञः पुरतो निन्दितमप्यात्मकर्म श्लाघसे ? (प) शृणु रे !

---

(त) उदाहरति कालान्तकेति । कालान्तकः प्रलयकालीनो यमः तस्येव करालानि भीषणानि आस्यानि मुखानि यस्य तादृश क्रोधोद्भूत कोपपूर्ण दशानन दशमुख रावण विलोक्य दृष्ट्वा वानराणाम् अनीके सैन्ये कोऽपि अनिर्वचनीय इत्यर्थ, सम्भ्रमः आवेग अजायत अभूत् ।

(थ) विमर्षाङ्गान्याह अथेति । अपवादादीनि त्रयोदश विमर्षाख्यस्य सन्धे अङ्गानि ।

(द) अपवादमाह दोषेति । दोषस्य प्रख्या कथनम् अपवाद स्यात् ।

(ध) उदाहरति पाञ्चालकेति । आसादिता प्राप्ता, दुरात्मन दुर्य्योधनस्य । देवीति । देव्या द्रौपद्या केशपाशस्य स्पर्शात् यत् पातक तस्य प्रधानहेतु मुख्यकारण दुर्य्योधन इत्यर्थ. उपलब्ध प्राप्त. । अत्र दुर्य्योधनस्य दोषकथनम् ।

(न) सम्फेटमाह सम्फेट इति । रोषेण क्रोधेन भाषण कथन सम्फेटः ।

(प) उदाहरति यथेति । मरुत्तनय ! वायुपुत्र ! भीम इत्यर्थ., वृद्धस्य राज्ञः धृतराष्ट्रस्य पुरतः अग्रत, श्लाघसे प्रशससि ?

कृष्टा केशेषु भार्य्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीना मम भुवनपतेराज्ञया द्यूतदासी।
तस्मिन् वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा-
बाह्वोर्वीर्य्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः॥ (फ)

भीमः। (सक्रोधं) आः पाप! राजा। आः पाप!" इत्यादि।

**व्यवसायश्च विज्ञेयः**
**प्रतिज्ञाहेतुसम्भवः ॥३८०॥ (ब)**

यथा तत्रैव "भीमः—
निहताशेषकौरव्यः क्षीवो दुःशासनासृजा।
भङ्क्ता दुर्य्योधनस्योर्वोर्भीमोऽयं शिरसा नतः।" (भ)

---

(फ) कृष्टेति। भीमार्जुनौ प्रति दुर्य्योधनवचनम्। भुवनपतेः समस्त-पृथिवीश्वरस्य मम आज्ञया भूपतीनां राज्ञां प्रत्यक्षं द्यूतेन निर्जिता दासी किङ्करी अतएव तव इति भीमं प्रति, पशोः पशुतुल्यस्य इत्यर्थः तव इति अर्जुनं प्रति, तस्य राज्ञः युधिष्ठिरस्य तयोः नकुलसहदेवयोर्वा, वाशब्दोऽत्र समुच्चयार्थः। "वा स्याद् विकल्पोपमयोरेवार्थेऽपि समुच्चये" इत्यमरः। भार्य्या द्रौपदी केशेषु कृष्टा दुःशासनेनेति शेषः। तस्मिन् वैरस्य विद्वेषस्य अनुबन्धे कारणे जाते सतीति शेषः ये नरेन्द्राः राजानः हताः युष्माभिरिति शेषः तैः किम् अपकृतम्? वद बाह्वोर्भुजयोः वीर्य्यातिशयादिति भावः। अतिवीर्य्यम् एव द्रविणं धनं तेन गुरुर्महान् मदो गर्वो यस्य तादृशं माम् अजित्वैव दर्पः अहङ्कारः क्रियते युष्माभि-रिति शेषः। स्रग्धरावृत्तम्। अत्र क्रोधेन भीमदुर्य्योधनयोर्भाषणम्।

(ब) व्यवसायमाह व्यवसाय इति। प्रतिज्ञायाः कार्य्यनिर्देशस्य हेतोः साधननिर्देशस्य च सम्भवः सम्मेलनं व्यवसायः विज्ञेयः।

(भ) उदाहरति निहतेति। पूर्णप्रतिज्ञस्य भीमस्य धृतराष्ट्रं प्रति प्रणतिवचनम्। निहताः विनाशिता अशेषाः समस्ताः कौरव्याः कुरुवंशीयाः येन तादृशः, दुःशासनस्य असृजा रक्तेन रक्तपानेनेत्यर्थः क्षीवः मत्तः, तथा दुर्य्योधनस्य ऊर्वोरूरुद्वयस्य भङ्क्ता भङ्गकारी अयं भीमः शिरसा नतः शिरसा प्रणमतीत्यर्थः। अत्र कार्य्यस्य कौरवहननादिकस्य क्षीवत्वहेतोश्च दुःशासनरुधिरपानस्य सम्मेलनम्।

**द्रवो गुरुव्यतिक्रान्तिः**

**शोकावेगादिसम्भवा ॥३८१॥ (म)**

यथा तत्रैव—“युधिष्ठिरः । भगवन्! कृष्णाग्रज! सुभद्राभ्रातः!

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम्” ॥ (य)

**तर्जनोद्वेजने प्रोक्ता द्युतिः ॥३८२॥ (र)**

यथा तत्रैव—दुर्योधनं प्रति कुमारवृकोदरेणोक्तम् ।

“जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितमधुक्षीवं रिपुं मन्यसे ।

---

(म) द्रवमाह द्रव इति । शोकावेगादिना सम्भूता गुरूणां व्यतिक्रान्तिः व्यतिक्रमः समादरलङ्घनमित्यर्थः द्रवः ।

(य) उदाहरति ज्ञातीति । ज्ञातिप्रीतिः एकवंशजत्वनिबन्धनं प्रेम इत्यर्थः युधिष्ठिरबलदेवयोरेकचन्द्रवंशप्रभवत्वादिति भावः । मनसि न कृता न गणिता इत्यर्थः, क्षत्रियाणां धर्मः सङ्ग्रामे बन्धुमित्रसमदर्शित्वरूप इति भावः न गणितः, अर्जुनेन अनुजस्य कृष्णस्य रूढं बद्धं सख्यं यत् तदपि न गणितं, भवतेति सर्वत्रा-ध्याहार्य्यम् । भवतः तव शिष्ययोः गदायुद्धेऽन्तेवासिनोः भीमदुर्योधनयोः स्नेहबन्धः कामं सम्यक् तुल्यः समानो भवतु, स्नेहतुल्यत्वं एकस्य साहाय्यकरणमनु-चितमिति भावः । अयं कः पन्थाः नयः यत् मन्दभाग्ये भाग्यहीने मयि त्वं विमुखः प्रतिकूलः असि भवसि । शिखरिणीवृत्तम् । अत्र बलदेवं प्रति अनादरसूचकवचनात् गुरुव्यतिक्रमः ।

(र) द्युतिमाह तर्जनेति । तर्जनं भर्त्सनम् उद्वेजनं भयप्रदर्शनेन उद्वेग-जननञ्च द्युतिः प्रोक्ता कथिता ।

दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
त्रासान्मे नृपशो! विहाय समरं पङ्केऽधुना लीयसे" ॥ (ल)

शक्तिः पुनर्भवेत्।

विरोधस्य प्रशमनम् ॥३८३॥ (व)

यथा तत्रैव—

"कुर्वन्त्वाप्ता हतानां रणशिरसि जना भस्मसाद्देहभारान्
अश्रून्मिश्रं कथञ्चिद्ददतु जलममी बान्धवा बान्धवेभ्यः।
मार्गन्तां ज्ञातिदेहान् हतनरगहने खण्डितान् गृध्रकङ्कै-
रस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि" (श)

---

(ल) उदाहरति जन्मेति। इन्दोश्चन्द्रस्य विमले निर्मले निर्दोषे इत्यर्थः कुले जन्म व्यपदिशसि कथयसि। ननु सहायाभावात् कथं योत्स्ये इत्याशङ्काह— अद्यापि गदा धत्से गदासहायस्यान्यसहायापेक्षा नेति भावः, अथवा भ्रात्रादि-बधेन निर्वेदे गदात्याग एवोचितः स च न कृत इत्यतोऽद्यापि युद्धश्रद्धास्तीति गम्यते इति भावः। मा दुःशासनस्य यत् कोष्णमीषदुष्णं प्रत्यग्रहतत्वात् शोणितं तदेव मधु, पाठान्तरे सुरा, तेन तत्पानेनेत्यर्थः, क्षीवः मत्तः त्वं रिपुं मधु मन्यसे गणयसि, वा मत्ततयावज्ञायते इत्यर्थः, तथा दर्पान्धः सन् मधुकैटभद्विषि मधुदैत्यकैटभदैत्यध्वंसिनि हरौ कृष्णे अपि उद्धतं यथा स्यात् तथा चेष्टसे, तस्य बन्धने कृतोद्योगत्वादिति भावः। हे नृपशो! द्विपदपशो! मे मम त्रासात् भयात् अधुना समरं सग्रामं विहाय त्यक्त्वा पङ्के लीयसे लीनः सन् तिष्ठसि। शार्दूलविक्रीडितं वृत्तम्। अत्र तर्जनरूपा द्युतिः।

(व) शक्तिमाह शक्तिरिति। विरोधस्य विद्वेषस्य प्रशमनं शक्तिः भवेत्।

(श) उदाहरति कुर्वन्त्विति। जनाः रणशिरसि आप्तैः स्वजनैः हतानां देहभारान् शरीरचयान् भस्मसात् कार्त्स्न्येन वह्निसात् कुर्वन्तु, तथा अमी बान्धवाः बान्धवेभ्यः रणहतेभ्य इति शेषः अश्रून्मिश्रं नेत्रजलसंवलितं जलं कथञ्चित् ददतु, तथा हतनरगहने हतैः नरैः गहने निविडे अस्मिन् क्षेत्रे गृध्रैः कङ्कैः पक्षिविशेषैश्च खण्डितान् ज्ञातिदेहान् बान्धवशरीराणि मार्गन्ताम् अन्विष्यन्ताम्। अयं भास्वान् सूर्यः रिपुभिः शत्रुभिः सह अस्तं चरमाचलं प्रयातः चलितः,

प्रसङ्गो गुरुकीर्त्तनम् ॥३८४॥ (ष)

यथा मृच्छकटिकायां—"चाण्डालकः एसो सागलदत्तस्स सुदो अज्जविस्सदत्तस्स णत्तिओ चालुदत्तो व्याबादितुं वज्झ-ट्टाणं णिज्जइ एदेण किल गणिआ वसंतसेणा सुअसलोहेण बाबादिदत्ति" (स)। चारुदत्तः। (सनिर्वेद स्वगतम्)

"मखशतपरिपूतं गोत्रमुद्भासितं यत्
सदसि निविडचैत्य-ब्रह्मघोषैः पुरस्तात्।
मम निधनदशायां वर्त्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम्" ॥ (ह)

इत्यनेन चारुदत्तबधाभ्युदयानुकूलप्रसङ्गाद् गुरुकीर्त्तन-मिति प्रसङ्गः।

---

वर्त्तमाने क्तप्रत्यय । अतो बलानि सैन्यानि सज्जियन्ता निवर्त्त्यन्ताम् । स्रग्धरावृत्तम । अत्र अनूना निधनेन निरोधप्राप्तिरिति ध्येयम् ।

(ष) प्रसङ्गमाह प्रसङ्ग इति । गुरु अत्यर्थं कीर्त्तन दोषादिख्यापन वा गुरूणां कीर्त्तनं प्रसङ्ग ।

(स) एष सागरदत्तस्य सुत आर्य्यविश्वदत्तस्य नप्ता चारुदत्तो व्यापादयितुं वध्यस्थानं नीयते। एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादितेति संस्कृतम्।

(ह) उदाहरति यथेति। मखेति। मखानां यज्ञाना शतैः शतशोऽनुष्ठानैरित्यर्थ परिपूतं विशुद्धं यत गोत्र मदीयं कुल पुरस्तात् पूर्वं सदसि सभाया निविडचैत्यब्रह्मघोषै उद्भासितम् आसीत् इति शेष । निविडानि लोके आकीर्णानि यानि चैत्यानि "चैत्यमायतन तुल्ये" इत्यमर । पूजायायतनस्थानानि तेषु ये ब्रह्मघोषा वेदवादाः तै, उद्भासित समुज्ज्वलीकृतम् इत्यर्थ', इदानी निधनदशाया मृत्युदशायां वर्त्तमानस्य मम तत् गोत्र कुलं पापै' असदृशमनुष्यै अतिनीचै घोषणायां घोषणस्थाने घुष्यते विख्याप्यते, किमतःपरमाक्षेपकरमिति भाव । मालिनीवृत्तम्।

**मनश्चेष्टासमुत्पन्नः**
**श्रमः खेद इति स्मृतः ॥३८५॥ (च)**

मनःसमुत्पन्नो यथा मालतीमाधवे—

"दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्" ॥ (क)

एवं चेष्टासमुत्पन्नोऽपि ।

**ईप्सितार्थप्रतीघातः**
**प्रतिषेध इतीष्यते ॥३८६॥ (ख)**

यथा मम प्रभावत्यां विदूषकं प्रति—"प्रद्युम्नः । सखे ! कथमिह त्वमेकाकी वर्त्तसे ? क्व नु पुनः प्रियसखीजनानुगम्यमाना प्रियतमा मे प्रभावती ? (विदूषकः) असुरवइणा आआरिअ कहिं वि णीदा (ग) । (प्रद्युम्नः दीर्घं निःश्वस्य)

---

(च) खेदमाह मन इति । मनसा चेष्टया वा समुत्पन्नं जातं श्रमं खेद इति स्मृतं ।

(क) उदाहरति दलतीति । मम हृदयं गाढोद्वेगं गुरुपीड़म् अतएव दलति स्वयं दलितं भवति न तु द्विधा भिद्यते द्विखण्डं नैव भवतीत्यर्थ, विकलं अवशः कायं मोहं मूर्च्छां वहति, चेतनां न मुञ्चति न त्यजति । अन्तर्दाहः तनं शरीरं ज्वलयति भस्मसात् न करोति, मर्मच्छेदी विधिं प्रहरति जीवितं न कृन्तति न नाशयति । हरिणीवृत्तम् ।

(ख) प्रतिषेधमाह ईप्सितार्थेति । ईप्सितार्थस्य अभीष्टविषयस्य प्रतीघातं प्रतिषेध इति इष्यते ।

(ग) असुरवइणा इति । असुरपतिना आकार्य्य क्वापि नीतेति संस्कृतम् । आकार्य आहूय, "हूतिराकारणाह्वानम्" इत्यमरः ।

हा पूर्णचन्द्रमुखि! मत्तचकोरनेत्रे!
मामानताङ्गि! परिहाय कुतो गतासि?
गच्छ त्वमद्य ननु जीवित! तूर्णमेव
दैव कदर्थनपरं कृतकृत्यमस्तु" ॥ (घ)

**कार्य्यात्ययोपगमनं**
**विरोधनमिति स्मृतम् ॥३८७॥ (ङ)**

यथा वेण्यां युधिष्ठिरः—

"तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम्।
भीमेन प्रियसाहसेन रभसादल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः" ॥ (च)

---

(घ) हा इति। हा इति खेदे। पूर्णचन्द्र इव मुखं यस्यास्तत्सम्बुद्धौ, मत्तौ चकोरौ इव नेत्रे यस्यास्तत्सम्बोधने, आनतानि यौवनभरादिति भावः, अङ्गानि यस्यास्तत्सम्बुद्धौ, मां परिहाय त्यक्त्वा कुतः गतासि? ननु जीवित! त्वम् अद्य तूर्णं शीघ्रं गच्छ, कदर्थनपरं क्लेशदानतत्परं दैवं विधिः कृतकृत्यं कृतार्थम् अस्तु भवतु। वसन्ततिलकं वृत्तम्। अत्र ईप्सितस्य प्रतीघातः।

(ङ) विरोधनमाह कार्य्येति। कार्य्यस्य अत्ययः ध्वंसः तस्य उपगमनं प्राप्तिः विरोधनमिति स्मृतम्।

(च) उदाहरति तीर्ण इति। भीष्म एव महोदधिः महासमुद्रः तस्मिन् तीर्णे पराभूते इति भावः, द्रोण एव अनलः तस्मिन् कथमपि निर्वृते निर्वापिते नीते निहते इति भावः, कर्ण एव आशीविषभोगी सविषदन्तपन्नगः तस्मिन् प्रशमिते प्रकर्षेण शान्तिं नीते हते इति भावः, शल्ये च दिवं स्वर्गं याते युद्धनिधनादिति भावः, इत्थं जये स्वल्पावशेषे केवलं दुर्य्योधनवधमात्रावशिष्टे इत्यर्थः, प्रियसाहसेन अतिसाहसवता भीमेन रभसात् वेगात् वाचा अद्यैव यदि दुर्य्योधनं न हन्मि तदाग्निं प्रवेक्ष्यामीत्येवंरूपेण वाक्येनेति भावः, सर्वे अमी वयं जीवितसंशयं समारोपिताः। भीमस्याग्निप्रवेशे अस्माभिरपि मर्त्तव्यमिति भावः। शार्दूलविक्रीडितं वृत्तम्।

**प्ररोचना तु विज्ञेया**
**संहारार्थप्रदर्शिनी ॥३८८॥ [छ]**

यथा वेण्यां—पाञ्चालकः। "अहञ्च देवेन चक्रपाणिना इत्युपक्रम्य, कृतं सन्देहेन ।

पूर्य्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णाऽत्यन्तचिरोज्झिते तु कवरीबन्धे करोतु क्षणम् ।
रामे शातकुठारभास्वरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ?" (ज)

**कार्य्यसंग्रह आदानम् ॥ ३८९ ॥ (झ)**

यथा वेण्याम् ।

"ननु भोः समन्तपञ्चकचारिणः ! (ञ)
नाहं रक्षो न भूतो रिपुरुधिरजलाह्लादिताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।

---

( छ ) प्ररोचनामाह प्ररोचनेति। संहारस्य उपसंहारस्य अर्थं विषयं प्रदर्शयति या सा उक्तिरिति शेषः, प्ररोचना विज्ञेया ।

( ज ) उदाहरति यथेति। पूर्य्यन्तामिति। हे राजन्नित्यध्याहार्य्यं, ते तव राज्याभिषेकाय रत्नकलशाः सलिलेन पूर्य्यन्ताम्। कृष्णा द्रौपदी अत्यन्तचिरोज्झिते अतिचिरपरित्यक्ते कवरीबन्धे केशबन्धने क्षणम् उत्सवं, "क्षण उद्धव उत्सवः" इत्यमरः, करोतु। शातेन शाणितेन कुठारेण भास्वरः दीप्यमानः करो यस्य तादृशे क्षत्र एव द्रुमाः वृक्षाः तेषां छेदिनि रामे भार्गवे, क्रोधान्धे वृकोदरे भीमे च आजौ युद्धे परिपतति सति संशयः जये इति शेषः कुतः ? न कुतोऽपीत्यर्थः। शार्दूल-विक्रीडितं वृत्तम्। अत्र महावाक्यस्य उपसंहारदर्शनम् ।

( झ ) आदानमाह कार्य्येति। कार्य्याणां संग्रहः सम्यक् ग्रहणम् आदानम् ।

( ञ ) उदाहरति यथेति। समन्तपञ्चकचारिणः समन्तात् पञ्चकं नदीनामिति शेषः, यत्र तथोक्तः कुरुक्षेत्रीयप्रदेशविशेषः, यत्र कुरुपाण्डवसंग्रामः समभवत्, तत्र चारिणः योद्धृवर्गा इत्यर्थः ।

भो भो राजन्यवीराः! समराग्निशिखाभुक्तशेषाः कृतं वः त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत्" ॥ (ट)

अत्र समस्तरिपुवधकार्य्यस्य संगृहीतत्वादादानम्।

तदाहुश्छादनं पुनः।
कार्य्यार्थमपमानादेः सहनं खलु यद्भवेत्॥३९०(ठ)

यथा तत्रैव—"अर्जुनः। आर्य्य!

अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा" ॥ (ड)

---

(ट) नाहमिति। भीमसेन रिपुरुधिराक्तदेह धावन्त दृष्ट्वा भयात् निहत-पतितसैनिकगणान्तराले गोपितकलेवरान् संग्रामवर्त्तिन योधान् प्रति भीमसेनोक्तिरियम्। अह रक्ष राक्षस न, भूत. देवयोनिविशेष न, रिपूणा रुधिर-जलै शोणितवारिभि आह्लादितानि आप्यायितानि विराजितानीत्यर्थ, अङ्गानि यस्य तथोक्तः, क्रोधन. प्रकाम सम्यक् यथा तथा निस्तीर्ण. उत्तीर्ण, उरुर्महान् प्रतिज्ञा एव जलनिधि समुद्र. येन स. अतएव गहन निविड दुरासद इत्यर्थ, क्षत्रिय अस्मि भवामि। भो भो राजन्यवीरा.। क्षत्रियेषु शौर्य्यशालिन। यूय समराग्निशिखिन. रणाग्ने शिखाभि ज्वालाभि भुक्तेभ्य दग्धेभ्य इत्यर्थ., शेषा अवशिष्टा, नाधुना रणाग्निर्युष्मान् धक्ष्यतीति भाव., अत. व युष्माकम् अनेन त्रासेन कृतम् अल यत् यस्मात् त्रासादित्यर्थ., करिषु हस्तिषु तुरगेषु अश्वेषु च अन्तर्हितै. अन्तर्धान गतै तिरोहितैरित्यर्थः, अतएव लीनै विलय प्राप्तैरिवेति भावः, आस्यते स्थीयते युष्माभिरिति शेषः।

(ठ) छादनमाह तदाहुरिति। कार्य्यार्थं यत् खलु अपमानादे. सहनं भवेत् तत् पुन छादनम् आहु।

(ड) उदाहरति यथेति। अप्रियाणीति। हतं विनाशितं भ्रातृणा दु.शासना-दीना शत यस्य तादृशः, अतएव दुःखी अतिशोकार्त्त इत्यर्थः, एष दुर्य्योधन, वाचा शक्त, कर्मणा न शक्त, अप्रियाणि करोतु कटुवाक्य वदतु अपकर्त्तुं कार्य्येण किमपि न शक्नोति इति भावः, अस्य दुर्य्योधनस्य प्रलापैः अनर्थकै. वाक्यैः व्यथा

अथ निर्वहणाङ्गानि ।

सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् ।
कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम् ॥
भाषणं पूर्ववाक्यञ्च काव्यसंहार एव च ।
प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः ॥
३९१ ॥ (ढ)

तत्र ।

वीजोपगमनं सन्धिः ॥ ३९२ ॥ (ण)

यथा वेख्यां—"भीमः । भवति यज्ञवेदिसम्भवे । स्मरति भवती यन्मयोक्तं चञ्चद्भुजेत्यादि" । अनेन मुखे क्षिप्तवीजस्य (त) पुनरुपगमनमिति सन्धिः ।

विबोधः कार्य्यमार्गणम् ॥ ३९३ ॥ (थ)

यथा तत्रैव—"भीमः । मुञ्चतु मामार्य्यः क्षणमेकम् । युधिष्ठिरः । किमपरमवशिष्टम् । भीमः । सुमहदवशिष्टम्, संयमयामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् । युधिष्ठिरः । गच्छतु

वेदना का ? न कापीत्यर्थः । अत्र दुर्य्योधनस्य वाक्येन अपमानस्य कार्य्यकारित्वात् सहनम् ।

(ढ) निर्वहणाङ्गान्याह अथेति । सन्ध्यादीनि चतुर्दशनिर्वहणाख्यस्य सन्धेरङ्गानीत्यर्थः ।

(ण) सन्धिमाह वीजेति । वीजस्य पूर्वोक्तस्य उपगमनम् उद्भावनं सन्धिः ।

(त) उदाहरति यथेति । यज्ञवेदिसम्भवे । याज्ञसेनि ! द्रौपदि । मुखे मुखाख्यसन्धौ क्षिप्तस्य उद्भूतस्य वीजस्य ।

(थ) विबोधमाह विबोध इति । कार्य्यस्य कर्त्तव्यस्य मार्गणम् अन्वेषणं विबोधः ।

भवाननुभवतु तपस्विनी (ढ) वेणीसंहारम्" इति। अनेन केशसंयमनकार्य्यस्यान्वेषणादिबोधः।

**उपन्यासस्तु कार्य्याणां ग्रथनम्॥ ३९४॥ (ध)**

यथा तत्रैव—"भीमः। पाञ्चालि! न खलु मयि जीवति संहर्त्तव्या दुःशासनविलुलिता (न) वेणिरात्मपाणिभ्यां तिष्ठ स्वयमेवाहं संहरामि" इति। अनेन कार्य्यस्योपक्षेपाद्ग्रथनम्।

**निर्णयः पुनः।**

**अनुभूतार्थकथनम्॥ ३९५॥ (प)**

यथा तत्रैव—"भीमः। देव! अजातशत्रो! अद्यापि दुर्य्योधनहतकः। मया हि तस्य दुरात्मनः।

भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्य्ये निषिक्ता चतुरुदधिपयः सीमया सार्द्धमुर्व्या।
भृत्या मित्राणि योधाः कुरुकुलमनुजा दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप! तदधुना धार्त्तराष्ट्रस्य शेषम्"॥(फ)

---

(ढ) उदाहरति यथेति। संयमयामि बध्नामि। केशहस्त केशसमूह, "पाशो हस्तश्च केशस्य कलापार्थः कचात परे" इत्यमर.। तपस्विनी वराकी।

(ध) ग्रथनमाह उपन्यास इति। कार्य्याणाम् उपन्यास कीर्त्तन ग्रथनम्।

(न) उदाहरति यथेति। दु शासनविलुलिता दु शासनेन विपर्य्यासिता आकर्षणार्थं बन्धनात् च्याविता इत्यर्थ।

(प) निर्णयमाह निर्णय इति। अनुभूतस्य भुक्तस्य कृतस्य इत्यर्थः अर्थस्य कार्य्यस्य कथन निर्णय।

(फ) उदाहरति मया हीति। भूमाविति। धार्त्तराष्ट्रस्य शरीरं भूमौ क्षिप्त पातितं भूमिसात कृतमित्यर्थं। चन्दनाभ चन्दनवत् सुखस्पर्शमिति भाव., इदम् तस्य असृक् रुधिरं निजाङ्गे निहितम् अर्पितम्। चतुर्णाम् उदधीना समुद्राणा पयांसि जलानि सीमानो यस्यास्तादृश्या उर्व्या

परिवादकृतं वाक्यं
वदन्ति परिभाषणम् ॥ ३९६ ॥ (ब)

यथा शाकुन्तले—"राजा। आर्य्ये! अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी। तापसी। को तस्स धम्मदारपरिच्चाइणो णामं गेण्हिस्सदि"। (भ)

लब्धार्थागमनं कृतिः ॥ ३९७ ॥ (म)

यथा वेण्या—"कृष्णः। एते भगवन्तो व्यासवाल्मीकिप्रभृतयोऽभिषेकं धारयन्तस्तिष्ठन्ति" इति। अनेन प्राप्तराज्यस्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः।

शुश्रूषादिः प्रसादः स्यात् ॥ ३९८ ॥ (य)

---

पृथिव्या, सार्द्धं लक्ष्मी, आर्य्ये निषिक्ता अर्पिता भवतीत्यर्थः। तस्य भृत्याः दासाः, मित्राणि वान्धवाः, किं बहुना कुरुकुलेषु ये मनुजाः मानवाः योधाः युद्धार्थमुपस्थिता इत्यर्थः, एतत् सर्वं रणाग्नौ दग्धं भस्मीकृतं निहतमित्यर्थः। हे क्षितिप! यत् एकं नाम दुर्य्योधनेति शेषः, ब्रवीषि कथयसि धार्त्तराष्ट्रस्य अधुना तत् तन्मात्रमेव शेषः नामशेषः कृतो धार्त्तराष्ट्रः इति भावः। स्रग्धरावृत्तम्। अत्र कृतकार्य्यस्य कथनम्।

(ब) परिभाषणमाह परिवादेति। परिवादं कृत्वा तेन कृतं वाक्यं परिभाषणं वदन्ति।

(भ) कस्तस्य धर्मदारपरित्यागिनो नाम ग्रहीष्यतीति संस्कृतम्। अत्र कुत्साजनितवाक्यकथनम्।

(म) कृतिमाह लब्धेति। लब्धस्य प्राप्तस्य अर्थस्य विषयस्य आगमनं प्राकाश्येन स्थिरीकरणं कृतिः।

(य) प्रसादमाह शुश्रूषादिरिति। शुश्रूषादिः सेवादिः प्रसादः।

यथा तत्रैव—भीमेन द्रौपद्याः केशसंयमनम्।

**आनन्दो वाञ्छितागमः॥ ३९९॥ (र)**

यथा तत्रैव—"द्रौपदी। बिसुमरिदं एद बाबारं णाधस्स पसादेण पुणोबि सिक्खिस्स" (ल)।

**समयो दुःखनिर्याणम्॥ ४००॥ (व)**

यथा—रत्नावल्यां वासवदत्ता। (रत्नावलीमालिङ्ग्य) "समस्सस बहोणिए! समस्सस। (श)

**तद्भवेदुपगूहनम्।**

**यत् स्यादद्भुतसम्प्राप्तिः॥ ४०१॥ (ष)**

यथा मम प्रभावत्यां—"(नारददर्शनात् प्रद्युम्न ऊर्द्ध्वमवलोक्य)

"दधद्विद्युल्लेखामिव कुसुममालां परिमल-
भ्रमद्भृङ्गश्रेणीध्वनिभिरुपगीतां तत इत'।

---

(र) आनन्दमाह आनन्द इति। वाञ्छितस्य अभीष्टस्य आगमः तज्जनिता प्रीतिरिति भाव, आनन्दः।

(ल) उदाहरति यथेति। विस्मृतमेत व्यापार नाथस्य प्रसादेन पुनरपि शिक्षिष्ये" इति संस्कृतम्। एतं व्यापार केशबन्धनकार्य्यमित्यर्थ।

(व) समयमाह समय इति। दुःखस्य निर्याणम् अपगमः समयः।

(श) समाश्वासिहि भगिनि। समाश्वसिहीति संस्कृतम्।

(ष) उपगूहनमाह तदिति। यत् अद्भुतस्य आश्चर्य्यस्य सम्प्राप्ति समागमः तत् उपगूहन भवेत्।

(स) उदाहरति यथेति। दधदिति। परिमलेन सौरभेण भ्रमता सञ्चरता भृङ्गाणां या. श्रेण्यः समूहा. तासां ध्वनिभि. गुणगुणशब्दैरुपगीता

दिगन्तं ज्योतिर्भिस्तुहिनकरगौरैर्धवलय-
न्नितः कैलासाद्रिः पतति वियतः किं पुनरिदम्” ॥ (म)

सामदानादि भाषणम् ॥ ४०२ ॥ (ह)

यथा चण्डकौशिके—“धर्मः । तदेहि धर्मलोकमधितिष्ठ” (च)

पूर्ववाक्यन्तु विज्ञेयं
यथोक्तार्थोपदर्शनम् ॥ ४०३ ॥ (क)

यथा वेण्याम्—“भीमः । बुद्धिमतिके । क्व सा भानुमती परिभवतु सम्प्रति पाण्डवदारान्” । (ख)

वरप्रदानसम्प्राप्तिः
काव्यसंहार इष्यते ॥ ४०४ ॥ (ग)

---

शब्दिता विद्युल्लेखामिव तडितपुञ्जमिव कुसुममालां दधत् धारयन् इतः इतः समन्तात् तुहिनकरश्चन्द्रः तद्वत् गौरैः शुभ्रैः ज्योतिर्भिः देहप्रभाभिः दिगन्तं धवलयन् श्वेतीकुर्वन् वियतः आकाशात् इतः अस्मिन् प्रदेशे कैलासाद्रिः पतति ? इदं पुनः किम् आश्चर्यमेतदित्यर्थः । शिखरिणीवृत्तम् । अत्र अद्भुतप्रतिपत्तिः ।

(ह) भाषणमाह सामेति । साम प्रियभाषणं दानादि च तत् भाषणम् ।

(च) उदाहरति यथेति । स्पष्टम् । अत्र धर्मस्य प्रियवाक्यम् एहीति धर्मलोकस्य दानञ्च ।

(क) पूर्ववाक्यमाह पूर्ववाक्यमिति । यथोक्तस्य अर्थस्य उपदर्शनं समुचितोत्तरदानं पूर्ववाक्यं विज्ञेयम् ।

(ख) उदाहरति यथेति । भानुमती दुर्योधनपत्नी । पूर्वं भानुमत्या पाञ्चालीं प्रति परिहसितम्, इदानीं दुर्योधने निहते भीमसेनेन तस्य प्रत्युत्तरमभिहितम् ।

(ग) काव्यसंहारमाह वरेति । वरस्य अभीष्टस्य यत् प्रदानं तस्य सम्प्राप्तिः काव्यस्य संहारः इष्यते ।

यथा सर्वत्र। "किन्ते भूयः प्रियमुपकरोमि" इति।

**नृपदेशादिशान्तिस्तु**

**प्रशस्तिरभिधीयते ॥ ४०५ ॥ (घ)**

यथा प्रभावत्याम्—

"राजानः सुतनिर्व्विशेषमधुना पश्यन्तु नित्यं प्रजा
जीयासुः सदसद्विवेकपटवः सन्तो गुणग्राहिणः।
शस्यस्वर्णसमृद्धयः समधिकाः सन्तु क्षमामण्डले
भूयादव्यभिचारिणी त्रिजगतो भक्तिश्च नारायणे" ॥ (ङ)

अत्र च उपसंहारप्रशस्त्योरन्ते एकेन क्रमेणैव स्थितिः।

"इह च मुखसन्धौ उपक्षेपपरिकरपरिन्यासयुक्त्युद्भेद-समाधानानां प्रतिमुखे च परिसर्पणप्रगमनवज्रोपन्यासपुष्पाणां गर्भे अभूताहरणमार्गत्रोटकाधिक्षेपाणां विमर्षे अपवादशक्ति-व्यवसायप्ररोचनादानानां प्राधान्यम्।"

"अन्येषाञ्च यथासम्भवं स्थितिः" इति केचित्।

**चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः।**

---

(घ) सर्व्वत्र नाटकादौ। प्रशस्तिमाह नृपेति। नृपस्य देशादेश्च, आदिपदेन ब्राह्मणादीनां ग्रहणम्। शान्तिरनिष्टवारणमिष्टप्राप्तिः, प्रशस्तिः अभिधीयते।

(ङ) उदाहरति यथेति। अधुना साम्प्रतं राजानः सुतनिर्व्विशेषं पुत्रवदित्यर्थः प्रजाः लोकान्, "प्रजा स्यात् सन्ततौ जने" इत्यमरः। नित्यं सततं पश्यन्तु अवलोकयन्तु, सदसतोः विवेके पटवः समर्थाः गुणग्राहिणः सन्तः साधवः जीयासुः जययुक्ता भवेयुः। क्षमामण्डले पृथिवीतले समधिकाः प्रचुराः शस्यानां स्वर्णानाञ्च समृद्धयः सम्पदः सन्तु भवन्तु। तथा त्रिजगतः नारायणे अव्यभिचारिणी अचला भक्तिः भूयात्। शार्दूलविक्रीडितं वृत्तम्।

(च) चतुःषष्टिविधमिति। एतत् चतुःषष्टिविधम् अङ्गं सन्धेरिति शेषः,

कुर्य्यादनियते तस्य सन्धावपि निवेशनम् ॥
रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता ॥
॥ ४०६ ॥ (च)

यथा वेणीसंहारे तृतीयाङ्के। दुर्य्योधनकर्णयोर्महत् सम्प्रधारणम्; एवमन्यत्रापि। यत्तु "रुद्रटादिभिर्नियम एव" इत्युक्तं, तल्लक्ष्यविरुद्धम् (छ)।

इष्टार्थरचनाश्चर्य्यलाभो वृत्तान्तविस्तरः।
रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनं तथा ॥
प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलम्।
अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् ॥
अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते।
सम्पादयेतां सन्ध्यङ्गं नायकप्रतिनायकौ ॥
तदभावे पताकाद्यास्तदभावे तथेतरत् ॥४०७ (ज)

---

मनीषिभि विद्वद्भि प्रोक्त, अनियते अनिर्धारिते उक्तरीत्या इति भाव, सन्धौ अपि रसानुगुणता वीक्ष्य तस्य चतु षष्टिविधस्य अङ्गस्य निवेशनं कुर्य्यात् नियताङ्गेऽपि मुखादिसन्धौ रसानुकूल्यविवेचनया अन्यसन्ध्यङ्गान्यपि निवेशयेदिति भाव'। हि यत रसस्यैव मुख्यता प्राधान्यम्।

(छ) उदाहरति यथेति। सम्प्रधारणं युक्ति सा तु मुखसन्धेरङ्गम्। अन्यत्रापि सन्धौ तद्दर्शन दृश्यते। नियम इति। यदङ्ग यस्य तदङ्ग तस्यैव नान्यस्य तत् कदापीति निश्चय इति भाव। लक्ष्यविरुद्ध महाकवीना प्रयोगस्य विरुद्धं, महाकविप्रयोगे तस्य नियमस्यादर्शनादिति भाव।

(ज) अङ्गाना फलान्याह इष्टेति। अङ्गाना फल षड्विधम्। इष्टार्थरचना, आश्चर्य्यलाभ., वृत्तान्तविस्तर., रागप्राप्ति, प्रयोगस्य गोप्याना गोपन

प्रायेण प्रधानपुरुषप्रयोज्यानि सन्ध्यङ्गानि भवन्ति। किन्तु उपक्षेपादित्रयं (झ) बीजस्याल्पमात्रसमुद्दिष्टत्वात् अप्रधान-पुरुषप्रयोजितमेव साधु।

**रसव्यक्तिमपेक्ष्यैषामङ्गानां सन्निवेशनम्।**
**न तु केवलया शास्त्रस्थितिसम्पादनेच्छया॥**
**४०८॥ (ञ)**

तथा च वेण्याम्। दुर्योधनस्य भानुमत्या सह विप्रलम्भो (ट) दर्शितस्तत्ताद्दृशेऽवसरेऽत्यन्तमनुचितम्।

**अविरुद्धन्तु यद्वृत्तं रसादिव्यक्तयेऽधिकम्।**
**तदप्यन्यथयेद्धीमान् न वदेद्वा कदाचन॥**
**४०९॥ (ठ)**

---

तथा प्रकाश्यानामङ्गाना प्रकाशनम्। अङ्गहीनः नर यद्वत् आरम्भक्षमः कार्य्यक्षमो नैव भवेत् तथा अङ्गहीन काव्य प्रयोगाय व्यवहाराय वा अभिनयाय न युज्यते न प्रयोगार्हं भवतीत्यर्थ। नायकप्रतिनायकौ सन्ध्यङ्ग सम्पादयेतां प्रयुञ्जीयाताम् तस्य सन्ध्यङ्गस्य अभावे पताकाद्या' अर्थप्रकृती. सम्पादयेतां तदभावे पताकाद्यभावे इतरत् अन्यत् बीजं सम्पादयेतामित्यन्वय। आद्यपदेन प्रकरीकार्य-योर्ग्रहणम्।

(झ) अत्रादिपदेन परिकरपरिन्यासयोर्ग्रहणम्।

(ञ) रसेति। रसव्यक्ति रसस्य प्रकटतामपेक्ष्य एषाम् अङ्गाना सन्निवेशनं प्रयोग कार्य्यमिति शेष, केवलया शास्त्रस्थितिसम्पादनेच्छया न तु नैव सन्निवेशनमिति शेष, रसव्यक्तिर्भवतु वा न भवतु शास्त्रमर्य्यादारक्षार्थमेव नैषा प्रयोगार्हेति भावः।

(ट) विप्रलम्भ शृङ्गारभेदः।

(ठ) अविरुद्धमिति। धीमान् जन' अविरुद्धं यत् वृत्त चरित, रसादीना

अनयोरुदाहरणमग्रबन्धेषु अभिव्यक्तमेव । (ड)

अथ वृत्तयः ।

शृङ्गारे कौशिकी वीरे सात्त्वत्यारभटी पुनः ।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ॥
चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः । (ढ)
स्युर्नायकादिव्यापारविशेषा नाटकादिषु ॥
४१० ॥ (ण)

तत्र कौशिकी ।

या श्लक्ष्णनेपथ्यविशेषचित्रा
स्त्रीसङ्कुला पुष्कलनृत्यगीता ।
कामोपभोगप्रभवोपचारा
सा कौशिकी चारुविलासयुक्ता ॥

---

व्यङ्ग्यं प्रकाशाय तदपि अधिकं यथा तथा अन्यथयेत् अन्यथा कुर्य्यात् विपर्य्यासयेदित्यर्थः, वा कदाचन न वदेत् ।

(ड) अनयोरन्यथाकरणाकरणयोः ।

(ढ) नाटकवृत्तीराह अथेति । वर्त्तते रसोऽनयेति वृत्तिः नायकादिचेष्टा । वृत्तयश्चतस्र, शृङ्गारे कौशिकी, वीरे सात्त्वती, रौद्रे बीभत्से च रसे आरभटी । सर्वत्र एतद्व्यतिरिक्ते भारती, एताश्चतस्रः सर्वनाट्यस्य मातृकाः जनन्यः । एतासामन्यतरया यथोक्तया यथोक्तरूपाणि नाटकानि रचयितव्यानीति भावः ।

(ण) तासां स्वरूपमाह स्युरिति । नाटकादिषु प्रकरणभाणकादिषु, नायकादीनाम्, अत्रादिपदेन नायिकादेर्ग्रहणम् व्यापारविशेषाः चेष्टाभेदा वृत्तय इति शेषः ।

(त) कौशिकीमाह तत्रेति । श्लक्ष्णेन मनोहरेण नेपथ्यविशेषेण नायिकादीनां भूषणविशेषेण चित्रा मनोज्ञा शोभातिशयवती स्त्रीसङ्कुला नारीभूयिष्ठा

नर्म च नर्मस्फूर्जो
नर्मस्फोटोऽथ नर्मगर्भश्च ।
चत्वार्यङ्गान्यस्याः ॥ ४११ ॥ (त)

तत्र ।

वैदग्ध्यक्रीडितं नर्म ।

इष्टजनावर्जनकृत् तच्चापि त्रिविधं मतम् ।
विहितं शुद्धहास्येन सशृङ्गारभयेन च ॥४१२॥ (थ)

तत्र केवलहास्येन विहितं यथा रत्नावल्याम्—"(वासवदत्ता फलकमुद्दिश्य सहासम् ।) एसा वि अवरा तव समीवे जा लिहिदा एदं किं अज्ज वसंतस्स विण्णाणं" । (द)

सशृङ्गारहास्येन यथा शाकुन्तले—"(राजानं प्रति शकुन्तला) असंतुट्ठो उण किं करिस्सदि (ध) । राजा । इदमिति व्यवसितः । शकुन्तला वक्त्रं ढौकते" (न) ।

---

पुष्कलानि प्रचुराणि नृत्यगीतानि यस्यां तादृशो कामोपभोग शृङ्गार. तस्य प्रभवा' उपचारा अङ्गानि यस्या तथा चारुभि मनोरमै विलासै धीरा दृष्टिरिति लक्षणाकै युक्ता च वर्तते रसोऽनयेति वृत्ति कौशिकी । अस्या. कौशिक्याश्चत्वारि अङ्गानि भेदा —नर्म, नर्मस्फूर्ज , नर्मस्फोट तथा नर्मगर्भः ।

(थ) नर्माह वैदग्ध्येति । इष्टजनाना सामाजिकानाम् आवर्जनकृत् मनोरञ्जनकर वैदग्ध्येन चातुर्येण क्रीडित क्रीडन भावे क्तप्रत्यय., नर्म । तच्च त्रिविध—शुद्धहास्यविहित, सशृङ्गारहास्यविहित, सभयहास्यविहितञ्चेति ।

(द) एषाप्यपरा तव समीपे यथा लिखिता इद किमार्यवसन्तकस्य विज्ञानमिति संस्कृतम ।

(ध) असन्तुष्ट पुन. कि करिष्यतीति · संस्कृतम् । असन्तुष्टो मधुकर इति पूर्वोक्तं नान्वय ।

(न) उदाहरति क्रमेण तवेति । इदमिति कमलमिति । व्यवसितः कृतनिश्चयः । ढौकते अपसारयति ।

सभयहास्येन यथा रत्नावल्याम्—आलेख्यदर्शनावसरे। "सुसङ्गता। णादो मए एसो वुत्तंतो समं चित्तफलएण। ता देवीए गदुअ णिवेदइस्स" (प) एतद्वाक्यसम्बन्धि नर्मोदाहृतम्। एव वेशचेष्टासम्बन्ध्यपि (फ)।

नर्मस्फूर्जः सुखारम्भो
भयान्तो नवसङ्गमः ॥ ४१२ ॥ [ब]

यथा मालविकायां सङ्केते सायमभिसृतायां नायकः।

"विसृज सुन्दरि! सङ्गमसाध्वस
ननु चिरात् प्रभृति प्रणयोन्मुखे।
प्रतिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि" ॥ (भ)

मालविका। "भट्टा देवीए भएण अप्पणोवि पिअं कत्तुं ण पारेमि" (म) इत्यादि।

---

(प) ज्ञातो मया एष वृत्तान्त सम चित्रफलकेन तत् देव्यै गत्वा निवेदयिष्यामीति संस्कृतम्।

(फ) वेशसम्बन्धिसभयहास्यकृत नर्म यथा रत्नावल्या—"सुसङ्गता। (इष्त विहस्य) अयि कातरे मा बिभीहि न भवत्येष वानर आर्य्यवसन्तक' खल्वेष"।

(ब) नर्मस्फूर्जमाह नर्मस्फूर्ज इति। सुखारम्भ प्रथमसुखकर भयान्त' भयावसान नव सङ्गम नर्मस्फूर्ज'।

(भ) उदाहरति यथेति। विसृजेति। ननु सुन्दरि! सङ्गमे साध्वस भय विसृज त्यज, चिरात् प्रभृति प्रणयोन्मुखे प्रणयार्थिनि अतएव सहकारता रसालता गते प्राप्ते मयि नायके इति शेषः, त्वम् अतिमुक्तलताया माधवीलताया चरित प्रतिगृहाण, यथा अतिमुक्तलता सहकारमालिङ्गति तथा त्व मामालिङ्गेति भाव'। द्रुतविलम्बित वृत्त, "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात्।

(म) भर्त्तर्देव्या भयेनात्मनोऽपि प्रिय कर्त्तुं न पारयामीति संस्कृतम्।

अथ नर्मस्फोटः ।

**नर्मस्फोटो भावलेशैः**
**सूचितोऽल्परसो मतः ॥ ४१४ ॥ [य]**

यथा मालतीमाधवे—

"गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किन्न्वेतत् स्यात् किमन्यदितोऽथवा ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम्" ॥ (र)

अलसगमनादिभिर्भावलेशैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाशितः ।

**नर्मगर्भो व्यवहृति-**
**र्नेतुः प्रच्छन्नवर्त्तिनः ॥ ४१५ ॥ (ल)**

---

(य) नर्मस्फोटमाह अथेति । भावलेशैः ईषत् सूचितैः भावैरित्यर्थः सूचितः अल्परसः शृङ्गारः नर्मस्फोटो मतः ।

(र) उदाहरति यथेति । गमनमिति । माधवस्य पूर्वरागविप्रलम्भवर्णनमिदम् । गमनम् अलसम् आलस्ययुक्तं मन्दमित्यर्थः, दृष्टिः शून्या नावस्थिता कुत्रापि पततीति भावः, शरीरम् असौष्ठवं सौष्ठवरहितम्, आहार्यशोभादिवर्जनात् मलाद्यपनयनाभावाच्च इति भावः, श्वसितं निःश्वासः अधिकं दीर्घमित्यर्थः । किन्नु किमपि एतत् अथवा इतः अस्मात् अन्यत् किं स्यात् । भुवने जगति कन्दर्पस्य आज्ञा भ्रमति, यौवनञ्च विकारि विकारकारणम् । ते ते ललितमधुराः ललितेन वाग्वेशयोः मधुरता तद्वत् शृङ्गारचेष्टितं ललितमिति लक्षणोक्तेन मधुराः मनोहराः भावाः प्रकाराः धीरतां धैर्य्यं क्षिपन्ति त्याजयन्ति च । हरिणीवृत्तम् ।

(ल) नर्मगर्भमाह नर्मगर्भ इति । प्रच्छन्नवर्त्तिनः गूढचारिणः नेतुर्नायकस्य व्यवहृतिः व्यवहारः नर्म गर्भे यस्य तथोक्तः ।

यथा तत्रैव । सखीरूपधारिणा माधवेन मालत्या मरण-व्यवसायवारणम् ।

अथ सात्त्वती ।

सात्त्वती बहुला सत्त्वशौर्य्यत्यागदयार्जवैः ।
सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा ॥
उत्थापकोऽथ संघात्यः संलापः परिवर्त्तकः ।
विशेषा इति चत्वारः सात्त्वत्याः परिकीर्त्तिताः ॥ [व]
उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते ॥४१६॥ [श]

यथा वीरचरिते पञ्चमाङ्के—

'आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यं तु ममापि सम्प्रति कुतस्त्वद्दर्शने चक्षुषः ?
त्वत्साङ्गत्यसुखस्य नास्मि विषयस्तत् किं वृथा व्याहृतैः ?
अस्मिन् विश्रुतजामदग्न्यदमने पाणौ धनुर्जृम्भताम्' ॥ (ष)

---

(व) सात्त्वतीमाह अथेति । सत्त्वेन महानुभावतया शौर्य्येण बलेन, त्यागेन दानशक्त्या दयया आर्जवेन च बहुला पूर्णा सहर्षा सानन्दा क्षुद्रशृङ्गारा अल्पशृङ्गारभावा विशोका शोकरहिता साद्भुता सचमत्कारा इत्ति, सात्त्वती । तस्याश्चत्वारो भेदा —उत्थापक, संघात्य, संलाप', परिवर्त्तकश्च ।

(श) उत्थापकमाह उत्तेजनकरीति। शत्रो. प्रतिनायकस्य उत्तेजनकरी क्रोधोद्दीपनी वाक् उत्थापक उच्यते ।

(ष) उदाहरति यथेति। आनन्दायेति। राम प्रति वालिन उक्ति । आनन्दाय प्रीतये विस्मयाय लोकोत्तरचरितरूपदर्शनजनितचमत्काराय वा पश्चान्तरे दुःखाय एतादृशोऽपि हन्तव्य इति विषादायेत्यर्थ सम्प्रति दृष्टोऽसि, तु पुन तव दर्शने मम चक्षुष वैतृष्ण्यमपि तृष्णाभावोऽपि तृप्तिरपि कुत ? नैव तृप्तिरस्तीत्यर्थ , पुनः पुनस्तव दर्शनेच्छा मम वर्त्तते इति भावः । तव सङ्गतिरेव

**मन्त्रार्थदैवशक्त्यादेः संहात्यः सङ्घभेदनम् ४१७ [स]**

मन्त्रशक्त्या यथा मुद्राराक्षसे राक्षससहायानां चाणक्येन स्वबुद्ध्या भेदनम्। अर्थशक्त्यापि तत्रैव। दैवशक्त्या यथा रामायणे रावणाद्विभीषणस्य भेदः।

**संलापः स्याद् गभीरोक्ति-**
**र्नानाभावसमाश्रयः ॥ ४१८ ॥ [ह]**

यथा वीरचरिते—"रामः। असशयं किल सपरिवार-कार्त्तिकेयविजयावर्जितेन भगवता नीललोहितेन परिवत्सर-सहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः। परशुरामः। राम! दाशरथे। स एवायमार्य्यपादानां प्रियः परशुः" इत्यादि (च)।

**प्रारब्धादन्यकार्य्याणां**
**करणं परिवर्त्तकः ॥ ४१९ ॥ [क]**

---

साङ्गत्यं सङ्ग इत्यर्थं, तेन यत सुख तस्य विषय. पात्रम् न अस्मि अह तव मैत्रीसुखलोलुपो न इति भाव। तत तस्मात हेतो वृथा निरर्थकैरित्यर्थं जल्पितै भाषिते. किम्? न किमपि प्रयोजनमित्यर्थं, भास्मन् विश्रुत प्रसिद्ध प्रख्यातमित्यर्थं जामदग्न्यस्य भार्गवस्य दमन येन तादृशी पाणौ धनु शरासन जृम्भता राजताम्, धनुर्ग्रहणेति भाव। शार्दूलविक्रीडित वृत्तम्।

(स) संहात्यमाह मन्त्रेति। मन्त्र मन्त्रणावलम् अर्थं धन दैवशक्ति दैवी क्षमता, आदिपदेन कौशलादिग्रहणम्, एतस्मात् कारणात् सङ्गस्य समवायस्य भेदन पृथक्करण संहात्य।

(ह) सलापमाह सलाप इति। नानाभावाना समाश्रय. गभीरा अर्थगुर्वी उक्ति सलापः स्यात्।

(च) उदाहरति यथेति। सपरिवारेति। सपरिवारस्य सानुचरस्य कार्त्तिकेयस्य विजयेन परशुरामकर्त्तृकेणेति भाव आवर्जित वशीकृत प्रीणित इत्यर्थं तेन। अत्र देवविषयरतिरूपे वीररसस्य समाश्रयेण उक्तेर्गभीरता।

यथा वेण्यां—"भीमः । सहदेव । गच्छ त्वं गुरुमनुवर्त्तस्व अहमप्यस्त्रागारं प्रविश्यायुधसहायो भवामीति यावत्, अथवा आमन्त्रयितव्यैव मया पाञ्चाली" इति (ख) ।

अथारभटी ।

मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
संयुक्ता बधबन्धाद्यैरुद्धतारभटी मता ॥ (ग)
वस्तूत्थापनसम्फेटौ संक्षिप्तिरवपातनम् ।
इति भेदास्तु चत्वार आरभट्याः प्रकीर्त्तिताः ॥ (घ)
मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते ॥४२०॥ (ङ)

यथा उदात्तराघवे—

"जीयन्ते जयिनो नितान्ततिमिरव्रातैर्वियद्व्यापिभि-
र्भास्वन्तः सकला रवेरपि कराः कस्मादकस्मादमी ।

---

(क) परिवर्त्तकमाह प्रारब्धादिति । प्रारब्धात् कर्त्तुमुपक्रान्तात् कार्य्यात् अन्यकार्य्यस्य करणं परिवर्त्तकं ।

(ख) उदाहरति यथेति । गुरुं युधिष्ठिरम् । अन्यत् स्पष्टम् । अत्र आयुधागारप्रवेशरूपात् आरब्धात् पाञ्चालीसमामन्त्रणरूपस्य अन्यकार्य्यस्य करणम् ।

(ग) आरभटीमाह मायेति । माया छलविशेषः इन्द्रजालम् अद्भुतप्रदर्शक-विद्याविशेषः संग्रामो युद्धं क्रोधेन उद्भ्रान्तत्वादि, इत्येवं चेष्टितैः व्यापारैः तथा बधबन्धनाद्यैश्च संयुक्ता उद्धता दारुणा वृत्तिः आरभटी ।

(घ) तद्भेदानाह वस्त्वित्यादि । वस्तूत्थापनं सम्फेटः संक्षिप्तिः अवपातनम् एते चत्वारः आरभट्या भेदाः कीर्त्तिताः ।

(ङ) तत्र वस्तूत्थापनमाह मायेति । मायादिना उत्थापितं वस्तु वस्तूत्थापनम् उच्यते ।

(च) उदाहरति यथेति । जीयन्त इति । अमी प्रत्यक्षीभूता जयिनः सर्वोत्कर्ष-

एते चोग्रकबन्धकण्ठरुधिरैराध्मायमानोदरा-
मुञ्चन्त्याननकन्दरानलमुचस्तीव्रान् रवान् फेरवाः" ॥ इत्यादि (च)

सम्फेटस्तु समाघातः
क्रुद्धसत्वरयोर्द्वयोः ॥ ४२१ ॥ (छ)

यथा मालत्यां माधवाघोरघण्टयोः।

संक्षिप्तिर्वस्तुरचना शिल्पैरितरथापि वा।
संक्षिप्तिः स्यान्निवृत्तौ च नेतुर्नेत्रन्तरग्रहः ४२२ (ज)

यथा उदयनचरिते किलिञ्जहस्तिप्रयोगः। द्वितीयं यथा। बालिनिवृत्त्या सुग्रीवः। यथा वा परशुरामस्यौद्धत्यनिवृत्त्या शान्तत्वापादनम्। "पुण्या ब्राह्मणजातिः" इति (झ)।

---

शालिन' भास्वन्त दीप्यमानाः सकला समग्रा रवे सूर्य्यस्य करा. मयूखा अपि कस्मात् कथम् अकस्मात् सहसा वियद्व्यापिभि गगनाच्छादिभि नितान्ततिमिरव्रातै गाढान्धकारनिचयै जीयन्ते पराभूयन्ते आच्छाद्यन्ते इत्यर्थ। एते च फेरवाः शृगाला उग्राणा भीषणाना कबन्धानाम् अशिरस्ककलेवराणा कण्ठरुधिरै आध्मायमान पूर्य्यमाणम्, अथवा आध्मायमानम् ईषद्दह्यमानम् उदरं येषा तादृशा, तथा आनन मुखमेव कन्दरा गुहा गर्त्तविशेष इत्यर्थ तस्या अनलं मुञ्चन्ति त्यजन्तीति तथोक्ता उल्कामुखा इत्यर्थ सन्त तीव्रान् उग्रान् रवान् मुञ्चन्ति त्यजन्ति, कठोर शब्दायन्ते इत्यर्थ। शार्दूलविक्रीडित वृत्तम्। अत्र मायया अन्धकारकबन्धादीना वस्तूनाम् उत्थापनम्।

(छ) सम्फेटमाह सम्फेट इति। क्रुद्धसत्वरयो. समाघात' सम्यक् प्रहार सम्फेट।

(ज) संक्षिप्तिमाह संक्षिप्तिरिति। शिल्पै इतरथापि अन्यप्रकारेणापि वस्तूना रचना संक्षिप्ति.। किञ्च नेतुर्नायकस्य निवृत्ती स्वव्यापारात् इति भाव., नेत्रन्तरस्य नायकभेदस्य ग्रह. ग्रहण ग्रानमित्यर्थ. संक्षिप्तिः।

प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसम्भवम् ।
अवपातनमित्युक्तम् ॥४२३॥ (ञ)

यथा कृत्यरावणे षष्ठेऽङ्के। "प्रविश्य खड्गहस्तः पुरुष इति" अतः प्रभृति निष्क्रमणपर्य्यन्तम् ।

248 पूर्वमुक्तैव भारती ॥ ४२४ ॥ (ट)

अथ नाट्योक्तयः ।

अश्राव्यं खलु यद् वस्तु तदिह स्वगतं मतम् ।
सर्वश्राव्यं प्रकाशं स्यात् तद्भवेदपवारितम् ॥
रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते ।
त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् ॥
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ।
किं ब्रवीषीति यत् नाट्ये विना पात्रं प्रयुज्यते ।
श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम्४२५ (ठ

---

(झ) उदाहरति यथेति । किञ्जिहस्तिप्रयोग काष्ठनिर्म्मितहस्तिप्रयोग. । अत्र शिल्पेन रचना । धर्म्मभेदान्नैवन्तरमाह यथा परशुरामस्येत्यादि ।

(ञ) अवपातनमाह प्रवेशेति । विद्रव. पलायनम् । प्रवेशादिसम्भव वस्तु अवपातनमित्यर्थ ।

(ट) पूर्वं स्थापककर्त्तव्यकथनावसरे ।

(ठ) नाट्योक्तीराह अथेति । अश्राव्यम् अन्यै श्रोतुमनर्हमित्यर्थ. । अन्यस्य परावृत्य अन्य जन पश्चात् कृत्वा यत् रहस्य गुप्त वस्तु प्रकाश्यते कथ्यते तत् अपवारित भवेत् । जनान्ते जनसमीपे त्रिस. पताका यस्य तादृशेन उतच्छिन्ना-ङ्गुलित्रयेणेत्यर्थं करेण अन्यान् जनान् अपवार्य्य आच्छाद्य अन्तरा मध्ये यत् अन्योन्यामन्त्रण परस्परम् आलाप: स्यात् तत् जनान्तिकम् । नाट्ये पात्र व्यक्ति

यः कश्चिदर्थो यस्मात् गोपनीयस्तस्यान्तरत ऊर्द्धं सर्वाङ्गुलिनामितानामिकं त्रिपताकलक्षणं करं कृत्वा अन्येन सह यन्मन्त्र्यते तत् जनान्तिकं परावृत्त्यान्यस्य रहस्यकथनमपवारितम्। शेषं स्पष्टम्।

दत्तां सिद्धाञ्च सेनाञ्च वेश्यानां नाम दर्शयेत्।
दत्तप्रायाणि वणिजां चेटचेट्योस्तथा पुनः॥
वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ४२६(ड

वेश्या यथा वसन्तसेनादिः। वणिग् विष्णुदत्तादिः। चेटः कलहंसादिः। चेटी मन्दारिकादिः।

नाम कार्यं नाटकस्य
गर्भितार्थप्रकाशकम् ॥४२७॥ (ढ)

यथा रामाभ्युदयादिः।

नायिकानायकाख्यानां
संज्ञा प्रकरणादिषु ॥ ४२८ ॥ (ण)

---

विना अनुक्तमपि अर्थं निषय श्रुत्वेव किं ब्रवीषीति यत् प्रयुज्यते तत् आकाशभाषितं स्यात्।

(ड) वेश्यानां नाम दत्ता सिद्धा सेनाञ्च दर्शयेत् यथा कामदत्ता मदनसेना इत्यादि। तथा वणिजां दत्तप्रायाणि नामानि दर्शयेत यथा धनदत्तो नाम वणिगित्यादि। तथा वसन्तादिषु वर्ण्यस्य वर्णनीयस्य वस्तुनः यत् नाम भवेत् तत् चेटचेट्योः प्रदर्शयेत्। यथा कलहंसादि।

(ढ) नाटकस्य नाम गर्भितस्य सन्दर्भसूचकव्युत्पत्तिलभ्यस्य अर्थस्य प्रकाशकं सूचकं कार्य्यम्।

(ण) प्रकरणादिषु आदिपदेन भाणादिपरिग्रहः, नायिकानायकाख्यानां संज्ञा सङ्केतः कार्य्या इति शेषः।

यथा मालतीमाधवादि:।

नाटिकासट्टकादीनां
नायिकाभिर्विंशेषणम् ॥ ४२९ ॥ (त)

यथा रत्नावली-कर्पूरमञ्जर्य्यादि'।

प्रायेण ण्यन्तकः साधि-
गमेः स्थाने प्रयुज्यते ॥ ४३० ॥ (थ)

यथा शाकुन्तले—"ऋषी। गच्छाव इत्यर्थे साधयाव-स्तावत्"।

राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः।
राजर्षिभिर्वयस्येति तथा विदूषकेण च ॥
राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च।
स्वेच्छया नामभिर्विप्रैर्विप्र आर्य्येति चेतरैः ॥
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः।
वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम् ॥

---

(त) नाटिकासट्टकादीना प्रयोगाणा नायिकाभिर्विंशेषण विशिष्य व्यवस्थापन कार्य्यमिति शेष तेषा नायिकाप्रधानत्वादिति भाव'।

(थ) प्रायेणेति। ण्यन्तक साधि. साधधातु. गमे गमधातो. स्थाने प्रायेण प्रयुज्यते प्रायेणेत्यभिधानात् अन्यदपि तत समानार्थक प्रयोज्यमिति भाव।

(द) राजेति। राजा भृत्यै' स्वामी इति देव इति वा अधमै: नीचै. जनै भट्टा इति राजर्षिभि' अन्यैरिति शेष तथा विदूषकेण वयस्य इति ऋषिभि. राजन् इति अपत्यप्रत्ययेन अपत्यप्रत्ययान्तपदेन इत्यर्थ यथा दाशरथे पाण्डव इत्यादिरूपेण वाच्य। विप्र विप्रै स्वेच्छया अपत्यप्रत्ययेन नामभिर्वा इतरै: क्षत्रियादिभि आर्य्य इति वाच्य:। विदूषक' राज्ञा वयस्य इति नाम्ना

१५ वाच्य। विदूषक. राज्ञा वयस्य इति नाम्ना वा वाच्य.। नटीसूत्रधारौ

सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ।
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः ॥
वयस्येत्युत्तमैर्हंहो मध्यैरार्य्येति चाग्रजः ।
भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः ॥
वदेद्राज्ञीश्च चेटीश्च भवतीति विदूषकः ।
आयुष्मन् रथिनं सूतो वृद्धः तातेति चेतरैः ॥
वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः ।
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्य्येति चाधमैः ॥
विप्रैरयममात्येति सचिवेति च भण्यते ।
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः ॥
अगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ।
उपाध्यायेति चाचार्य्यो महाराजेति भूपतिः ॥

---

परस्परम् आर्य्यनाम्ना नट्या सूत्रधारः आर्य्य इति सूत्रधारेण नटी आर्य्या इति रूपेणेत्यर्थः वाच्यौ। पारिपार्श्विकः सूत्रधारादवरो नटः सूत्रधारं भाव इति वदेत्। सूत्रधारस्तु पारिपार्श्विकं मारिष इति वदेत्। अधमैः नीचैः जनैः समाः हण्डे इति वाच्याः। उत्तमैर्जनैः समाः वयस्य इति, मध्यैः समाः हंहो इति वाच्याः। अग्रजः ज्येष्ठः भ्राता आर्य्य इति वाच्यः। सर्वैः देवर्षिलिङ्गिनः देवलिङ्गिनः ऋषिलिङ्गिनश्च भगवन् इति वाच्याः। विदूषकः राज्ञीश्च चेटीः राज्ञः सहचरीमित्यर्थः भवतीति वदेत्। सूतः सारथिः रथिनम् आयुष्मन् इति वदेत्। वृद्धो जनः इतरैः कनिष्ठैः तात इति सुतः पुत्रः शिष्यः अनुजः कनिष्ठश्च वत्स पुत्रक तात इति नाम्ना गोत्रेण अपत्यप्रत्ययेन इत्यर्थः वा वाच्यः। अमात्यः अधमैः जनैः आर्य्य इति विप्रैः अमात्य इति, सचिव इति वा भण्यते। तपस्वी प्रशान्तश्च जनः बुधैः साधो इति उच्यते। शिष्याद्यैः

स्वामीति युवराजस्तु कुमारो भर्तृदारकः।
सौम्य भद्रमुखेत्येवमधमैस्तु कुमारकः॥
वाच्या प्रकृतिभी राज्ञः कुमारी भर्तृदारिका।
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः॥
हलेति सदृशी प्रेष्या हञ्जे वेश्याऽज्जुका तथा।
कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरती जनैः॥
आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः।
शकादयश्च सम्भाष्या भद्रदत्तादिनामभिः॥
यस्य यत्कर्म शिल्पं वा विद्या वा जातिरेव वा।
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम्
॥४३१॥ (द)

---

शिष्यप्रभृतिभिः, आद्यशब्देन भ्रातृपुत्रादीनां ग्रहणम्, पूज्यः पूजनीयो जनः अगृहीता अभिधा यस्य तादृशं नाम अगृहीत्वा सम्मानसूचकेन पदेन वाच्य इति शेषः। आचार्य्यः वेदाध्यापयिता, उपनीय ददद्वेदमाचार्य्यः स उदाहृत इति वचनात् गुरुर्वा उपाध्याय इति भूपतिः प्रजाभिः महाराज इति स्वामी इति वा वाच्यः। युवराजस्तु कुमारः भर्तृदारको वा वाच्यः। अधमैस्तु कुमारकः सौम्य भद्रमुख इत्येव वाच्यः। प्रकृतिभिरमात्यादिभिः राज्ञः कुमारी भर्तृदारिका वाच्या। पतिर्यथा उत्तमः उत्तमेन वयस्य इति, अधमेन अधमः हण्डे इति, मध्यमेन मध्यमः हहो इति वाच्यः, तथा ज्येष्ठमध्याधमैः स्त्रियः वाच्या ज्येष्ठया स्त्रिया ज्येष्ठा स्त्री वयस्येति मध्यमया स्त्रिया मध्यमा स्त्री हहो इति अधमया स्त्रिया अधमा स्त्री हण्डे इति वाच्येत्यर्थः। सदृशी स्वसमाना स्त्री हलेति वाच्या। प्रेष्या किङ्करी हञ्जे इति वेश्या अज्जुका इति वाच्या। कुट्टिनी अनुगतैः जनैः अम्बा इति पूज्या तथा जरती वृद्धा स्त्री जनैः अम्बा इति वाच्या। पाषण्डाः शकारादयः स्वसमयागतैः स्वसङ्केतानुसारिभिः आमन्त्रणैः सम्बोधनपदैः

अथ भाषाविभागः ।

पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम् ।
शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम् ॥
आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ।
अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम् ॥
चेटानां राजपुत्राणां श्रेष्ठिनां चार्द्धमागधी ।
प्राच्या विदूषकादीनां धूर्त्तानां स्यादवन्तिका ॥
योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम् ।
शकाराणां शकादीनां शाकारीं सम्प्रयोजयेत् ॥
बाह्लीकभाषा दिव्यानां, द्राविड़ी द्रविड़ादिषु ।
आभीरेषु तथाभीरी, चाण्डाली पुक्कसादिषु ॥
आभीरी शावरी चापि काष्ठपत्रोपजीविषु,।
तथैवाङ्गारकारादौ, पैशाची स्यात् पिशाचवाक् ॥

---

वाच्या । शकादय शकयवनकिरातप्रभृतय भद्रदत्तादिनामभि सम्भाष्या । यस्य यत कर्म शिल्प वा विद्या वा जातिर्वा तेनैव तदनुगतेनैव नाम्ना असौ वाच्य. अन्ये यथोचितं ज्ञेया' ।

( घ ) भाषाविभागानाह अथेति । अनीचानाम् उत्कृष्टाना कृतात्मना विदुषा भाषा सस्कृत स्यात् । तादृशीनान् उत्कृष्टानामित्यर्थ' योषिता शौरसेनी भाषा प्रयोक्तव्या । आसामेव उत्कृष्टाना नारीणामेव गाथासु सङ्गीतेषु महाराष्ट्रीं प्रयोजयेत । अत्र नाट्ये राज्ञ' अन्तपुरचारिणा भाषा मागधी । चेटाना राजभृत्याना राजपुत्राणा श्रेष्ठिनाञ्च अर्द्धमागधी । विदूषकादीना भाषा प्राच्या । धूर्त्ताना भाषा अवन्तिका । दीव्यता क्रीडता योधनागरिकादीना दाक्षिणात्या भाषा । शकाराणा शकादीनाञ्च शाकारी भाषा सम्प्रयोजयेत् । दिव्याना बाह्लीकभाषा, द्रविडादिषु द्राविडी भाषा प्रयोज्या इति शेष. । आभीरेषु

चेटीनामप्यनीचानामपि स्यात् शौरसेनिका।
बालानां षण्डकानाञ्च नीचग्रहविचारिणाम्।
उन्मत्तानामातुराणां सैव स्यात्,संस्कृतं क्वचित्॥
ऐश्वर्य्येण प्रमत्तस्य दारिद्र्योपस्रुतस्य च।
भिक्षुबन्धधरादीनां प्राकृतं सम्प्रयोजयेत्॥
संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च।
देवीमन्त्रिसुतावेश्यास्वपि कैश्चित् तथोदितम्॥
यद्देशं नीचपात्रन्तु तद्देशं तस्य भाषितम्।
कार्य्यतश्चोत्तमादीनां कार्य्यो भाषाविपर्य्ययः॥
योषित् सखीबालवेश्याकितवाप्सरसां तथा।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा॥

४३२॥ (ध)

---

आभीरा, पुक्कसादिषु चाण्डाली, काष्ठपत्त्रोपजीविषु काष्ठजीविषु पत्त्रजीविषु च आभीरी शावरी च भाषा। अङ्गारकारादौ तथैव आभीरी वा शावरी भाषा। पिशाचाना वाक् पैशाची। अनीचानाम् उत्कृष्टाना चेटीनामपि शौरसेनिका भाषा। बालाना षण्डकानाञ्च वर्षवराणा नीचाना ग्रहविचारिणा दैवज्ञानामित्यथ, उन्मत्तानाम् आतुराणाञ्च सैव शौरसेनिकेत्यर्थ, क्वचित् संस्कृतञ्च प्रयोज्यम्। ऐश्वर्य्येण प्रमत्तस्य दारिद्र्येण उपस्रुतस्य अभिभूतस्य भिक्षुणां बन्धधरादीनाञ्च प्राकृत वचन सम्प्रयोजयेत्। लिङ्गिनीषु प्रव्रजितासु उत्तमासु उत्कृष्टासु नारीषु च संस्कृतं प्रयोक्तव्यम्। कैश्चिज्जनै देवीमन्त्रिसुतवेश्यासु अपि तथा संस्कृतमित्यथ, उदितम्। नीचाना पात्र स्थानं यद्देशं तस्य भाषित तद्देश तद्देशसूचित तत्र नीचा भाषा प्रयोक्तव्या इत्यर्थः। तत्र देशे उत्तमादीना भाषाविपर्य्यय देशानुरूपा भाषेत्यर्थ; प्रयोक्तव्या। योषित्प्रभृतीनाम् अन्तरान्तरा मध्ये मध्ये वैदग्ध्यार्थं वैचित्र्यार्थं विलासितार्थं वा संस्कृत प्रदातव्यम्।

एषामुदाहरणान्याकरेषु बोद्धव्यानि। भाषालक्षणानि मम तातपादानां भाषार्णवे।

षट्‌त्रिंशल्लक्षणान्यत्र नाट्यालङ्कृतयस्तथा।
त्रयस्त्रिंशत् प्रयोज्यानि वीथ्यङ्गानि त्रयोदश॥
लास्याङ्गानि दश यथालाभं रसव्यपेक्षया॥

४३३॥ (न)

यथालाभं प्रयोज्यानीति सम्बन्धः। अत्रेति नाटके।

तत्र लक्षणानि।

भूषणाक्षरसङ्घातौ शोभोदाहरणं तथा।
हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः॥
निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च।
दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा॥
विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्य्ययौ।
दाक्षिण्यानुनयौ मालाऽर्थापत्तिर्गर्हणं तथा॥
पृच्छा प्रसिद्धिः सारूप्यं संक्षेपो गुणकीर्त्तनम्।
लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा॥

४३४॥ (प)

---

(न) नाट्यालङ्कृतीराह षट्‌त्रिंशदिति। अत्र नाटके लक्षणानि षट्‌त्रिंशत्, तथा नाट्यालङ्कृतय त्रयस्त्रिंशत् वीथ्यङ्गानि त्रयोदश, लास्याङ्गानि दश, यथालाभ यथोचित रसव्यपेक्षया रसानुगुण्यमपेक्ष्य इत्यर्थ प्रयोज्यानि।

(प) लक्षणान्याह तत्रेति। तत्र तेषु मध्ये भूषणादीनि षट्‌त्रिंशत् लक्षणानि भवन्ति।

तत्र ।

**लक्षणानि गुणैः सालङ्कारैर्योगस्तु भूषणम् ॥ ४३५॥ (फ)**

यथा ।

"आक्षिपन्त्यरविन्दानि मुग्धे ! तव मुखश्रियम् ।
कोषदण्डसमग्राणां किमेषामस्ति दुष्करम्" ॥ (ब)

**वर्णनाक्षरसङ्घातश्चित्रार्थैरक्षरैर्मितैः ॥४३६॥ (भ)**

यथा शाकुन्तले—"राजा । कच्चित् सखीं विनाऽतिबाधते शरीरसन्तापः । प्रियंवदा । संपदं लद्धोसहो उअसमं गमिस्सदि" (म) ।

**सिद्धैरर्थैः समं यत्र अप्रसिद्धोऽर्थः प्रकाशते ।**

---

(फ) भूषणमाह गुणैरिति । सालङ्कारैः अलङ्कारा वक्ष्यमाणा अनुप्रासोपमादयः तैः सहितैः गुणैः माधुर्य्यादिभिः योगस्तु मेलनमेव भूषणम् ।

(ब) उदाहरति आक्षिपन्तीति । हे मुग्धे ! सुन्दरि ! अरविन्दानि पद्मानि तव मुखस्य श्रियं कान्तिम् आक्षिपन्ति निन्दन्ति । तथाहि, कोषदण्डसमग्राणां कोषः बीजकोषः धनागारश्च, दण्डः मृणालः चतुर्थोपायश्च, तैः समग्राणां सम्पूर्णानाम् चक्रैश्वर्य्यशालिनाम् इति भावः, एषाम् अरविन्दानां किं दुष्करम् असाध्यम् अस्ति ? सर्वमेव सुकरमित्यर्थः । अत्र अरविन्दानामचेतनतया निन्दा न सम्भवतीति असम्भवद्वस्तुसम्बन्धरूपा निदर्शना तथा अर्थान्तरन्यासः श्लेषश्च एते अलङ्काराः माधुर्य्यप्रसादाभ्यां गुणाभ्यां सहकृताः काव्यं भूषयन्तीति भूषणम् ।

(भ) अक्षरसङ्घातमाह वर्णनेति । चित्रार्थैः मनोहरार्थसूचकैः मितैः अल्पैः अक्षरैः वर्णना रचना अक्षरसङ्घातः ।

(म) उदाहरति यथेति । साम्प्रतं लब्धौषधः उपशमं गमिष्यतीति संस्कृतम् । अत्र सम्पदमित्यादिचित्रार्थाल्पवर्णैः रचना ।

श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते ॥

४३७ ॥ (य)

यथा।

"सद्वंशसम्भव: शुद्ध: कोटिदोऽपि गुणान्वित:।
कामं धनुरिव क्रूरो वर्जनीय: सतां प्रभु" (र)

यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात्।
साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम् ॥

४३८ ॥ (ल)

यथा।

"अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम्।
का दिनश्रीर्विनार्केण का निशा शशिना विना" ॥ (व)

---

(य) शोभामाह सिद्धैरिति। यत्र सिद्धै, साधयितुमिष्टै अर्थैः समं सह असिद्ध' अनभिमत' अर्थ, प्रकाशते सा श्लिष्टेन श्लेषालङ्कृतेन लक्षणेन चित्रार्था विदग्धमनोरञ्जनार्था रचना इति शेष:, शोभा इति अभिधीयते कथ्यते।

(र) उदाहरति सद्वंशेति। सत् साधु वंश' अन्ववाय अन्यत्र वेणुविशेष। शुद्ध इत्युभयत्र समानं, कोटिद इति कोटि सङ्ख्याविशेष अन्यत्र अग्रभाग, गुणान्वित' गुण' शौर्य्यगाम्भीर्य्यादिरन्यत्र मौर्वीयुक्त, क्रूर निष्ठुर निर्दयकार्य्यकारित्वादिति भाव, उभयत्र समान वक्र इति वा। अत्र साधयितुमिष्टैरन्वयादिभि सम श्लेषेण अनभिमतवैरस्याद्यर्थप्रकाशनात् शोभा।

(ल) उदाहरणमाह यत्रेति। यत्र तुल्यार्थयुक्तेन वाक्येन अभिप्रदर्शनात् दृष्टान्तरूपेण प्रदर्शनात् हेतो अभिमत बोधयितुमिष्ट अर्थ साध्यते ज्ञाप्यते प्रकाश्यते इत्यर्थ, तत् उदाहरण मतम्।

(व) उदाहरति अनुयान्त्येति। सीता प्रति कस्याश्चित् उक्तिरियम्। जनातीतम् अलोकसामान्य कान्त' राममित्यर्थ' अनुयान्त्या अनुगच्छन्त्या त्वया साधु कृतम् आचरितम्। तथाहि, अर्केण सूर्य्येण विना विरहिता इति भाव:,

हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात्॥
४३९॥ (श)

यथा वेख्यां—"भीमं प्रति चेटी। एवं मए भणिदं। भाणुमदि! तुम्हाणं अमुक्केसु केसहत्थेसु कधं अम्हाणं देवीए केसाः संयमीअन्तित्ति (ष)।

संशयोऽज्ञाततत्त्वस्य
वाक्ये स्याद् यदनिश्चयः॥ ४४०॥ (स)

यथा ययातिविजये—

"इयं स्वर्गाधिनाथस्य लक्ष्मीः किं यक्षकन्यका।
किञ्चास्य विषयस्यैव देवता किमु पार्वती"॥ (ह)

---

दिनश्री दिवसशोभा का? शशिना चन्द्रेण विना विरहितेति भावः निशा रजनी का? अत्र तुल्यार्थयुक्तवाक्येन प्रतिविहीना योषिन्न शोभते इत्येवमभिमतार्थ-साधनम्।

(श) हेतुमाह हेतुरिति। हेतुदर्शनात् कारणप्रदर्शनात् इष्टकृत् अभिमतार्थप्रकाशक समासोक्तं सङ्क्षिप्तं वाक्यं हेतुः।

(ष) उदाहरति यथेति। एवमिति। एवं मया भणितम्। भानुमति! युष्माकम् अमुक्तेषु केशहस्तेषु कथमस्माकं देव्याः केशाः संयम्यन्ते इति संस्कृतम्। केशहस्तेषु केशपाशेषु। अत्र देव्याः केशसंयमनस्य हेतुः भानुमत्याः केशासंयमः तत्प्रदर्शनेन दुर्योधनवधे सत्येव देव्याः केशसंयमनं भविष्यतीत्येव-मभिमतार्थः प्रकाश्यते।

(स) संशयमाह संशय इति। अज्ञाततत्त्वस्य तत्त्वमजानतो जनस्येत्यर्थः वाक्ये यत् अनिश्चयः अनिर्द्धारणं स संशयः स्यात्। यदित्यव्ययं यः इत्यर्थे।

(ह) उदाहरति यथेति। विषयस्य देशस्य। अत्र नायिकायां ययातेरनिश्चयः।

**दृष्टान्तो यस्तु पक्षार्थ-**

**साधनाय निदर्शनम् ॥ ४४१ ॥ (च)**

यथा वेण्यां—"भीम ! आर्य्य ! उचितमेवैतत् तस्याः यतो दुर्य्योधनकलत्रं हि सा" इत्यादि (क)।

**तुल्यतर्को यदर्थेन**

**तर्कः प्रकृतगामिना ॥ ४४२ ॥ (ख)**

यथा तत्रैव—

"प्रायेणैव हि दृश्यन्ते कामं स्वप्नाः शुभाशुभाः ।
शतसङ्ख्या पुनरियं सानुजं स्पृशतीव माम्" ॥ (ग)

**सञ्चयोऽर्थानुरूपो यः**

**पदानां स पदोच्चयः ॥ ४४३ ॥ (घ)**

---

(च) दृष्टान्तमाह दृष्टान्त इति। पक्षे अर्थस्य साध्यस्य साधनाय ज्ञापनाय यत् निदर्शन हेतुदर्शनम्, स दृष्टान्तः।

(क) उदाहरति यथेति। तस्याः भानुमत्याः। सा भानुमती। अत्र द्रौपद्या भानुमतीकर्तृक परिहास साध्ये इति बोध्यम्।

(ख) तुल्यतर्कमाह तुल्यतर्क इति। प्रकृतगामिना प्रस्तुतानुसारिणा अर्थेन यत् तर्कः अर्थस्य सूचनं स तुल्यतर्कः।

(ग) उदाहरति यथेति। "अकामानुमतौ कामम्" इति कोषः। शुभा अशुभा वा स्वप्नाः दृश्यन्ते इत्यकामेनाप्यनुमन्तव्यमित्यर्थः, अथवा कामं यथेष्टमित्यर्थः। प्रायेण स्वप्नाः कदाचित् शुभाः कदाचित् च अशुभा भवन्ति। इयं हन्यमानाहीना शतसङ्ख्या तत्सदृशसङ्ख्या अहीनामिव अस्माकमपि शतसङ्ख्यावत्त्वादित्यर्थः। स्पृशति विषयीकरोति। अत्र दुर्य्योधनादीनां शतभ्रातृणां भाविनिधनरूपार्थस्य सूचनम्। पथ्यावक्त्रं वृत्तम्। अत्र तु सङ्ख्याशतस्य सादृश्यम् आत्मनि सम्भावना तुल्यतर्क इति।

(घ) पदोच्चयमाह सञ्चय इति। पदानाम् अर्थानुरूपः अभिधेयसदृशः, यः

शाकुन्तले यथा—

"अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्" ॥ (ङ)

अत्र पदपदार्थयोः सौकुमार्य्यं सदृशमेव ।

**यथार्थानां प्रसिद्धानां क्रियते परिकीर्त्तनम् ।**
**परपक्षव्युदासार्थं तन्निदर्शनमुच्यते ॥ ४४४ ॥ (च)**

यथा ।

"क्षात्रधर्मोचितैर्धर्मैरलं शत्रुवधे नृपाः ।
किं नु बालिनि रामेण मुक्तो बाणः पराङ्मुखे" ॥ (छ) ?

---

समुच्चय समूह स पदोच्चय । अर्थानुरूप इत्यनेन सुकुमारार्थे सुकुमारार्थसूचक-पदप्रयोग' उद्धतार्थे तत्सूचकपदप्रयोग इति बोध्यम ।

(ङ) उदाहरति अधर इति । अधर अधरोष्ठः किसलयस्येव रागो लौहित्यं यस्य तथाभूत' । बाहू कोमलविटपौ मृदुस्कन्धोर्द्ध्वशाखे, तदनुकारिणौ तत्सदृशौ । अङ्गेषु सन्नद्धं कृतसन्नाहं, यौवनं कुसुममिव लोभनीयं चित्ताकर्षकम् । आर्य्यावृत्तम् । अत्र तु प्रस्तुतार्थानाम् अधरादिना तत्सदृशपल्लवादिभि. पदसञ्चयैः रूपमान पदोच्चय ।

( च ) निदर्शनमाह यथार्थानामिति । परपक्ष. परमतं तस्य व्युदासार्थं निराकरणार्थं प्रसिद्धाना यथार्थाना सत्यरूपविषयाणा यत् परिकीर्त्तनं क्रियते तत् निदर्शनम् ।

( छ ) उदाहरति क्षात्रेति । क्षत्रस्य भावो वा अयं, क्षात्र—यथोक्तं "शौर्य्यं तेजो धृतिर्दाक्ष्य युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रकर्म स्वभावजम् ॥" इति । अलं समर्थाः, "अलं व्यर्थसमर्थयो" इत्यमर । किन्नु इति यथार्थे अव्यय, मुक्त व्यक्त', पराङ्मुखे अन्यासक्ते । अत्र क्षत्रियधर्मरूपस्य परपक्षस्य निराकरणाय प्रसिद्धस्य रामकर्त्तृकवालिहननरूपस्य अर्थस्य कीर्त्तनम् ।

**अभिप्रायस्तु सादृश्या-**

**दद्भुतार्थस्य कल्पना ॥ ४४५ ॥ (ज)**

यथा शाकुन्तले—

"इदं किलाव्याजमनोहरं वपु-

स्तपःक्षमं साधयितुं य इच्छति।

ध्रुवं स नीलोत्पलपत्रधारया

शमीलतां छेत्तुमृषिर्व्यवस्यति" ॥ (झ)

**ज्ञप्तिः केनचिदंशेन**

**किञ्चिद् यत्रानुमीयते ॥ ४४६ ॥ (ञ)**

यथा मम प्रभावत्याम्—

"अनेन खलु सर्वतश्चरता चञ्चरीकेणावश्यं विदिता भविष्यति प्रियतमा मे प्रभावती" (ट)

**विचारो युक्तवाक्यैर्य-**

**दप्रत्यक्षार्थसाधनम् ॥ ४४७ ॥ (ठ)**

---

(ज) अभिप्रायमाह अभिप्राय इति। सादृश्यात साम्यात् अद्भुतस्य असम्भाविन. अर्थस्य वस्तुनो कल्पना अभिप्राय'।

(झ) उदाहरति इदमिति। य अव्याजमनोहरम् अकृत्रिममनोरञ्जनम् इद पुरोदृश्यमानमनुपम वपु शकुन्तलाशरीरमित्यर्थ., तप क्षम तपश्चरणक्लेशसह साधयितु कर्त्तुम् इच्छति, स ऋषि कण्व इत्यर्थ', ध्रुव निश्चित, नीलोत्पलपत्र-धारया शमीलताम् अतिकठिनशामिति भाव, छेत्त व्यवस्यति उद्युङ्क्ते। वंशस्थविलं वृत्तम्। अत्र नीलोत्पलपत्रधारया शमीलताछेदनमिव शकुन्तलाशरीरेण तपश्चरण-मसम्भवि।

(ञ) ज्ञप्तिमाह ज्ञप्तिरिति। केनचित् अंशेन प्रकारेण यत्र किञ्चित् अनुमीयते ज्ञाप्यते सा ज्ञप्ति।

(ट) उदाहरति यथेति। चञ्चरीकेण भ्रमरेण। अत्र सर्वतश्चरता इति विशेषणरूपेण अंशेन प्रियतमाज्ञानानुमानम्।

यथा मम चन्द्रकलायाम्—"राजा। नूनमियमन्तः पिहित-प्रमदनविकारा वर्त्तते। यतः।

हसति परितोषरहितं निरीक्ष्यमाणापि नेक्षते किञ्चित्।
सख्यामुदाहरन्त्यामसमञ्जसमुत्तरं दत्ते"॥ (ड)

देशकालस्वरूपेण
वर्णना दिष्टमुच्यते॥ ४४८॥ (ढ)

यथा वेण्यां—"सहदेवः।

यद् वैद्युतमिव ज्योतिरार्य्ये क्रुद्धेऽद्य सम्भृतम्।
तत्प्रावृडिव कृष्णेयं नूनं संवर्द्धयिष्यति"॥ (ण)

उपदिष्टं मनोहारि
वाक्यं शास्त्रानुसारतः॥ ४४९॥ (त)

---

(ठ) विचारमाह विचार इति। युक्तवाक्यैः युक्तियुक्तैः हेतुबोधकैरित्यर्थः वचनैः यत अप्रत्यक्षस्य अदृष्टस्य अर्थस्य साधनं ज्ञापनं स विचारः।

(ड) उदाहरति यथेति। हसतीति। परितोषरहितम् असन्तोषं हसति, निरीक्ष्यमाणापि किञ्चित न ईक्षते न पश्यति, तथा सख्यां वयस्यायाम् उदाहरन्त्याम् आलपन्त्याम् असमञ्जसम् अयोग्यम् उत्तरं दत्ते ददाति। अत्र अपरितोषहासादि-रूपैर्हेतुमद्वचनैः अप्रत्यक्षस्य मनोविकारस्य साधनम्।

(ढ) दिष्टमाह देशेति। देशकालस्वरूपेण देशकालयोः साधर्म्येण वर्णना रचना दिष्टम् उच्यते।

(ण) उदाहरति यथेति। यदिति। अद्य क्रुद्धे आर्य्ये भीमसेने इति भावः, वैद्युतमिव ताडितमिव यत् ज्योतिः सम्भृतं समुत्थितं तत् इयं कृष्णा द्रौपदी प्रावृट् वर्षाकाल इव नूनं निश्चितं संवर्द्धयिष्यति। देशकालानुरूपवर्णनम्।

(त) उपदिष्टमाह उपदिष्टमिति। शास्त्रानुसारतः यथाशास्त्रं मनोरञ्जनकृत् वाक्यम् उपदिष्टम् उपदेशवचनमित्यर्थः॥

यथा शाकुन्तले—

"शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने।
भर्त्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः"॥ इत्यादि। (थ)

गुणातिपातः कार्य्यं यद्
विपरीतं गुणान् प्रति ॥ ४५० ॥ (द)

यथा मम चन्द्रकलाया—चन्द्रं प्रति। "जइ संहरिज्जइ तमो,घेप्पइ सअलेहिं ते पाओ।वससि सिरसि पसुवइणो तहवि इत्थीअ जीअणं हरसि" (ध)।

यः सामान्यगुणोद्रेकः
स गुणातिशयो मतः ॥ ४५१ ॥ (न)

---

(थ) उदाहरति यथेति। शुश्रूषस्वेति। पतिगेहं गच्छन्तीं शकुन्तलां प्रति कण्वस्योपदेशोऽयम्। गुरून् पूज्यान् जनान् श्वश्रूश्वशुरादीन् शुश्रूषस्व सेवस्व, सपत्नीजने प्रियसखीवृत्तिं प्रियवयस्याव्यवहारं कुरु। विप्रकृतापि अपमानितापि भर्त्रेति शेषः, रोषणतया कोपनतया भर्त्तुः प्रतीपं प्रतिकूलमित्यर्थः, मा स्म गमः न गच्छ, प्रतिकूलवर्त्तिनी मा भवेत्यर्थः। अत्र हि स्वामिसकाशावस्थानरूप-शुभसम्भावनया मनोहारिवाक्येन शास्त्रानुसारतः प्रयोजनम् उपदिष्टमिति। अत्र गुरुशुश्रूषादिकं शास्त्रानुसारि मनोहारि वचनम्।

(द) गुणातिपातमाह गुणातिपात इति। गुणान् प्रति यत् विपरीतं कार्य्यं गुणविरोधिकार्य्यमित्यर्थः स गुणातिपातः।

(ध) उदाहरति यथेति। जइ इति। यदि संह्रियते तमो गृह्यते सकलैस्ते पादः वससि शिरसि पशुपतेस्तथापि स्त्रिया जीवनं हरसि इति संस्कृतम्। अत्र तमोहरत्वादिगुणानां विपरीतं स्त्रीजनजीवनहरणम्।

(न) गुणातिशयमाह य इति। यः सामान्यगुणेभ्यः उपमानोपमेयवृत्तिसाधारणधर्मेभ्यः उद्रेकः आधिक्यम् उपमेयस्येति शेषः, स गुणातिशयः मतः कथितः।

यथा तत्रैव—"राजा। (चन्द्रकलाया मुखं निर्दिश्य)
अस्यावन्तश्चञ्चद्विकचनवलीलाब्जयुगल-
स्तलस्फूर्जत्कम्बुर्विलसदलिसङ्घात उपरि।
विना दोषासङ्गं सततपरिपूर्णाखिलकलः
कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि। ते" १॥ (प)

अर्थान् सिद्धान् बहूनुक्त्वा
विशेषोक्तिर्विशेषणम्॥ ४५२॥ (फ)

यथा।

"तृष्णापहारी विमलो द्विजावासो जनप्रियः।
ह्रदः पद्माकरः किन्तु बुधस्त्वं स जडाशयः" ॥ (ब)

---

(प) उदाहरति यथेति। असाविति। हे सुमुखि। ते तव अन्तः, अभ्यन्तरे चञ्चत् स्फुरत् विकच विकसित नव लीलाब्जयुगल क्रीडापद्मद्वयं यस्य तादृश, तले स्फूर्जन् विकसन् कम्बु शङ्खः यस्य तथाविध, उपरि विलसन्तः विचरन्तः अलीना भ्रमराणा सङ्घाता समूहा यस्य तथाभूत, सतत पौर्णमासी-व्यतिरिक्तेऽपि काले इत्यर्थ, परिपूर्णा अखिला समग्रा कला यस्य तथोक्त, विगलितकलङ्क निष्कलङ्क. असौ चन्द्र दोषा रात्रि, तस्याः सङ्ग सम्पर्क विना रात्रिमन्तरेणेत्यर्थ कुत कस्मात् प्राप्त ? कलाशब्देन चतुःषष्टिविद्यास्त लभ्यन्ते, ततश्च दोषाणामासङ्ग विना सकलविद्यालाभ. असम्भव इति ध्वनि। अत्र उपमेयस्य मुखस्य लीलाब्जयुगलादिसम्बन्धात आह्लादकत्वादिसाधारणधर्मस्य चन्द्रादाधिक्यम्। चन्द्रे तु लीलाब्जादिसम्बन्धाभावादिति।

(फ) विशेषणमाह अर्थानिति। सिद्धान् प्रसिद्धान् बहून् अर्थान् उक्त्वा विशेषस्य उक्ति. भेदकथनमित्यर्थ. विशेषणम्।

(ब) उदाहरति यथेति। तृष्णेति। विद्वास धनिन प्रति उक्तिरियम्। ह्रदः त्वञ्च तुल्य इति शेष.। तथाहि, तृष्णा जलपानेच्छा धनाशा च तस्या. अपहारी नाशक जलदानेन धनदानेन च इति भाव, विमल स्वच्छ. निर्दोषश्च, द्विजावास द्विजाना पक्षिणा जलचराणा हंसादीना ब्राह्मणानाञ्च आवास आश्रय, जनाना प्रिय सन्तोषकर, पद्माकर पद्मानां कमलानाम् आकर. उत्पत्तिस्थानं,

पूर्वसिद्धार्थकथनं

निरुक्तिरिति कीर्त्तितम् ।। ४५३ ।। (भ)

यथा वेख्याम्—"निहताशेषकौरव्यः" इत्यादि। (म)

बहूनां कीर्त्तनं सिद्धि-

रभिप्रेतार्थसिद्धये ।। ४५४ ।। (य)

यथा।

"यद्वीर्य्यं कूर्मराजस्य यश्च शेषस्य विक्रमः।

पृथिव्या रक्षणे राजन्नेकत्र त्वयि तत् स्थितम्" ॥ (र)

इष्टादीनां भवेद् भ्रंशो

वाच्यादन्यतरद्वचः ।। ४५५ ।। (ल)

---

अभाया लक्ष्म्या आकरः आवासः धनवानित्यर्थश्च, किन्तु त्वं बुधः विद्वान्, स च जडाशयः जडस्य जलस्य जाड्यगुणस्य च आशय स्थानम्। अत्र बहून् समानधर्मानुक्त्वा बुधत्वजडाशयत्वाभ्यां भेदकथनम्।

(भ) निरुक्तिमाह पूर्वेति। पूर्वसिद्धानां पूर्वं निष्पन्नानाम्, अर्थानां कथनं निरुक्तिरिति कीर्त्तितम्।

(म) उदाहरति यथेति। अत्र कौरव्यादिहननस्य पूर्वसिद्धस्य कथनम्।

(य) सिद्धिमाह बहूनामिति। अभिप्रेतस्य इष्टस्य अर्थस्य सिद्धये निष्पत्तये बोधायेत्यर्थः, एकमधिकृत्य बहूनां कीर्त्तनं गुणकथनं सिद्धिः।

(र) उदाहरति यदिति। हे राजन्। कूर्मराजस्य कूर्मावतारस्य विष्णोः यत् वीर्य्यं बलं, यश्च शेषस्य अनन्तस्य विक्रमः शौर्य्यमित्यर्थः, तदुभयं कूर्मशेषयोः सामर्थ्यं, पृथिव्याः रक्षणे पालनविषये एकत्र एकस्मिन् त्वयि स्थितम्। अत्र अभिप्रेतस्य राज्ञः पृथ्वीपालनभारसहिष्णुतातिशयबोधाय तदुभयकीर्त्तनम्।

(ल) भ्रंशमाह इष्टादीनामिति। इष्टादीनाम् आदिपदेन इष्टदुःखितादेर्ग्रहणम्, अहृष्टतदुःखितादीनामित्यर्थः वाच्यात् विवक्षितादित्यर्थः, अन्यतरत् विपरीतं यत् वचः, स भ्रंशः भवेत्।

यथा वेण्यां—"कञ्चुकिनं प्रति दुर्य्योधनः ।
सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम्" ॥ (व)

**विचारस्यान्यथाभावः**
**सन्देहात् तु विपर्य्ययः ॥ ४५६ ॥ (श)**

यथा ।

"मत्वा लोकमदातारं सन्तोषे यैः कृता मतिः ।
त्वयि राजनि ते राजन् ! न तथा व्यवसायिनः" ॥ (ष)

**दाक्षिण्यं चेष्टया वाचा**
**परचित्तानुवर्त्तनम् ॥ ४५७ ॥ (स)**

वाचा यथा—

"प्रसाधय पुरीं लङ्कां राजा त्वं हि विभीषण !
आर्य्येणानुगृहीतस्य न विघ्नः सिद्धिमन्तरा" ॥ (ह)

---

(व) उदाहरति सहभृत्यगणमिति । अत्र चिरादपि न हन्तीति विवक्षितं किन्तु न चिरात् हन्तीत्यन्यथाकथनेन भ्रंशाख्यं नाटकाङ्गमिति ।

(श) विपर्य्ययमाह विचारेति । सन्देहात् संशयात् विचारस्य तत्त्वनिर्णयस्य अन्यथाभावः अभावः विपर्य्ययः ।

(ष) उदाहरति मत्वेति । लोकं जगतीस्थम् अदातारम् अवदान्यं मत्वा विचार्य्य, यैः सन्तोषे मतिः कृता सन्तुष्टैरेव स्थितं न कुत्रापि याचितुं गतमिति भावः । हे राजन् ! त्वयि राजनि नृपे सति ते तथा व्यवसायिनः तादृशाचारवन्तः न भवन्तीति शेषः सन्तोषमवलम्ब्य न तिष्ठन्तीति भावः । अत्र पूर्वं दातृत्वाभावस्य निश्चयो जातः, इदानीं त्वयि राज्ञि तन्निश्चयाभाव एव विचारस्य अन्यथाभावः ।

(स) दाक्षिण्यमाह दाक्षिण्यमिति । चेष्टया शारीरव्यापारेण वाचा च परचित्तस्य अनुवर्त्तनम् अनुसरणम् अनुरञ्जनमित्यर्थः दाक्षिण्यम् ।

(ह) उदाहरति प्रसाधयेति । हे विभीषण ! लङ्का पुरीं प्रसाधय अलङ्कुरु

**वाक्यैः स्निग्धैरनुनयो**

**भवेदर्थस्य साधनम् ॥ ४५८ ॥ (च)**

एवं चेष्टयापि।

यथा वेण्याम्—"अश्वत्थामानं प्रति कृपः। दिव्यास्त्रग्रामकोविदे भारद्वाजतुल्यपराक्रमे किं न सम्भाव्यते त्वयि" (क)।

**माला स्याद् यदभीष्टार्थं**

**नैकार्थप्रतिपादनम् ॥ ४५९ ॥ [ख]**

यथा शाकुन्तले—"राजा।

किं शीतलैः क्लमविरोधिभिरार्द्रवातं,
सञ्चालयामि नलिनीदलतालवृन्तैः।
अङ्के निवेश्य चरणावुत पद्मताम्रौ,
संवाहयामि करभोरु! यथासुखं ते" ॥ (ग)

---

हि यतस्त्व राजा इदानीमिति शेषः, आर्य्येण रामेण अनुगृहीतस्य जनस्य इति शेष, सिद्धिं फलनिष्पत्तिम् अन्तरा विना न विघ्नः स्यादिति शेष। विभीषणं प्रति लक्ष्मणस्योक्तिः। अत्र वाचा विभीषणचित्तानुवर्त्तनम् दाक्षिण्यम्। चेष्टया यथा शाकुन्तले—"तदहमेनामनृणां करोमि इत्यङ्गुरीयकं ददाति"। अत्राङ्गुरीयदानरूपचेष्टया शकुन्तलाचित्तानुसरणं दाक्षिण्यम्।

(च) अनुनयमाह वाक्यैरिति। स्निग्धैः स्नेहयुक्तैः वाक्यैः अर्थस्य कार्य्यस्य साधनम् अनुनयः।

(क) उदाहरति यथेति। दिव्यास्त्राणां ग्रामः समूहः तस्मिन् कोविदः विचक्षणः तस्मिन् भारद्वाजो भरद्वाजस्य अपत्यं पुमान् द्रोण इत्यर्थः, तस्य तुल्यः पराक्रमः यस्य तादृशे। अत्र स्निग्धवाक्येन अश्वत्थाम्नः सन्तोषरूपस्य कार्य्यस्य साधनम्।

(ख) मालामाह मालेति। अभीष्टार्थम् इष्टसम्पादनाय इत्यर्थः. यत् नैकार्थप्रतिपादनं नैककार्यप्रकटनं सा माला स्यात्।

(ग) उदाहरति। किमिति। हे करभोरु! शीतलैः शीतस्पर्शैः क्लमविरोधिभिः

अर्थापत्तिर्यदन्यार्थो-
ऽर्थान्तरोक्तेः प्रतीयते ॥ ४६० ॥ [घ]

यथा वेण्याम्—"द्रोणोऽश्वत्थामानं राज्येऽभिषेक्तुमिच्छ-तीति कथयन्तं कर्णं प्रति राजा। साधु अङ्गराज! साधु। कथमन्यथा?

दत्त्वाभयं सोऽतिरथो बध्यमानं किरीटिना।
सिन्धुराजमुपेक्षेत नैवं चेत् कथमन्यथा" ॥ (ङ)

दूषणोद्घोषणायां तु
भर्त्सना गर्हणं तु तत् ॥ ४६१ ॥ [च]

यथा तत्रैव—"कर्णं प्रति अश्वत्थामा। निर्वीर्य्यं गुरुशाप-भाषितवशात् किं मे तवैवायुधम्" इत्यादि (छ)।

---

श्रान्तिहरे नलिनीदलतालवृन्ते पद्मपत्ररूपव्यजने आर्द्रवात सञ्चालयामि किम्? उत अथवा पद्मताम्रौ पद्मे इव ताम्रौ आरक्तौ ते तव चरणौ अङ्के क्रोडे निवेश्य निधाय यथासुख संवाहयामि। वसन्ततिलक वृत्तम्। अत्र अभीष्टस्य शकुन्तलापरितोषस्य साधनाय वातसञ्चालनादीनामनेकार्थाना प्रतिपादनम्।

(घ) अर्थापत्तिमाह अर्थापत्तिरिति। अर्थान्तरस्य उक्ते हेतो. यत् अन्यार्थ प्रतीयते सा अर्थापत्ति.।

(ङ) उदाहरति यथेति। दत्त्वाभयमिति। अतिरथ. स द्रोण पूर्वेद्यु, "मा त्वाम् अर्जुनो वधीत्" इति अभय दत्त्वा किरीटिना अर्जुनेन बध्यमानं हन्यमान सिन्धुराज जयद्रथम् उपेक्षेत। एव मदुक्तप्रकाराश्वत्थामाभिषेकायासक्तिर्हि चेत् यदि न स्यात्, तर्हि अन्यथा प्रकारान्तर, कथ किम्? न किमपीत्यर्थ। अत्र सिन्धुराजोपेक्षारूपार्थान्तरप्रकटनेन द्रोणस्य स्वपुत्राभिषेकाभिप्राय: प्रतीयते।

(च) गर्हणमाह दूषणेति। दूषणस्य उद्घोषणाया या भर्त्सना तत् गर्हणम्।

(छ) उदाहरति यथेति। अत्र अश्वत्थामकर्तृका कर्णभर्त्सना।

अभ्यर्थनापरैर्वाक्यैः
पृच्छाऽर्थान्वेषणं मतम् ॥ ४६२ ॥ [ज]

यथा तत्रैव—"सुन्दरकः । अज्जा ! अज्ज अवि णाम सारहिदुदुओ दिट्ठो तुह्मेहिं महाराओ दुज्जोधणो ण वेत्ति" (झ) ।

प्रसिद्धिर्लोकसिद्धार्थै-
रुत्कृष्टैरर्थसाधनम् ॥ ४६३ ॥ [ञ]

यथा विक्रमोर्वश्यां—"राजा ।
सूर्य्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः" ॥ (ट)

सारूप्यमभिभूतस्य
सारूप्यात् क्षोभवर्त्तनम् ॥ ४६४ ॥ [ठ]

---

(ज) पृच्छामाह पृच्छेति । अभ्यर्थनापरैः प्रार्थनासूचकैः वाक्यैः अर्थानाम् अन्वेषणं पृच्छा मतम् ।

(झ) उदाहरति यथेति । अज्जेति । "आर्य्याः ! अद्य अपि नाम सारथि-द्वितीयो दृष्टो युष्माभिः महाराजो दुर्योधनो न वा" इति संस्कृतम् । अत्र प्रार्थनासूचकवाक्येन दुर्योधनान्वेषणम् ।

(ञ) प्रसिद्धिमाह प्रसिद्धिरिति । उत्कृष्टैः लोकसिद्धैः लोकप्रसिद्धैः अर्थैः अर्थस्य कार्य्यस्य साधनं प्रसिद्धिः ।

(ट) उदाहरति यथेति । अत्र लोकप्रसिद्धैः सूर्य्यचन्द्रवंशीयत्वादिभिः आत्मपरिचयरूपस्य अर्थस्य साधनम् ।

(ठ) सारूप्यमाह सारूप्यमिति । सारूप्यात् समानरूपत्वात् अभिभूतस्य अभिभवं प्राप्तस्य यत् क्षोभेण वर्त्तनं व्यवहारः सारूप्यम् ।

यथा वेण्याम्—"दुर्य्योधनभ्रान्त्या भीमं प्रति युधिष्ठिरः ।
दुरात्मन् ! दुर्य्योधनहतक ।" इत्यादि (ड) ।

**संक्षेपो यत् तु संक्षेपा-**
**दात्मान्यार्थे प्रयुज्यते ॥ ४६५ ॥ [ढ]**

यथा मम चन्द्रकलायाम्—"राजा । प्रिये ।
अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा ? ।
(आत्मानं निर्दिश्य)
अयमीहितकुसुमानां सम्पादयिता तवास्ति दासजनः" ॥ (ण)

**गुणानां कीर्त्तनं यत्तु**
**तदेव गुणकीर्त्तनम् ॥ ४६६ ॥**

यथा तत्रैव—"नेत्रे खञ्जन" इत्यादि (त) । ८३

**स लेशो भण्यते वाक्यं**
**यत् सादृश्यपुरःसरम् ॥ ४६७ ॥ [थ]**

---

(ड) उदाहरति यथेति । अत्र सादृश्येनाभिभूतस्य युधिष्ठिरस्य क्षोभवर्त्तनम् ।

(ढ) संक्षेपमाह संक्षेप इति । संक्षेपात् साधारण्यात् अन्यार्थे अन्यस्य अर्थे कार्य्ये यत आत्मा प्रयुज्यते नियुज्यते स संक्षेपः ।

(ण) उदाहरति यथेति । शिरीषकुसुमवत् परिपेलवानि सुकोमलानि अङ्गानि, किं कथं मुधा मृषा खेदयसि क्लेशयसि ? अयं दासजनः तव ईहित-कुसुमानाम् अभीष्टपुष्पाणां सम्पादयिता यत्ते अभीष्टं तत् दास एव सम्पादयति किं तव आयासेनेति भावः । अत्र चन्द्रकलापरिचर्य्यार्थे राज्ञः आत्मनियोगः ।

(त) उदाहरति यथेति । अत्र नायिकायाः रूपगुणानां कथनम् ।

(थ) लेशमाह स इति । सादृश्यपुरःसरं सादृश्यतात्पर्य्यकम्, यत् वाक्यं भण्यते कथ्यते स लेशः ।

यथा वेण्यां—"राजा।

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति" ॥ (द)

**मनोरथस्त्वभिप्राय-**
**स्योक्तिर्भङ्ग्यन्तरेण यत्** ॥ ४६८ ॥ [ध]

यथा।

"रतिकेलिकलः किञ्चिदेष मन्मथमन्थरः।
पश्य सुभ्रु ! समाश्वस्ता कादम्बश्चुम्बति प्रियाम्" ॥ (न)

**विशेषार्थोह्यविस्तारो-**
**ऽनुक्तसिद्धिरुदीर्य्यते** ॥ ४६९ ॥ (प)

---

(द) उदाहरति यथेति। शिखण्डिनं द्रुपदपुत्रं पुरस्कृत्य अग्रे कृत्य जरति वृद्धे गाङ्गेये भीष्मे हते अर्जुनेनेति शेषः, पाण्डुपुत्राणां युधिष्ठिरादीनां या श्लाघा गौरवम् अभूदिति शेषः, अस्माकं सैव तादृशी श्लाघा भविष्यति, अभिमन्युवधे इति भावः। यथा वृद्धस्य छलेन हनने श्लाघानुपयुक्ता, तथा अस्माकमपि बालकस्यैकाकिनोऽभिमन्योर्बहुभिर्हनने भविष्यतीति भावः। अत्र अभिमन्युवधः भीष्मवधतुल्य इति सादृश्यम्।

(ध) मनोरथमाह मनोरथ इति। भङ्ग्यन्तरेण भङ्गिविशेषेण सदृशज्ञानेन इत्यर्थः, यत् अभिप्रायस्य उक्तिः, स मनोरथः।

(न) उदाहरति रतीति। नायिकां प्रति कस्यचिदुक्तिः। हे सुभ्रु! पश्य एष मन्मथमन्थरः मदनपरवशः अतएव रतिकेलौ सुरतविहारे कलः मधुरवाक् कादम्बः कलहंसः समाश्वस्तां विश्वस्तां, आदराधिक्यदर्शनेन विश्वसन्तीम् इत्यर्थः, प्रियां किञ्चित् ईषत् चुम्बति, ईषत् चुम्बनन्तु अस्याः उत्तरोत्तरकामोद्रेकाय इति भावः। अत्र कादम्बचुम्बनरूपभङ्ग्या स्वाभिप्रेतस्य स्वकान्ताचुम्बनस्य उक्तिः।

(प) अनुक्तसिद्धिमाह विशेषार्थ इति। विशेषः रूपलावण्याद्यतिशयः अर्थः प्रयोजनं यस्य, तादृशः ऊह्यविस्तारः तर्कातिशयः अनुक्तसिद्धिः उदीर्य्यते कथ्यते।

यथा रघुवंशवाटिकायाम्—

"दृश्येते तन्वि ! यावेतौ चारुचन्द्रमसं प्रति ।
प्राज्ञे कल्याणनामानावुभौ तिष्यपुनर्वसू" ॥ (फ)

**स्यात् प्रमाणयितुं पूज्यं**
**प्रियोक्तिर्हर्षभाषणम् ॥ ४७० ॥ (ब)**

यथा शाकुन्तले—

"उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तर पयः ।
निमित्तनैमित्तिकयोरयं विधिः
तव प्रसादस्य पुरस्तु सम्पदः" ॥ (भ)

---

(फ) उदाहरति दृश्येते इति । गृहोपवने विश्वामित्रसमीपे रामलक्ष्मणौ दृष्ट्वा सीतां प्रति तत्सखीनां सतर्कसुक्तिरियम् । हे तन्वि । कृशाङ्गि । चारुचन्द्रमसं मनोहरचन्द्रं प्रति चन्द्रसमीपे इत्यर्थः, यौ एतौ दृश्येते, हे प्राज्ञे । विदुषि । एतौ उभौ कल्याणनामानौ शुभाभिधौ तिष्यपुनर्वसू तदाख्यनक्षत्रभेदाविति तर्कयामो वयमिति शेषः । अत्र रूपलावण्याद्यतिशयात् विश्वामित्ररामलक्ष्मणेषु पृथिव्यां चन्द्रतिष्यपुनर्वसुत्वधर्मारोपेण तर्कातिशयरूपानुक्तसिद्धिः ।

(ब) प्रियोक्तिमाह स्यादिति । पूज्यं जनं प्रमाणयितुं यत् हर्षभाषणं सा प्रियोक्तिः स्यात् ।

(भ) उदाहरति यथेति । पूर्वं प्रथमं फलोत्पत्तेः प्रागित्यर्थः कुसुमम् उदेति उदयं प्राप्नोति, ततः अनन्तरं कुसुमोदयात् परमित्यर्थः फलम् उदेतीत्यनेनान्वयः । प्राक् वृष्टेरिति शेषः घनानां मेघानाम् उदयः, तदनन्तरं मेघोदयात्परं पयः जलं वृष्टिरित्यर्थः । निमित्तनैमित्तिकयोः कारणकार्य्ययोः अयं पौर्वापर्य्यरूपो विधिः क्रमः, तव प्रसादस्य अनुग्रहस्य पुरः अग्रतस्तु अनुग्रहात् प्रागित्यर्थः सम्पदः समृद्धयः भवन्तीति शेषः । वंशस्थविलं वृत्तम् । अत्र अनुग्रहसम्पदः कारणत्वात् पूर्वमेव कार्य्यन्तु सम्पदः तत्पश्चात् भवितुं युज्यते, तद्वैपरीत्येन तु पूज्यस्यातिप्रभावशालित्व-कथनेन हर्षोत्पादनरूपा प्रियोक्तिः ।

अथ नाट्यालङ्काराः ।

आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः ।
उत्प्रासनं स्पृहाक्षोभपश्चात्तापोपपत्तयः ॥
आशंसाध्यवसायौ च विसर्पोल्लेखसंज्ञितौ ।
उत्तेजनं परीवादो नीतिरर्थविशेषणम् ॥
प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्त्तनम् ।
उत्कीर्त्तनं तथा याञ्चा परीहारो निवेदनम् ॥
प्रवर्त्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।
इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः ॥ [म]

आशीरिष्टजनाशंसा ॥ ४७१ ॥ (य)

यथा शाकुन्तले—

"ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव ।
पुत्रं त्वमपि सम्राजं सेव पुरुमवाप्नुहि" ॥ (र)

आक्रन्दः प्रलपितं शुचा ४७२ ॥ (ल)

---

(म) नाट्यालङ्कारानाह अथेति । आशी प्रभृतीनि त्रयस्त्रिंशत् नाट्यालङ्कारा इत्यर्थः । अलङ्कृतिपदस्य योगार्थमाह नाट्यभूषणहेतव इति ।

(व) आशिषमाह आशीरिति । इष्टजनस्य आशंसा इष्टलाभाशंसनम् ।

(र) उदाहरति ययातेरिति । शर्मिष्ठा वृषपर्वसुता ययातेरिव त्वं पत्युः दुष्मन्तस्य बहुमता बहु आदरणीया भव । पुरु पुरुनामानं पुत्रं सा शर्मिष्ठा इव, सम्राजं चक्रवर्त्तिनं पुत्रं त्वमपि आप्नुहि लभस्व । अत्र शकुन्तलां प्रति कण्वस्य शुभाशंसनम् ।

(ल) आक्रन्दमाह आक्रन्द इति । शुचा शोकेन प्रलपितं प्रलापः आक्रन्दः ।

यथा वेण्याम्—"कञ्चुकी। हा देवि! कुन्ति! राजभवन-पताके!" इत्यादि।

**कपटं मायया यत्र**

**रूपमन्यद्विभाव्यते ॥ ४७३ ॥ (व)**

यथा कुलपत्यङ्के—

"मृगरूपं परित्यज्य विधाय कपटं वपुः।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयम्" ॥ (श)

**अक्षमा सा परिभवः**

**स्वल्पोऽपि नाभिसह्यते ॥ ४७४ ॥ (ष)**

यथा शाकुन्तले—"राजा। भोः सत्यवादिन्! अभ्युपगतं तावदस्माभिः। एवंविधा एव वयम्। किं पुनरिमामभिसन्धाय लभ्यते? शार्ङ्गरवः। विनिपातः" इत्यादि (स)।

**गर्वोऽवलेपजं वाक्यम् ॥ ४७५ ॥ (ह)**

---

(व) कपटमाह कपटमिति। यत्र मायया छलेन अन्यत् रूपं विभाव्यते प्रदर्श्यते तत् कपटम्।

(श) उदाहरति यथेति। मृगरूपमिति। तेन रक्षसा मारीचेन मृगरूपं काञ्चनहरिणकायं परित्यज्य विहाय, कपटं कृत्रिमं वपुः शरीरं विधाय लक्ष्मणः युधि युद्धे संशयं नीयते प्राप्यते। अत्र मायया अन्यरूपग्रहणम्।

(ष) अक्षमामाह अक्षमेति। स्वल्पः अत्यल्पः अपि परिभवः यत् न अभिसह्यते सा अक्षमा।

(स) उदाहरति यथेति। शार्ङ्गरवं प्रति राज्ञ उक्तिः। अभ्युपगतं स्वीकृतम्। एवंविधाः पराभिसन्धायिन इत्यर्थः। इमां शकुन्तलाम्। अभिसन्धाय प्रतार्य। अत्र सत्यवादिन्नित्यनेन सोल्लुण्ठनसम्बोधनेन परिभूतस्य शार्ङ्गरवस्य विनिपात इति वचनेन अक्षमा प्रकटिता।

(ह) गर्वमाह गर्व इति। अवलेपजं साहङ्कारं वाक्यं गर्वः।

यथा तत्रैव—"राजा। ममापि नाम सत्त्वैरभिभूयन्ते गृहाः" (च)।

**कार्य्यस्यारम्भ उद्यमः॥ ४७६॥**

यथा कुम्भे—"रावणः। पश्यामि शोकविवशोऽन्तकमेव तावत्" (क)।

**ग्रहणं गुणवत् कार्य्य-**

**हेतोराश्रय उच्यते॥ ४७७॥ [ख]**

यथा विभीषणनिर्भर्त्सनाङ्के—"विभीषणः। राममेवाश्रयिष्यामि" इति (ग)।

**उत्प्रासनन्तूपहासो**

**योऽसाधौ साधुमानिनि॥ ४७८॥ [घ]**

यथा शाकुन्तले—"शार्ङ्गरवः। राजन्। अथ पुनः पूर्ववृत्तान्तः व्यासङ्गाद्विस्मृतो भवान् तत्कथमधर्मभीरोर्दारपरित्यागः" इत्यादि (ङ)।

---

(च) उदाहरति यथेति। सत्त्वैः प्राणिभिः। अत्र ममापीत्यनेन राज्ञः गर्वातिशयः सूचितः।

(क) उदाहरति यथेति। शोकविवशः अतिशोकार्त्तः बहुपुत्रभ्रातृबन्धुवर्गनाशादिति भावः, अन्तकमेव यममेव तावत् पश्यामि। अत्र रक्षकर्मणः उद्यमः सूचितः।

(ख) आश्रयमाह ग्रहणमिति। कार्य्यहेतोः गुणवत् उत्कृष्टं ग्रहणम् आश्रय उच्यते।

(ग) उदाहरति यथेति। स्पष्टम्। अत्र राज्यार्थं रामाश्रयणं गुणवत।

(घ) उत्प्रासनमाह उत्प्रासनमिति। आत्मानं साधुं मन्यते इति साधुमानी, तस्मिन् असाधौ यः उपहासः उत्प्रासनम्।

(ङ) उदाहरति यथेति। अथ पुनरिति वितर्के, पूर्ववृत्तान्तः शकुन्तला-

आकाङ्क्षा रमणीयत्वाद्
वस्तुनो या स्पृहा तु सा ॥ ४७९ ॥ [च]

यथा तत्रैव—"राजा।

चारुणा स्फुरितेनायमपरिक्षतकोमलः।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः" ॥ (छ)

अधिक्षेपवचःकारी
क्षोभः प्रोक्तः स एव तु ॥ ४८० ॥ [ज]

यथा।

"त्वया तपस्विचाण्डाल। प्रच्छन्नवधवर्त्तिना।
न केवलं हतो वाली स्वात्मा च परलोकतः" ॥ (झ)

---

परिचयरूपा पूर्वघटनेत्यर्थः, व्यासङ्गात् भार्य्यान्तरसङ्गात्। तत् कथमिति अन्यथा कर्थामित्यर्थः। अत्र अधर्मभीरोरिति उपहासः।

(च) स्पृहामाह आकाङ्क्षेति। वस्तुनः विषयस्य रमणीयत्वात् मनोहरत्वात् या आकाङ्क्षा तत्प्राप्तीच्छा इत्यर्थः सा स्पृहा।

(छ) उदाहरति चारुणेति। चारुणा मनोहरेण स्फुरितेन स्फुरणेन अपरिक्षतः नायकेनादष्टतया अव्रणितः अतएव कोमलः प्रियायाः शकुन्तलायाः अयम् अधरः पिपासतः पातुमिच्छतः मम अनुज्ञां ददातीव। अत्र अधरस्य रमणीयत्वात् पानाकाङ्क्षारूपा स्पृहा।

(ज) क्षोभमाह अधिक्षेपवच इति। अधिक्षेपवचः भर्त्सनवाक्यं करोतीति तथोक्तः क्षोभः मनोविकारविशेषः स एव क्षोभनामालङ्कार एव प्रोक्तः।

(झ) उदाहरति त्वयेति। रामं प्रति वालिन उक्तिः। हे तपस्विचाण्डाल। तपस्विषु चाण्डालवत् नृशंसकर्म्मन्नित्यर्थः, प्रच्छन्नवधवर्त्तिना गुप्तभावेन स्थित्वा हिंसाकारिणा त्वया केवलं वाली न हतः किन्तु परलोकतः आत्माऽपि हतः इत्यर्थः, यादृशं दुष्कार्य्यं त्वया कृतम् एतेन परलोके तव निस्तारो नास्तीति भावः। अत्र भर्त्सनकारित्वात् क्षोभः।

**मोहावधीरितार्थस्य**

**पश्चात्तापः स एव तु ॥ ४८१ ॥ [ञ]**

यथाऽनुतापाङ्के—"रामः। किं देव्या न विचुम्बितोऽस्मि बहुशो मिथ्याभिशप्तस्तदा" इति (ट)।

**उपपत्तिर्मता हेतो-**

**रुपन्यासोऽर्थसिद्धये ॥ ४८२ ॥ [ठ]**

यथा वध्यशिलायाम्—

"म्रियते म्रियमाणे या त्वयि जीवति जीवति।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममाऽसुभिः ॥ (ड)

**आशंसनं स्यादाशंसा ॥ ४८३ ॥ [ढ]**

यथा श्मशाने—"माधवः। तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम्" इति (ण)।

---

(ञ) मोहेति। मोहेन अनवधानतया दुरर्थं वा अज्ञानेन अवधीरितस्य अवज्ञातस्य अर्थस्य विषयस्य य पश्चात्ताप स एव पश्चात्तापालङ्कार एव।

(ट) उदाहरति यथेति। देव्या सीतया। मिथ्याभिशप्तः मिथ्यादत्तपरिवादः। अत्र चुम्बनरूपस्य अर्थस्य अवधीरणात् पश्चात्तापालङ्कार एव।

(ठ) उपपत्तिमाह उपपत्तिरिति। अर्थस्य कार्य्यस्य सिद्धये हेतोः कारणस्य उपन्यास कीर्त्तनम् उपपत्तिर्मता।

(ड) उदाहरति यथेति। त्वयि म्रियमाणे या म्रियते, त्वयि जीवति सति या जीवति, यदि तां जीवन्तीम् इच्छसि तदा मम असुभि प्राणैः, आत्मान रक्ष। अत्र तस्या जीवनरक्षणरूपस्य अर्थस्य सिद्धिहेतुत्वेन शरीररक्षणम्।

(ढ) आशंसामाह आशंसनमिति। आशंसनम् अभीष्टलाभे मनसो व्यापारणम्।

(ण) उदाहरति यथेति। तस्याः मालत्याः।

**प्रतिज्ञाध्यवसायकः ॥ ४८४ ॥ [त]**

यथा मम प्रभावत्या—"वज्रनाभः।

अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया।

लीलयोन्मूलयाम्येव भुवनद्वयमद्य वः॥" (थ)

**विसर्पो यत् समारब्धं**

**कर्मानिष्टफलप्रदम् ॥ ४८५ ॥ [द]**

यथा वेण्याम्—"एकस्य तावत् पाकोऽयम्" इत्यादि (ध)।

**कार्य्यग्रहणमुल्लेखः ॥ ४८६ ॥ [न]**

यथा शाकुन्तले—"राजानं प्रति तापसौ। समिदाहरणाय प्रस्थितावावाम्। इह च अस्मद्गुरोः कण्वस्य साधिदैवत इव शकुन्तलया अनुमालिनीतीरमाश्रमो दृश्यते। न चेदन्यः कार्य्यातिपातः प्रविश्य गृह्यतामतिथिसत्कारः" इति (प)।

---

(त) अध्यवसायमाह प्रतिज्ञेति। प्रतिज्ञा कार्य्यस्य कर्त्तव्यत्वेन दृढतरनिर्देश इत्यर्थ, अध्यवसाय।

(थ) उदाहरति यथेति। प्रद्युम्नस्य वक्षः क्षणेनैव अनया गदया निर्मथ्य सञ्चूर्ण्य लीलया अनायासेन अद्य व युष्माक, व इति अनादरे षष्ठी, युष्मान् अनादृत्य इति भाव। रसातल विहाय भुवनद्वय स्वर्ग भुवञ्च इत्यर्थ, स्वस्य रसातलवासित्वादिति भाव, उन्मूलयामि उत्पाटयामि। अत्र वज्रनाभस्य वक्षोभेदनादिरूपकार्य्ये दृढतरनिर्देशरूपोऽध्यवसाय।

(द) विसर्पमाह विसर्प इति। अनिष्टफलप्रद यत् कर्म समारब्ध प्रक्रान्त स विसर्प।

(ध) उदाहरति यथेति। एकस्य द्रौपदीकेशग्रहस्य पाक फल सङ्ग्रामे बहुराजन्यनिधनरूपमिति भाव। अत्र केशग्रहणम् अनिष्टफलप्रद कर्म।

(न) उल्लेखमाह कार्य्यग्रहणमिति। कार्य्यस्य ग्रहण उल्लेख।

(प) उदाहरति यथेति। समिदाहरणाय काष्ठाहरणाय साधिदैवत इव अधिदेवता अधिष्ठात्री देवता तया सहित इव अनुमालिनीतीर मालिन्या

उत्तेजनमितीष्यते।

स्वकार्य्यसिद्धयेऽन्यस्य

प्रेरणाय कठोरवाक्॥ ४८७ ॥ [फ]

यथा।

"इन्द्रजित्प्रचण्डवीर्य्योऽसि नाम्नैव बलवानसि।

धिक्! धिक्! प्रच्छन्नरूपेण युध्यसेऽस्मद्भयाकुलः॥ (ब)

भर्त्सना तु परीवादः ॥४८८॥

यथा सुन्दराङ्के—"दुर्य्योधन! धिक्! धिक्! सूत! किं कृतवानसि वत्सस्य मे प्रकृतिदुर्ललितस्य पापः पापं विधास्यति" इत्यादि (भ)।

---

नद्यास्तीरे इत्यर्थः। कार्य्यातिपातः कार्य्यस्य व्याघातः। अत्र आतिथ्यरूपकार्य्य-ग्रहणम्।

(फ) उत्तेजनमाह उत्तेजनमिति। स्वकार्य्यस्य सिद्धये अन्यस्य प्रेरणाय प्रवर्त्तनाय कठोरवाक् कटुवाक्यम् उत्तेजनमिति इष्यते।

(ब) उदाहरति यथेति। इन्द्रजिदिति। मेघनादं प्रति लक्ष्मणस्योक्तिः। हे इन्द्रजित्! नाम्नैव न तु कार्य्यत इति भावः प्रचण्डवीर्य्यः प्रचण्डपराक्रमः बलवान् असि भवसि, इन्द्रजिदाख्ययैव तव प्रचण्डत्वं बलवत्त्वञ्च ख्यायते इत्यर्थः, धिक् धिक् त्वां पुनः पुनः इत्यर्थः निन्दामि, "धिक् निर्भर्त्सननिन्दयोः" इत्यमरः। यस्त्वम् अस्मद्भयाकुलः सन् प्रच्छन्नरूपेण अलक्षितरूपेण युध्यसे। यदि तव निर्भयत्वं स्यात् तदावश्यं प्रकाश्ययुद्धे तव वर्त्तनं स्यादिति भावः। अत्र प्रकाश्ययुद्धे इन्द्रजितो वर्त्तनं स्वकार्य्यम्।

(भ) उदाहरति यथेति। वत्सस्य दुःशासनस्य प्रकृतिदुर्ललितस्य प्रकृत्या स्वभावेन दुर्ललितस्य दुर्विलसितस्य, पापः पापात्मा भीम इत्यर्थः, पापम् अनिष्टं वक्षोविदारणरूपमित्यर्थः। अत्र मूर्च्छितदुर्य्योधनरक्षणाय रणात् रथं प्रत्यावर्त्तितवन्तं सूतं प्रति मोहावसाने दुर्य्योधनस्य भर्त्सनम्।

**नीतिः शास्त्रेण वर्त्तनम् ॥४८९॥ (म)**

यथा शाकुन्तले—"दुष्मन्तः। विनीतवेशप्रवेश्यानि तपोवनानि" इति (य)।

**उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा।**
**उपालम्भस्वरूपेण तत् स्यादर्थविशेषणम् ॥४९०॥ (र)**

यथा शाकुन्तले—"राजानं प्रति शाङ्गरवः। आः! कथमिदं नाम किमिदमुपन्यस्तमिति। ननु भवानेव नितरां लोकवृत्तान्ते निष्णातः। (ल)

सतीमपि ज्ञातिकुलैकसंश्रया
जनोऽन्यथा भर्तृमतीं विशङ्कते।
अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः" ॥ (व)

---

(म) नीतिमाह नीतिरिति। शास्त्रेण यथाशास्त्रं वर्त्तनं व्यवहरणं शास्त्रीयक्रमानुष्ठानमित्यर्थः नीतिः।

(य) उदाहरति यथेति। तपोवनप्रवेशे औद्धत्यं त्यजेदिति शास्त्रमतं द्रष्टव्यम्।

(र) अर्थविशेषणमाह उक्तस्येति। उक्तस्य कथितस्य अर्थस्य विषयस्य उपालम्भस्वरूपेण तिरस्काररूपेण अनेकधा बहुधा यत् उत्कीर्त्तनम् उल्लेखः स्यात् तत् अर्थविशेषणं स्यात्। उपालम्भविशेषेण इति पाठे प्रतिकूलोक्तिखण्डनेनेति बोद्धव्यम्।

(ल) उदाहरति यथेति। कथमिदम् उक्तमिति शेषः। उपन्यस्तम् उपस्थापितम्। नितरामतिशयेन। लोकवृत्तान्ते लौकिकव्यवहारे इत्यर्थः। निष्णातः अभिज्ञः।

(व) सतीमिति। जनः लोकः भर्तृमतीं सधवां स्त्रियं ज्ञातिकुलं पितृकुलमित्यर्थः एकः केवलः आश्रयः यस्याः तादृशीं पितृगृहमात्रवासिनीमित्यर्थः, सतीमपि साध्वीमपि, अन्यथा भर्तृमतीम् उपपतियुक्तां, यद्वा सतीमपि असतीं, विशङ्कते

**प्रोत्साहनं स्यादुत्साह-**

**गिरा कस्यापि योजनम्॥ ४९१ ॥ (श)**

यथा बालरामायणे—

"कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि।

तज्जगत्त्रितयं त्रातु तात। ताडय ताडकाम्"॥ (ष)

**साहाय्यं सङ्कटे यत् स्यात्**

**सानुकूल्यं परस्य च॥ ४९२ ॥ (स)**

यथा वेण्या—"कृपं प्रति अश्वत्थामा। त्वमपि तावद्राज्ञः पार्श्ववर्त्ती भव। कृपः। वाञ्छाम्यहमद्य प्रतिकर्त्तुम्" (ह) इत्यादि।

---

सदोषा सम्भावयतीत्यर्थः, अत. कारणात् स्वबन्धुभिः स्वस्य स्त्रिया इत्यर्थ बन्धुभि· पित्रादिभि· प्रिया अप्रिया वा भर्त्तुरिति शेष, प्रमदा नारी "प्रमदा समदे मत्ते स्त्रियामुत्तमयोषिति" इति मेदिनी। परिणेतु पत्यु समीपे इष्यते रक्षितुमिति शेष। अत्र किमिदमुपन्यस्तमिति राज्ञ उक्तौ तन्निर्भर्त्सनरूपेण अाः कथमित्याद्युत्कीर्त्तनस्य बहुधा उक्तत्वात् अर्थविशेषणम्।

(श) प्रोत्साहनमाह प्रोत्साहनमिति। उत्साहगिरा उत्साहसूचकवाक्येन कस्यापि योजनम् उत्तेजन प्रोत्साहनं स्यात।

(ष) उदाहरति कालरात्रीति। स्त्री इति हेतो कि विचिकित्ससि? हन्या न वेति संशयेन तिष्ठसि? हे तात। सप्रेमसम्बोधनमिदम्, इयं राक्षसी कालरात्रिवत् कराला दारुणा, त्रिलोकग्रासिनीत्यर्थ। तत तस्मात् जगता त्रितय त्रिभुवनमित्यर्थ त्रातु रक्षितु ताडका ताडय जहीत्यर्थ। अत्र उत्साहवाक्येन रामस्य उत्तेजनम्।

(स) साहाय्यमाह साहाय्यमिति। सङ्कटे विपदि परस्य सानुकूल्यम् अनुकूलतया यत्, तत् साहाय्य स्यात।

(ह) उदाहरति यथेति। स्पष्टम्। अत्र रणव्यापाररूपे सङ्कटे राज्ञ आनुकूल्यविधानम्।

**अभिमानः स एव स्यात् ॥ ४९३ ॥ (च)**

यथा तत्रैव—"दुर्य्योधनः। मातः! किमप्यसदृशं कृपणं वचस्ते" इत्यादि (क)।

**प्रश्रयादनुवर्त्तनम्।**

**अनुवृत्तिः ॥ ४९४ ॥ (ख)**

यथा शाकुन्तले—"राजा शकुन्तलां प्रति। अयि! तपो वर्द्धते? अनसूया। दाणिं अदिधिविसेसलाहेण" (ग) इत्यादि।

**भूतकार्य्याख्यानमुत्कीर्त्तनं मतम् ॥४९५॥ (घ)**

यथा बालरामायणे—

"अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे।
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः" इत्यादि (ङ)

---

(च) अभिमानमाह अभिमान इति। स एव अभिमान एव।

(क) उदाहरति यथेति। असदृशम् अयोग्य, कृपणं क्षुद्रम्। अत्र मातुराक्षेपेण दुर्य्योधनस्य अभिमानः सूच्यते।

(ख) अनुवृत्तिमाह प्रश्रयादिति। प्रश्रयात् विनयात् अनुवर्त्तनम् अनुसरणं प्रतिवचनादिना सन्तोषणम् अनुवृत्तिः।

(ग) उदाहरति यथेति। दाणिं इति। इदानीमतिथिविशेषलाभेन इति संस्कृतम्। स्पष्टम्। अत्र अनसूयायाः प्रत्युत्तरदाने प्रश्रयः।

(घ) उत्कीर्त्तनमाह भूतेति। भूतस्य वृत्तस्य कार्य्यस्य आख्यानं कथनम् उत्कीर्त्तनं मतम्।

(ङ) उदाहरति यथेति। भवद्देवरे लक्ष्मणे। अत्र सीतां प्रति रामस्य भूतस्य नागपाशबन्धनादेः कार्य्यस्य कथनम्।

**याञ्चा तु क्वापि याञ्चाया:—**
**स्वयं दूतमुखेन वा ॥ ४९६ ॥ (च)**

यथा ।

"अद्यापि देहि वैदेहीं दयालुस्त्वयि राघवः ।
शिरोभिः कन्दुकक्रीडां किं कारयसि वानरान्" ॥ (छ)

**परिहार इति प्रोक्त:**
**कृतानुचितमार्ज्जनम् ॥ ४९७ ॥ (ज)**

यथा ।

"प्राणप्रयाणदुःखार्त्त उक्तवानस्म्यनक्षरम् ।
तत् क्षमस्व विभो ! किञ्च सुग्रीवस्ते समर्पित." ॥ (झ)

---

(च) याञ्चामाह याञ्चेति । स्वयं वा दूतमुखेन क्वापि जने या याञ्चा प्रार्थना सा याञ्चा । स्वयं याञ्चाया उदाहरणम्, "भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते" इत्यादि ।

(छ) दूतमुखेन उदाहरति यथेति । अद्यापीति । रावणं प्रति अङ्गदस्योक्तिरियम् । अद्यापि इदानीमपि वैदेहीं सीतां देहि प्रत्यर्पय, राघवः रामः त्वयि अद्यापि दयावान् अस्तीति शेषः । शिरोभिः दशभिरिति भावः वानरान् किं कथं कन्दुकक्रीडां कारयसि ? वानरास्तव शिरोभिः सङ्ग्रामपतितैः कन्दुकक्रीडां करिष्यन्ति, तत् कथं सहसे इति भावः ।

(ज) परिहारमाह परिहार इति । कृतस्य अनुचितस्य कर्म्मणः मार्जनं क्षमा परिहारः प्रोक्तः ।

(झ) उदाहरति प्राणेति । रामं प्रति वालिन उक्तिः । प्राणप्रयाणे प्राणान्तसमये यत् दुःखं यातना तेन आर्त्तः व्यथितः सन् गतः अनक्षरं दुरक्षरमित्यर्थः उक्तवान् "त्वया तपस्विचाण्डाल" इत्यादि कटुवाक्यं कथितवानस्मि, हे विभो ! तत् क्षमस्व, किञ्च अन्यच्च सुग्रीवः मम कनीयान् भ्राता ते तुभ्यं समर्पितः । अत्र अनुचितकार्य्यस्य पूर्व्वकृतस्य मार्जनम् ।

अवधीरितकर्त्तव्य-

कथनन्तु निवेदनम् ॥ ४९८ ॥ (ञ)

यथा राघवाभ्युदये—"लक्ष्मणः । आर्य्य ! समुद्राभ्यर्थनया गन्तुमुद्यतोऽसि किमेतत्" (ट) ।

प्रवर्त्तनन्तु कार्य्यस्य

यत् स्यात् साधुप्रवर्त्तनम् ॥ ४९९ ॥ (ठ)

यथा वेण्यां—"राजा । कञ्चुकिन् ! देवस्य देवकीनन्दनस्य बहुमानात् वत्सस्य भीमसेनस्य विजयमङ्गलाय प्रवर्त्तन्तां तत्रोपचिताः समारम्भाः" (ड) ।

आख्यानं पूर्व्ववृत्तोक्तिः ॥ ५०० ॥ (ढ)

यथा तत्रैव—"देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः" इत्यादि ।

युक्तिरर्थावधारणम् ॥ ५०१ ॥ (ण)

---

(ञ) निवेदनमाह अवधीरितेति । अवधीरितस्य अवज्ञातस्य अर्थस्य विषयस्य कर्त्तव्यतायाः कर्त्तव्यत्वनिश्चयः निवेदनम् ।

(ट) उदाहरति यथेति । स्पष्टम् । अत्र समुद्राभ्यर्थनार्थं गमनं पूर्व्वमवज्ञातं कथं पुनस्तदर्थं गमनम् इति लक्ष्मणस्य तत्कर्त्तव्यत्वे निश्चयात् तद्वारणार्थं निवेदनम् ।

(ठ) प्रवर्त्तनमाह प्रवर्त्तनमिति । कार्य्यस्य यत् साधुप्रवर्त्तनं तत् प्रवर्त्तनं स्यात् ।

(ड) उदाहरति यथेति । उपचिता वर्द्धिता, समारम्भा समुद्योगाः । अत्र युद्धकार्य्यस्य सम्यक्प्रवर्त्तनम् ।

(ढ) आख्यानमाह आख्यानमिति । पूर्व्ववृत्तस्य पुरा घटितस्य उक्तिः कथनम् आख्यानम् ।

(ण) युक्तिमाह युक्तिरिति । अर्थस्य कार्य्यस्य अवधारणं कर्त्तव्यनिश्चयः युक्तिः ।

यथा तत्रैव—

"यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यत. प्रयातुम्।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वम्" ॥ (त)

**प्रहर्षः प्रमदाधिक्यम् ॥ ५०२ ॥ (थ)**

यथा शाकुन्तले—"राजा। तत् किमिदानीमात्मानं पूर्णमनोरथं नाभिनन्दामि" (द)।

**शिक्षा स्यादुपदेशनम् ॥ ५०३ ॥**

यथा तत्रैव—"सहि। ण जुत्तं अस्समबासिणो जणस्स अकिदसक्कारं अदिधिबिसेसं उज्झिअ सच्छन्ददो गमणम्"(ध) एषाञ्च लक्षणं नाट्यालङ्काराणां समान्यत एकरूपत्वेऽपि भेदेन व्यपदेशो गड्डलिकाप्रवाहेण। एषु (न) च केषाञ्चिद् गुणालङ्कारभावसन्ध्यङ्गविशेषान्तर्भावेऽपि नाटके प्रयत्नतः कर्त्तव्यत्वात् तद्विशेषोक्तिः। एतानि च—

---

(त) उदाहरति यथेति। यदीति। यदि समरं युद्धम् अपास्य त्यक्त्वा मृत्यो भयं नास्ति न भवेत तदा इत समरात् अन्यत अन्यत्र प्रयातु गन्तु युक्तमिति। अथ यदि जन्तोः प्राणिनः मरणम् अवश्यमेव निश्चितमेव तदा किमिति कथं यशः मुधा मृषा मलिनं कुरुध्वम्। अत्र समरस्य कर्त्तव्यताया निश्चय।

(थ) प्रहर्षमाह प्रहर्ष इति। प्रमदस्य प्रकृष्टानन्दस्य आधिक्यं प्रहर्षः।

(द) उदाहरति यथेति। स्पष्टम्। अत्र शकुन्तलाया पुनः प्राप्ता आनन्दातिशयः।

(ध) उदाहरति यथेति। सहीति। "सखि। न युक्तमाश्रमवासिनो जनस्याकृतसत्कारमतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम्" इति संस्कृतम्। स्पष्टम्। अत्र शकुन्तलां प्रति तत्सख्या उपदेशवाक्यम्।

(न) एषामिति। यदि च भूषणादीनि पूर्वोक्तानि नाट्यभूषणहेतुलक्षण-

"पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम् ।
षट्त्रिंशल्लक्षणोपेतमलङ्कारोपशोभितम् ॥
महारसं महाभोगमुदात्तरचनान्वितम् ।
महापुरुषसञ्चारं साध्वाचारं जनप्रियम् ॥
सुश्लिष्टसन्धियोगञ्च सुप्रयोगं सुखाश्रयम् ।
मृदुशब्दाभिधानञ्च कविः कुर्य्यात्तु नाटकम्" ॥ (प) इति ।

मुनिनोक्तत्वात् नाटकेऽवश्यं कर्त्तव्यान्येव ।

वीथ्यङ्गानि वक्ष्यन्ते । ३६४

लास्याङ्गान्याह ।

**गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ।**
**प्रच्छेदकस्त्रिगूढञ्च सैन्धवाख्यं द्विगूढकम् ॥**
**उत्तमोत्तमकञ्चान्यदुक्तप्रत्युक्तमेव च ।**

---

सामान्यधर्मयोगात् नाट्यालङ्कारेऽन्तर्भवितुमर्हन्ति तथाप्येषा भेदकथनं गड्डलिका प्रवाहेण गतानुगतिकन्यायेन इत्यर्थः प्राचीनोक्तरीत्येति भावः । एषु लक्षणनाट्यालङ्कारेषु ।

(प) पञ्चेति । पञ्च सन्धयः मुखादयः यत्र तत्, चत्वारः वृत्तयः कौशिक्यादयः यत्र तत्, चतुःषष्ट्या अङ्गैः पूर्वोक्तैः संयुतं, षट्त्रिंशता लक्षणैः पूर्वोक्तैः उपेतं युक्तम्, अलङ्कारैः 'नाट्यालङ्कारैः पूर्वोक्तैः' उपशोभितं, महान् परिपुष्ट इत्यर्थः रसः शृङ्गारः वीरो वा यत्र तादृशं, महान् भोगः भावादिर्यत्र तादृशं, महासहायं वा, उदात्ता विलासहासादिगुणयुक्ता इति भावः या रचना तया अन्वितं युक्तम्, महापुरुषस्य नायकप्रधानस्य धीरोदात्तस्य इत्यर्थः सञ्चारः स्थितिर्यस्मिन् तथोक्तं, सञ्चारम् इत्यत्र सत्कारम् इति वा पाठः । साधुः सद्भिरनुष्ठेय इत्यर्थः आचारः व्यवहारः यत्र तादृशं, जनप्रियं लोकरञ्जनं, सुश्लिष्टः सन्धेः मुखादेर्योगः समावेशः यस्मिन् तथाभूतं, सुप्रयोगं सुखाभिनयं, सुखाश्रयम् आनन्दनिलयं, मृदूनां सुकोमलानां शब्दानाम् अतिपातः प्रयोगः यस्मिन् तथाभूतं नाटकं कविः कुर्य्यादित्यन्वयः ।

लास्ये दशविधं ह्येतदङ्गमुक्तं मनीषिभिः ॥
५०४ ॥ (फ)

अत्र च।

तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः।
शुष्कं गानं गेयपदम् ॥ ५०५ ॥ (ब)

यथा गौरीगृहे वीणां वादयन्ती मलयवती—
"उत्फुल्लकमलकेसरपरागगौरद्युते! मम हि गौरि अभिवाञ्छितं प्रसिध्यतु भगवति। युष्मत्प्रसादेन" (भ)

स्थितपाठ्यं तदुच्यते।
मदनोत्तापिता यत्र पठति प्राकृतं स्थिता ॥
५०६ ॥ (म)

अभिनवगुप्तपादास्त्वाहुः—"उपलक्षणञ्चैतत्। क्रोधोद्भ्रान्तस्यापि प्राकृतपठनं स्थितपाठ्यम्" इति।

निखिलातोद्यरहितं शोकचिन्तान्विताबला।

---

(फ) गेयपदमिति। गेयपदादीनि दश लास्याङ्गानि मनीषिभिरुक्तानीत्यर्थः।

(ब) गेयपदमाह तन्त्रीति। तन्त्रीभाण्ड वीणायन्त्र पुरस्कृत्य अग्रे कृत्य गृहीत्वेत्यर्थ आसने पुरः अग्रत उपविष्टस्य यत् शुद्ध पवित्र गान तत् गेयपदम्।

(भ) उदाहरति उत्फुल्लमिति। उत्फुल्ल विकसित यत् कमल पद्म तस्य केसरपरागवत् गौरी गौरवर्णा द्युतिर्दीप्तिर्यस्यास्तादृशि! भगवति! गौरि! पार्वति! युष्मत्प्रसादेन भवत्या अनुग्रहेण मम अभिवाञ्छित प्रार्थित प्रसिध्यतु सफलीभवतु।

(म) स्थितिपाठ्यमाह स्थितिपाठ्यमिति। यत्र मदनेन उत्तापिता स्थिता सती प्राकृतं पठति तत् लास्यमित्यर्थः स्थितिपाठ्यम् उच्यते।

अप्रसाधितगात्रं यदासीदासीनमेव तु ॥ (य)
आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च ।
स्त्रीपुंसयोर्विपर्य्यासचेष्टितं पुष्पगण्डिका ॥ (र)
अन्यासङ्गं पतिं मत्वा प्रेमविच्छेदमन्युना ।
वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः ॥ (ल)
स्त्रीवेशधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम् ॥
५०७ ॥ (व)

यथा मालत्याम्—"मकरन्दः । एषोऽस्मि मालती संवृत्तः" ।

कश्चन भ्रष्टसङ्केतः सुव्यक्तकरणान्वितः ।
प्राकृतं वचनं वक्ति यत्र तत् सैन्धवं विदुः ॥
५०८ ॥ (श)

करणं वीणादिक्रिया ।

---

(य) आसीनमाह निखिलेति । शोकेन चिन्तया चान्विता अबला निखिलातोद्यरहित निखिलेन आतोद्येन रहित केनापि वाद्येन न सङ्गतमित्यर्थः अप्रसाधितं अनलङ्कृत गात्र यस्मिन् तत् यथा तथा, यत् यस्मिन्नित्यर्थे अव्ययम् । यस्मिन् गेये इत्यथ आसीत् तिष्ठेत तत् आसीनम् ।

(र) पुष्पगण्डिकामाह आतोद्येति । आतोद्येन वादित्रेण मिश्रित सङ्गतं गेय विविधानि नानाप्रकाराणि छन्दांसि छन्दोबन्धनपूर्वकगीतानि इत्यर्थः तथा स्त्रीपु सयो विपर्य्यासचेष्टित वैपरीत्यविहरणं पुष्पगण्डिका ।

(ल) प्रच्छेदकमाह अन्येति । पतिम् अन्यासङ्गम् अन्यस्याम् आसक्तमित्यर्थः मत्वा प्रेमविच्छेदेन य मन्यु शोक तेन हेतुना स्त्रिया वीणापुरःसर गानं प्रच्छेदक मत ।

(व) त्रिगूढमाह स्त्रीति । स्त्रीवेशधारिणा पुसा श्लक्ष्ण मनोज्ञ नाट्यं नर्त्तनादिचिक त्रिगूढम् ।

(श) सैन्धवमाह कश्चनेति । भ्रष्टसङ्केत सङ्केतस्थाने नायिकाया अगमनात्

चतुरस्रपदं गीतं मुखप्रतिमुखान्वितम्।
द्विगूढ़ं रसभावाढ्यम् ॥ ५०९ ॥ (ष)

उत्तमोत्तमकं पुन
कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरम्।
हावहेलान्वितं चित्रश्लोकबन्धमनोहरम् ५१० (स)
उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत्।
विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते ॥
५११ ॥ (ह)

स्पष्टान्युदाहरणानि—

एतदेव यदा सर्वैः पताकास्थानकैर्युतम्।
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ॥
५१२ ॥ (च)

---

च्युतसङ्केतस्थान इत्यर्थ, सुव्यक्तेन करणेन अन्वितोऽपि कश्चन कोऽपि पुरुष यत्र प्राकृत वचन वक्ति तत् सैन्धव विदु ।

(ष) द्विगूढमाह चतुरस्रपदमिति। चतुरस्राणि सामाजिकमनोहराणीति भाव पदानि यत्र तादृश, यद्वा चतुरस्रपद स्वरग्रामादि पूर्ण, मुखसन्धिप्रतिमुखसन्धिसमन्वित, रसभावाभ्याम् आढ्य युक्त गीत द्विगूढम्।

(स) उत्तमोत्तममाह उत्तमोत्तमकमिति। कोपप्रसादाभ्या जातम, अधिक्षेप तिरस्कार. तद्युक्त, रसोत्तर मरसमित्यर्थ. हावेन भ्रूनेत्रादिविकारेस्खिति लक्षणोक्तेन, हेलया हेलात्यन्तसमालक्ष्यविकार स्यात् स एव चेति लक्षणोक्तेन अन्वित, चित्रेण मनोज्ञेन श्लोकबन्धेन पद्यरचनेन मनोहरम् गीतम् उत्तमोत्तमम्।

(ह) उक्तप्रत्युक्तमाह उक्तीति। उक्तिप्रत्युक्तिभ्या वचनोत्तराभ्या संयुक्तं, सोपालम्भ तिरस्कारव्यञ्जकम्, अलीकवत् मृषावादसहितम् अप्रियवदा, विलासेन अन्वित: युक्त: गीतस्य अर्थः यत्र तादृश, गीतम् उक्तप्रत्युक्तम् उच्यते।

एतदेव नाटकं, यथा बालरामायणम् ।

अथ प्रकरणम् ।

भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।
सापायधर्मकामार्थपरो धीरप्रशान्तकः ॥
५१३ ॥ (क)

विप्रनायकं यथा मृच्छकटिकम् । अमात्यनायकं मालतीमाधवम् । वणिङ्नायकं पुष्पभूषितम् ।

नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ।
तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ।
कितवद्यूतकारादिविटचेटकसङ्कुलः ॥
५१४ ॥ (ख)

---

(च) महानाटकमाह एतदिति । एतत् नाटकमेव सर्वैः पूर्वोक्तैः पताकास्थानकैः दशभिरङ्कैश्च युत धीरा विद्वांसः महानाटकम् ऊचिरे उक्तवन्तः ।

(क) महानाटकमुक्त्वा प्रकरणमाह अथेति । भवेदिति । प्रकरणे वृत्तं वर्णनीयं नायकचरितं, लौकिकं लोकचरित्रमात्रप्रसिद्धमतएव, कविना कल्पितं स्वकपोलरचितमित्यर्थः, न तु पुराणादिप्रसिद्धं, भवेत् । शृङ्गारः अङ्गी प्रधानम् । नायकः धीरप्रशान्तः पूर्वोक्तलक्षणः सापायाः अपायः क्षयः तत्सहिताः ये धर्माः स्वर्गसाधनभूताः कामाः स्त्रीपुत्रादयः अर्थाः भोगसाधनानि धनादीनि तत्परः तदासक्तः न तु अपायरहितमुक्तिकामीति भावः ।

(ख) नायिकेति । क्वापि प्रकरणे नायिका कुलजा कुलीना, क्वापि वेश्या, क्वचिद्वा द्वयं कुलजा वेश्या चेत्यर्थः, तेन हेतुना तस्य प्रकरणस्य त्रयः भेदाः विशेषाः । तत्र तेषु भेदेषु तृतीयो भेदः यत्र कुलजा वेश्या च नायिका इति

कुलस्त्री पुष्पभूषिते। वेश्या तु रङ्गदत्ते। द्वे अपि मृच्छकटिकायाम्। अस्य नाटकप्रकृतित्वात् (ग)। शेषं नाटकवत्।

अथ भाणः।

भाणः स्याद्धूर्त्तचरितो नानावस्थान्तरात्मकः।
एकाङ्क एक एवात्र निपुणः पण्डितो विटः॥
रङ्गे प्रकाशयेत् स्वेनानुभूतमितरेण वा।
सम्बोधनोक्तिप्रत्युक्ती कुर्य्यादाकाशभाषितैः॥
सूचयेद्वीरशृङ्गारौ शौर्य्यसौभाग्यवर्णनैः।
तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च॥

५१५॥ (घ)

---

भाव। कितव धूर्त्त द्यूतकार, आदिपदेन सभिकादीना ग्रहण, तथा विट पूर्वोक्तलक्षण तथा चेटक एते सङ्कुल व्याप्त।

(ग) अस्येति। "विना विशेष सर्वेषा लक्ष्म नाटकवन्मतम" इत्युक्ते अस्य प्रकरणस्य नाटकमेव प्रकृतिर्मूलकारण यस्य तथोक्त तस्य भाव तस्मात्।

(घ) भाणमाह अथेति। भाण इति। धूर्त्तस्य नायकस्य चरित यत्र स, नानाविधम् अवस्थान्त दशाभेद. आत्मा स्वरूप यस्य तादृश, तथा एकाङ्क एकेनैव अङ्केन समापनीय इत्यर्थ, भाण. स्यात। अत्र एक एव निपुण: चतुर पण्डित: विट. स्वेन आत्मना इतरेण वा अनुभूत वस्तु रङ्गे नाट्यशालाया प्रकाशयेत्। आकाशभाषितै सम्बोधनेन उक्तिप्रत्युक्ती कुर्य्यात। शौर्य्यसौभाग्यवर्णनै वीरशृङ्गारौ रसौ शौर्य्यवर्णनेन वीरं, सौभाग्यवर्णनेन शृङ्गारमित्यर्थ. सूचयेत्। तत्र भाणे इतिवृत्तम् उत्पाद्य कविभि: कल्पनीय प्रायेण भारती वृत्ति., मुख निर्वहणस्य एतौ सन्धी, तथा लास्याङ्गानि दशापि प्रयोज्यानीति शेष।

तत्र आकाशभाषितरूपं परवचनमपि स्वयमेवानुवदन्नुत्तरप्रत्युत्तरे कुर्य्यात्। शृङ्गारवीररसौ च सौभाग्यशौर्य्यवर्णनया सूचयेत्। प्रायो भारती कौशिक्यपि वृत्तिर्भवति। लास्याङ्गानि गेयपदादीनि। उदाहरणं लीलामधुकरः।

अथ व्यायोगः।

ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः।
हीनो गर्भविमर्षाभ्यां नरैर्बहुभिराश्रितः॥
एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः।
कौशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः॥
राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः।
हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः॥
५१६॥ (ङ)

यथा सौगन्धिकाहरणम्।

अथ समवकारः।

वृत्तं समवकारे तु ख्यातं देवासुराश्रयम्।
सन्धयो निर्विमर्षास्तु, त्रयोऽङ्कास्तत्र चादिमे॥
सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत् पुनः।
नायका द्वादशोदात्ताः प्रख्याता देवदानवाः॥

---

(ङ) व्यायोगमाह अथेति। ख्यातेतिवृत्त इति। ख्यातं पुराणादिषु प्रसिद्धम् इतिवृत्तं यस्य तादृश। गर्भविमर्षाभ्या सन्धिभ्या हीनः गर्भविमर्षसन्धिरहित इत्यर्थं। अस्त्रीनिमित्तसमरोदय स्त्रीनिमित्तं विना समरस्य सङ्ग्रामस्य उदयः उपस्थितिर्यस्मिन् तथाभूत.। अन्यत् सुगमम्।

फलं पृथक् पृथक् तेषां वीरमुख्योऽखिलो रसः।
वृत्तयो मन्दकौशिक्यो नात्र विन्दुप्रवेशकौ॥
वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश।
गायत्र्युष्णिङ्मुखान्यत्र छन्दांसि विविधानि च॥
त्रिशृङ्गारस्त्रिकपटः कार्य्यश्चायं त्रिविद्रवः।
वस्तु द्वादशनाड़ीभिर्निष्पाद्यं प्रथमाङ्कगम्॥
द्वितीयेऽङ्के च तिसृभिर्द्वाभ्यामङ्के तृतीयके॥
५१७॥ (च)

नाड़िका घटिकाद्वयमुच्यते। विन्दुप्रवेशकौ च नाटकोक्तावपि नेह विधातव्यौ।

तत्र।

धर्मार्थकामैस्त्रिविधः शृङ्गारः, कपटः पुनः।
स्वभाविकः कृत्रिमश्च दैवजो, विद्रवः पुनः॥

---

(च) समवकारमाह अथेति। वृत्तमिति। देवासुराश्रय देवासुरसम्बद्धम्। निर्विमर्षा विमर्षरहिता सन्धय चतुर्थसन्धि विना चत्वार. सन्धय' प्रयोज्या इत्यर्थ। अङ्का परिच्छेदा त्रय। तत्र आदिमे अङ्के द्वौ सन्धी मुखप्रतिमुखे इति भावः, अन्त्ययो' द्वितीयतृतीययोरङ्कयोरित्यर्थ एक. एक. सन्धि गर्भः निर्वहणश्च इत्यर्थ भवेत्। उदात्ता: धीरोदात्ता। तेषा नायकाना पृथक् पृथक् भिन्न भिन्नं फलम्। अखिल. समग्रो रस. वीरमुख्य' वीररस एव प्रधानम् अन्ये अङ्गानीति भावः। षडक्षरा वृत्तिर्गायत्री सप्ताक्षरा वृत्तिरुष्णिक् ततप्रभृतीनि। मन्दकौशिक्य. मन्दा कौशिकी यासु ता: प्रायेण कौशिकीहीना इत्यर्थ। द्वादशनाडीभि. द्वादशभि. घटिकाभि. प्रथमाङ्कग प्रथमाङ्कनिविष्ट वस्तु निष्पाद्य सम्पादनीयम्। द्वितीयेऽङ्के तिसृभि: नाडीभि तथा तृतीये अङ्के द्वाभ्या नाड़ीभ्या तत्रत्यं वस्तु निष्पाद्यमिति शेष.।

अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः ॥

५१८ ॥ (छ)

अत्र शास्त्राविरोधेन कृतो धर्मशृङ्गारः। अर्थलाभार्थकल्पितः अर्थशृङ्गार । प्रहसनशृङ्गारः कामशृङ्गारः। तत्र कामशृङ्गारः प्रथमाङ्क एव। अन्ययोस्तु न नियम इत्याहुः। चेतनाचेतना गजादयः। समवकीर्य्यन्ते (ज) बहवोऽर्था अस्मिन्निति समवकारः । यथा समुद्रमथनम्।

अथ डिमः ।

मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
उपरागैश्च भूयिष्ठो डिमः ख्यातेऽतिवृत्तकः ॥
अङ्गी रौद्ररसस्तत्र सर्वेऽङ्गानि रसाः पुनः ।
चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ॥
नायका देवगन्धर्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोड़शात्यन्तमुद्धताः ॥
वृत्तयः कौशिकीहीना निर्विमर्षाश्च सन्धयः ।
दीप्ताः स्युः षड्रसाः शान्तहास्यशृङ्गारवर्जिताः ॥

५१९ ॥ (झ)

---

(छ) शृङ्गारस्य कपटस्य विद्रवस्य च वैविध्य दर्शयति तत्रेति। धर्माथेति। शृङ्गार, धर्मार्थकामैः त्रिविध । कपट स्वाभाविक कृत्रिम दैवजः दैवेन जनित । विद्रव शङ्का-भय त्रासकृत, सम्भ्रम, अचेतनकृत चेतनकृत तथा चेतनाचेतनोभयकृत इति त्रिविध ।

(ज) समवकीर्य्यन्ते सम्यक् प्रयुज्यन्ते इत्यर्थ ।

(झ) डिममाह अथेति। उपरागै. चन्द्रसूर्य्यादीना ग्रासविशेषै. भूयिष्ठ.

अत्रोदाहरणञ्च—"त्रिपुरदाहः" इति महर्षिः।

अथ ईहामृगः।

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्त्तितः।
मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा॥
नरदिव्यावनियमौ नायकप्रतिनायकौ।
ख्यातौ धीरोद्धतावन्यो गूढ़भावादयुक्तकृत्॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः।
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत्॥
पताकानायका दिव्या मर्त्त्या वापि दशोद्धताः।
युद्धमानीय संरम्भं परं व्याजान्निवर्त्तते॥
महात्मानो बधप्राप्ता अपि बध्याः स्युरत्र नो॥
एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः।
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे॥

५२०॥ (ञ)

---

बहुल। ख्यात पुराणादिप्रसिद्धम् इतिवृत्त यस्य तादृश। दीप्ता उज्ज्वला, विभावादिसामग्रीबलेन झटिति प्रतीयमाना इति भाव। अन्यत् स्पष्टम्।

(ञ) ईहामृगमाह अथेति। मिश्रवृत्त ख्याताख्यातेतिवृत्त। अनियमौ नियमवर्जितौ क्वचित नरो नायक, प्रतिनायको वा, क्वचित् दिव्यः नायक, प्रतिनायको वा, इति नायकप्रतिनायकयोर्नियमो नास्तीति भाव। गूढभावात् गोपनभावात् अयुक्तकृत् अनुचितकार्य्यकारीत्यर्थ। अपहारादिना बलात्कारादिना, आदिपदेन छलादिपरिग्रह। परं शत्रु प्रतिनायकमित्यर्थः, सरम्भ क्रोधम्, आनीय प्रापय्य, युद्धं कर्त्तुमिति शेषः, व्याजात् छलात्। बधप्राप्ता. बधप्राप्तियोग्या

मिश्रं ख्याताख्यातम्। अन्यः प्रतिनायकः। पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश। नायको मृगवदलभ्यां नायिकामत्र ईहते वाञ्छतीति ईहामृगः। यथा कुसुमशेखरविजयादि।

अथ अङ्कः।

उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः।
रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम्॥
प्रख्यातमितिवृत्तञ्च कविर्बुद्ध्या प्रपञ्चयेत्।
भाणवत् सन्धिवृत्ताङ्गान्यस्मिन् जयपराजयौ॥
युद्धञ्च वाचा कर्त्तव्यं निर्वेदवचनं बहु॥
५२१॥ (ट)

इमञ्च केचित्—"नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थम् उत्सृष्टिकाङ्कनामानम्" आहुः। अन्ये तु 'उत्क्रान्ता विलोमरूपा सृष्टिर्यत्र" इति उत्सृष्टिकाङ्कः। यथा शर्मिष्ठाययातिः।

अथ वीथी।

वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते।

---

अपीत्यर्थः। "निवर्त्तते" इत्यत्र निवर्त्तयेदिति पाठे परं युद्धस्थानमानीय सरम्भं निवर्त्तयेदित्यर्थः। महात्मान इति प्रतिनायकानां वध्ये पुराणादिप्रसिद्धे स न वर्णनीय इति भावः। अन्यत् सुगमम्।

(ट) अङ्कमाह अथेति। उत्सृष्टिकाङ्कः अङ्कस्य नामान्तरमेतत्। प्रपञ्चयेत् विस्तारयेत्। प्राकृताः सामान्याः नातिमहान्त इत्यर्थः। स्थायी स्थिरतरः। प्रपञ्चयेत् बहुलीकुर्य्यात्। भाणवदिति भाणे यथा मुखनिर्वहणे सन्धी कौशिकी, भारत्यौ वृत्ती, दश लास्याङ्गानि, तथात्रापीत्यर्थः, अस्मिन् अङ्के जयपराजयौ वर्णनीयौ। अन्यत् स्पष्टम्।

आकाशभाषितैरुक्तै श्चित्रां प्रत्युक्तिमाश्रित: ॥
सूचयेद्भूरिशृङ्गारं किञ्चिदन्यान् रसानपि ।
मुखनिर्वहणे सन्धौ अर्थप्रकृतयोऽखिला: ॥
५२२ ॥ (ठ)

कश्चिदित्युत्तमो मध्यमोऽधमो वा। शृङ्गारबहुलत्वाच्च अस्या: कौशिकीवृत्तिबहुलत्वम् ।

अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिण: ।
उद्घात्यकावलगिते प्रपञ्चस्त्रिगतं छलम् ॥
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि च तानि तु ॥
५२३ ॥ (ड)

तत्र उद्घात्यकावलगिते प्रस्तावनाप्रस्तावे सोदाहरणे लक्षिते ।

मिथो वाक्यमसद्भूतं
प्रपञ्चो हास्यकृन्मत: ॥ ५२४ ॥ (ढ)

यथा विक्रमोर्वश्याम् । वडभीस्थविदूषकचेट्योरन्योन्य-वचनम् ।

---

(ठ) वीथीमाह अथेति । अत्र वीथ्याम् एक अद्वितीय इत्यर्थ कश्चित् नायक इति शेष. कल्प्यते निबध्यते । अखिला समग्रा पञ्चेति भाव अर्थप्रकृतय. बीजादय प्रयोज्या इति शेष ।

(ड) अस्या इति । अस्या' वीथ्या । अन्यत् स्पष्टम् ।

(ढ) प्रपञ्चमाह मिथ इति । मिथ: परस्पर हास्यकृत् हासजनकम् । असद्भूतं मिथ्याभूत वाक्य प्रपञ्च. ।

त्रिगतं स्यादनेकार्थ-
योजनं श्रुतिसाम्यतः॥ ५२५ ॥ (ण)

यथा तत्रैव—"राजा।

सर्वक्षितिभृतां नाथ! दृष्टा सर्वाङ्गसुन्दरी।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया" ॥ (त)

नेपथ्ये तत्रैव प्रतिशब्दः। "राजा। कथं दृष्टेत्याह"। अत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितम्। "नटादित्रितयविषयमेवेदम्" (थ) इति कश्चित्।

प्रियाभैरप्रियैर्वाक्यै-
र्विलोभ्य छलनाच्छलम्॥ ५२६ ॥ (द)

यथा वेण्यां—"भीमार्जुनौ।

कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः।

---

(ण) त्रिगतमाह त्रिगतमिति। श्रुतिसाम्यतः शब्दसादृश्यात् अनेकार्थयोजनं बह्वर्थकल्पनं त्रिगतं स्यात्।

(त) उदाहरति यथेति। सर्वेति। उर्वशीविरहितस्य पुरूरवस उक्तिरियम्। हे सर्वक्षितिभृतां सर्वपर्वतानां नाथ। पर्वतश्रेष्ठ। अस्मिन् रम्ये वनान्ते वनभूमौ मया विरहिता सर्वाङ्गसुन्दरी रामा उर्वशी त्वया दृष्टा? अतास्य वाक्यस्य प्रतिध्वनेश्च साम्यात् दृष्टेति वाक्यस्य प्रश्नरूप एकोऽर्थः पुनर्दृष्टेति प्रतिध्वनिः प्रतिवचनरूपो अपरोऽर्थः इति अनेकार्थयोजनं बोद्धव्यम्।

(थ) त्रिगतपदव्युत्पत्तिमाह नटादीति। आदिना नटीप्रभृतिनटयोर्ग्रहणम्। इदं त्रिगतम्।

(द) छलमाह प्रियाभैरिति। प्रियाभैः प्रियसदृशैः अप्रियैः वाक्यैः विलोभ्य छलना परप्रतारणा छलम्।

राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम्
क्वास्ते दुर्य्योधनोऽसौ कथयतु न रुषा द्रष्टुमभ्यागतौ स्वः" ॥ (ध)

अन्ये त्वाहुश्छलं किञ्चित् कार्य्यमुद्दिश्य कस्यचित्।
उदीर्य्यते यद्वचनं वञ्चना हास्यरोषकृत् ॥ (न)
वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत् ॥
५२७ ॥ (प)

द्वित्र्युपलक्षणं यथा—

"भिक्षो। मांसनिषेवणं प्रकुरुषे? किन्तेन मद्यं विना
मद्यञ्चापि तव प्रियम्? प्रियमहो! वाराङ्गनाभिः सह।
वेश्याप्यर्थरुचिः कुतस्तव धनम्? द्यूतेन चौर्य्येण वा
चौर्य्यद्यूतपरिग्रहोऽपि भवतः? नष्टस्य कान्या गतिः" ॥ (फ)

---

(ध) उदाहरति यथेति। कर्त्तेति। द्यूतच्छलानां द्यूतक्रीडारूपकपटानां कर्त्ता, जतुमय जतुप्रचुर, प्रचरार्थे मयट्। यत् शरणं गृहं, "शरणं गृहरक्षित्रोः" इत्यमरः। तस्य उद्दीपनं विरोचनेद्वारा जतुगृहदाहक इत्यर्थः, अभिमानी अहङ्कारवान्, कृष्णाया द्रौपद्याः केशानाम् उत्तरीयस्य च व्यपनयने आकर्षणे पटुः नियोजयिता इत्यर्थः; पाण्डवाः युधिष्ठिरादयः यस्य दासाः किङ्कराः, द्यूतजयेन दासत्वेन सम्भाषिता इति भावः। दुःशासनादेः दुःशासनप्रभृतिकस्य अनुजशतस्य कनिष्ठभ्रातृशतस्य गुरुः, अङ्गराजस्य कर्णस्य मित्रं बन्धुः, सः प्रसिद्धः असौ राजा दुर्य्योधनः क कुत्र आस्ते तिष्ठति कथयत, यूयमिति शेषः। रुषा क्रोधेन तं द्रष्टुं साक्षात्कर्त्तुं न अभ्यागतौ उपस्थितौ स्वः भवावः, आवामिति शेषः। भृत्यान् प्रति उक्तिरियम्।

(न) अन्ये त्विति। कस्यचित् किञ्चित् कार्य्यमुद्दिश्य वञ्चनाहास्यरोषकरं यत् वचनम् उदीर्य्यते कथ्यते अन्ये पण्डितास्तु तत् छलम् आहुः कथयन्ति।

(प) वाक्केलिमाह वाक्केलिरिति। द्वे वा तिस्रो वा प्रत्युक्तयः प्रतिवचनानि साध्यः यः हास्यसम्बन्धः स वाक्केलिर्भवेत्।

(फ) उदाहरति यथेति। भिक्षोइति। हे भिक्षो! मांसनिषेवणं मांसभोजनं

केचित् "प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निवृत्तिर्वाकेलि." इत्याहुः। अन्ये च "अनेकस्य प्रश्नस्यैकमुत्तरम्"।

अन्योन्यवाक्याधिक्योक्तिः
स्पर्द्धयाधिबलं मतम् ॥ ५२८ ॥ (ब)

यथा मम प्रभावत्यां—"वज्रनाभः।

अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया।
लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः॥ (भ)

प्रद्युम्नः। अरेरे असुरापसद! (म) अलममुना बहुप्रलापेन मम खलु।

अद्य प्रचण्डभुजदण्डसमर्पितोरु-
कोदण्डनिर्गलितकाण्डसमूहपातैः।

---

प्रकुरुषे? मद्य विना तेन मांसेन किं? मद्यसहितमांसभोजनमेव रुचिकरमित्यर्थः। अहो। मद्यञ्चापि तव प्रियम्? प्रियं सत्यं, परन्तु वाराङ्गनाभिः सह, विना वेश्याभिर्मद्यमपि न मदकरमित्यर्थः। वेश्या वाराङ्गना अपि अर्थरुचि अर्थाभिलाषिणो, त्वन्तु भिक्षु, कुतस्तव धनम्? आयातीति शेष.। द्यूतेन चौर्य्येण वा। भवत. चौर्य्यद्यूतयोरपि परिग्रह. स्वीकार.? वर्त्तते इति शेष.। नष्टस्य आचारभ्रष्टस्य अन्या गति. का? न कापीत्यर्थः।

(ब) अधिबलमाह अन्योन्येति। स्पर्द्धया अहङ्कारेण अन्योन्य परस्पर वाक्यस्य आधिक्येन अतिशयेन उक्ति. अधिबल मतम्।

(भ) उदाहरति यथेति। अस्येति। अस्य प्रद्युम्नस्य वक्ष क्षणेनैव अनया हस्तस्थितयेति भाव गदया निर्मथ्य चूर्णयित्वेत्यर्थः लीलया अवहेलया अद्य व. युष्माकं युष्माननादृत्येत्यर्थः अनादरे षष्ठी। भुवनद्वय स्वर्ग पृथिवीञ्च इत्यर्थः. स्वस्य पातालवासित्वादिति भावः उन्मूलयिष्यामि उत्पाटयिष्यामि।

(म) असुरापसद। असुराधम।

(य) अद्येति। प्रचण्डभुजदण्डे भीषणबाहुदण्डे समर्पितात् निहितात्

आस्तां समस्तदितिजक्षतजोक्षितेयं
क्षोणी क्षणेन पिशिताशनलोभनीया" ॥ (य)

**गण्डं प्रस्तुतसम्बन्धि**
**भिन्नार्थं सत्वरं वचः ॥ ५२९ ॥ (र)**

यथा वेण्यां—"राजा।
अध्यासितुं तव चिराज्जघनस्थलस्य
पर्य्याप्तमेव करभोरु! ममोरुयुग्मम्" ॥ (ल)

अनन्तर प्रविश्य—"कञ्चुकी। देव! भग्नं भग्नम्" इत्यादि। अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे सम्बन्धे सम्बद्धम्।

**व्याख्यानं स्वरसोक्तस्या-**
**न्यथावस्यन्दितं भवेत् ॥ ५३० ॥ (व)**

यथा छलितरामे—"सीता। जाद! कल्लं क्खु अओज्झाए गंतव्वं तहिं सो राआ विणएण पणमिदव्वो"। लवः।

---

उरुकोदण्डात् महाधनुष निर्गलितानां निर्गतानां काण्डानां शराणां समूहस्य पाते, क्षेपे इयं क्षोणी पृथ्वी क्षणेन अत्यल्पकालेन समस्तानां दितिजानां दैत्यानां क्षतजैः रुधिरैः उक्षिता अभिषिक्ता सती पिशिताशनानां मांसभोजिनां लोभनीया अभिलषणीया हर्षवर्द्धिनीत्यर्थः, आस्तां भवतु। वसन्ततिलकं वृत्तम्।

(र) गण्डमाह गण्डमिति। प्रस्तुतसम्बन्धि प्रकृतार्थसम्बद्धं भिन्नार्थं पृथगर्थं सत्वरं त्वरान्वितं वचः गण्डम्।

(ल) उदाहरति यथेति। अध्यासितुमिति। भानुमतीं प्रति दुर्य्योधनवचनम्। हे करभोरु! मम ऊरुयुग्मं चिरात् चिरकालं व्याप्य तव जघनस्थलस्य अध्यासितुम् अधिष्ठातुं पर्य्याप्तमेव समुचितमेव। अत्र रथकेतनभङ्गरूपभिन्नार्थं वचनं प्रस्तुतस्य दुर्य्योधनोरुभङ्गरूपस्य अर्थस्य सूचकम्।

(व) अवस्यन्दितमाह व्याख्यानमिति। स्वरसोक्तस्य स्वभावत उक्तस्य वाक्यस्य अन्यथा व्याख्यानम् अवस्यन्दितं भवेत्।

"अथ किमावाभ्यां राजोपजीविभ्यां भवितव्यम्"। सीता। "जाद। सो तुम्हाणं पिदा"। लवः। "किमावयोः रघुपतिः पिता?" सीता। (साशङ्कम्) 'मा अखधा सङ्कध्रं णं क्खु तुम्हाण सअलाए ज्जेव पुहवीएत्ति"। (श)

प्रहेलिकैव हास्येन
युक्ता भवति नालिका ॥ ५३१ ॥ (ष)

सवरणकार्य्युत्तरं प्रहेलिका। यथा रत्नावल्याम्—
"सुसङ्गता। सहि। जस्स किदे तुम आअदा सो इदो ज्जेव चिट्ठदि"। सागरिका। "कस्स किदे अहं आअदा"? सुसङ्गता। "णं चित्तफलअस्स"। अत्र त्वं राज्ञः कृते आगतेत्यर्थः सवृत्तः (स)।

असत्प्रलापो यद्वाक्यमसम्बद्धं तथोत्तरम्।
अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः॥
५३२ ॥ (ह)

(श) उदाहरति यथेति। जादेति। "पुत्र। कल्य खलु अयोध्याया गन्तव्य तर्हि स राजा विनयेन प्रणयितव्य" इति संस्कृतम्। जादेति। "पुत्र। स युष्माक पिता" इति संस्कृतम्। मा इति। "मा अन्यथा शङ्केथा न खलु युवयो. सकलाया एव पृथिव्या." इति संस्कृतम्। अत्र स्वभावोक्तस्य स युवयो' पितेति वाक्यस्य सकलाया. पृथिव्या इत्यनेन पितृशब्दस्य पालकरूपत्वे न अन्यथा व्याख्यानम्।

(ष) नालिकामाह प्रहेलिकेवेति। हास्येन युक्ता प्रहेलिका एव नालिका भवति।

(स) उदाहरति यथेति। सहीति। "सखि। यस्य कृते त्वमागता स इत एव तिष्ठति" इति संस्कृतम्। कस्स इति। 'कस्य कृते अहमागता" इति संस्कृतम्। णं इति। "ननु चित्रफलकस्य" इति संस्कृतम्। अत्र राज्ञ. कृते त्वमागतेति उत्तर सवृत्तम्।

तत्राद्यं (च) यथा मम प्रभावत्याम—"प्रद्युम्नः (सहकार-वल्लीमवलोक्य सानन्दम्) अहो कथमिहैव।

अलिकुलमञ्जुकेशी परिमलबहुला रसावहा तन्वी।
किशलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे" ॥(क)

एवमसम्बद्धोत्तरेऽपि। तृतीय यथा वेण्या दुर्योधन प्रति गान्धा. ीवाक्यम्।

**व्याहारो यत् परस्यार्थे**
**हास्यक्षोभकरं वचः ॥ ५३३ ॥ (ख)**

यथा मालविकाग्निमित्रे। लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति—"विदूषकः। मा दाव उपदेससुध्दा गमिस्ससि" इत्युपक्रमेण। दासः। विदूषकं प्रति। "आर्य्य! उच्यता यस्त्वया क्रमभेदो लक्षितः"। विदूषकः। "पढमं वह्मण-पूआ भोदि सा इमाए लङ्घिदा" (ग)। मालविका। "स्मयते"

---

(छ) असतप्रलापमाह असत्पलाप इति। असम्बद्ध पूर्वापरसम्बन्धरहितं यत् वाक्य तथा उत्तर यच्च अगृह्णत हितवाक्यमशृण्वत इत्यर्थं मूर्खस्य पुर. अग्रत' कृत वच असौ असतप्रलाप।

(च) आद्यम् असम्बद्ध वाक्यमित्यर्थ'।

(क) अलीति। अलिकुल भ्रमरसमूह तद्वत मञ्जुकेशी मनोहरकेशा, परिमल सौरभ तद्बहुला अतिसौरभशालिनीत्यर्थ, रसम् अनुरागम् आवहतीति तथोक्ता अत्यनुरागवतीत्यर्थ, तन्वी कृशाङ्गी, किशलय पल्लव तद्वत् पेशल' कोमल पाणिर्यस्यास्तादृशी, कोकिलवत् कलभाषिणी मधुरभाषिणी मे मम प्रियतमा अतिप्रेयसी। अत्र सहकारलताया स्वप्रियाबुद्धिरसम्बद्धा।

(ख) व्याहारमाह व्याहार इति। परस्य अर्थे निमित्त यत् हास्यक्षोभकरं वच असौ व्याहार।

(ग) उदाहरति यथेति। मा इति। "मा तावदुपदेशसुग्धा गमिष्यसि" इति संस्कृतम्। पढम इति। "प्रथमं ब्राह्मणपूजा भवति सा अनया लङ्घिता" इति संस्कृतम्।

इत्यादिना नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन ह्रासलोभकारिणा वचसा व्याहारः ।

दोषा गुणा गुणा दोषा
यत्र स्युर्मृदवं हि तत् ॥ ५३४ ॥ (घ)

क्रमेण यथा—

"प्रिय । जीवितता क्रौर्य्यं निःस्नेहत्वं कृतघ्नता ।
भूयस्त्वद्दर्शनादेव ममैते गुणतां गता. ॥ (ङ)
तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया ।
सुखैकतायनं जातं दुःखायैव ममाधुना" ॥ (च)

इति चाङ्गानि नाटकादिषु सम्भवन्त्यपि वीथ्यामवश्यं विधेयानि । विस्पष्टतया नाटकादिषु विनिविष्टान्यपीहोदाहृतानि वीथ्यौ च । नानारसानामत्र मालारूपतया स्थितत्वाद्वीथीयम् । यथा मालविका ।

---

(घ) मृदवमाह दोषा इति । यत्र वाक्ये दोषा गुणा, गुणा दोषाश्च स्युः तत् मृदवम् ।

(ङ) उदाहरति प्रियेति । हे प्रिय ! जीवितता त्वद्विरहे जीवनमित्यर्थः क्रौर्य्यं निष्ठुरता, निःस्नेहत्वं स्नेहशून्यता, तथा कृतघ्नता उपकारिणोऽपकारकरणं देही जीवनस्य मित्रभूतः तव विरहे देहे जीवनस्थितिरतीव क्लेशवहा, तस्मात् तदानीं जीवनस्य देहादपगमः श्रेयान् नो चेत् तस्य क्रौर्य्यादिकमवश्यवक्तव्यमिति भावः । भूयः पुनः त्वद्दर्शनात् तव दर्शनं प्राप्येत्यर्थः, मम एते जीवनस्य क्रौर्य्यादयः गुणताम् अनुकूलतां गताः । अत्र दोषाणां गुणत्वम् ।

(च) तस्या इति । बन्धुं प्रति नायकस्योक्तिरियम् । तस्याः कान्तायाः यौवनश्रिया तारुण्यलक्ष्म्या भूषितं विराजितं तत् रूपसौन्दर्य्यं रूपमाधुर्य्यं मम सुखैकतायनं सुखमात्राधारं यत् जातम् अधुना विरहे इत्यर्थः, तत् दुःखाय एव दुःखप्राप्तये एव । अत्र गुणानां दोषत्वम् ।

अथ प्रहसनम्।

भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम्।
भवेत् प्रहसनं वृत्तं निन्द्यानां कविकल्पितम् ॥
५३५ ॥ (छ)

अत्र नारभटी नापि विष्कम्भकप्रवेशकौ।
अङ्गी हास्यरसस्तत्र वीथ्यङ्गानि स्थितिर्न वा।
तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः ॥५३६॥ (ज)
एको यत्र भवेत् धृष्टो हास्यं तच्छुद्धमुच्यते ॥
५३७ ॥ (झ)

यथा कन्दर्पकेलि।

आश्रित्य कञ्चन जनं सङ्कीर्णमिति तद् विदुः ॥
४३८ ॥ (ञ)

यथा धूर्त्तचरितम्।

---

(छ) प्रहसनमाह भाणेति। भाणवत् भाण इव भाणे यथा मुख निर्वहण च सन्धी, सन्ध्यङ्गानि च बहूनि, लास्याङ्गानि च दश, एकोऽङ्क, तथात्रापीति भाव।

(ज) तत्र विशेषमाह अत्रेति। अत्र प्रहसने आरभटी वृत्तिर्न प्रयोज्येति शेष। वीथ्यङ्गाना स्थितिरवस्थान न वा नैव, अथवा वीथ्यङ्गाना स्थिति नियतेत्यर्थ। अत्र प्रहसने तपस्व्यादिषु मध्ये कश्चित् नायको वाच्य। अत्र भगवच्छब्देन सन्न्यासी प्रोच्यते। अन्यत् सुगमम्।

(झ) प्रहसनस्य भेदत्रय वक्तुमारभते एक इत्यादि। यत्र एक मुख्य नायक इत्यर्थ धृष्ट प्रगल्भ भवेत तत् हास्य प्रहसन, शुद्धम् उच्यते।

(ञ) आश्रित्येति। कञ्चन जन धृष्टभिन्न नायकमाश्रित्य इति भाव. यत् हास्य प्रहसन, क्रियते तत् सङ्कीर्णं विदु।

वृत्तं बहूनां धृष्टानां सङ्कीर्णं केचिदूचिरे ।
तत् पुनर्भवति द्व्यङ्कमथवैकाङ्कनिर्मितम् ॥
५३९ ॥ (ट)

यथा नटकमेलकादि । मुनिस्त्वाह ।
"वेश्याचेटनपुंसकविटधूर्त्ता बन्धकी च यत्र स्युः ।
अविकृतवेशपरिच्छदचेष्टितकरणन्तु सङ्कीर्णम्" ॥ (ठ) इति ।

विकृतन्तु विदुर्यत्र षण्डकञ्चुकितापसाः ।
भुजङ्गचारणभटप्रभृतेर्वेशवाग्युताः ॥५४०॥ (ड)

इदन्तु सङ्कीर्णेनैव गतार्थमिति मुनिना पृथग्नोक्तम् ।
अथोपरूपकाणि । तत्र ।

नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका ।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ॥
स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताऽथवा ।
नवानुरागा कन्यात्र नायिका नृपवंशजा ॥
सम्प्रवर्त्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः ।

---

(ट) वृत्तमिति । यत्र बहूनां धृष्टानां वृत्तं चरितं केचित् सङ्कीर्णम् ऊचिरे उक्तवन्तः, तत् सङ्कीर्णप्रहसनं द्व्यङ्कम् अङ्कद्वयघटितं वा एकेनैव अङ्केन विनिर्मितं भवति ।

(ठ) वेश्येति । यत्र प्रहसने वेश्यादीनां वर्णनं तथा तेषामविकृतानां यथास्थितानामिति भावः, वेशानां परिच्छदानां चेष्टितानाञ्च करणम् अनुकरणमित्यर्थः, तत् सङ्कीर्णम् ।

(ड) विकृतमिति । यत्र षण्डकञ्चुकितापसाः भुजङ्गस्य विटस्य चारणस्य नटस्य भटादेश्च वेशयुक्ताः वचनयुक्ताश्च भवेयुः तत् हास्यं प्रहसनं, विकृतं विदुः ।

देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः।
वृत्तिः स्यात् कौशिकी स्वल्पविमर्षाः सन्धयः पुनः
॥ ५४१ ॥ (ढ)

द्वयोर्नायकनायिकयोः। यथा रत्नावलीविद्धशालभञ्जिकादि।

अथ त्रोटकम्।

सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्।
त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम्॥
५४२ ॥ (ण)

प्रत्यङ्कं सविदूषकत्वादेवात्र शृङ्गारोऽङ्गी। सप्ताङ्कं यथा स्तम्भितरम्भम्। पञ्चाङ्कं यथा विक्रमोर्वशी।

अथ गोष्ठी।

प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलङ्कृता।
नोदात्तवचना गोष्ठी कौशिकीवृत्तिशालिनी॥

---

(ढ) उपरूपकाण्याह अथेति। नाटिकेति। क्लृप्तवृत्ता कल्पितवृत्तान्ता न तु पुराणादिषु प्रसिद्धवृत्तेति भाव, स्त्रीप्राया नारीबहुला, चतुरङ्किका चतुर्भिरङ्कैः सम्पाद्या इत्यर्थ। प्रख्यात प्रसिद्धः धीरललित निश्चिन्तो मृदुरनिशमिति लक्षणोक्त, अन्त'पुरसम्बन्धा अन्तःपुरसम्बन्धवती अन्त पुरचारिणीत्यर्थ.। नेता नायक. देव्या महिष्या त्रासेन भयेन शङ्कितः सन् अस्या नायिकाया सम्प्रवर्त्तेत समासजेत्। द्वयोः नायिकानायकयो सङ्गम तद्वश देव्यधीन। स्वल्पविमर्षाः प्रायेण विमर्षाख्यसन्धिहीना इत्यर्थ। अन्यत् सुगमम्।

(ण) त्रोटकमाह अथेति। सप्तेति। सप्त वा अष्टौ वा नव वा पञ्च वा अङ्काः यत्र तथोक्त, दिव्यमानुषसंश्रय देवमनुष्यसम्बद्ध, प्रत्यङ्क, विदूषकचरित्रसहित नाट्य त्रोटक प्राहु.।

हीना गर्भविमर्षाभ्यां पञ्चषड् योषिदन्विता ।
कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्मिता ॥
५४३ ॥ (त)

यथा रैवतमदनिका ।

अथ सट्टकम् ।

सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम् ।
न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः ।
अङ्का जवनिकाख्याः स्युः स्यादन्यन्नाटिकासमम्
॥ ५४४ ॥ (थ)

यथा कर्पूरमञ्जरी ।

अथ नाट्यरासकम् ।

नाट्यरासकमेकाङ्कं बहुताललयस्थितिः ।
उदात्तनायकं तद्वत् पीठमर्दोपनायकम् ॥
हास्योऽङ्ग्यत्र सशृङ्गारो नारी वासकसज्जिका ।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ॥

---

(त) गोष्ठीमाह अथेति । प्राकृतैरिति । प्राकृतै नातिविदग्धै. । नोदात्त-वचना सस्कृतान्यभाषिणी। पञ्चभि षड्भिर्वा योषिद्भिरन्विता । अन्यत् स्पष्टम् ।

(थ) सट्टकमाह सट्टकमिति । प्राकृत सस्कृतादन्यत्, अशेष समस्त पाठ्यं वाक्य यस्मिन् तत, अप्रवेशक प्रवेशकवर्जितम् प्रचुर बहुल. । जवनिकाख्याः अङ्का. प्रयोज्या अङ्कस्थाने जवनिकाशब्द प्रयोज्य इत्यर्थ । अन्यत् अङ्कसख्या-दिकम् ।

(द) नाट्यरासकमाह अथेति । नाट्येति । बह्वी तालस्य तालक्रियामा-नस्य लयस्य साम्यस्य च स्थितिर्यस्मिन् तत्, "तालः कालक्रियामान. लय साम्यम्"

केचित् प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम् ॥

५४५ ॥ (द)

तत्र सन्धिद्वयवती यथा नर्मवती। सन्धिचतुष्टयवती यथा विलासवती ।

अथ प्रस्थानम् ।

प्रस्थाने नायको दासो हीनः स्यादुपनायकः ।
दासी च नायिका वृत्तिः कौशिकी भारती तथा ॥
सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः ।
अङ्कौ द्वौ लयतालादिर्विलासो बहुलस्तथा ॥

५४६ ॥ (ध)

यथा शृङ्गारतिलकम ।

अथोल्लाप्यम् ।

उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम् ।
शिल्पकाङ्कैर्युतं हास्यशृङ्गारकरुणैः रसैः ॥ (न)
उल्लाप्यं बहुसंग्रामं लास्यगीतिमनोहरम् ।

---

इत्यमर'। उदात्तनायक धीरोदात्तनायकयुत, पीठमर्द' पूर्वोक्तलचण. उपनायक नायकसहकारी यत्र तत्। सशृङ्गार शृङ्गाररससहित' हास्य अत्र अङ्गी प्रधानम्। नारी नायिका। वासकसज्जिता पूर्वोक्तलचणा। अन्यत् स्पष्टम्।

(ध) प्रस्थानमाह अथेति। प्रस्थान इति। हीन' दासादपि इतर इत्यर्थ. सुरापानसमायोगात् मद्यपानवशात् उद्दिष्टस्य प्रस्तुतस्य अर्थस्य इतिवृत्तस्य संहृतिः समापनम्। अन्यत् सुगमम्।

(न) उल्लाप्यमाह अथेति। उदात्तेति। उदात्त धीरोदात्त: नायको यत्र तत्, दिव्यवृत्तं दिव्यनायकोचितचरित्रयुक्तम्। अन्यत् स्पष्टम्।

चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन ॥
५४७ ॥ (प)

शिल्पकाङ्गानि वक्ष्यमाणानि । यथा देवीमहादेवम् ।

अथ काव्यम् ।

काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलम् ।
खण्डमात्रा द्विपदिका भग्नतालैरलङ्कृतम् ॥
वर्णमात्राच्छड्डलिकायुतं शृङ्गारभाषितम् ।
नेता स्त्री चाप्युदात्तात्र सन्धी आद्यौ तथान्तिमः ॥
५४८ ॥ (फ)

यथा यादवोदयः ।

अथ प्रेङ्खणम् ।

गर्भावमर्षरहितं प्रेङ्खणं हीननायकम् ।
असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम् ।
नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम् ।

---

(प) अन्यसम्मतमुल्लाप्यमाह उल्लाप्यमिति । चप्रसेण विभागेन इति भाव, यद्वा त्रिपदीगीतेन मनोहरम् । केचन पण्डिता इदम् उल्लाप्य वदन्तीति शेष. ।

(फ) काव्यमाह अथेति । काव्यमिति । आरभटी वृत्तिविशेष तया हीन खण्डमात्रा द्विपदिका भग्नताले तत्तदाख्यगीतविशेषैरित्यर्थ वर्णमात्रा तथा च्छड्डलिका छन्दोभेदौ ताभ्या युत, शृङ्गारभाषित शृङ्गारसूचकवाक्यसम न्वितम् । नेता नायक. स्त्री नायिका च उदात्त उदात्ता च । अत्र काव्ये आद्यौ मुखप्रतिमुखे इत्यर्थ अन्तिमः निर्वहणमित्यर्थ । अन्यत् सुगमम् ।

(ब) प्रेङ्खणमाह अथेति । गर्भेति । गर्भावमर्षरहित गर्भावमर्षसन्धि-द्वयवर्जित, हीन प्राकृत नायको यत्र तत्, नियुद्ध. सम्फेट सरोषभाषणञ्च

नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना॥

५४९॥ (ब)

यथा बालिबधः।

अथ रासकम्।

रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम्।
भाषाविभाषाभूयिष्ठं भारती कौशिकीयुतम्॥
असूत्रधारमेकाङ्कं सवीथ्यङ्गं कलान्वितम्।
श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम्॥
उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम्।
इह प्रतिमुखं सन्धिमपि केचित् प्रचक्षते॥

५५०॥ (भ)

यथा मेनकाहितम्।

अथ संलापकम्।

संलापकेऽङ्काश्चत्वारस्त्रयो वा नायकः पुनः।
पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः॥

---

ताभ्या युतं, सर्वाभिर्वृत्तिभि कौशिक्यादिभि समाश्रित युक्तम्। प्ररोचना प्रकृतप्रशंसया सामाजिकानाम् उन्मुखीकरणम्। असूत्रधारत्वेऽपि नेपथ्यस्थेन केनचित् नान्दी प्ररोचना च पठनीयेति भाव।

(भ) रासकमाह अथेति। रासकमिति। पञ्चपात्र पञ्चभि. पात्रै नटै सम्पाद्यमित्यर्थ, भाषया विभाषया च संस्कृतेन प्राकृतेन च इत्यर्थ., भूयिष्ठ पर्य्याप्तम्। कला नृत्यादिका चतु.षष्टिप्रकारा तया अन्वित, श्लिष्टया भिन्नार्थया नान्द्या युतं, ख्याता प्रसिद्धा नायिका यत्र तत्, उदात्तभावस्य महत्त्वस्य विन्यासेन वर्णनेन संश्रितम्। अन्यत् स्पष्टम्।

भवेयुः पुरसंरोधच्छलसंग्रामविद्रवाः ।
न तत्र वृत्तिर्भवति भारती न च कौशिकी ॥
५५१ ॥ (म)

यथा मायाकापालिकम् ।

अथ श्रीगदितम् ।

प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम् ।
प्रसिद्धनायिकं गर्भविमर्षाभ्यां विवर्जितम् ॥
भारतीवृत्तिबहुलं श्रीतिशब्देन संयुतम् ।
मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् ॥५५२॥
(य)

यथा क्रीडारसातलम् ।
"श्रीरासीना श्रीगदिते गायेत् किञ्चित् पठेदपि ।
एकाङ्को भारतीप्राय इति केचित् प्रचक्षते ॥" (र)
ऊह्यमुदाहरणम् ।

(म) सलापकमाह सलापक इति। पाषण्ड मूर्ख अधार्मिको वा। परसरोध नगरावरोध., छल "प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलनाच्छलम्" इत्युक्तलक्षण, सग्राम युद्ध, विद्रव "शङ्काभयत्रासकृत सम्भ्रमो विद्रवो मत." इत्युक्तलक्षण । अन्यत् स्पष्टम् ।

(य) श्रीगदितमाह अथेति। प्रख्यातेति। प्रख्यातवृत्तं पुराणादिषु प्रसिद्धवृत्तान्तम्। प्रसिद्धा नायिका यत्र तत्। गर्भविमर्षसन्धिद्वयवर्जित. भारतीवृत्तिबहुलञ्च। श्री इति शब्देन सयुत बहुशः श्रीशब्दप्रयोगयुतमित्यर्थ.।

(र) श्रीरिति। श्रीगदिते आसीना उपविष्टा श्री. श्रीवेशधारिणी नटीत्यर्थ, किञ्चित् गायेत् पठेदपि। तथा एकाङ्कः एकेनैव अङ्केन समाप्य भारतीप्रायः भारतीवृत्तिबहुल. सन्दर्भ इति केचित् पण्डिताः प्रचक्षते।

अथ शिल्पकम् ।

चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा ।
अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः ॥
वर्णनात्र श्मशानादेर्हीनः स्यादुपनायकः ।
सप्तविंशतिरङ्गानि भवन्त्येतस्य तानि तु ॥
आशंसातर्कसन्देहतापोद्वेगप्रशक्तयः ।
प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः ॥
विलासालस्यबाष्पानि प्रहर्षाश्वासमूढ़ताः ।
साधनानुगमोच्छ्वासविस्मयाः प्राप्तयस्तथा ॥
लाभविस्मृतिसम्फेटा वैशारद्यं प्रबोधनम् ।
चमत्कृतिश्चेत्यमीषां स्पष्टत्वाल्लक्ष्म नोच्यते ॥
५५३ ॥ (ल)

सम्फेटग्रथनयोः (व) पूर्वमुक्तत्वादेव लक्ष्म सिद्धम् । यथा कनकावतीमाधवः ।

---

(ल) शिल्पकमाह अथेति । चत्वार इति । वृत्तय कौशिक्यादय, अशान्त-हास्या शान्तहास्याभ्यामन्ये इत्यर्थः । श्मशानादेरित्यादिना शवादेर्ग्रहणम् । उपनायक नायकसहकारी, हीन, इतर । एतस्य शिल्पकस्य आशंसादीनि चमत्कृत्यन्तानि सप्तविंशतिः अङ्गानि । अमीषाम् अङ्गाना स्पष्टत्वात् सहजत्वात् लक्ष्म लक्षण न उच्यते ।

(व) "सम्फेटो रोषभाषणम्' तथा "उपन्यासस्तु कार्य्याणा ग्रथनम्" इत्युक्तलक्षणे सम्फेटग्रथने ।

अथ विलासिका।

शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता।
विदूषकविटाभ्याञ्च पीठमर्देन भूषिता॥
हीना गर्भविमर्षाभ्यां सन्धिभ्यां हीननायका।
स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका॥
५५४॥ (श)

केचित् तत्र विलासिकास्थाने "लासिका" इति पठन्ति, तस्यास्तु "दुर्मल्लिकायामन्तर्भावः" इत्यन्ये।

अथ दुर्मल्लिका।

दुर्मल्ली चतुरङ्का स्यात् कौशिकी भारती तथा।
अगर्भा नागरनराऽन्यूननायकभूषिता॥
त्रिनालिः प्रथमोऽङ्कोऽस्यां विटक्रीड़ामयो भवेत्।
पञ्चनालिर्द्वितीयोऽङ्को विदूषकविलासवान्॥
षण्णालिकस्तृतीयस्तु पीठमर्दविलासवान्।
चतुर्थो दशनालिः स्यादङ्कः क्रीड़ितनायकः॥
५५५॥ (ष)

यथा विन्दुमती।

---

(श) विलासिकामाह अथेति। शृङ्गारेति। स्वल्पानि नातिबहुलानि वृत्तानि पद्यानि इतिवृत्तानि वा यत्र तादृशी। अन्यत् स्पष्टम्।

(ष) दुर्मल्लिकामाह दुर्मल्लीति। अगर्भा गर्भसन्धिवर्जिता। नागरनरात् अन्यूनेन अनिकृष्टेन नायकेन भूषिता। अस्या प्रथमः अङ्क. त्रिनालि घटिकात्रय-साध्यः विटस्य क्रीडामयः केलिबहुल.। पञ्चनालिः पञ्चघटिकासम्पाद्य.। षण्णालिकः घटिकाषट्कसम्पादनीय.। दशनालिः दशघटिकानिर्वाह्य.। अन्यत् स्पष्टम्।

अथ प्रकरणिका।

नाटिकैव प्रकरणी सार्थवाहादिनायका।
समानवंशजा नेतुर्भवेद्यत्र च नायिका ॥५५६॥
(स)

मृग्यमुदाहरणम्।

अथ हल्लीशः।

हल्लीश एव एकाङ्कः सप्ताष्टौ दश वा स्त्रियः।
वागुदात्तैकपुरुषः कौशिकीवृत्तिसङ्कुलः॥
मुखान्तिमौ तथा सन्धी बहुताललयस्थितिः॥
५५७॥ (ह)

यथा केलिरैवतकम्।

अथ भाणिका।

भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता।
कौषिकीभारतीवृत्तियुक्तैकाङ्कविनिर्मिता॥
उदात्तनायिका मन्दपुरुषाऽत्राङ्गसप्तकम्॥
उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा।
समर्पणं निवृत्तिश्च संहार इति सप्तमः॥ (च)

---

(स) प्रकरणिकामाह अथेति। नाटिकैवेति। सार्थवाही वणिक्। अन्यत् स्पष्टम्।

(ह) हल्लीशमाह हल्लीश इति। वागुदात्त संस्कृतभाषया सहित इत्यर्थ, एकपुरुषः एकमात्रनट। मुखान्तिमौ आद्यचरमौ मुखनिर्वहणे इत्यर्थ.। अन्यत् स्पष्टम्।

(च) भाणिकामाह अथेति। भाणिकेति। श्लक्ष्णनेपथ्या परिच्छन्नपरिच्छदा।

उपन्यासः प्रसङ्गेन भवेत् कार्य्यस्य कीर्त्तनम्।
निर्वेदवाक्यव्युत्पत्तिर्विन्यास इति स स्मृतः॥
भ्रान्तिनाशो विबोधः स्यान्मिथ्याख्यातन्तु साध्वसम्
सोपालम्भवचः कोपपीड़येह समर्पणम्॥
निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते।
संहार इति च प्राहुर्यत् कार्य्यस्य समापनम्॥
५५८॥ (क)

स्पष्टान्युदाहरणानि—यथा कामदत्ता। एषा सर्वेषामपि नाटकप्रकृतिकत्वेऽपि यथौचित्यं यथालाभं नाटकोक्तविशेष-परिग्रहः। यत्र च नाटकोक्तस्यापि पुनरुपादानं तत्र तल्लक्षणस्य नियमः।

अथ श्रव्यकाव्यानि।

श्रव्यं श्रोतव्यमात्रं तत् पद्यगद्यमयं द्विधा॥५५९॥
(ख)

---

मन्द हीन पुरुष नायक यस्या तादृशी। अङ्गसप्तकम् उपन्यासादीनि संहारान्तानि सप्त अस्या' अङ्गानीत्यर्थ।

(क) उपन्यासादि सप्ताङ्गाना लक्षणान्याह उपन्यास इति। प्रसङ्गेन कार्य्यस्य कीर्त्तन सूचनम् उपन्यास भवेत्। निर्वेद तत्त्वज्ञानापदीर्षादेरित्युक्तलक्षण, तस्य वाक्ये तत्सूचकवचसि व्युत्पत्ति' विशेषज्ञता विन्यास इति स्मृत। भ्रान्तेर्भ्रमस्य अज्ञानस्य इत्यर्थ, नाश विच्छेद' विबोध स्यात्। मिथ्या आख्यातं कथन साध्वसम्। इह भाणिकाया कोपेन पीडया वा सोपालम्भवच तिरस्कार-वचन समर्पणम्। निदर्शनस्य दृष्टान्तस्य उपन्यास, कीर्त्तन निवृत्तिरिति कथ्यते। कार्य्यस्य यत् समापन तत् संहार इति प्राहु, प्राज्ञ इति शेष।

(ख) दृश्यकाव्यमुक्त्वा श्रव्यकाव्यान्याह अथेति। श्रव्यमिति। श्रोतव्यमात्रमिति मात्रशब्देन दृश्यकाव्यव्यवच्छेद।

तत्र पद्यमयान्याह ।

छन्दोबद्धपदं पद्यं तेनैकेन च मुक्तकम् ।
द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते ॥
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम् ॥
५६० ॥ (ग)

तत्र मुक्तकं यथा मम—

"सान्द्रानन्दमनन्तमव्ययमजं यद्योगिनोऽपि क्षणं
साक्षात्कर्त्तुमुपासते प्रति मुहुर्ध्यानैकताना: परम् ।
धन्यास्ता मथुरापुरीयुवतयस्तद् ब्रह्म या: कौतुकाद्
आलिङ्गन्ति समालपन्ति शतधा कर्षन्ति चुम्बन्ति च" ॥ (घ)

युग्मकं यथा मम—

"किं करोषि करोपान्ते कान्ते । गण्डस्थलीमिमाम् ।
प्रणयप्रवणे कान्तेऽनैयान्ते नोचिताः क्रुधः ॥
इति यावत् कुरङ्गाक्षीं वक्तुमीहामहे वयम् ।
तावदाविरभूच्चूते मधुरो मधुपध्वनिः ॥ (ङ)

---

(ग) छन्द इति । छन्दोभि गायत्र्यादिभि बद्धानि रचितानि पदानि सुप्तिङन्तरूपाणि यत्र तादृशम् । एकेन तेन पद्येन । पञ्चभिरिति न्यूनसंख्या-व्यवच्छेद । अन्यत स्पष्टम् ।

(घ) मुक्तकमुदाहरति सान्द्रेति । मुहु पुन पुन ध्यानैकताना समाधिनिष्ठा योगिन अपि सान्द्रानन्दम् आनन्दघनम् अनन्तम् अपारम् अव्ययम् अच्युतम् अज जन्मरहित पर यत् ब्रह्म क्षण साक्षात् कर्त्तुम् प्रत्यक्षीकर्त्तु उपासते भजन्ते, ता. मथुरापुरीयुवतय धन्या पुण्यवत्य या तत् पर ब्रह्म कौतुकात् आनन्दात् शतधा बहुधा इत्यर्थ, आलिङ्गन्ति समालपन्ति आकर्षन्ति क्रीडार्थमाहरन्ति, चुम्बन्ति च । शार्दूलविक्रीडित वृत्तम ।

(ङ) किमिति । । हे कान्ते ! करस्य उपान्ते प्रान्तभागे करतले इत्यर्थ , इमा

एवमन्यत्रापि।

सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः।
सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः॥
एकवंशभवा भूपाः कुलजा बहवोऽपि वा।
शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते॥
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः।
इतिहासोद्भवं वृत्तमन्यद् वा सज्जनाश्रयम्॥
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकञ्च फलं भवेत्।
आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा॥
क्वचिन्निन्दा खलादीनां सताञ्च गुणकीर्त्तनम्।
एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः॥
नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह।
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते॥
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्।
सन्ध्यासूर्य्येन्दुरजनीप्रदोषध्वान्तवासराः॥

---

गण्डस्थली किं कथं करोषि, न एकान्त' एकावसान यस्य स नैकान्त अन्यासक्त इति यावत् स न भवतीति अनैकान्त, तस्मिन् त्वन्मात्रवल्लभे इत्यर्थ, प्रणयप्रवणे प्रणयाकाङ्क्षिणीत्यर्थ, कान्ते क्रुध कोपा न उचिता। इति एवं प्रकारेण यावत् वय कुरङ्गाक्षी मृगनयना वक्तुम् ईहामहे चेष्टामहे तावत् चूते रसाले मधुर: मनोहर मधुपध्वनि भ्रमरझङ्कार आविरभूत् अजायत, भ्रमररवेणैव मानभङ्गो जात., नास्माक प्रयासस्यावश्यकतेति भाव.।

(च) महाकाव्यमाह सर्गबन्ध इति। सर्गै. अवान्तरार्थदर्शनैरुपलक्षित बन्धः पद्यप्रबन्ध इत्यर्थः महाकाव्यम्। तत्र महाकाव्ये इत्यर्थः, सुरः देवविशेषः, बहवो

प्रातर्मध्याह्नमृगयाशैलर्त्तुवनसागराः।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः॥
रणप्रयाणोपयममन्त्रपुत्रोदयादयः।
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा।
नामास्य सर्गोपादेयकथया सर्गनाम तु॥

५६१॥ (च)

सन्ध्यङ्गानि यथालाभमत्र विधेयानि। अवसानेऽन्यवृत्तकैरिति बहुवचनमविवक्षितम्। साङ्गोपाङ्गा इति जलकेलिमधुपानादयः। (छ) यथा रघुवंशशिशुपालवधनैषधादिः। यथा वा मम राघवविलासादिः।

---

अनेके, नायका इत्यर्थः। नाटकसन्धय नाटकोक्तमुखादिपञ्चक प्रयोज्यमिति भाव। इतिहासेषु पुराणादिषु उद्भवम् उत्पन्नं वृत्त चरितम्। सज्जनाश्रय साधुजनाचरितमित्यर्थ। वर्गा धर्मार्थकाममोक्षा, तेषु चतुर्वर्गेषु मध्ये एक फल च इति चकारो वार्थ, भवेत्। आदौ आरम्भे महाकाव्यस्येति शेष, नमस्क्रिया देवतादीना नमस्कार. आशीर्वा शुभाशसन वा लोकानामिति शेष। वस्तुनिर्देश वस्तुन इतिवृत्तसम्बन्धिनः प्रधानस्य निर्देश कीर्त्तनम्। खलादीना दुर्जनादीनाम्। एकवृत्तमयै एकविधच्छन्दोनिबद्धैरित्यर्थ, अवसाने सर्गसमाप्तौ अन्यवृत्तकै भिन्नच्छन्दोविरचितैरित्यर्थ। इह महाकाव्ये। नानावृत्तमय बहुभिश्छन्दोभि रचित इत्यर्थ। उपयमो विवाह। यथायोग यथासम्भव, साङ्गोपाङ्गा अङ्गप्रत्यङ्गसहिता'। कवे' प्रणेतु. वा वृत्तस्य वर्णनीयस्य वा नायकस्य वा इतरस्य अन्यस्य नाम्ना अस्य महाकाव्यं नाम कर्त्तव्यमिति शेष'। तत्र कविनाम यथा—माघ-भारविप्रभृति। वृत्तनाम यथा—कुमारसम्भवादि। नायकनाम यथा—रघुवंशादि। इतरनाम यथा—भट्टिप्रभृति। तु किन्तु सर्गनाम सर्गे उपादेया वर्णनीया या कथा तया कर्त्तव्यमिति शेषः; यथा—रतिविलापो नाम चतुर्थ सर्ग इत्यादि।

अस्मिन्नार्षे पुनः सर्गा-
भवन्त्याख्यानसंज्ञकाः ॥ ५६२ ॥ (ज)

अस्मिन् महाकाव्ये—यथा महाभारतम् । (झ)

प्राकृतैर्निर्मिते तस्मिन् सर्गा आश्वाससंज्ञकाः ।
छन्दसास्कन्दकेनैतत् क्वचिद्गलितकैरपि ॥
५६३ ॥ (ञ)

यथा सेतुबन्धः । यथा वा मम कुवलयाश्वचरितम् ।

अपभ्रंशनिबन्धेऽस्मिन् सर्गाः कडवकाभिधाः ।
तथापभ्रंशयोग्यानि छन्दांसि विविधान्यपि ॥
५६४ ॥ (ट)

यथा कर्णपराक्रमः ।

भाषाविभाषानियमात् काव्यं सर्गसमुज्झितम् ।
एकार्थप्रवणैः पद्यैः सन्धिसामग्र्यवर्जितम् ॥
५६५ ॥ (ठ)

यथा भिक्षाटनम् आर्याविलासश्च ।

---

(छ) रसेषु शृङ्गारस्यैव प्राधान्यात् जलकेलिमधुपानादय तदुदाहरणत्वेन प्रदर्शिता. । एव वीरादिषु यथासम्भव साङ्गोपाङ्गोदाहरण मृग्यम् ।

(ज) अस्मिन्निति । आर्षे ऋषिप्रणीते अस्मिन् महाकाव्ये सर्गा. आख्यान-सञ्ज्ञका. भवन्ति । सर्गस्थाने आख्यानशब्द. प्रयोज्य इति भाव ।

( झ ) महाभारतादौ गद्यसत्त्वेऽपि पद्यप्राचुर्य्येणैव महाकाव्यत्वव्यवहारः ।

(ञ) प्राकृतैरिति । प्राकृतै. भाषाविशेषै निर्मिते प्रणीते तस्मिन् महाकाव्ये । आस्कन्दकेन तदाख्येन एतत् प्राकृतं महाकाव्यमित्यर्थ. । गलितकै. तदाख्य-च्छन्दोविशेषैरित्यर्थः ।

(ट) अपभ्रंशेति । अपभ्रंश. अपभाषा तद्रचितनिबन्धः अस्मिन् महाकाव्ये ।

**खण्डकाव्यं भवेत् काव्य-**
**स्यैकदेशानुसारि च ॥ ५६६ ॥ (ड)**

यथा मेघदूतादि।

**कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः।**
**व्रज्याक्रमेण रचितः स एवातिमनोरमः॥**
**५६७ ॥ (ढ)**

सजातीयानामेकत्र सन्निवेशो व्रज्या। यथा मुक्तावल्यादि।

अथ गद्यकाव्यानि। तत्र गद्यम।

**वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च।**
**भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम्॥**
**आद्यं समासरहितं वृत्तभागयुतं परम्।**
**अन्यद्दीर्घसमासाढ्यं तुर्यं चाल्पसमासकम्॥**
**५६८ ॥ (ण)**

---

(ठ) काव्यमाह भाषेति। भाषा संस्कृत विभाषा विरुद्धभाषा अपभ्रंशादि. तयोर्नियमात् भाषया रचिते न विभाषा, विभाषया रचिते न भाषा प्रयोक्तव्या इति नियमेन रचितमिति शेष, सर्गसमुज्झित सर्गबन्धरहितम् एकार्थप्रवणै एकार्थप्रतिपादकैः एकवाक्यतापन्नैरिति यावत्, पद्यै रचितमिति शेष., सन्धिसामग्र्यवर्जित मुखप्रतिमुखादिसन्धिसमुदायहीन काव्यम्।

(ड) खण्डकाव्यमाह खण्डेति। काव्यस्य एकदेशानुसारि कियदंशानुरूपमित्यर्थ काव्य खण्डकाव्यं भवेत्।

(ढ) कोषमाह कोष इति। अन्योन्यानपेक्षक' परस्परनिरपेक्षः श्लोकाना समूहः कोष.। स कोष व्रज्याक्रमेण सजातीयसन्निवेशनियमेन रचितश्चेत् अतिमनोहर. अतिप्रशंसनीय इत्यर्थ., यथा अमरकोषादि।

(ण) गद्यमाह वृत्तेति। वृत्तबन्धेन पद्यबन्धेन उज्झितं त्यक्तं अव्यकाव्यं

मुक्तकं यथा—"गुरुर्वचसि पृथुरुरसि" इत्यादि। वृत्तगन्धि यथा मम—"समरकण्डूयननिविडभुजदण्डकुण्डलीकृतकोदण्डशिञ्जिनीटङ्कारोज्जागरितवैरिनगर।" (त)। अत्र कुण्डलीकृतकोदण्डेत्यनुष्टुब्वृत्तस्य पादः। समरकण्डूयनेति च प्रथमाक्षरद्वयरहितस्तस्यैव पादः। उत्कलिकाप्रायं यथा ममैव—"अणिसं विसूमर णिसिददरसरविसरविदलितसमरपरिगदपवरपरबल।" (थ) इत्यादि। चूर्णकं यथा मम—"गुणरत्नसागर! जगदेकनागर! कामिनीमदन। जनरञ्जन।" इत्यादि।

कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्।
क्वचिदत्र भवेदार्य्या क्वचिद् वक्त्रापवक्त्रके॥
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम्॥
५६६॥ (द)

यथा कादम्बर्य्यादि।

---

गद्यम्। तच्च चतुर्विध—मुक्तक, वृत्तगन्धि, उत्कलिकाप्राय, चूर्णकञ्च। आद्यं मुक्तकम्। परं वृत्तगन्धि वृत्तभागयुतम्, वृत्तस्य पद्यस्य भागेन अंशेन युतम्, अन्यत् उत्कलिकाप्रायमित्यर्थः, दीर्घसमासेन आढ्य युत, तुर्य्यं चतुर्थं चूर्णकमित्यर्थः, अल्पसमासकम् अल्पेन समासेन युक्तमित्यर्थः।

(त) समरेति। समरस्य कण्डूयनाय निविडाभ्या दृढाभ्या भुजदण्डाभ्या कुण्डलीकृतं मण्डलीकृत यत् कोदण्ड धनु तस्य शिञ्जिन्या मौर्व्या टङ्कारः तेन उज्जागरित वैरिणः शत्रोर्नगर येन तत्सम्बुद्धौ।

(थ) अणिस इति। "अनिश विस्मरनिशिततरशरविसरविदलितसमरपरिगतप्रबलपरबल" इत्यादि संस्कृतम्। अनिशेति। अनिशम् अनवरत विस्मराः प्रसरन्तः ये निशिततराः शाणिततराः तीक्ष्णा इत्यर्थः, शराः तेषा विसरेण विक्षेपेण विदलित समरपरिगत सङ्ग्रामस्थित प्रबल परबल शत्रुसैन्य येन तत्सम्बुद्धौ।

(द) गद्यभेदरूपा कथामाह कथायामिति। कथाया सरस वस्तु इतिवृत्तं गद्यैरेव विनिर्मित भवेत्। अत्र कथाया क्वचित् आर्य्या भवेत्, क्वचिद्वा वक्त्रमपर-

**आख्यायिका कथावत् स्यात् कवेर्वंशादिकीर्त्तनम्।**
**अस्यामन्यकवीनां च वृत्तं गद्यं क्वचित् क्वचित्॥**
**कथांशानां व्यवच्छेद आश्वास इति बध्यते।**
**आर्य्यावक्त्रापवक्त्राणां छन्दसा येन केनचित्॥**
**अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम्॥**

५७०॥ (ध)

यथा हर्षचरितादि।

"अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्"।

इति दण्ड्याचार्य्यवचनात् केचित् "आख्यायिका नायकेनैव निबद्धव्या" इत्याहुस्तदयुक्तम् (न)। आख्यानादयश्च कथाख्यायिकयोरेवान्तर्भावान्न पृथगुक्ताः। यदुक्तं दण्डिनैव—

"अत्रैवान्तर्भविष्यन्ति (प) शेषाश्चाख्यानजातयः"। इति।

एषामुदाहरण पञ्चतन्त्रादि।

वक्त्रञ्च छन्दसी प्रयोज्ये इति शेष। आदौ कथारम्भात् प्राक पद्यै श्लोकैः नमस्कार तथा खलादि दुर्जनादेर्वृत्तस्य चरितस्य कीर्त्तन कथन भवेदिति शेष।

(ध) पद्यस्यापरभेदरूपामाख्यायिकामाह आख्यायिकेति। आख्यायिका कथावत् स्यात्। कथाया यथा सरस वस्तु प्रयोज्य पद्यैर्नमस्कार खलचरित्रवर्णनञ्च तथाख्यायिकायामपीति भाव। विशेषस्त्वेतावान् यत कवे वंशादीना कीर्त्तनम् अन्यकवीनाञ्च वृत्त क्वचित् क्वचिद्वा गद्य प्रयोज्यमिति। कथाशाना व्यवच्छेद विशेष आश्वास इति नाम्ना बध्यते। आश्वासस्य मुखे प्रारम्भे आर्य्यावक्त्रापवक्त्राणा छन्दसा मध्ये येन केनचित् छन्दसा अन्यापदेशेन अपरच्छलेन भाविन, भविष्यत अर्थस्य वस्तुन सूचन प्रकटन भवेदिति शेष।

(न) अपीति। तत्रापि आख्यायिकायामपि अन्यैः नायकव्यतिरिक्तैरपि उदीरणात उच्चारणात् अनियम, अनिश्चयस्तु दृष्ट इति दण्ड्याचार्य्यस्य वचनात् नायकेनैव आख्यायिका निबद्धव्येति केषाञ्चिन्मतमयुक्तमिति फलितार्थ।

(प) अत्रेति। अत्रैव कथायामाख्यायिकाया वेत्यर्थः।

अथ गद्यपद्यमयानि। (फ)

**गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ॥५७१॥**

यथा देशराजचरितम्।

**गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते ॥ ५७२ ॥**

यथा विरुदमणिमाला।

**करम्भकन्तु भाषाभिर्विविधाभिर्विनिर्मितम् ॥**
**॥ ५७३ ॥**

यथा मम षोडशभाषामयी प्रशस्तिरत्नावली। एवमन्येऽपि भेदा उद्देशमात्रप्रसिद्धत्वादुक्तभेदानतिक्रमाच्च न पृथग्लक्षिताः। (ब)

इति साहित्यदर्पणे दृश्यश्रव्यकाव्यनिरूपणो नाम षष्ठः परिच्छेदः।

---

(फ) गद्यपद्यमयानि श्रव्यकाव्यानीत्यर्थः।

(ब) उद्देशमात्रेति। उद्देशमात्रेण नाममात्रेण प्रसिद्धा. विख्याताः तद्भावात् उक्तभेदानतिक्रमात् उक्तभेदेष्वन्तर्भावात तेषा नामत एव भिन्नत्व न वस्तुगत्या इति तात्पर्य्यम्।

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता विमलाख्या साहित्यदर्पणस्य षष्ठपरिच्छेदव्याख्या समाप्ता।

---

# सप्तमः परिच्छेदः ।

इह प्रथमतः काव्ये दोषगुणरीत्यलङ्काराणामवस्थितिक्रमो दर्शितः । सम्प्रति के ते इत्यपेक्षायामुद्देशक्रमप्राप्तानां दोषाणां स्वरूपमाह—(क).

**रसापकर्षका दोषाः ॥ ५७४ ॥ (ख)**

अस्यार्थः प्रागेव स्फुटीकृतः (ग) । तद्विशेषानाह—

**ते पुनः पञ्चधा मताः ।**
**पदे पदांशे वाक्येऽर्थे सम्भवन्ति रसेऽपि यत् ॥ ५७५ ॥**

तत्र ।

**दुःश्रवत्रिविधाश्लीलानुचितार्थाप्रयुक्तताः ।**
**ग्राम्योऽप्रतीतसन्दिग्धनेयार्थनिहतार्थताः ॥**
**अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता ।**
**अविमृष्टविधेयांशभावश्च पदवाक्ययोः ।**

---

(क) अथ काव्यलक्षणं निर्णीय तदीयदोषादीन् विवक्षुः श्रीविश्वनाथकविः तस्य प्रकृतत्वं दोषनिरूपणस्यादिकर्त्तव्यताञ्चोपपादयति—इहेति ।

(ख) दोषाणां सामान्यलक्षणमाह रसेति । अत्र रसपदेन विभावादीनामपि ग्रहणम्, तदपकर्षकस्यापि दोषतया वक्ष्यमाणोदाहरणत्वात् । दोषपदेन दुःश्रवत्वादिरुच्यते, भावसाधनेन तु काव्यापकर्ष एव ।

(ग) ननु शब्दार्थदोषमात्राणां श्रुतिदुष्टापुष्टार्थत्वानां रसापकर्षकत्वाभावात् कथमेतल्लक्षणेऽन्तर्भावः ? इत्याशङ्क्याह—अस्यार्थ. इति । प्रागेव प्रथमपरिच्छेद एव, शब्दार्थापकर्षकद्वारेणैव तेषां रसापकर्षकत्वमिति सर्वमवदातम् ।

**दोषाः केचिद्भवन्त्येषु पदांशेऽपि पदेऽपरम्।**
**निरर्थकासमर्थत्वे च्युतसंस्कारता तथा ॥५७६॥**

परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वम्। यथा—

"कार्त्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशंवदा"। (घ)

अश्लीलत्वं व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात् त्रिधा। (ङ)

क्रमेणोदाहरणम्—

"दृप्तारिविजये राजन्! साधनं सुमहत् तव।
प्रससार शनैर्वायुर्विनाशे तन्वि! ते तदा"॥ (च)

अत्र साधन-वायु-विनाशशब्दा अश्लीलाः।

"शूरा अमरतां यान्ति पशुभूता रणाध्वरे"॥ (छ)

---

(घ) एषु उक्तदोषेषु यथाक्रमं दुःश्रवत्वादि लक्षणं सोदाहरणमाह परुषेति। केषाञ्चित् नामत एव लक्षणस्य स्पष्टबोधात् उदाहरणस्यैव दर्शनम्। श्रुतिदुःखावहत्वं श्रुतिमात्रतः क्लेशजनकत्वम्। कार्त्तार्थ्यं कृतार्थस्य भावः कार्त्तार्थ्यम्। अत्र रेफयोगात् कथायाः पारुष्यात् श्रोतुर्दुःखजनकत्वम्। तेनात्र शृङ्गारस्य प्रकर्षहानिरिति रसापकर्षः।

(ङ) अश्लीलत्वं व्रीडादिवशात् अवक्तव्यमर्थान्तरमश्लीलं तस्य भावः। जुगुप्सा घृणा।

(च) दृप्तेति। हे राजन्! दृप्तानाम् उद्धतानां दुरन्तानामित्यर्थः अरीणां शत्रूणां विजये तव सुमहत् अतिशयं साधनं सैन्याद्युपायः। हे तन्वि! ते तव विनाशे अदर्शने विरहे इत्यर्थः, वायुः मलयसमीरण इत्यर्थः, शनैः मन्दं मन्दं विससार सञ्चचार। अत्र सैन्याद्युपायार्थे प्रयुक्तः साधनशब्दः उपस्थव्यञ्जकतया व्रीडाव्यञ्जकः। समीरणे प्रयुक्तो वायुशब्दः पायुवायुव्यञ्जकतया जुगुप्साव्यञ्जकः। अदर्शने प्रयुक्तो विनाशशब्दः मृत्युव्यञ्जकतयाऽमङ्गलव्यञ्जकाश्लीलत्वम् इति बोद्धव्यम्। अत्र राजविषयकरतिभावस्य रसशब्दप्रतिपाद्यस्य तथा शृङ्गारस्य तत्तच्छब्दानां तादृशार्थव्यञ्जकतया प्रकर्षविच्छेद इति द्रष्टव्यम्।

(छ) अनुचितार्थमुदाहरति शूरा इति। शूराः वीराः रणाध्वरे संग्रामयज्ञे पशुभूताः निहता इति भावः, अमरतां देवत्वं यान्ति प्राप्नुवन्ति। अत्र वीराणां

अत्र पशुपदं कातर्य्यमभिव्यनक्तीत्यनुचितार्थत्वम्।

अप्रयुक्तत्वं तथा प्रसिद्धावपि कविभिरनादृतत्वम्। यथा—"भाति पद्मः सरोवरे"। अत्र पद्मशब्दः पुंलिङ्गः (ज)।

ग्राम्यत्वं यथा—"कटिस्ते हरते मनः"। अत्र कटिशब्दो ग्राम्यः (झ)।

अप्रतीतत्वमेकदेशमात्रप्रसिद्धत्वम्। यथा—"योगेन दलिताशयः"। अत योगशास्त्र एव वासनार्थे आशयशब्दः (ञ)।

"आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु"। (ट)

---

स्ववार्हाणा पशुत्वकथनमयुक्तमिति अनुचितार्थत्व तेन चात्र वीररसस्य प्रकर्षहानिरिति बोध्यम्। वाच्यायदोषप्रतिपादकत्वेन, अर्थासम्भवेन, असत्समर्थकत्वेन च तत त्रिविधम्। आद्यस्योदाहरण ग्रन्थकृता प्रदर्शितम्। द्वितीयस्य यथा—'प्रज्वलज्जलधारावत् निपतन्ति शरास्तव'। अत्र प्रज्वलदिति पदमनुचितार्थम्। तृतीयस्य यथा—"दिवाकराद्रक्षति यो गुहासु" लीन दिवाभीतमिवान्धकारम्। चुद्रेऽपि नूनं शरण प्रपन्ने ममत्वमुच्चैः शिरसामतीव॥" इत्यत्र असङ्गतस्य अन्धकारभयस्य समर्थक द्वितीयार्द्धमनुचितार्थम्। एवमन्यदपि यथासम्भव ज्ञेयम्।

(ज) तथा तेन प्रकारेण प्रसिद्धौ अपि कोषादिषु प्रसिद्धिसत्त्वेऽपि। पुंलिङ्गः कविभिरप्रयुक्त इति शेष।

(झ) ग्राम्यत्वं हालिकादिसाधारणजनप्रयोज्यत्वम्। कटिरिति। अत्र शृङ्गारस्य अगूढत्वप्रकटनेन वैचित्र्यापगमात् प्रकर्षहानिरित्यवधेयम्।

(ञ) अप्रतीतत्वम्। एकदेशमात्रे न तु सर्वत्र प्रसिद्धत्वं ख्यातत्वम्। योगेन जीवब्रह्मणोरैक्यचिन्तन योग, तेन दलित. खण्डित आशय. वासना यस्य तथोक्त.। अत्र वासनार्थत्वम् आशयशब्दस्य अजानता योगशास्त्रानभिज्ञानाम् अर्थबोधव्याघात इति बोध्यम्।

(ट) आशीरिति। आशी परम्पराम् आशीर्वादसूचकवाक्यावली कर्णे कृत्वा श्रुत्वेत्यर्थः। अत्र प्रकरणादिनियमाभावात् वन्द्यामिति पद श्लेषवशात् अर्थसन्देहजननात् सन्दिग्धम्। अत्र सन्देहवशात् शाब्दबोधविलम्बेन राजविषयरतिभावरूपस्य रसनधर्मयोगात् रसपदप्रतिपाद्यस्य प्रकर्षहानिः।

अत्र वन्द्यामिति किं वन्दीभूतायामुत वन्दनीयायामिति सन्देहः।

नेयार्थत्वं रूढिप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशनम् (ठ)। यथा—

"कमले चरणाघातं मुखं सुमुखि। तेऽकरोत्"। अत्र चरणाघातेन निर्जितत्वं लक्ष्यम्। (ड)

निहतार्थत्वमुभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगः। यथा— "यमुनाशम्बरमम्बरं व्यतानीत्"। शम्बरशब्दो दैत्ये प्रसिद्ध, इह तु जले निहतार्थः (ढ)।

"गीतेषु कर्णमादत्ते"। आङ्पूर्वो दाञ्धातुर्दानार्थेऽवाचकः। यथा वा—

"दिनं मे त्वयि सम्प्राप्ते ध्वान्तच्छन्नापि यामिनी"। (ण)

---

(ठ) नेयार्थत्वमिति। लक्षणाया रूढिप्रयोजनान्यतरहेतुकत्वनियमात तदभावे अशक्तिकृतम् असामर्थ्यप्रयुक्तम् अव्युत्पत्तिविजृम्भितमित्यर्थ कवेरिति शेष।

(ड) कमले इति। निर्जितत्व पराभव इत्यर्थ, कमलस्य चरणासम्भवेन मुख्यार्थबाध मुख्यलक्ष्ययो सामान्यविशेषभाव सम्बन्ध। अत्र रूढिप्रयोजनयोरन्यतर विना प्रथम कवेरशक्तिनिश्चय, तदनन्तर कथञ्चित् लक्ष्यार्थाविष्करण, तत: शाब्दबोध, इति विलम्बेन रसप्रतीते प्रतिबन्धकत्वमिति बोध्यम्।

(ढ) निहतार्थत्वम् उभयार्थस्य उभयार्थप्रतिपादकस्य। यमुनेति। यमुनाशम्बर कालिन्दीसलिलम् अम्बरम् आकाश व्यतानीत ऊर्द्ध्वस्फीततया व्याप्तवत्। अत्र शम्बरशब्द: श्रुतिमात्रत प्रसिद्धार्थ प्रति प्रधावितस्ततस्तदसङ्गतेस्तस्मात् निवृत्त: जल प्रत्याययन् शाब्दबोधविलम्बात् यमुनाविषयरतिभावस्य प्रकर्षहानिरिति बोध्यम्।

(ण) अवाचकत्व यथा गीतेष्विति। यदि च दाधातोरभिधयैव दानवाचकत्व स्थितं तदपि आङ्पूर्वकत्वे तद्विपरीतार्थस्य ग्रहणरूपस्य अभिधयैव प्रतिपादनादिति भाव। दिनमिति। त्वयि सम्प्राप्ते उपस्थिते मे मम ध्वान्तच्छन्नापि तिमिरावृतापि यामिनी दिनम्। अत्र दिनशब्द सूर्यकिरणावच्छिन्न-

अत्र दिनमिति प्रकाशमयार्थेऽवाचकम्।

क्लिष्टत्वमर्थप्रतीतेर्व्यवहितत्वम्। "क्षीरोदजावसतिजन्मभुवः प्रसन्नाः"। अत्र क्षीरोदजा लक्ष्मीस्तस्या वसतिः पद्मं तस्य जन्मभुवो जलानि। (त)

"भूतयेऽस्तु भवानीशः"। अत्र भवानीशशब्दो भवान्याः पत्यन्तरप्रतीतिकारित्वाद्विरुद्धमवगमयति (थ)।

अविमृष्टविधेयांशत्वं • यथा—"स्वर्गग्रामटिकाविलुण्ठन-वृथोच्छूनैः किमेभिर्भुजैः"।

अत्र वृथात्वं विधेय, तच्च समासे गुणीभावादनुवाद्यत्व-प्रतीतिकृत्। यथा वा—"रक्षास्वपि पुरःस्थातुमलं रामानु-जस्य मे"। अत्र रामस्येति वाच्यम। यथा वा—"आसमुद्रक्षिती-शानाम्"। अत्र आसमुद्रमिति वाच्यम्। यथा वा—

"यत्र ते पतति सुभ्रु! कटाक्षः षष्ठबाण इव पञ्चशरस्य"।

---

प्रहरचतुष्टयार्थक। इति प्रकाशमयार्थप्रतीतौ विलम्बात् शाब्दबोध, तस्मात् रसप्रतीतेः प्रतिबन्धकत्वम्। अत्र दिनशब्देन लक्षणया प्रकाशमयार्थं, सा च रूढिहेतुकेति नात्र नेयार्थत्वावसर इति बोध्यम्।

(त) क्लिष्टत्वमिति। अर्थप्रतीते अर्थावबोधस्य व्यवहितत्व व्यवधानेन उपस्थाप्यत्वम्। पदगतक्लिष्टत्वस्योदाहरण समासगतत्वेनैव सम्भवति। समासेऽन्वितान्वयलभ्यानतिप्रसक्तविशेष्यतावच्छेदककल्पनेन विलम्बो हि व्यवधान, वाक्य-क्लिष्टत्वस्थले तु आसत्तिकल्पनेन विलम्ब। अत्र क्रमेण पदार्थोपस्थिते शाब्द-बोधविलम्बात रसादिप्रतीते प्रतिबन्धकमित्यपकर्ष।

(थ) विरुद्धमतिकारिता विपरीतबुद्धित्व यथा भूतये इति भवस्य पत्नी भवानी तस्याः ईश पति। अत्र भवान्या पत्यन्तरप्रतीतिकारित्वात् देवविषयक-रतेरपकर्ष।

(द) अविमृष्टेति। अविमृष्ट प्राधान्येन अनिर्दिष्टः विधेयांशः यत्र तस्य भाव, पदार्थाना मध्ये विधेयस्यैव उपादेयत्वेन प्राधान्यं, तस्य प्राधान्येन निर्देश एव उचितः, तद्वैपरीत्यम् "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्" इति

अत्र षष्ठ इवेत्युत्प्रेच्यम्। यथा वा—

"अमुक्ता भवता नाथ! मुहूर्त्तमपि सा पुरा"। (द)

अत्र अमुक्तेत्यत्र नञः प्रसज्यप्रतिषेधत्वमिति विधेयत्वमेवोचितम्। यदाहुः—

"अप्राधान्यं विधेयंत्र प्रतिषेधे प्रधानता।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्"॥ (ध)

यथा—

"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः"। (न)

---

नियमस्य अन्यथात्वमित्यर्थ। स च क्वचित् समासे गुणीभावेन क्वचित् उद्देश्यात् प्राक् विधेयस्य उपादानेन भवति। अनुवाद्यत्वप्रतीतिकृत् उद्देश्यत्वबोधजनकम्। तेनात्र शाब्दबोधे कष्टता तया च वीररसप्रतीतेरपकर्ष। रचासीति। अत्र समर्थानि, "अत्र व्ययसमर्थयो" इत्यमर। अत्र राचसवधे रामस्यैव प्राधान्येन उपादेयत्वात् तस्य पृथक् निर्देश एवोचितस्तदकरणात् तादृगुपादेयताप्रतीते प्रतिरोधस्तेन च वीररसस्यापकर्ष। आसमुद्रेति। अत्र रघुवंशीयानामधिकारस्य समुद्रपर्य्यन्ततायाः एव उपादेयतया प्राधान्य तच्च समासे गुणीभावात् न तथाप्रतीतिकृदिति रसस्यापकर्ष। यत्रेति। अत्र षष्ठत्वस्यैव उपादेयतया प्राधान्य तदकरणात रसस्य किञ्चिदपकर्ष। उत्प्रेच्यम् उत्प्रेचितु योग्यम्। नञि समासगतेऽविमृष्टविधेयांशस्योदाहरणमाह अमुक्तेति। अत्र प्रसज्यप्रतिषेधे नञो विधेयतैवोचिता, समासे गुणीभावेन तद्विपर्य्ययात् अर्थबोधस्य कष्टतया रसापकर्ष इति बोध्यम्।

(ध) अप्राधान्यमिति। यत्र वाक्ये विधेः विध्यर्थस्य अप्राधान्यम् उद्देश्यतया अमुख्यत्व प्रतिषेधे नञर्थे प्रधानता विधेयतया मुख्यत्व यत्र च क्रियया सह नञ् तिष्ठतीत्यर्थ असौ प्रसज्यप्रतिषेध।

(न) नवजलधर इति। ऊर्वशीवियोगेन चित्तस्य पुरूरवसो वितर्कवर्णनमिदम्। अत्र सन्नद्धनवजलधरस्य दृप्तनिशाचरत्वविधानमप्रधान नञर्थस्य तदभावरूपस्य प्राधान्य क्रियया भवतीत्याद्यध्याहृतया नञः सम्बन्धश्च तदत्र प्रसज्यप्रतिषेधत्वम्।

उक्तोदाहरणे तत्पुरुषसमासे गुणीभावे नञः पर्य्युदासतया निषेधस्य विधेयतानवगमः (प)। यदाहुः—

"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" ॥ (फ)

तेन।

"जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत्" ॥ (ब)

अत्र अत्रस्ततामनूद्यात्मगोपनाद्येव विधेयमिति नञः पर्य्युदासतया गुणभावो युक्तः।

ननु अश्राद्धभोजी ब्राह्मणः, असूर्य्यम्पश्या राजदारा इत्यादिवत् अमुक्तेत्यत्रापि प्रसज्यप्रतिषेधो भविष्यतीति चेन्न? अत्रापि यदि भोजनादिरूपक्रियांशेन नञः सम्बन्धः स्यात् तदैव तत्र प्रसज्यप्रतिषेधत्वं वक्तुं शक्यम्। न च तथा। विशेष्यतया प्रधानेन तद्भोज्यार्थेन कर्त्रंशेनैव नञः सम्बन्धात्। (भ) यदाहुः।

---

(प) उक्तोदाहरणे अमुक्तेत्यत्र। विधेयतानवगम विधेयस्य अप्रतीतिः।

(फ) प्रधानत्वमिति। यत्र वाक्ये विधेः विध्यर्थस्य प्रधानत्वं मुख्यत्वं, प्रतिषेधे नञर्थे अप्रधानता गुणभावः, यत्र च उत्तरपदेन परवर्त्तिपदेन सह नञ् तिष्ठतीत्यर्थः असौ पर्य्युदासः।

(ब) जुगोपेति। स दिलीपः अत्रस्तः अभीतः सन् आत्मानं जुगोप ररक्ष, अनातुरः अपीडितः सन् धर्मं भेजे सिषेवे, अगृध्नुः अलुब्धः सन् अर्थान् करान् आददे, असक्तः अनासक्तः सन् सुखम् अन्वभूत् बुभोज। अत्र विध्यर्थस्य आत्मगोपनस्य प्राधान्यं प्रतिषेधे अत्रस्त इत्यादिषु स्थिते नञर्थे अप्रधानता, उत्तरपदेन त्रस्तादिना नञः सम्बन्धश्च।

(भ) ननु अश्राद्धभोजीति। समस्तेनापि नञा भोजनदर्शनरूपाभावविधेयत्वस्य सम्यक् प्रतीतौ कथमविमृष्टविधेयांशत्वमिति प्रश्नस्य उत्तरमाह—तदिति। तद्भोज्यार्थेन श्राद्धभोज्यादिरूपार्थेन कर्त्रर्थेनैव भोजनार्थांशेन तत्सम्बन्धाङ्गीकारे

"श्राद्धभोजनशीलो हि यतः कर्त्ता प्रतीयते।
न तद्भोजनमात्रं तु कर्त्तरीनेर्विधानतः" ॥ इति (म)

अमुत्र त्वत्र तु क्रिययेव सह सम्बन्ध इति दोष एव। एते च क्लिष्टत्वादयः समासगता एव पददोषाः।

वाक्ये दुःश्रवत्व यथा—

"स्मरार्त्त्यन्धः कदा लप्स्ये कार्त्तार्थ्यं विरहे तव"। (य)

"कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते" ॥ (र)

अत्र जुगुप्साव्यञ्जकाश्लीलता।

"उद्यत्कमललौहित्यैर्वक्त्राभिर्भूषिता तनुः"। (ल)

---

इनाद्यर्थस्य कर्त्तुरन्वयानापत्ते कृदुपस्थापितस्य कर्त्तुर्धात्वर्थेनैवान्वयस्य व्युत्पत्तिसिद्धत्वात्। अमुमेवाथ कारिकया विशदयति।

(म) श्राद्धेति। यत यस्मात् श्राद्धभोजनशील कर्त्ता प्रतीयते, कर्त्तरि इनरिनप्रत्ययस्य विधानत विधानात् न तु तस्य कर्त्तु भोजनमात्र प्रतीयते इत्यनेनान्वय।

(य) वाक्यगत दुःश्रवत्वमुदाहरति स्मरेति। तव विरहे स्मरस्य कामस्य आर्त्तिः पीडा तया अन्ध मोहित इत्यर्थ, अह कदा कार्त्तार्थ्य कृतार्थता लप्स्ये प्राप्स्यामि। अत्र अनेकपदस्य परुषवर्णघटितत्वेन वाक्यगत दुःश्रवत्वम्।

(र) जुगुप्साव्यञ्जकमश्लीलत्वमुदाहरति कृतेति। अन्यस्य कवे अर्थे वर्णिते वस्तुनीत्यर्थ कृता प्रवृत्तिर्येन तादृश परकवितामनुसृत्य रचयन्नित्यर्थः कविः वान्तम् उद्गीर्णम् अश्नुते भक्षयति। अत्र वान्त समश्नुते इति वाक्य जुगुप्साव्यञ्जकत्वात् अश्लीलत्वम्। व्रीडाव्यञ्जकमश्लीलत्व यथा—"न साधनोन्नतिर्या स्यात् कलत्ररतिदायिनी" अत्र साधनशब्दस्य मेढ्रार्थत्वात् व्रीडाव्यञ्जकम्। अमङ्गलव्यञ्जकमश्लीलत्व यथा—"पितृवसति मह प्रयामि ता सह परिवारजनेन यत्र मे। भवति सपदि पावकान्वये हृदयमशेषित शोकशल्यकम्" ॥ इत्यत्र पितृवसति पावकशब्दौ जनकवेश्म पवित्रकारिवाचकौ। श्मशानवह्निरूपार्थप्रतीतिकारित्वात् अमङ्गलव्यञ्जकौ।

(ल) उद्यदिति। उद्यद्भि विकस्वरैः कमललौहित्यै पद्मरागै वक्त्राभिः वामाभिः नारीभिः तनु भूषिता अलङ्कृता। अत्र कमललौहित्यवक्त्राशब्दौ

अत्र कमललौहित्यं पद्मरागः । वक्राभिः वामाभिः ।

"धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम्" ॥ (व)

अत्र धम्मिल्लस्य शोभा प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धः क्लिष्टः ।

"न्यक्कारो ह्ययमेव मे यदिति" अत्र च अयमेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितम् (श) । तच्च शब्दरचना-वैपरीत्येन गुणीभूतम् । रचना च पदद्वयस्य विपरीतेति वाक्यदोषः ।

"आनन्दयति ते नेत्रे योऽसौ सुभ्रु । समागतः" ।

इत्यादिषु "यत्तदोर्नित्यः सम्बन्धः" इति न्यायादुपक्रान्तस्य यच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये तच्छब्दसमानार्थतया प्रति-पाद्यमाना इदमेतददश्शब्दा विधेया एव भवितुं युक्ताः । अत्र तु यच्छब्दनिकटस्थतया अनुवाद्यत्वप्रतीतिकृत्तच्छब्द-स्यापि यच्छब्दनिकटस्थितस्य प्रसिद्धपरामर्षित्वमात्रम् (ष) ।

---

लक्षणया पद्मरागवामारूपार्थबोधकौ सा च लक्षणा रूढिप्रयोजनाभावात् अशक्ति-कृतेति पदद्वयगतत्वेन वाक्यगतं नेयार्थत्वम् । उत्पूर्वस्य इणधातोरुदयगिरिशिखरा-रोहणं मुख्योऽर्थस्तस्य पद्मरागे बाधात् तज्जन्यप्रकाशे लक्षणा । अत्र रूढिसत्त्वेऽपि पद्मरागप्रकाशस्य उदयाजन्यत्वात् मुख्यार्थयोगाभावादत्रान्यदपि नेयार्थत्वमवगन्तव्यम् ।

(व) धम्मिल्लस्येति । कुरङ्गशावाक्ष्या अपूर्वा बन्धव्युत्पत्तिः विन्यासविशेषः यस्य तादृशस्य धम्मिल्लस्य संयतकेशपाशस्य, "धम्मिल्लाः संयताः कचाः" इत्यमरः । शोभां प्रेक्ष्य दृष्ट्वा कस्य जनस्य मानसं निकामम् अतिमात्रं यथा तथा न रज्यति । अत्र पदार्थानाम् अन्वययोजनस्य कष्टसाध्यत्वात् रसास्वादस्य प्रतिबन्धकत्वेन क्लिष्टत्वम् ।

(श) न्यक्कार इति । अत्र वाक्यगतं विधेयाविमर्षं सहृदयमनःसु तादृश-वीररसास्वादस्य मनाक् प्रतिघातं जनयतीति बोद्धव्यम् ।

(ष) आनन्दयतीति । यत्तदोः शब्दयोः सम्बन्धः संयोगः नित्यः अविच्छिन्न

यथा—

"यः स ते नयनानन्दकरः सुभ्रु ! स आगतः।

यच्छब्दव्यवधानेन स्थितास्तु निराकाङ्क्षत्वमवगमयन्ति॥

यथा—

"आनन्दयति ते नेत्रे योऽधुनासौ समागतः"।

एवमिदमादिशब्दोपादानेऽपि। यत्र च यत्तदोरेकस्यार्थत्वं सम्भवति तत्रैकस्य उपादानेऽपि निराकाङ्क्षत्वप्रतीतिरिरिति न क्षतिः। तथाहि, यच्छब्दस्योत्तरवाक्यगतत्वेनोपादाने सामर्थ्यात् पूर्ववाक्ये तच्छब्दस्यार्थत्वम्। यथा—"आत्मा जानाति यत् पापम्" (ख)। एवम्।

"यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे।
भास्वन्ति रत्नानि महौषधीश्च"

इत्यादावपि तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्यार्थत्वम् (ग)। क्रमेण यथा—

"स हत्वा बालिनं वीरस्तत्पदे चिरकाङ्क्षिते।

धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत्"॥ (घ)

---

इत्यर्थः। यत्र यच्छब्द तत्र तच्छब्दो नियत इति यावत। उपक्रान्तस्य अनुवाद्यत्वेन उपात्तस्य निराकाङ्क्षत्वप्रतिपत्तये आकाङ्क्षाराहित्यबोधाय। प्रतिपाद्यमानाः प्रयुज्यमाना। अनुवाद्यत्वप्रतीतिकृत् उद्देश्यत्वबोधकम्। अत्र विधेयस्य अदः-शब्दस्य नैकट्यात् अप्राधान्येन निर्देश इति विधेयाविमर्श इति भावः।

(ख) यत्र चेति। आर्थत्वम् अर्थवशलभ्यत्वम्। सामर्थ्यात योग्यताबलात्। आत्मेति। यत् पाप तत् आत्मा जानातीति सामर्थ्यात अन्त करणीयमिति भावः।

(ग) यमिति। अत्र स हिमालय अस्तीति पूर्ववाक्ये आर्थ्येन तच्छब्देनान्वय.।

(घ) स इति। स वीरः राम. बालिन हत्वा धातो स्थाने आदेशमिव चिरकाङ्क्षिते तत्पदे तस्य बालिन. पदे राज्ये सुग्रीव सन्यवेशयत् अभिषिक्तवान्।

"स वः शशिकलामौलिस्तादात्म्यायोपकल्पताम्"। (क)

"तामिन्दुसुन्दरमुखीं हृदि चिन्तयामि"॥ (ख)

यत्र च यच्छब्दनिकटस्थितानामपीदमादिशब्दानां भिन्नलिङ्गविभक्तित्वं तत्रापि निराकाङ्क्षत्वमेव। क्रमेण यथा—

"विभाति मृगशावाक्षी येदं भुवनभूषणम्"। (ग)

"इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः"॥ (घ)

क्वचिदनुपात्तयोर्द्वयोरपि सामर्थ्यादवगमो (ङ) यथा—

"न मे शमयिता कोऽपि भारस्येत्युर्वि। मा शुच।
नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः"॥ (च)

---

अत्र स इति य सुग्रीवमित्रमिति आर्थेन यच्छब्देन सम्बध्यते। अत्र तच्छब्दस्य प्रक्रान्तत्वम्।

(क) स इति। स प्रसिद्ध शशिकला मौलौ यस्य तथोक्त शिव इत्यर्थः वः युष्माक तादात्म्याय मुक्तये इत्यर्थ उपकल्पता मुक्तिप्रदो भवतु इत्यर्थः अत्र य युष्माभिराराध्यते इति आर्थेन यच्छब्देन स इति सम्बध्यते। अत्र प्रसिद्धार्थकस्तच्छब्द।

(ख) तामिति। अत्र या मया कीर्त्तितेति आर्थेन यच्छब्देन तामिति सम्बध्यते। अत्र अनुभूतार्थकस्तच्छब्द।

(ग) विभातीति। या या मृगशावाक्षी विभाति इद भुवनाना भूषणम् अलङ्कार। अत्र निकटस्थितोऽपि इदम्शब्द क्लीबलिङ्ग।

(घ) इन्दुरिति। य इन्दुर्विभाति तेन इन्दुना पथिकाना योषित कान्ताः दग्धा। अत्र निकटस्थितोऽपि तच्छब्द भिन्नविभक्तिक।

(ङ) अनुपात्तयो अप्रयुक्तयो द्वयो यत्तच्छब्दयोरित्यर्थ सामर्थ्यात् योग्यताबलात् अवगम प्रतीति।

(च) नेति। हे उर्वि। पृथिवि। कोऽपि जन मे मम भारस्य शमयिता न अस्तीति शेष, इति मा शुच, शोक मा कुरु, माङ्योगे लुङ्, अडागमप्रतिषेधश्च। नन्दस्य भवने कोऽपि अद्भुतपौरुष. अलौकिकपराक्रम बाल. शिशु अस्ति।

अत्र योऽस्ति स ते भारस्य शमयितेति बुध्यते ।

"यद्यद्विरहदुःखं मे तत् को वापहरिष्यति" ।

इत्यत्रैको यच्छब्दः साकाङ्क्ष इति न वाच्यम् । तथाहि, यद्‌यदित्यनेन येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्तु विवक्षितम् । तथाभूतस्य तस्य तच्छब्देन परामर्शः (छ) । एवमन्येषामपि वाक्यगतत्वेनोदाहरणं बोध्यम् । पदांशे श्रुतिकटुर्यथा—"तद्गच्छ सिद्ध्यै कुरु देवकार्य्यम्" (ज) ।

"धातुमत्तां गिरिर्धत्ते" । अत्र मत्ताशब्दः क्षीवार्थे निहितः (झ) ।

"वर्ण्यते किं महासेनो विजेयो यस्य तारकः ।

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः (ञ) ।

"पाणिः पल्लवपेलव." । पेलवशब्दस्याद्याक्षरे अश्लीले (ट) ।

"संग्रामे निहताः शूरा वचो बाणत्वमागताः" ।

---

(छ) यदिति । अत्र यच्छब्दद्वयम् एक. एकेन तच्छब्देन निराकाङ्क्ष अपरः साकाङ्क्ष इति न वक्तव्यम् ।

( ज ) 'दोषा केचिद्‌ भवन्त्येषु पदांशेऽपि पदेऽपि च' इत्युक्ते पदांशगत-दोषस्योदाहरण प्रदर्शयति—तद्गच्छेति । अत्र सिद्ध्यै इति पदस्य अंशभूतौ द्ध्यै इति शब्द श्रवणकार्कश्यमवगमयतीति भाव. ।

(झ) धातुमत्तामिति । अत्र मत्ताशब्द' क्षीवार्थे प्रसिद्ध, अत्र तु विद्य-मानत्वरूपार्थे प्रयुक्त इति । अत्र धातुमत्तामिति पदस्य अंशभूतो मत्ताशब्दः निहतार्थ ।

(ञ) वर्ण्यते इति । यस्य तारको विजेयः स महासेन' कार्त्तिकेय. किं वर्ण्यते । अत्र विजेय इति पदस्य पदांशभूतः कृत्यप्रत्यय विजित इत्यर्थस्य अवाचक इति भाव ।

(ट) पाणिरिति । आद्याक्षरे पेल इति द्वे अक्षरे इत्यर्थः अश्लीले व्रीडा-व्यञ्जकत्वादिति भाव ।

(ठ) सग्रामे इति । शूराः वीराः सग्रामे युद्धे निहता सन्तः वचोबाणत्व'

अत्र वच:शब्दस्य गो:शब्दवाचकत्वे नेयार्थत्वम्। तथा तत्रैव बाणस्थाने शरेति पाठे, अत्र पदद्वयमपि न परिवृत्ति-सहम्। जलध्यादौ तु उत्तरपदं, वाड़वानलादौ पूर्वपदम्। एवमन्येऽपि यथासम्भव पदांशदोषा ज्ञेया:। निरर्थकत्वादीनां त्रयाणाञ्च पदमात्रगतत्वेनैव लक्ष्ये सम्भव: (ठ)। यथा— "मुञ्च मानं हि मानिनि!"। अत्र हिशब्दो वृत्तिपूरणमात्र-प्रयोजन:। "कुञ्जं हन्ति कृशोदरी"। तत्र हन्तीति गमनार्थे पठितमपि न तत्र समर्थम् (ड)। "गाण्डीवी कनक-शिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्ष:" (ढ)। "आङो यमहन:" [पा० १। ३। २८।] "स्वाङ्गकर्मका-च्चेति" [पा० १। ३। २८। सू० वा०] अनुशासनबलादाङ्-पूर्वस्य हन: स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम्। इह तु तल्लङ्घितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वम्। ननु

---

वचांसि बाणा: शरा येषां ते वचोबाणा वचोभिरेव शरकार्यं शत्रुवधादिकं कुर्वन्तीति भाव: तत् देवत्वमित्यर्थ: आगता: प्राप्ता:। अत्र वचोबाणत्वमिति पदस्य वःशब्दभूतवच:शब्दो गो:शब्दवाचकत्वे अप्रसिद्धतया नेयार्थ इति भाव:। परिवृत्तिसहं विनिमयार्हम्। तच्छब्दपरित्यागेन शब्दान्तरप्रयोगे न तदर्थबोधक-मित्यर्थ:। उत्तरपदं धि इत्यंशभूतमित्यर्थ:। पूर्वपदं वाडवेत्यंशभूतमित्यर्थ: न परिवृत्तिसहमिति शेष:। अत्र धिस्थाने ध इति प्रयोगे तथा वाडवस्थाने अश्वादिपदप्रयोगे नेयार्थत्वमिति भाव:। 'सम्भवन्ति पदेऽपि च' इति यदुक्तं तदुदा-जिहीर्षुः आह निरर्थकत्वेति। निरर्थकत्वादीनां निरर्थकासमर्थच्युतसंस्कारत्वा-नामित्यर्थ:।

(ड) मुञ्चेति। अत्र हिशब्दो निरर्थक इति भाव:। कुञ्जमिति समर्थं बोधयितुं शक्तमित्यर्थ:।

(ढ) गाण्डीवीति। गाण्डीवी अर्जुन: भुजाभ्यां बाहुभ्यां कनकशिलानिभं काञ्चनपाषाणसदृशं विषमविलोचनस्य त्रिनेत्रस्य वक्ष: आजघ्ने आहतवान्।

अत्र "आजघ्ने" इति पदस्य स्वतो न दुष्टता अपि तु पदान्तरापेक्षयैवेत्यस्य वाक्यदोषता। नैवम्। तथाहि, गुणदोषालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेस्तदन्वयव्यतिरेकानुविधायित्वं हेतुः। इह तु दोषस्य "आजघ्ने" इति पदमात्रस्यैवान्वयव्यतिरेकानुविधायित्वम्। पदान्तराणां परिवर्त्तनेऽपि तस्य तादवस्थ्यादेवेति पददोष, एव तथा। यथेहात्मनेपदस्य परिवृत्तावपि न पददोषः तथा हन्प्रकृतेरपीति न पदांशदोषः। एवं "पद्मः" इत्यत्राप्रयुक्तस्य पदगतत्वं बोध्यम्। एवं प्राकृतादिव्याकरणलक्षणहानावपि च्युतसंस्कारत्वमूह्यम्। इह शब्दानां सर्वथा प्रयोगाभावेऽसमर्थत्व विरलप्रयोगे निहतार्थत्वम्। निहतार्थत्वमनेकार्थशब्दविषयम् अप्रतीतत्वे त्वेकार्थस्यापि शब्दस्य सार्वत्रिकप्रयोगविरहः। अप्रयुक्तत्वमेकार्थशब्दविषयम्। असमर्थत्वमनेकार्थशब्दविषयम्। असमर्थत्वे हन्त्यादयोऽपि गमनार्थे पठिताः। अवाचकत्वे दिनादयः प्रकाशमयाद्यर्थे न तथेति परस्परभेदः। एव पददोषसजातीया वाक्ये दोषा उक्ताः सम्प्रति तद्विजातीया उच्यन्ते (ण)—

**वर्णानां प्रतिकूलत्वं लुप्ताहतविसर्गते।**

---

(ण) गुणेति। गुणाना वक्ष्यमाणाना माधुर्य्यादीना दोषाणा दु श्रवत्वादीनाम् अलङ्काराणामनुप्रासोपमादीना शब्दार्थगतत्वेन व्यवस्थिते एते शब्दगुणा एते अर्थगुणा एते शब्ददोषा एते अर्थदोषा एते शब्दालङ्कारा एते अर्थालङ्कारा इत्येव व्यवस्थाया इत्यर्थ हेतु कारण तदन्वयव्यतिरेकानुविधायित्व तत्सत्त्व तत्सत्ता अन्वय तदसत्त्व तदसत्ता व्यतिरेक तौ अनुविदधातीति अन्वयव्यतिरेकानुविधायी तेषा शब्दार्थगताना गुणदोषालङ्काराणाम् अन्वयव्यतिरेकानुविधायी तदन्वयव्यतिरेकानुविधायी तस्य भावः तत्त्वम्। अय भाव' यत्र तत्तच्छब्दसद्भावे न तु तत्परिवृत्तौ तत्तद्गुणादिसद्भाव तत्र तत्तद्गुणादीना शब्दगतत्व यत्र न तथा तत्र नैतावर्थगतत्वमिति। तद्विजातीया केवलवाक्यगता इत्यर्थ ।

अधिकन्यूनकथितपदता हतवृत्तता: ॥
पतत्प्रकर्षता सन्धौ विश्लेषाश्लीलकष्टता: ।
अर्द्धान्तरैकपदता समाप्तपुनरात्तता ॥
अभवन्मतसम्बन्धाक्रमामतपरार्थता: ।
वाच्यस्यानभिधानञ्च भग्नप्रक्रमता तथा ॥
त्याग: प्रसिद्धेरस्थाने न्यास: पदसमासयो: ।
सङ्कीर्णता गर्भितता दोषा: स्युर्वाक्यमात्रगा: ॥
५७७ ॥ (त)

वर्णानां रसानुगुण्यविपरीतत्वं प्रतिकूलत्वम् ।

यथा मम—

"ओवट्टइ उल्लट्टइ सअणे कहिं पि मोट्टाअइ णो परिहट्टइ ।
हिअएण फिट्टइ लज्जाइ खुट्टइ दिहीए सा" ।

अत्र टकारा: शृङ्गाररसपरिपन्थिन: केवलं शक्तिप्रदर्शनाय निबद्धा: । (थ)

---

(त) वर्णानामिति । वर्णाना प्रतिकूलत्व प्रतिकूलवर्णता इत्यर्थ १ । लुप्तविसर्गता २ । आहतविसर्गता ३ । अधिकपदता ४ । न्यूनपदता ५ । कथितपदता ६ । हतवृत्तता ७ । पतत्प्रकर्षता ८ । सन्धिविश्लेष ९ । सन्ध्यश्लीलता १० । सन्धिकष्टता ११ । अर्द्धान्तरैकपदता १२ । समाप्तपुनरात्तता १३ । अभवन्मतसम्बन्ध: १४ । अक्रमता १५ । अमतपरार्थता १६ । वाच्यानभिधानम् १७ । भग्नप्रक्रमता १८ । प्रसिद्धित्याग: १९ । अस्थाने पदन्यास. २० । अस्थाने समासन्यास २१ । सङ्कीर्णता २२ । गर्भितता २३ । एते वाक्यमात्रगा केवलवाक्यगता दोषा. स्यु ।

(थ) वर्णाना प्रातिकूल्यमुदाहरति यथेति । ओवट्टइ इति । उद्वर्त्तयति उल्लोटयति शयने कस्मिन्नपि मोट्टायति न परिघट्टति । हृदयेन स्फिटयति

एषाञ्चैकद्वित्रिचतुःप्रयोगेण न तादृग्रसभङ्ग इति न दोषः।

"गता निशा इमा बाले!"। अत्र लुप्तविसर्गाः। आहता ओत्वं प्राप्ता विसर्गा यत्र। यथा—"धीरो वरो नरो याति" इति। "पल्लवाकृतिरक्तोष्ठी"; अत्राकृतिपदमधिकम्। एव "सदाशिवं नौमि पिनाकपाणिम्" इति विशेषणमधिकम्। "कुर्य्यां हरस्यापि पिनाकपाणेः" इति। अत्र तु विशेषप्रतिपत्त्यर्थमुपात्तत्वाद्युक्तमेव। यथा वा—"वाचमुवाच कौत्सः" अत्र वाचमित्यधिकम्, उवाचेत्यनेनैव कृतार्थत्वात्। क्वचित्तु विशेषणदानार्थं तत्प्रयोगो युज्यते। यथा—"उवाच मधुरां वाचम्" इति। केचित्त्वाहुः—"यत्र विशेषणस्यापि क्रियाविशेषणत्वं सम्भवति तत्रापि तत्प्रयोगो न घटते"। यथा—"उवाच मधुरं धीमान्" इति।

"यदि मर्य्यर्पिता दृष्टिः किं ममेन्द्रतया तदा"।

अत्र प्रथमे त्वयेति पदं न्यूनम्।

"रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन्"।

लीलाशब्दः पुनरुक्तः, एवं "जन्तुर्विस धृतविकाशिविसप्रसूनाः"। अत्र विसशब्दस्य धृतपरिस्फुटतत्प्रसूना इति सर्व-

---

लज्जया खट्टयति धृतेः सा" इति संस्कृतम्। उद्वर्त्तयति देहमुत्तानीकरोति। उल्लोटयति पार्श्वपरिवर्त्तनं करोति। मोट्टायति मोट्टायितभावं प्रकटयति। न परिघट्टति परिघट्टनं न करोति। स्फिटयति भ्रश्यति। खट्टयति कुण्ठिता भवति इत्यर्थः। शृङ्गाररसपरिपन्थिनः शृङ्गारस्य प्रतिकूलाः। अत्र टकारवर्णाना ओजोव्यञ्जकतया वीरबीभत्सादिषु एव उपयोगित्वात् शृङ्गारप्रकर्षहानिः। अत्र दुःश्रवत्वदोषोऽपीति विभाव्यम्।

(द) लुप्तविसर्गतामुदाहरति—गता इति। बहुशः प्रयोगे दोषोऽयं श्रोतृवैरस्यापादकत्वादिति बोध्यम्। अधिकविसर्गस्थितौ दुःश्रवत्वमेव यथा "स्मरः खजः खलः कालः" इति। आहतविसर्गतामुदाहरति—धीर इति। बहुधा-

नाम्नैव परामर्शो युक्तः। हतं वृत्त लक्षणानुसरणेऽप्यश्रव्यं रसाननुगुणमप्राप्तगुरुभावान्तलघु च। क्रमेण यथा—"हन्त! सततमेतस्या हृदयं भिन्ते मनोभव. कुपितः"। "अयि! मयि मानिनि। मा कुरु मानम्"। इद वृत्तं हास्यरसस्यैवानुकूलम्। "विकसितसहकारभारहारिपरिमल एष समागतो वसन्तः"। यत्पादान्ते लघोरपि गुरुभाव उक्तस्तत् सर्वत्र द्वितीयचतुर्थपादविषयम्। प्रथमतृतीयपादविषयन्तु वसन्ततिलकादेरेव। अत्र प्रमुदितसौरभ आगतो वसन्त इति पाठो युक्तः। यथा वा—

"अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा
श्रीमत्कान्तिजुषा द्विषा करतलात् स्त्रीणा नितम्बस्थलाद्।
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च" ॥"

अत्र वस्त्राणि चेति बन्धस्य श्लथत्वश्रुतिः (द)।

---

प्रयोग एवास्य दोषत्वमिति बोध्यम्। अधिकम् अनुपयोगिपद यत्र तद्भाव अधिकपदता यथा—पल्लवेति। अत्राधिकपदप्रयोगे तात्पर्य्यानुधावनेन सहृदयाना रसास्वादप्रतिबन्ध इति ध्येयम्। विशेषप्रतिपत्त्यथ पिनाकपाणेरित्यनेन हरस्य दुर्धर्षस्वरूपविशेषस्य बोधायेत्यर्थः। न्यूनपदतामुदाहरति—यदीति। यदि मयि दृष्टि अर्पिता त्वयेति शेष, तदा मम इन्द्रतया किम्? नायिका प्रति नायकस्योक्तिरियम्। अत्र त्वयेति पदाप्रयोगे अपरस्यापि कर्तृपदस्याध्याहार सम्भवेन रसप्रतीतिप्रतिरोध इति दोषत्वम्। कथितपदतामुदाहरति—रतीति। अत्र लीलाशब्दप्रयोगे श्रोतुरर्थान्तरानुधावनात रसभङ्ग इति बोध्यम्। हतवृत्तता त्रिविधामाह—हतमिति। हन्तेति। अत्र प्रथमद्वितीयगणयोर्भकारसकारयो सान्निध्य वैरस्यापादकत्वेन सामाजिकानामनुभवसिद्धमिति दोष। अन्या इति। ता गुणरत्नाना रोहणभुव उत्पत्तिस्थलाणि अन्या विलक्षणा इत्यथ। सा धन्या प्रशंसनीया पुण्यवती वा मृत् मृत्तिका अन्या विलक्षणेत्यर्थं ते सम्भारा उपादानानि इत्यर्थ. अन्या खलु निश्चये। विधिना विधात्रा ये सम्भारै एष

"वस्त्राण्यपि" इति पाठे तु दार्ढ्यमिति न दोषः। "इदमप्राप्तगुरुभावाल्लघु" इति काव्यप्रकाशकारः। वस्तुतस्तु "लक्षणानुसरणेऽप्यश्रव्यम्" इत्यन्ये।

"प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाच्छटः।
श्वासक्षिप्तकुलक्ष्माभृत् पातु वो नरकेशरी"॥

अत्र क्रमेण अनुप्रासप्रकर्षः पतितः। (ध)

"दलिते उत्पले एते अक्षिणी अमलाङ्गि। ते"।

एवंविधसन्धिविश्लेषस्य असकृत्प्रयोग एव दोषः। अनुशासनमुल्लङ्घ्य वृत्तभङ्गभयमात्रेण सन्धिविश्लेषस्य तु सकृदपि। यथा।

"वासवाशामुखे भाति इन्दुश्चन्दनविन्दुवत्"।

"चलण्डामरचेष्टित" इति। अत्र सन्धौ जुगुप्साव्यञ्जकमश्लीलत्वम्।

"उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः"। अत्र सन्धौ कष्टत्वम् (न)।

---

युवा दृष्ट उत्पादित। यत्र यूनि दृष्टे सति मूढमनसाम् इतिकर्त्तव्यविमूढमतीना श्रीमत्कान्तिजुषा द्विषा शत्रूणा करतलात् अस्त्राणि स्त्रीणा नितम्बस्थलात् वस्त्राणि च पतन्ति। परमसुन्दरी महावीरश्चायमिति भाव। शार्दूलविक्रीडित वृत्तम्। अत्र श्लथत्वश्रुति शैथिल्यश्रवणम्।

(ध) पतत्प्रकर्षतामाह प्रोज्ज्वलेति। प्रोज्ज्वलन् प्रोद्यतमान' य ज्वलन् अग्नि' तस्य ज्वाला शिखा तद्वत विकटा उग्रा उरव महान्त' सटाना जटाना छटा समूहो यस्य तादृश, तथा श्वासेन निश्वासमारुतेन क्षिप्ता दूरमपसारिता कुलक्ष्माभृत' कुलाचला येन तथाभूत नरकेशरी नृसिंह व युष्मान् पातु रक्षतु। अत्र प्रकर्षपतनेन वैरस्यावगमात् देवविषयकरते, प्रकर्षहानिरिति दोष।

(न) सन्धिविश्लेषमुदाहरति दलिते इति। सन्ध्यश्लीलतामाह चलण्डेति। चलन् डामरचेष्टितः उद्धतव्यापारवानित्यर्थ। सन्धिकष्टतामाह उर्वीति।

इन्दुर्विभाति कर्पूरगौरैर्धवलयन् करैः
जगन्मा कुरु तन्वङ्गि। मानं पादानते प्रिये" ॥ (प)

अत्र जगदिति प्रथमार्द्धे पठितुमुचितम्।

"नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः।
पतन्ति शशिनः पादा भासयन्तः क्षमातलम्" ॥

अत्र चतुर्थपादो वाक्यसमाप्तावपि पुनरात्तः (फ)। अभवन्मतसम्बन्धो यथा।

"या जयश्रीर्मनोजस्य यया जगदलङ्कृतम्।
यामेणाक्षीं विना प्राणा विफला मे कुतोऽद्य सा?" ॥ (ब)

अत्र यच्छब्दनिर्दिष्टानां वाक्याना परस्परनिरपेक्षत्वात्तदेकान्तःपातिना एणाक्षीशब्देन अन्येषां सम्बन्धः कवेरभिमतो नोपपद्यत एव।

"यां विनामी वृथा प्राणा एणाक्षी सा कुतोऽद्य मे?"।

इति तच्छब्दनिर्दिष्टवाक्यान्तःपातित्वे तु सर्वैरपि यच्छब्दनिर्दिष्टवाक्यैः सम्बन्धो घटते। यथा वा।

"ईक्षसे यत्कटाक्षेण तदा धन्वी मनोभवः"।

अत्र यदित्यस्य तदेत्यनेन सम्बन्धो न घटते। "ईक्षसे चेत्" इति तु युक्तः पाठः। यथा वा।

---

सर्वन्ते मरौ ऊषरभूमे अन्ते अवसाने असौ उर्वी महती चारु सुन्दरी अवस्थितिर्यस्यास्तादृशी तर्वाली तारुण्या स्थली।

(प) अद्वान्तरैकपदतामुदाहरति इन्दुरिति। इन्दुश्चन्द्र कर्पूरवत् गौरै धवलै करै. किरणै जगत् धवलयन् श्वेतीकुर्वन् विभाति विराजते। हे तन्वङ्गि। कृशाङ्गि। पादानते चरणप्रणते प्रिये मानं मा कुरु।

(फ) समाप्तपुनरात्तता स्यात् उदाहरति नाशयन्त इति। स्पष्टम्।

(ब) येति। या मनोजस्य कामस्य जयश्रीः विजयलक्ष्मी, यया जगत् अलङ्कृत भूषित, यामेणाक्षीं हरिणनयना विना मे मम प्राणा. विफला., अद्य सा कुतः कुत्र विद्यते इति शेष.।

"ज्योत्स्नाचयः पयःपूरस्तारकाः कैरवाणि च।
राजति व्योमकासाररजहंसः सुधाकरः" ॥ (भ)

अत्र कासारशब्दस्य समासे गुणीभावात्तदर्थस्य सर्वैः संयोगः। विधेयाविमर्षे यदेवाविमृष्टं तदेव दुष्टम्। इह तु प्रधानस्य कासारपदार्थस्य प्राधान्येनाप्रतीतिः सर्वोऽपि पयःपूरादिपदार्थस्तदङ्गतया न प्रतीयते इति सववाक्यार्थविरोधावभास इत्युभयोर्भेदः।

"अनेन छिन्दता मातुः कण्ठं परशुना तव।
बद्धस्पर्द्धः कृपाणोऽयं लज्जते मम भार्गव।" ॥ (म)

अत्र "भार्गवनिन्दायां प्रयुक्तस्य मातृकण्ठछेदनकर्तृत्वस्य परशुना सह सम्बन्धो न युक्त" इति प्राच्याः। "परशुनिन्दामुखेन भार्गवनिन्दाधिक्यमेव वैदग्ध्यं द्योतयति" इति आधुनिकाः। अक्रमता यथा।

समय एव करोति बलाबलं
प्रणिगदन्त इतीव शरीरिणाम्।
शरदि हंसरवाः परुषीकृत-
स्वरमयूरमयूरमणीयताम्" ॥ (य)

---

(भ) ज्योत्स्नेति। ज्योत्स्नानां चयः राशिः पयसां जलानां पूरः राशिः तारकाः नक्षत्राणि कैरवाणि उत्पलानि च। व्योम आकाशमेव कासारः सरः, "कासारः सरसी सरः" इत्यमरः। तस्य राजहंसः सुधाकरश्चन्द्रः राजति शोभते। अत्र कवेरभिमतो व्योमकासारेण सर्वेषां सम्बन्धः न घटते इति दोषः।

(म) अनेनेति। परशुरामं प्रति रामस्योक्तिरियम्। हे भार्गव। मातुः कण्ठं छिन्दता अनेन तव परशुना बद्धस्पर्द्धः अयं मम कृपाणः चन्द्रहासाख्यः असिः लज्जते।

(य) अक्रमतामुदाहरति समय इति। समय एव शरीरिणां बलाबलं सबलतां दुर्बलताञ्च करोति जनयति इति प्रणिगदन्त इव कथयन्त इव शरदि

अत्र परामृश्यमानवाक्यानन्तरनेवेति प्रयोगो युक्तो न तु प्रणिगदन्त इत्यनन्तरम्। एवम।

"इयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी" ॥ (र)

अत्र त्वमित्यनन्तरमेव चकारो युक्तः। अमतपरार्थता यथा।

"राममन्मथशरेणेत्यादि"। अत्र शृङ्गाररसस्य व्यञ्जको द्वितीयोऽर्थः प्रकृतरसविरोधित्वादनिष्टः। वाच्यस्यानभिधान यथा।

"व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि। कुप्यसि"।

अत्र व्यतिक्रमलवमपीत्यपिरवश्य वक्तव्यो नोक्तः। न्यूनपदत्वे वाचकपदस्यैव न्यूनता विवक्षिता। (ल)

---

शरत्काले हंसानां रवा परुषीकृता स्वरा येषां तादृशा मयूरा यत्र तत यथा तथा रमणीयतां मनोज्ञताम् अयु प्रापवन्त। वर्षासु मयूरनिस्वनस्य प्राशस्त्य शरतस् तेषा न तथा प्रादुर्भाव, तत्र हंसानामेवोत्सव इति प्रसिद्धेरिति भाव.। द्रुतविलम्बित वृत्तम्। अत्र परामृश्यमानवाक्यस्य समय एव करोति बन्धानन्त-मित्यस्य अनन्तरमेव।

(र) इयमिति। कलावत चन्द्रस्य कान्तिमती सा प्रसिद्धा कला चन्द्रांश-विशेष इत्यर्थ, "कला तु षोडशो भाग" इत्यमर। अस्य लोकस्य जगत नेत्र-कौमुदी नयनानन्ददायिनीति भाव, त्वञ्च एतत् द्वय कपालिन गृहीतशवशिरस कस्य समागमप्रार्थनया संसर्गाभिलाषेण शोचनीयता गत प्राप्तम। वंशस्थविल वृत्तम्।

(ल) अमतपरार्थता अमत अनभिमत' परार्थ अन्यार्थ यत्र तद्भाव। उदाहरति रामेति। अत्र प्रकृतरसस्य बीभत्सस्य विरोधित्वात विसंवादित्वात अनिष्ट. असतः।

अपेस्तु न तथात्वमित्यनयोर्भेदः । (व) एवमन्यत्रापि । यथा वा ।

"चरणानतकान्तायास्तन्वि । कोपस्तथापि ते" ।

अत्र "चरणानतकान्तासि" इति वाच्यम् ।

भग्नप्रक्रमता यथा ।

"एवमुक्तो मन्त्रिमुख्यै रावणः प्रत्यभाषत" ।

अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितं तेन "रावणः प्रत्यवोचत" इति पाठो युक्तः । एवञ्च सति न कथितपदत्वदोषः । तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयत्वात् । इह हि वचनप्रतिवचनयोरुद्देश्यप्रतिनिर्देश्यत्वम् ।

यथा ।

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च" ।

इत्यत्र यदि पदान्तरेण स एवार्थः प्रतिपाद्यते तदान्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति । यथा वा ।

"ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः" ॥

अत्र "अस्मा इति इदमा प्रक्रान्तस्य तेनैव तत्समानाभ्यामेतददःशब्दाभ्यां वा परामर्शो युक्तो न तच्छब्देन । यथा वा ।

"उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम्" ।

अत्र "मिता भूः पत्यापां स च पतिरपाम्" इति युक्तः पाठः (श) । एवम् ।

---

(व) अपेस्त्विति । उपसर्गाणां द्योतकत्वमेव न वाचकत्वमिति नियमादिति भावः ।

(श) उद्देश्येति । यत्र उद्देश्यप्रतिनिर्देश्यत्वं तत्र न कथितपदता इति भावः । उद्देश्यप्रतिनिर्देश्यत्वञ्च विविधम्—एकविधेयार्थमुद्दिष्टस्य विधेयान्तरे प्रतिनिर्देशः १ । एकोद्देशेन विहितस्य उद्देश्यान्तरे विधेयतया प्रतिनिःश २ ।

"यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसंख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः" ॥ (ष)

अत्र सुखमीहितुमित्युचितम् । अत्राद्ययो प्रकृतिविषयः प्रक्रमभेदः । तृतीये पर्य्यायविषयः । चतुर्थे प्रत्ययविषयः, एवमन्यत् । प्रसिद्धित्यागो यथा । 'घोरो वारिमुचां रवः" । अत्र मेघानां गर्जितमेव प्रसिद्धम् । यदाहुः ।

"मञ्जीरादिषु रणितप्रायं पक्षिषु तु कूजितप्रभृति ।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखमित्यादि" ।

अस्थानस्थपदता यथा ।

"तीर्थे तदीये गजसेतुबन्धात् प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।
अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः" ॥

---

एकोद्देशेन विहितस्य विधेयान्तरे उद्देश्यतया प्रतिनिर्देश इ । इह होति अत्र उदाहरणे रात्रणोद्देशेन विहितस्य वचनस्य उद्देश्यान्तरे मन्त्रिरूपे विधेयतया प्रतिवचनस्य निर्देश इति भाव । उदेतीति । अत्र उदयकालीनताम्रत्वविधौ उद्दिष्टस्य ताम्रत्वस्य अस्तकालीनताम्रत्वविधा प्रतिनिर्देश इति न दोष । तृतीय यथा निता भू पत्यापा स च पतिरपा योजनशतमिति । अत्र पृथिव्युद्देशेन विहितस्य अपा पत्यु योजनशतविधावुद्देश्यतया प्रतिनिर्देश । उद्देश्यपदेनात्र प्राङ्निर्दिष्टपद प्रतिनिर्देश्यपदेन चरमनिर्देश्यपद बुध्यत । यदीति पदान्तरेण अन्येन तान्नभिन्नेन पदेन इत्यथ प्रतिपाद्यते उपस्थाप्यते । प्रतीति बोध स्थगयति तिरोदधाति ।

(ष) यश इति । यश अधिगन्तु लब्धु सुखलिप्सया सुखलाभेच्छया वा मनुष्यसख्या मनुष्येषु गणनाम् अतिवर्त्तितुम् अतिक्रमितु वा निरुत्सुकाना निरुद्वेगानाम् अभियोगभाजा यत्नवता सिद्ध समुत्सुकेव उत्कण्ठिता कामिनीव अङ्क क्रोडमुपैति प्राप्नोति । उपेन्द्रवज्रावृत्तम् ।

अत्र तदीयपदात् पूर्वं गङ्गामित्यस्य पाठो युक्तः। एवं "हितान् न यः संशृणुते स किं प्रभुः"। अत्र संशृणुत इत्यतः पूर्वं नञः स्थितिरुचिता। अत्र च "पदमात्रस्यास्थाने निवेशेऽपि सर्वमेव वाक्यं विवक्षितार्थप्रत्यायने मन्थरम्" (स) इति वाक्यदोषता। एवमन्यत्रापि। इह केऽप्याहुः "पदशब्देन वाचक एव प्रयोगो निगद्यते न च नञो वाचकता निर्विवादात् स्वातन्त्र्येणार्थबोधनविरहात्" इति। यथा "इयं गतम्" इत्यादौ "त्वम्" इत्यनन्तरं चकारानुपादानादक्रमता तथात्रापीति। (ह) अस्थानस्थसमासता यथा।

"अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एषं धिगिति क्रोधादिवालोहितः।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी"॥ (च)

---

(स) अस्थानपदन्यासमुदाहरति तीर्थे इति। तदीये तस्या गङ्गाया इदं तदीयं तस्मिन् तीर्थे जलावतारे गजसेतुबन्धात् हस्तिभिः सेतुं रचयित्वा इत्यर्थः. प्रतीपगा प्रतिकूलगामिनी ससुद्धतामित्यर्थः गङ्गाम् उत्तरत अस्य कुशस्य नभसः आकाशस्य लङ्घनाय लोला चपला पक्षा येषां तथाभूताः, पक्षान् धूनयन्त इत्यर्थः हंसा अयत्नं यथा तथा अबालव्यजनानि बालव्यजनानि बभूवु बालव्यजनकार्यं चक्रुरित्यर्थः। उपजातिवृत्तम्। मन्थरं जडमित्यर्थः।

(ह) नञ इति। वाचकता अर्थप्रतिपादकता द्योतकतामात्रमेवेति भावः निर्विवादात् कस्यापि अस्मिन्नर्थे विवादो नास्तीति भावः. स्वातन्त्र्येण स्वाधीनतया। अत्रापि हितान् न यः संशृणुते इत्यत्रापीत्यर्थः।

(च) अस्थानस्थसमासमुदाहरति अस्थानेति। अद्यापीति एष मानः अद्यापि इदानीमपि सीमन्तिनीनां नारीणां स्तनौ एव शैलौ पर्वतौ स्तनशैलौ तावेव दुर्गं ताभ्यां विषमे दुर्गमे इति भावः हृदि स्थातुं वाञ्छति अभिलषति धिक् एनमिति शेषः शीतलादिति भावः इति क्रोधादिव आलोहितः रक्तवर्णः असौ शशी चन्द्रः, प्रोद्यन्, प्रकर्षेण उदयं गच्छन्तः दूरतरं प्रसारिताः, कराः किरणाः

अत्र कोपिन उक्तौ समासो न कृतः, कवेरुक्तौ कृतः।

वाक्यान्तरपदाना वाक्यान्तरेऽनुप्रवेशः सङ्कीर्णत्वम्। यथा।

"मुञ्च चन्द्रं कुरङ्गाक्षि। पश्य मान नभोऽङ्गणे"।

अत्र नभोऽङ्गणे चन्द्रं पश्य मानं मुञ्चेति युक्तम्। क्लिष्ट त्वमेकवाक्यविषयमिति" अस्माद्भिन्नम। वाक्यान्तरे वाक्यान्तरानुप्रवेशो गर्भितता। यथा।

"रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना।
वदामि सखि! ते तत्त्वं कदाचिन्नोचिताः क्रुधः" ॥ (क)

अर्थदोषानाह।

**अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः।**
**अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः॥**
**सन्दिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते।**
**साकाङ्क्षतासहचरभिन्नतास्थानयुक्तता॥**
**अविशेषे विशेषश्चानियमे नियमस्तथा।**
**तयोर्विपर्य्ययो विध्यनुवादायुक्तते तथा॥**

---

हस्ताश्च यस्य, "बलिहस्तांश्च करा" इत्यमर। तादृश सन् तत्क्षणात् फुल्लता विकसता कैरवाणाम् उत्पलाना कोषेभ्य निःसरन्ती निर्गच्छन्ती या अलीना भ्रमराणा श्रेणी, सा एव कृपाणम् असि कर्षति आकर्षति। शार्दूलविक्रीडित वृत्तम्। कोपिन क्रुद्धस्य चन्द्रस्य उक्तौ वाक्ये अद्यापीत्यादि धिक्पर्य्यन्तायामित्यथ। कवेरुक्तौ इतीत्यादि शशीत्यन्तायामित्यर्थ।

(क) रमणे इति। हे सखि। रमणे कान्ते चरणप्रान्ते प्रणतिप्रवणे पतनोन्मुखे इत्यर्थ अधुना कदाचित् क्रुध कोपा न उचिता इति ते तुभ्य तत्त्व याथार्थ्यं ब्रवीमि। अत्र प्रथमद्वितीयचतुर्थचरणस्थितैकवाक्ये तृतीयचरणरूपवाक्यप्रवेश.

निर्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्त्तिताः॥

५७८॥ (ख)

तद्विपर्य्ययो विशेषेऽविशेषो नियमेऽनियमः। अत्र अपुष्टत्वं मुख्यानुपकारित्वम् (ग)। यथा।

"विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये"।

अत्र विततशब्दो मानत्यागं प्रति न किञ्चिदुपकुरुते। अधिकपदत्वे पदार्थान्वयप्रतीतेः समकालमेव बाधप्रतिभासः, इह तु पश्चादिति विशेषः। दुष्क्रमता यथा।

"देहि मे वाजिनं राजन्! गजेन्द्रं वा मदालसम्"॥

अत्र गजेन्द्रस्य प्रथमं याचनमुचितम् (घ)।

"स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिय!". (ङ)

अत्रार्थो ग्राम्यः। कस्यचित् प्रागुत्कर्षमपकर्षं वा अभिधाय पश्चात्तदन्यप्रतिपादनं व्याहतत्वम्। यथा।

हरन्ति हृदयं यूनां न नवेन्दुकलादयः।

वीच्यते यैरियं तन्वी लोकलोचनचन्द्रिका"॥ (च)

---

(ख) अपुष्टेति। अपुष्टत्वादीनि त्रयोविंशति अर्थदोषाः प्रकीर्त्तिताः कथिताः। शब्दपरिवृत्तावपि यदि एतेषां सद्भावः तदैवार्थदोषत्वमवगन्तव्यम्।

(ग) मुख्यानुपकारित्व मुख्यस्य प्रतिपाद्यस्य अनुपयोगित्वम्।

(घ) दुष्क्रमता अर्थस्य क्रमविपर्य्यासः। अक्रमताया यथाक्रमेण पदस्य न्यास-राहित्यम् इह तु अर्थस्येति भेदो बोध्यः। देहीति प्रथमं बहुमूल्यं वस्तु लोके प्रार्थ्यते तदप्राप्तौ स्वल्पमूल्यमिति नियमः प्रचलति अत्र तु प्रथमं स्वल्पमूल्यस्य याचनं पश्चात् बहुमूल्यस्येति वैपरीत्यमिति भावः।

(ङ) स्वपिहीति। कान्तादिषु वैदग्ध्यचेष्टितेन स्वेच्छाप्रकटनं सभ्यानां प्रसिद्धं तदन्यथाप्रवर्त्तनं ग्राम्यत्वम्। अत्रोदाहरणे स्वपिहि स्वपिमीति पदद्वयप्रयोगो वैदग्धीरहित एवेति ग्राम्यत्वमिति भावः।

(च) हरन्तीति। नवेन्दुकलादयः यूनां तरुणानां हृदयं न हरन्ति न आक-

अत्र येषामिन्दुकला न आनन्दहेतुस्तेषामेवानन्दाय तन्व्यास्चन्द्रिकात्वारोपः।

"हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः।
यथाशु जायते पातो न तथा पुनरुन्नतिः" ॥ (छ)

अत्र अर्थोऽश्लीलः।

"वर्षत्येतदहः पतिर्न तु घनो धामस्थमच्छं पयः
सत्यं सा सवितुः सुता सुरसरित्पूरो यया प्लावितः।
व्यासस्योक्तिषु विश्वसित्यपि न कः श्रद्धा न कस्य श्रुतौ ?
न प्रत्येति तथापि मुग्धहरिणी भास्वन्मरीचिष्वपः" ॥ (ज)

---

र्षन्ति, ये, युवभि लोकाना लोचनचन्द्रिका नयनज्योत्स्ना नेत्रानन्दविधायिनी-त्यर्थः इयं तन्वी कृशाङ्गी वीक्ष्यते दृश्यते। अत्र इन्दुकलादीनामपकर्षम् उक्त्वा पश्चात् चन्द्रिकात्वारोपेण उत्कर्षोऽभिहित इति बोध्यम्।

(छ) हन्तुमिति। हन्तु विनाशयितु शत्रूनिति शेष प्रवृत्तस्य अभिलषत-स्तिन्तु स्तब्धस्य निश्चलस्य विवरैषिण छिद्रान्वेषणतत्परस्य यथा आशु शीघ्र पात पतनम् अभिभव इत्यर्थः। जायते तथा पुन उन्नति जय, न भवतीत्यर्थः। अन्यच्च हन्तु प्रवेष्टुमित्यर्थ प्रवृत्तस्य उद्यतस्य स्तब्धस्य दृढस्थितस्य विवरं योनि-च्छिद्रम् इच्छतीति तथोक्तस्य लिङ्गस्येति शेष. यथा आशु शीघ्रं पातः रेत.-स्खलनेन इति भाव तथा पुनः आशु शीघ्रम् उन्नति, उद्गम न भवतीति शेष। अत्र प्रकरणे योढ़्रूपार्थप्रतीतिसमकालमेव द्वितीयार्थस्य प्रतीतेरर्थस्य लज्जाव्यञ्जक-त्वात् अश्लीलत्वमिति बोध्यम्।

(ज) कष्टतामुदाहरति वर्षतीति। अहः पतिः सूर्य एतत् धामस्थं निज-किरणस्थम् अच्छ निर्मल पय. जल वर्षति न तु घन मेघ वर्षणकर्तृत्व सूर्यस्य घनस्य तु आधारत्वमात्रमिति भाव, अग्नौ प्रास्ताहुति. सम्यगादित्यमुपतिष्ठते। आदि-त्याज्जायते वृष्टिर्वृष्टेरन्न तत. प्रजा इति श्रुते। सा यमुना सवितु. सूर्यस्य सुता पुत्री सत्यं यया यमुनया सुरसरित्पूरः गङ्गाप्रवाह प्लावित परिवर्द्धित। व्यासस्य द्वैपायनस्य उक्तिषु वचनेषु पुराणेषु इत्यर्थः को जन न विश्वसिति ? कस्य वा जनस्य श्रुतौ वेदशास्त्रे न श्रद्धा ? अपितु सर्व एव पुराणेषु श्रुतिषु च

अत्र यस्मात् सूर्य्याद् वृष्टेर्यमुनायाश्च प्रभवस्तस्मात्तयोर्जलमपि सूर्य्यप्रभवम्। ततश्च सूर्य्यमरीचीनां जलप्रत्ययहेतुत्वमुचितम्। तथापि मृगी भ्रान्तत्वात्तत्र जलप्रत्ययं न करोति अयमप्रस्तुतोऽप्यर्थो दुर्बोधः दूरे च अस्मात् प्रस्तुतार्थबोध इति कष्टार्थत्वम् (झ)।

"सदा चरति खे भानुः सदा वहति मारुतः।
सदा धत्ते भुवं शेषः सदा धीरोऽविकत्थनः"॥

अत्र सदेत्यनवीकृतम्। अत्र अस्य पदस्य पर्य्यायान्तरेण उपादानेऽपि यदि नान्यविच्छित्त्यन्तरं तदास्य दोषस्य सद्भाव इति कथितपदत्वाद्भेदः (ञ)। नवीकृतत्वं यथा।

"भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति।
बिभर्त्ति शेषः सतत धरित्रीं षष्ठांशवृत्तेरपि धर्म्म एषः"॥ (ट)

---

विश्वसितीत्यर्थः सूर्य्यस्य जलकर्तृत्व पुराणेषु वेदेषु च प्रसिद्धमिति भाव । तथापि तादृशप्रमाणसद्भावेऽपीत्यर्थः। मुग्धहरिणी भ्रान्ता हरिणी भास्वतः सूर्य्यस्य मरीचिषु अप' जलानि न प्रत्येति न विश्वसिति। शार्दूलविक्रीडित वृत्तम्।

(झ) अत्रेति। प्रभव उत्पत्ति., तयोर्वृष्टियमुनयोरित्यर्थ.। अप्रस्तुतः अप्रकृत। अस्मात् अप्रस्तुतार्थात् प्रस्तुतस्य अर्थस्य मुग्धनायिकाया नायकसकाशात अभीष्टलाभप्रत्ययरूपस्य बोध इति कष्टत्वम् अर्थस्य प्रणिधानेन विलम्बबोध्यत्वमित्यर्थः।

(ञ) अनवीकृततामुदाहरति सदेति। अनवीकृतम् अनूतनीकृतम् एकेनैव प्रकारेण पुन' पुनरर्थस्य ग्रथनमित्यर्थ । अस्य पदस्य सदेत्यस्य इत्यर्थ. पर्य्यायान्तरेण नामान्तरेण सततसन्ततादिना इत्यर्थ. विच्छित्त्यन्तर वैचित्र्यविशेष.।

(ट) भानुरिति। भानु सूर्य. सकृत् एकवारं युक्ततुरङ्गः रथे तुरङ्गान् योजयित्वा भ्रमितु प्रवृत्त एव, न तु कदाचित् तस्य विश्राम इति भावः, गन्धवहो वायु रात्रिन्दिव निरन्तरं प्रयाति वहति, न कदाचित् विरमतीति भाव, शेष. अनन्तनाग धरित्री पृथ्वी सतत बिभर्त्ति धत्ते न तु कदाचित् त्यजतीति भावः, षष्ठांश. धान्यादीनामुत्पन्नवस्तूनामिति भाव., वृत्तिर्जीवनोपायः यस्य तथोक्तस्य,

"गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमपि सुतशोकान्न तु भयाद्
विमोक्ष्ये शस्त्र ! त्वामहमपि यतः स्वस्ति भवते" ॥ (ठ)

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति निर्हेतुत्वम् ।

"कुमारस्ते नराधीश ! श्रियं समधिगच्छतु" ॥

अत्र त्वं म्रियस्वेति विरुद्धार्थप्रकाशनात् प्रकाशितविरुद्धत्वम् (ड) ।

"अचला अबला वा स्युः सेव्या ब्रूत मनीषिणः ! ॥ (ढ)

---

प्रजाभ्यः कररूपेण षष्ठांश गृहीत्वा जीवत इत्यर्थः राज्ञः अपि एषः सदा कार्य्यदर्शनरूपो धर्मः। उपजातिवृत्तम् ।

(ठ) निर्हेतुतामुदाहरति गृहीतमिति । अश्वत्थाम्नः सवैराग्यं शस्त्र प्रति कथनम् । हे शस्त्र । येन मम पित्रा इत्यर्थः । परिभवभयात् परधर्षणत्रासात् नोचितं ब्राह्मणानां शस्त्रग्रहणस्य निषिद्धत्वात् अनुचितग्रहणमपीत्यर्थः त्वं गृहीतम् आसीः अभवः, यस्य मत्पितुः प्रभावात् तव कश्चित् कोऽपि जन इत्यर्थः विषयः लक्ष्यीभूतः न अभूत् इति न, मत्पिता त्वा बहुषु लक्ष्येषु प्रयुक्तवानिति भावः । तेन मत्पित्रा द्रोणेनापि सुतशोकात् अलीकपुत्रशोकं प्राप्येत्यर्थः न तु भयात् शत्रुभ्य इति शेषः त्वं परित्यक्तम्। अहमपि त्वा विमोक्ष्ये त्यक्ष्यामि यतः गच्छते मत्सकाशादिति भावः भवते तुभ्यं स्वस्ति शुभमस्तु इत्यर्थः। शिखरिणीवृत्तम्। अत्र द्वितीयशस्त्रपरित्यागे अश्वत्थामकर्तृके इत्यर्थः हेतुः कारणम् आकाङ्क्षित इति भावः।

(ड) प्रकाशितविरुद्धतामाह कुमार इति। हे नराधीश। नृपते ! ते तव कुमारः श्रियः राज्यलक्ष्मीं समधिगच्छतु प्राप्नोतु। प्रकाशितेति। प्रकाशितं प्रकटितं प्रणिधानेन व्यक्तीकृतं विरुद्धं प्रकृतस्य राज्ञो मङ्गलरूपस्य विपरीतम् अमङ्गलरूपं मरणमिति भावः तस्य भावः ।

(ढ) सन्दिग्धत्वमुदाहरति अचला इति । हे मनीषिणः । विद्वांसः । अचलाः पर्वताः वा अबलाः कामिन्यः सेव्याः सेवनीयाः स्युः भवेयुः, पर्वतमाश्रित्य तपश्चरणं कर्त्तव्यम् उत कान्तासम्भोगः कर्त्तव्य इति भावः, ब्रूत कथयत यूयमिति शेषः।

अत्र प्रकरणाभावाच्छान्तशृङ्गारिणोः को वक्तेति निश्चयाभावात् सन्दिग्धत्वम्।

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृष्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः" ॥ (ण)

अत्र द्वितीयार्द्धं व्यतिरेकेण द्वितीयपादस्यैवार्थ इति पुनरुक्तता। प्रसिद्धिविरुद्धता यथा।

"ततश्चचार समरे शितशूलधरो हरिः"।

अत्र हरेः शूलं लोकेऽप्रसिद्धम्। यथा वा।

"पादाघातादशोकस्ते सञ्जाताङ्कुरकण्टकः" ॥

अत्र "पादाघातादशोकेषु पुष्पमेव जायते इति प्रसिद्धं न तु अङ्कुर इति कविसमयख्यातिविरुद्धता। "अधरे करजक्षतं मृगाक्ष्याः"। अत्र शृङ्गारशास्त्रविरुद्धत्वाद्विद्याविरुद्धता (त)। एवमन्यशास्त्रविरुद्धत्वमपि।

---

अत्र अरण्यसेवनस्य वक्तुरभिप्रेतत्वे शान्तो रसः तथा अवलासेवनस्य वक्तुरभिप्रेतत्वे शृङ्गारः व्यज्यते। रसनिश्चयाभावेन सामाजिकानां रसप्रतीतिप्रतिबन्ध इत्यस्य दोषत्वमिति बोध्यम्।

(ण) पुनरुक्ततामुदाहरति सहसेति। सहसा अविविच्येत्यर्थः क्रियां कार्यं न विदधीत न कुर्यात, अविवेकः अविमृष्यकारीत्यर्थः परम् आपदां पदं स्थानं भवतीति शेषः। सम्पदः समृद्धयः गुणलुब्धाः गुणाकृष्टा इति भावः सत्यः स्वयमेव विमृष्यकारिणं विवेकिनं हि निश्चितं वृणते आश्रयन्तीत्यर्थः। अत्र द्वितीयार्द्धं द्वितीयार्द्धस्थितार्थ इत्यर्थः व्यतिरेकेण विपर्य्यासेन द्वितीयपादस्य अविवेकः परमापदां पदमित्यस्यैव अर्थः। यथा धर्मः सुखसाधनमित्युक्तौ अधर्मस्य दुःखसाधनत्वमर्थादुपलभ्यते तथात्रापीति बोध्यम्।

(त) ख्यातिविरुद्धतामुदाहरति ख्यातीति। ख्यातेः प्रसिद्धेः विरुद्धता वैपरीत्यम्। अत्र शितशूलधरो हरिरित्युक्ते सामाजिकानां शूलशब्दार्थसंशयेन प्रथमं तावत् अर्थावबोधविलम्बात् वीररसस्य आस्वादप्रतिबन्ध इत्यस्य दोषत्वं

"ऐशस्य धनुषो भङ्गं क्षत्रस्य च समुन्नतिम्।
स्त्रीरत्नञ्च कथं नाम मृष्यते भार्गवोऽधुना" ॥ (थ)

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति।

"सज्जनो दुर्गतौ मग्नः कामिनी गलितस्तनी।
खलः पूज्यः समज्यायां तापाय मम चेतसः" ॥

अत्र सज्जनः कामिनी च शोभनौ तत्सहचरः खलोऽशोभन इति सहचरभिन्नत्वम् (द)।

"आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः" ॥ (ध)

---

बोध्यम्। कविसमयेति। कवीनां समयः नियमः तत्र या ख्याति प्रसिद्धि तद्विरुद्धता तद्वैपरीत्यं कविसमयप्रसिद्धिश्च वक्ष्यमाणा बोद्धव्या। विद्याविरुद्धतामुदाहरति अधरे इति। करजक्षत करेषु जायन्ते इति करजा नखा तैः क्षतं नखाघात इत्यर्थः। शृङ्गारेति। शृङ्गारशास्त्रे हि स्तनयोर्नखाघातः प्रसिद्ध न तु अधरे, अत्र तद्विपर्य्यासात् विद्यायाः शास्त्रस्य विरुद्धता वैपरीत्यम्।

(थ) साकाङ्क्षतामुदाहरति ऐशस्येति। भार्गव भृगुनन्दनः परशुराम अधुना इदानीम् ऐशस्य धनुषः हरकार्मुकस्य भङ्ग क्षत्रस्य क्षत्रियजातेः समुन्नतिञ्च स्त्रीरत्नं सीतामित्यर्थ कथं नाम मृष्यते सहते। अत्र ईशधनुर्भङ्गस्य क्षत्रोन्नतेश्च द्वेष्यत्वात् असह्यता, स्त्रीरत्नस्य तु न द्वेष्यत्वम् अतस्तदुपेक्षणस्यैव असह्यत्वमुचितमिति भाव।

(द) सहचरभिन्नतामुदाहरति सज्जन इति। समज्यायां सभायाम्। सहचरभिन्नत्वम् उत्कृष्टेन सह उत्कृष्टस्य ग्रथनम् अपकृष्टेन सह अपकृष्टस्य ग्रथनञ्च उचितम् उत्कृष्टापकृष्टयोरेकत्र इति नियमवैपरीत्यम्, तथा कृते सहृदयमनसि वैरस्यभावोदयेन रसास्वादापकर्ष स्यादिति बोध्यम्।

(ध) अस्थानयुक्ततामुदाहरति आज्ञेति। सीतास्वयंवरे आगत रावणं दृष्ट्वा जनकसमीपे शतानन्दस्योक्तिरियम्। आज्ञा आदेशः शक्रस्य इन्द्रस्य

अत्र न रावण इत्येतावतैव समाप्यम् ।
"हीरकाणां निधेरस्य सिन्धोः किं वर्णयामहे ?" । (न)
अत्र रत्नानां निधेरित्यविशेष एव वाच्यः ।
"आवर्त्त एव नाभिस्ते नेत्रे नीलसरोरुहे ।
तरङ्गा वलयस्तेन त्वं लावण्याम्बुवापिका" ॥ (प)
अत्रावर्त्त एवेति नियमो न वाच्यः ।
"यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः" ॥ (फ)
अत्र तमिस्रास्विति रजनीविशेषो वाच्यः ।

---

शिखाया य मणि किरीटस्थ रत्नमित्यर्थ तस्य प्रणयिनी सङ्गिनी शिरोधार्य्या इति भाव. शास्त्राणि नव नूतन विंशतिलोचनेभ्य अतिरिक्तमिति भावः चक्षु, भूतपतौ पिनाकिनि हरे भक्ति, लङ्का इति प्रसिद्धा दिव्या उत्तमा पुरी पद स्थान, द्रुहिणस्य ब्रह्मण अन्वये वंशे उत्पत्ति जनन, ब्रह्मण पुलस्त्य. तस्मात् विश्रवा ततो रावण इति, पुराणमत्रानुसन्धेयम् । तत् तस्मात् अहो । आश्चर्यम् ईदृक् एतादृश वर. अभिलषित वस्तु न लभ्यते न प्राप्यते केनापीति भाव । ईदृक वर. जामाता न लभ्यते इति वार्थ. । चेत् यदि एष. रावयति क्रन्दयति लोकानिति रावणः न स्यात् न भवेत् । क्व कुत्र देशे इति शेष. नु खलु सर्वत्र सर्वस्मिन् जने पुन सर्वे गुणा' वर्त्तन्ते न कुत्रापीति भाव । शार्दूलविक्रीडितं वृत्तम्। अत्र अस्थाने अयोग्यस्थाने क्व नु इत्यादिपदाना योग निष्प्रयोजन इत्यर्थस्य सहृदयानभिमतत्वेन रसास्वादस्यापकर्ष इति बोध्यम् ।

(न) अविशेषे विशेषमाह हीरकाणामिति । अत्र अविशेषे सामान्ये वक्तव्ये विशेष उक्त इति बोध्यम् ।

(प) अनियमे नियममुदाहरति आवर्त्त एवेति । अत्र अनियमे वक्तव्ये नियमोऽभिहित' ।

(फ) विशेषे अविशेषमुदाहरति यान्तीति । अभिसारिका' कान्तार्थिन्य नीलनिचोलिन्य. नीलवसनपरिधायिन्य सत्य रजनीषु यान्ति कान्तागारमिति शेषः । अत्र विशेषे वक्तव्ये सामान्यमभिहितम् ।

"आपातसुरसे भोगे निमग्नाः किं न कुर्वते"। (ब)

अत्र आपात एवेति नियमो वाच्यः। ननु वाच्यस्यानभिधाने "व्यतिक्रमलवम्" इत्यादावपेरभावः,इह च एवकारस्येति, कोऽनयोर्भेदः। अत्राह। 'नियमस्यावचनमिव पृथग्भूतं नियमपरिवृत्तेर्विषयः'इति,तन्न। तथा सत्यपि द्वयोः शब्दार्थदोषतायां नियामकाभावात्। तत् का गतिरिति चेत् "व्यतिक्रमलवम्" इत्यादौ शब्दोच्चारणानन्तरमेव दोषप्रतिभास, इह तु अर्थप्रत्ययानन्तरमिति भेदः। एवञ्च शब्दपरिवृत्तिसहत्वासहत्वाभ्या पूर्वैराहृतोऽपि शब्दार्थदोषविभाग एव पर्य्यवस्यति। यो दोषः शब्दपरिवृत्त्यसहः स शब्ददोष एव। यश्च पदार्थान्वयप्रतीतिपूर्वबोध्यः सोऽपि शब्ददोषः। यस्त्वर्थप्रतीत्यनन्तरबोध्यः सोऽर्थाश्रय इति। एव च अनियमपरिवृत्तत्वादेरप्यधिकपदत्वादेर्भेदो बोद्धव्यः। असतपरार्थत्वे तु "राममन्मथशरेण इत्यादौ" नियमेन वाक्यव्यापित्वाभिप्रायाद्वाक्यदोषता। अश्लीलत्वादौ तु न नियमेन वाक्यव्यापित्वम् (भ)।

---

(ब) नियमे अनियममुदाहरति आपातेति। अत्र नियमे वक्तव्ये अनियमोऽभिहित ।

(भ) नियमस्येति। अवचनम् अनभिधान नियमद्योतकपदानभिधानमित्यर्थ नियमपरिवृत्तेः तद्व्यद्योतकपदानभिधान वाच्यानभिधानस्य विषय इत्यनयोर्भेद इति भाव । नियामकाभावात् निश्चायकाभावात्। दोषप्रतिभास दोषस्फुरणम्। इह तु नियमपरिवृत्तौ इत्यर्थ अर्थप्रत्यायनानन्तरम् अर्थबोधनात् अनन्तरम्। शब्दपरिवृत्तेति। यत्र दोष शब्दपरिवृत्ति न सहते तत्र शब्ददोष, यत्र न तथा तत्र अर्थदोष. इति भाव पूर्वै प्राचीनै आचार्य्यै। पर्य्यवस्यति परिणमति। पदार्थेति पदार्थानाम् अन्वयात् पूर्वं बोध्य अनुभवनीय सोऽपि शब्ददोष. शब्दश्रवणादेव दोषप्रतिभासादिति भाव । अनियमपरिवृत्तत्वादे अनियमनियमादेरित्यर्थ । अधिकपदत्वे शब्दश्रवणानन्तरमेव दोषप्रतिभास. अनियमे नियमे तु अर्थप्रतिसन्धानादेवेति परस्परं भेद इति भाव.। नियमेन

"आनन्दितस्वपक्षोऽसौ परपक्षान् हनिष्यति"। (म)

अत्र परपक्षं हत्वा स्वपक्षमानन्दयिष्यतीति विधेयम्।

"चण्डीशचूडाभरण। चन्द्र! लोकतमोऽपह।।

विरहिप्राणहरण! कदर्थय न मा वृथा"॥ (य)

अत्र विरहिणं उक्तौ तृतीयपदस्यार्थो नानुवाद्यः।

"लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे

मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती।

तत्सक्तोऽयं न किञ्चिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता

भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं यस्य कीर्त्तिः"॥(र)

---

निश्चयेन वाक्यव्यापित्वाभिप्रायत्वात् अमतपरार्थत्व वाक्यव्यापकमेव अश्लीलत्वादिकन्तु न नियमेनेति नियमानियमाभ्याम् अनयो परस्पर भेद इति भाव ।

(म) विध्ययुक्ततामुदाहरति आनन्दितेति। अत्र विधिः परपक्षहननेन स्वपक्षानन्दविधानस्य अयुक्तता अयोग्यताविन्यास ।

(य) अनुवादायुक्ततामुदाहरति चण्डीशेति। हे चण्डीशस्य हरस्य चूडाभरण। शिखामणे। लोकाना जगता तमोऽपह। ध्वान्तविध्वंसिन्। विरहिणा प्राणहरण। जीवनहारिन्। मा वृथा अकारण विनापराधमिति भाव', न कदर्थय न क्लेशय। अत्र विरहिण' उक्त्यैव तृतीयपादस्य विरहिप्राणहरण इत्यस्य अर्थ प्रकटित तस्य उपादानरूपानुवाद' अयुक्त इति बोध्यम्।

(र) निर्मुक्तपुनरुक्तत्वमुदाहरति लग्नमिति। राज्ञ. स्तुतिरियम्। रागेण रक्तेन अनुरागेण च आवृतानि लिप्तानि पूर्णानि च अङ्गानि यस्याः तादृश्या ययैव असियष्ट्या तलवारेण स्वैरिण्या कयाचिदिति ध्वनि अरीणां शत्रूणा कण्ठे सुदृढ' लग्न शत्रुशिरांसि छिन्नानीति भावः अन्यत्र गाढमालिङ्गितम्। या च असियष्टि परपुरुषैः अरातिभिः मातङ्गानां हस्तिनाम् उपरि पतन्ती दृष्टा असिना शत्रूणा हस्तिनो निहता इति भावः अन्यत्र अतिकामुकत्वात् हस्तिभि. कामशास्त्रोक्तपुरुषविशेषै सह विहरन्ती परैः दृष्टा। तत्सक्त. तस्याम् असियष्ट्या सक्त आसक्त. केवल युद्धव्यासक्त इति भावः अयं मत्स्वामीति भाव. न किञ्चित् गणयति मदर्थं न चिन्तयति मद्रक्षणार्थं न यतते इति भाव. ते तव

अत्र विदितं तेऽस्त्वित्यनेन समापितमपि वचनं तेनेत्यादि पुनरुपात्तम्। अथ रसदोषानाह।

रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि।
परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः॥
आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः।
अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनः पुनः॥
अङ्गिनोऽननुसन्धानमनङ्गस्य च कीर्त्तनम्।
अतिविस्तृतिरङ्गस्य प्रकृतीनां विपर्य्ययः।
अर्थानौचित्यमन्यच्च दोषा रसगता मताः॥
५७९॥ (ल)

रसस्य स्वशब्दो रसशब्दः शृङ्गारादिशब्दश्च। क्रमेण यथा।

"तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत।

---

विदित ज्ञातम् अस्तु तेन अस्मि अह भृत्येभ्य दत्ता भृत्येषु मन्त्र्यादिषु राजकार्य्यं निहितमिति भाव. श्रीनियोगात लक्ष्म्या आदेशात् इति गदितु पित्रे कथयितुमिव यस्य कीर्त्ति अम्बुधि गता। स्रग्धरावृत्तम्।

(ल) रसदोषानाह रसस्येति। स्वशब्देन रसस्य रसशब्दस्य शृङ्गारादेश्च स्थायिसञ्चारिणोरपि स्थायिभावस्य रत्यादे सञ्चारिणश्च निर्वेदादे स्वशब्देन तत्तत्स्वप्रतिपादकशब्देन उक्ति' कथन, परिपन्थिन विरोधिन रसस्य अङ्ग' तस्य विभावादे परिग्रह उपादान, कृच्छ्रात् कष्टेन अनुभावविभावयो कल्पित: आक्षेप. ऊहकल्पनमित्यर्थः अकाण्डे असमये सहसा वा प्रथनच्छेदौ विस्तृति-विच्छेदौ, तथा पुन. पुनः दीप्ति औज्ज्वल्यम् अङ्गिन' प्रधानस्य अननुसन्धानम्, अनङ्गस्य यत् अङ्ग न तस्य कीर्त्तनम्, अङ्गस्य अतिविस्तृति', प्रकृतीना विपर्य्ययः वैपरीत्य' तथा अन्यत् अनौचित्यम् अयुक्तत्वमित्यर्थ. एते रसगता. दोषा. मता: कथिता.।

चन्द्रमण्डलमालोक्य शृङ्गारे मग्नमन्तरम्" ॥ (व)

स्थायिभावस्य स्वशब्दवाच्यत्व यथा।

"अजायत रतिस्तस्यास्त्वयि लोचनगोचरे"। (श)

व्यभिचारिणः स्वशब्दवाच्यत्व यथा।

जाता लज्जावती मुग्धा प्रियस्य परिचुम्बने"। (ष)

अत्र प्रथमे पादे "आसीन्मुकुलिताक्षी सा" इति लज्जाया अनुभावमुखेन कथने युक्तः पाठः।

"मानं मा कुरु तन्वङ्गि! ज्ञात्वा यौवनमस्थिरम्"।

अत्र यौवनास्थैर्य्यनिवेदनं शृङ्गाररसस्य परिपन्थिनः शान्तरसस्य अङ्गं शान्तस्यैव च विभाव इति शृङ्गारे तत्परिग्रहो न युक्तः (स)।

"धवलयति शिशिररोचिषि भुवनतल लोकलोचनानन्दे।

ईषत्क्षिप्तकटाक्षा स्मेरमुखी सा निरीक्ष्यता तन्वी" ॥ (ह)

---

(व) क्रमेणोदाहरति तामिति। ता कुरङ्गाक्षीम् उद्वीक्ष्य दृष्ट्वा न अस्माक कोऽपि अनिर्वचनीय रस अजायत। चन्द्रमण्डलमालोक्य अन्तरम् अन्तःकरण शृङ्गारे सुरताद्यभित्यर्थ' मग्नम् आसक्तमित्यर्थ। अत्र रसशृङ्गार-शब्दाभ्या रसस्योक्ति।

(श) अजायतेति। त्वयि लोचनगोचरे दृष्टे सति तस्या -कान्ताया रति अनुराग अजायत। अत्र स्थायिभावस्य रते' स्वशब्देनोपादानम्।

(ष) जातेति। मुग्धा बाला प्रियस्य परिचुम्बने लज्जावती जाता। अत्र व्यभिचारिभावस्य लज्जाया स्वशब्देनोपादानम्।

(स) मानमिति। अत्र शृङ्गारस्य विरोधिनः शान्तरसस्य अङ्ग यौवना-स्थैर्य्यनिवेदनम्। विभाव उद्दीपनाख्य इति शेष।

(ह) धवलयतीति। लोकाना लोचनानन्दे नयनानन्दविधायिनि शिशिर-रोचिषि चन्द्रमसि भुवनतल धवलयति मयूखजालेन धवल कुर्वति सति ईषत् अल्प' यथा तथा क्षिप्तकटाक्षा स्मेरमुखी सा तन्वी निरीक्ष्यता दृश्यताम्। अत्र उद्दीपनालम्बनविभावौ चन्द्र, नायिका चेत्यर्थ अनुभावपर्य्यवसायिनौ

अत्र रसस्योद्दीपनालम्बनविभावावनुभावपर्य्यवसायिनौ स्थिताविति कष्टकल्पना ।

"परिहरति रतिं मतिं लुनीते
स्खलतितरां परिवर्त्तते च भूयः ।
इति बत विषमा दशास्यदेहं
परिभवति प्रसभं किमत्र कुर्मः ?" ॥ (च)

अत्र रतिपरिहारादीनां करुणादावपि सम्भवात् कामिनी-रूपो विभावः कृच्छ्रादाक्षेप्यः । अकाण्डे प्रथन यथा । वेणी-संहारे द्वितीयेऽङ्के प्रवर्त्तमानानेकवीरसङ्क्षये काले दुर्य्योधनस्य भानुमत्या सह शृङ्गारप्रथनम् (क) । छेदो यथा । वीरचरिते राघवभार्गवयोर्द्धाराधिरूढे सङ्ग्रामे "कङ्कणमोचनाय गच्छामि" (ख) इति राघवस्योक्तिः । पुनःपुनर्दीप्तिर्यथा । कुमारसम्भवे रतिविलापे । अङ्गिनोऽननुसन्धानं यथा । रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः । अनङ्गस्य कीर्त्तनं

---

अनुभावस्य नायकनेत्रपातादेः पर्य्यवसायिनौ बोधकौ । कष्टकल्पना कृच्छ्रादाक्षेप अनुभाव विना नायकस्य शृङ्गारित्वसंशयात् नायिकाया नायकस्य सानुरागदृष्टिपातः कृच्छ्रात् आक्षिप्यते अन्यथा दर्शनाभावोऽपि सम्भवतीति बोध्यम् ।

(च) परिहरतीति । कमपि युवान कस्यामपि अनुरागपरं दृष्ट्वा तत्-सख्युरन्य प्रति उक्तिरियम् । रतिं वस्त्वन्तरेषु अनुराग परिहरति परित्यजति, मतिं बुद्धि धैर्य्यावलम्बनविषयिणीमिति भाव , लुनीते छिनत्ति, धैर्य्यं नालम्बते इति भाव., स्खलतितराम् अतिशयेन भूमौ पतति, भूय' परिवर्त्तते लुण्ठति च । सर्वत्रायमिति कर्त्तृपदमूह्यम् । बत खेदे, इति इत्थ विषमा दारुणा दशा अवस्था अस्य देह प्रसभ बलात् परिभवति आकुलयति, अत्र विषये किं कुर्म. वयमिति शेष । पुष्पिताग्रावृत्तम् ।

(क) शृङ्गारप्रथन शृङ्गारस्य प्रथनं विस्तार. ।

(ख) द्वाराधिरूढे द्वारम् अधिरूढः तस्मिन् प्रारब्धे इत्यर्थ. कङ्कणमोचनाय विवाहार्थं हस्तबद्धसूत्रस्खलनाय इत्यर्थ. ।

यथा। कर्पूरमञ्जर्य्यां राजनायिकयोः स्वयं कृतं वसन्तस्य वर्णनमनादृत्य वन्दिवर्णितस्य प्रशंसा। अङ्गस्यातिविस्तृतिर्यथा। किराते सुराङ्गनाविलासादिः। प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्चेति। तेषां धीरोदात्तादिता तेषामप्युत्तमाधममध्यमत्वम्। तेषु च यो यथाभूतस्तस्यायथावर्णने प्रकृतिविपर्य्ययो दोषः। यथा। धीरोदात्तस्य रामस्य धीरोद्धतवत् छद्मना वालिवधः। यथा वा कुमारसम्भवे। उत्तमदेवतयोः पार्वतीपरमेश्वरयोः सम्भोगशृङ्गारवर्णनम्। "इदं पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम्"। इत्याहुः। अन्यदनौचित्यं देशकालादीनामन्यथा यद्वर्णनम्। तथा सति हि काव्यस्यासत्यताप्रतिभासेन विनेयानामुन्मुखीकारासम्भवः।

**एभ्यः पृथगलङ्कारदोषाणां नैव सम्भवः ॥५८०॥ (ग)**

एभ्यः उक्तदोषेभ्यः। तथाहि उपमायामसादृश्यासम्भवयोरुपमानस्य जातिप्रमाणगतन्यूनत्वाधिकत्वयोरर्थान्तरन्यासे उत्प्रेक्षितार्थसमर्थने चानुचितार्थत्वम्। क्रमेण यथा।

"ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्"। (घ)

"प्रज्वलज्जलधारावत् निपतन्ति शरास्तव"। (ङ)

---

(ग) एभ्य इति। एभ्य उक्तेभ्यः दोषेभ्य. पृथक् अलङ्कारदोषाणा नैव सम्भवः सम्भवो नास्तीत्यर्थं, अलङ्कारदोषा अपि एतेष्वन्तर्भवन्तीति भावः।

(घ) ग्रथ्नामीति। वितता. अर्था. रश्मयः किरणा इव यस्य त काव्यशशिनं काव्यं शशीव त ग्रथ्नामि रचयामीत्यर्थं। अत्र अर्थरश्म्योः. काव्यशशिनोश्च कोऽपि साधारणो धर्मं नास्ति यदि च काव्यशशिनो कथञ्चित् आह्लादकत्वरूपं साधर्म्यं सम्भवति तदपि न प्रसिद्धं तस्मादवासादृश्येन अनुचितार्थत्वमुपमायाः, न च अत्र रूपक तस्यापि सादृश्यमूलकत्वादित्यवधेयम्।

(ङ) प्रज्वलदिति। अवाग्निकार्य्यस्य ज्वलनस्य जले बाधात् तद्विशिष्टत्वं जलधाराणामसम्भव इत्यनुचितार्थत्वमुपमाया इति बोध्यम्।

"चण्डाल इव राजासौ संग्रामेऽधिकसाहसः"। (च)

"कर्पूरखण्ड इव राजति चन्द्रबिम्बम्"। (छ)

"हरवन्नीलकण्ठोऽयं विराजति शिखावलः"। (ज)

"स्तनावद्रिसमानौ ते"। (झ)

"दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसां सतीव"॥ (ञ)

एवमादिषु उत्प्रेक्षितार्थस्यासद्भूततयैव प्रतिभासनं स्वरूपमित्यनुचितमेव तत्समर्थनम्। यमकस्य पादत्रयगतस्य अप्रयुक्तत्वं दोषः। यथा।

"सहसालिजनैः स्निग्धैः सहसा कुञ्जमन्दिरम्।
उदिते रजनीनाथे सहसा याति सुन्दरी"॥ (ट)

---

(च) चण्डाल इति। अत्र उपमानस्य जातिगतं न्यूनत्वमिति उपमाया-मनौचित्यम्।

(छ) कर्पूर इति। अत्र उपमानस्य प्रमाणगतं न्यूनत्वम्।

(ज) हरवदिति। अत्र उपमानस्य जातिगतमाधिक्यम्।

(झ) स्तनाविति। अत्र उपमानस्य प्रमाणगतमाधिक्यम्।

(ञ) दिवाकरादिति। य हिमाद्रिः गुहासु कन्दरासु लीनम् अन्धकारं दिवाभीतमिव पेचकमिव दिवाकरात् सूर्य्यात् रक्षति। तथाहि, क्षुद्रे नीचेऽपि जने शरणम् आश्रयं प्रपन्ने प्राप्ते शरणागते इत्यर्थः सतीव साधाविव उच्चैःशिरसा महात्मना ममत्व स्नेह भवतीति शेष। उपजातिवृत्तम्। अत्र उत्प्रेक्षितार्थस्य अचेतनान्धकारवासस्य असद्भूततया मिथ्यात्वेन प्रतिभासन स्फुरणं स्वरूप तस्मात् तत् समर्थनं तस्यार्थस्य दृढीकरणम् अनुचितम् अयोग्यम् इति उत्प्रेक्षाया अनौचित्यमवधेयम्।

(ट) सहसेति॥ सा सुन्दरी रजनीनाथे चन्द्रे उदिते सति स्निग्धैः प्रणय-

उत्प्रेक्षायां यथा शब्दस्योत्प्रेक्षाद्योतकत्वेऽवाचकत्वम्।

यथा ।

"एष मूर्त्तो यथा धर्मः क्षितिपो रक्षति क्षितिम्" ।

एवमनुप्रासे वृत्तिविरुद्धस्य प्रतिकूलवर्णत्वम्। यथा। "ओवट्टइ उल्लट्टइ" इत्यादौ (ठ)। उपमायाञ्च साधारणधर्मस्याधिकन्यूनत्वयोरधिकपदत्वं न्यूनपदत्वञ्च। क्रमेण उदाहरणम्।

"नयनज्योतिषा भाति शम्भुर्भूतिसितद्युतिः ।
विद्युतेव शरन्मेघो नीलवारिदखण्डभृक्" ॥ (ड)

अत्र भगवतो नीलकण्ठत्वस्य अप्रतिपादनाच्चतुर्थपादोऽधिकः।

"कमलालिङ्गितस्तारहारहारी मुरं द्विषन् ।
विद्युद्विभूषितो नीलजीमूत इव राजते" ॥

अत्रोपमानस्य सवलाकत्वं वाच्यम्। अस्यामेवोपमानोपमेययोर्लिङ्गवचनभेदस्य (ढ) कालपुरुषविध्यादिभेदस्य च

---

पेशले आलिजने सखीभि सह सहसा हसन्ती सती सहसा कुञ्जमन्दिरं लतादिपिहितस्थानरूप गृह याति।

(ठ) ओवट्टइ इति। वृत्तिविरुद्धस्य शृङ्गारवृत्तिविरुद्धस्य अनुप्रासघटकवर्णस्य शृङ्गारे प्रतिकूलवर्णत्वम् एव वीरवृत्तिविरुद्धस्य अनुप्रासघटकवर्णस्य वीरे प्रतिकूलवर्णत्वमित्यादि बोध्यम्।

(ड) नयनेति। भूतिभिर्भस्मभि सिता धवला द्युतिर्यस्य तादृशः शम्भुः नयनज्योतिषा नीलवारिदखण्डभृक् नीलकण्ठखण्डधारी शरन्मेघ विद्युता इव भाति विराजते। अत्र अप्रतिपादनात् अनुपादानात्। चतुर्थपाद नीलवारिदखण्डभृगिति पदमधिकम्।

(ढ) कमलेति। कमलया लक्ष्म्या आलिङ्गितः आश्लिष्टः तारेण महता हारेण हारी मनोहारीत्यर्थः, मुरं द्विषन् मुरारिः विद्युता विभूषित नीलजीमूत

भग्नप्रक्रमत्वम्। क्रमेण उदाहरणम्। "सुधेव विमलश्चन्द्रः" (ण)। "ज्योत्स्ना इव सिता कीर्त्तिः" (त)।

"काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेशयोः।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव" ॥ (थ)

अत्र तथाभूतचित्राचन्द्रमसोः शोभा न खलु आसीत् अपि तु सर्वदापि भवति। "लतेव राजसे तन्वि।" अत्र लता राजते त्वं तु राजसे (द)।

"चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा"। (ध)

अत्र मार्कण्डेयमुनिर्जीवत्येव न खलु एतदस्य जीवतु इत्यनेन विधेयम्। इह तु यत्र लिङ्गवचनभेदेऽपि न साधारणधर्मस्यान्यथाभावस्तत्र न दोषः। क्रमेण उदाहरणम्। "मुखं चन्द्र इवाभाति" (न)।

"तद्वेशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।
दधते स्म परां शोभां तदीया विभ्रमा इव" ॥ (प)

---

इव नीलमेघ इव राजते। अत्र उपमानस्य जीमूतस्य सबलाकत्वं बलाका बकपङ्क्तिः तद्विशिष्टत्वम्। तस्मादत्र न्यूनत्वमवधेयम्। अस्यामेव उपमायामेव।

(ण) सुधेवेति। अत्र उपमानस्य लिङ्गभेदः।

(त) ज्योत्स्ना इवेति। अत्र उपमानस्य वचनभेदः।

(थ) कापीति। व्रजतो गच्छतो शुद्धवेशयो पवित्रपरिच्छदयो तयोः राजदम्पत्यो हिमनिर्मुक्तयो शिशिरावरणशून्ययोरित्यर्थः, चित्राचन्द्रमसोर्योगे इव कापि अनिर्वचनीया शोभा आसीत्।

(द) लतेवेति। अत्र पुरुषभेदः।

(ध) चिरमिति। अत्र विधिभेदः।

(न) मुखमिति। अत्र साधारणधर्मस्य आभातीति क्रियारूपस्य उपमानोपमेययो समभाव इति न लिङ्गभेददोष इति भावः।

(प) तद्वेश इति। तद्वेशः तस्याः वेशः अन्याभिः स्त्रीभिः असदृशः तथा

पूर्वोदाहरणेषु उपमानोपमेययोरेकस्यैव साधारणधर्मेणा-न्वयसिद्धेः प्रकान्तस्यार्थस्य स्फुटोऽनिर्वाहः (फ)। एवमनुप्रासे वैफल्यस्य अपुष्टार्थत्वम् (ब) यथा ।

"अनणुरणन्मणिमेखलमविरलशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे ! रणरणकमकारणं कुरुते" ॥ (भ)

एवं समासोक्तौ साधारणविशेषणवशात् परार्थस्य प्रतीतावपि पुनस्तस्य शब्देनोपादानस्य; अप्रस्तुतप्रशंसायां व्यञ्जनयैव प्रस्तुतार्थावगतेः शब्देन तदभिधानस्य च पुनरुक्तत्वम् । क्रमेण उदाहरणम् ।

---

मधुरताभृत माधुर्य्यजुष तदीया विभ्रमा विलासा इव परां शोभां दधते स्म। अत्र असदृश इत्यस्य वेश इत्यस्य विशेषणत्वे ठक्प्रत्ययान्ततया अकारान्तत्वात् एकवचनान्तता विभ्रमा इत्यस्य विशेषणत्वे क्विबन्ततया शकारान्तत्वात्' बहुवचनान्तता। तथा मधुरताभृत इत्यस्य वेश इत्यस्य विशेषणत्वे क्तप्रत्ययान्ततया अकारान्तत्वात् एकवचनान्तता विभ्रमा इत्यस्य विशेषणत्वे क्विबन्तया तकारान्तत्वात बहुवचनान्तता। एवं दधते इति क्रियापदस्य वेश इत्यस्य कर्तृत्वे दधधातो प्रथमपुरुषैकवचनान्तता, विभ्रमा इत्यस्य कर्तृत्वे धाधातो प्रथमपुरुषीयबहुवचनान्ततेति वचनभेदेऽपि साधारणधर्माणामेकरूपत्वात् न दोष इति बोध्यम् ।

(फ) साधारणधर्मस्य उपमानोपमेययोर्भिन्नत्वे अनुपपत्तिं दर्शयति पूर्वेति। पूर्वोदाहरणेषु सुधेव विमलश्चन्द्र इत्यादिषु साधारणधर्मेण यथा विमल इति पदं चन्द्र इत्यनेनान्वेति न तु सुधेत्यनेन एवमादिषु अन्वयसिद्धे अन्वयबोधनिष्पत्ते. प्रक्रान्तस्य प्रकृतार्थस्य स्फुट. सम्यक् इत्यर्थ अनिर्वाह असमाधान भवतीति शेष. ।

(ब) एवमिति। वैफल्यस्य निरर्थकत्वस्य मुख्यानुपयोगित्वस्येति यावत् ।

(भ) उदाहरति यथेति। अनणिति। हे अरुणचरणे ! अलक्तक-रञ्जितत्वादिति भाव' अनणु अनल्प यथा तथा रणन्ती मणिमेखला यस्मिन् तत् तथा अविरल घनं शिञ्जानौ स्वनन्तौ मञ्जू मनोहरौ मञ्जीरौ नूपुरौ यस्मिन् तत्, तथाविध परिसरणं सञ्चरणं तवेति शेष. अकारण निरर्थक रणरणक पुंसाम् औत्सुक्यविशेष कुरुते। वेश्याविरक्तस्य कस्यचिदुक्तिरियम्। अत्र लघुरकाररणकार-

"अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका" ॥ (म)

अत्रापरदिगित्येतावतैव तस्या गणिकात्वं प्रतीयते ॥

"आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्य्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतसं प्रभुमिवानामृष्टतत्त्वान्तरम्" ॥ (य)

अत्र अचेतसः प्रभोरभिधानम् अनुचितम् । एवमनुप्रासे प्रसिद्ध्यभावस्य ख्यातविरुद्धत्वम् । यथा ।

"चक्राधिष्ठिततां चक्री गोत्रं गोत्रभिदुच्छ्रितम् ।
वृषं वृषभकेतुश्च प्रायच्छद् यस्य भूभुजः" ॥ (र)

---

घटितानुप्रासस्य माधुर्य्यव्यञ्जकतया शृङ्गारस्यैव पोषकत्वं न तु विरागिणः शान्तरसस्येति अपुष्टार्थत्वमित्यवधेयम् ।

(म) अनुरागवन्तमिति । अपरा पश्चिमा दिक् एव गणिका वेश्या अनुराग रक्तिमा प्रेम च तद्वन्त लोचनयो नेत्रयोः सुख सुखजनक मनोहरमिति भाव अतापकर सौम्यमित्यर्थ वपुः शरीर दधत धारयन्तमपि अपेतवसुम् अपगतकिरण निर्धनञ्च वियदालयात् आकाशभवनात् निरकासयत् दूरीचकार । प्रमिताक्षरावृत्तम् । अत्र रविमित्यनेनैव यथा भुजङ्गत्वमायाति तथा अपरदिगित्युक्त्यैव गणिकाप्रतीतिरिति भावः ।

(य) आहूतेष्विति । विहङ्गमेषु विहायसा आकाशेन गच्छन्तीति तथोक्तेषु आहूतेषु आकारितेषु पुर अग्रत आयान् अहमिव विहङ्गम इति आगच्छन् मशक न वार्य्यते न निषिध्यते, तृणमणिः क्षुद्राकारमणिविशेष मध्ये वा धुरि अग्रे वा वसन् मणीना धुर भारं मर्य्यादामित्यर्थ, धत्ते धारयति, तथा खद्योत अपि तेजस्विना मध्येऽपि प्रचलितुं न कम्पते । अनामृष्टम् अविवेचितं तत्त्वान्तर वस्तुतत्त्वं येन तथाविधम् अचेतस सदसद्विवेकरहित प्रभुमिव सामान्यं प्राकृतं जनं धिक् । शार्दूलविक्रीडितं वृत्तम् । अत्र व्यञ्जनयैव प्रस्तुतस्य प्रभोः प्रतीतिरिति पुनस्तदभिधानं पुनरुक्तमिति भावः ।

(र) चक्रीति । चक्री नारायणः चक्राधिष्ठितता चक्रवर्त्तित्वमित्यर्थः गोत्रभित्

उक्तदोषाणाञ्च क्वचिददोषत्वं क्वचिद् गुणत्वमित्याह ।

वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ॥ ५८१ ॥

एषु च आस्वादस्वरूपविशेषात्मकतया मुख्यगुणप्रकर्षोपकारित्वाद् गुण इति व्यपदेशो भाक्तः (ल)। क्रमेण यथा।

"तद्विच्छेदकृशस्य कण्ठलुठितप्राणस्य मे निर्दयं
क्रूरः पञ्चशरः शरैरतिशितैर्भिन्दन् मनो निर्भरम् ।
शम्भोर्भूतकृपाविधेयमनसः प्रोद्दामनेत्रानल-
ज्वालाजालकरालितः पुनरसावास्तां समस्तात्मना" ॥ (व)

---

इन्द्रः उच्छ्रितम् उन्नत गोत्रं वंश वृषभकेतु' हरस्य वृष धर्ममित्यर्थ यस्य भूभुजः राज्ञ. प्रायच्छत् प्रददौ । अनुप्रासानुरोधात् नारायणकर्तृकचक्रवर्त्तित्वदानम् इन्द्रकर्तृक गोत्रदान शिवकर्तृकञ्च धर्मदानमप्रसिद्धमिति ख्यातविरुद्धता ।

(ल) प्रतिप्रसवमाह उक्तेति समुद्धते औद्धत्यव्यञ्जके वाच्ये अर्थे व्यपदेशः कथनम् । भाक्त गौण. ।

(व) तदिति । तस्याः विच्छेदेन कृशस्य क्षीणस्य कण्ठलुठितप्राणस्य कण्ठगतजीवनस्य मे मम मन निर्दय यथा तथा अतिशितै. अतितीक्ष्णै' शरै निर्भरम् अतिमात्रं भिन्दन् अतएव क्रूर घातुक, "नृशंसो घातुक. क्रूर" इत्यमरः । असौ पञ्चशर काम. समस्तात्मना सर्वशरीरेण भूतेषु प्राणिषु या कृपा दया तस्याः विधेय वशवर्त्ति मनो यस्य तादृशस्य शम्भो' हरस्य प्रोद्दाम अतिदारुण. यः नेत्रानलः तस्य ज्वालाना शिखाना जालै. समूहैः करालित' पुन. आस्ता भवतु, पूर्वं पाञ्चभौतिक शरीर दग्धम् इदानी तस्य अनङ्गशरीरमपि दग्ध भूयादिति भावः । शार्दूलविक्रीडित वृत्तम् । अत्र वक्तुः क्रुद्धत्वात् शृङ्गारे दुःश्रवत्वमपि गुण. ।

अत्र शृङ्गारे कुपितो वक्ता ।

"मूर्द्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालो-
द्भूताम्भःक्षोददम्भात् प्रसभमभिनभः क्षिप्तनक्षत्रलक्षम् ।
ऊर्द्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यन्नभस्वत्प्रवेश-
भ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शाम्भवं ताण्डवं वः" ॥(श)

अत्र उद्धतताण्डवं वाच्यम् । इमे पद्ये मम । रौद्रादिरसे तु एतद्द्वितयापेक्षयापि दुःश्रवत्वमत्यन्तं गुणः । यथा । "उत्-कृत्योत्कृत्य कृत्तिम्" इत्यादि । अत्र बीभत्सो रसः ।

**सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः ॥५८२॥(ष)**

तथा पुनरिति गुण एव । यथा ।

"करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते" ॥

अत्र हि सुरतारम्भगोष्ठ्यां "द्व्यर्थैः पदैः पिशुनयेच्च रहस्य-

---

(श) मूर्द्धेति । मूर्द्धनि शिरसि व्याधूयमाना सञ्चरन्ती अतएव ध्वनन्ती, स्वनन्ती या अमरधुनी देवनदी गङ्गा इत्यर्थः तस्याः लोलं चपलं यत् कल्लोलजालं तरङ्गसन्ततिः तस्मात् उद्भूताः उत्क्षिप्ता ये अम्भसां जलानां क्षोदाः बिन्दवः तेषां दम्भात् व्याजात् प्रसभं सहसा अभिनभं नभसि विभक्त्यर्थे अव्ययीभावः क्षिप्तानि नक्षत्राणां लक्षाणि यस्मिन् तत्, तथा ऊर्द्ध्वं न्यस्तः निक्षिप्तः उत्क्षिप्त इत्यर्थः यः अङ्घ्रिदण्डः पाददण्डः तस्य यः भ्रमिः भ्रामणं घूर्णनमित्यर्थः तस्मात् भवः उत्पन्नः सन् रभसेन वेगेन उद्यन् उद्गच्छन् उत्तिष्ठन् यः नभस्वान् वायुः तस्य प्रवेशेन भ्रान्तं घूर्णितं ब्रह्माण्डखण्डं यस्मिन् तथाभूतं, शम्भोरिदं शाम्भवं ताण्डवं नृत्यं, "ताण्डवं नटनं नृत्यम्" इत्यमरः । वः युष्माकं शिवं मङ्गलं वितरतु ददातु । शार्दूलविक्रीडितं वृत्तम् । अत्र वाच्यस्य उद्धतत्वात् दुःश्रवत्वं गुणः ।

(ष) सुरतेति । सुरतस्य आरम्भः चेष्टा तस्य गोष्ठी सभा सम्भोगार्थसम-वेतस्त्रीपुरुषसमूह इत्यर्थः तत्प्रभृतिषु अश्लीलत्वं तथा पुनः गुण एव इत्यर्थः ।

(स) उदाहरति करीति । सम्बाधे सङ्कुलेऽपि करिणः हस्तिनः हस्तेन शुण्डादण्डेन विलोडिते विस्फारिते साधनानां सैन्यानाम् अन्तः मध्ये प्रविश्य पुंसः

वस्तु" इति कामशास्त्रस्थितिः। आदिशब्दात् शमकथाप्रभृतिषु बोद्धव्यम् (स)।

**स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते॥५८३(ह)**

यथा।

"पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम्।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत"॥(च)

अत्र इन्द्रपक्षे पवित्रशब्दो निहतार्थः, सिंहपक्षे मतङ्गशब्दो मातङ्गार्थेऽप्रयुक्तः।

---

जिगीषोर्वीरस्य इति भावः ध्वजः केतुः उपसर्पन सञ्चरन् विराजते शोभते। अश्लीलार्थस्तु सम्बाधे सङ्कुचितेऽपि करिहस्तेन कामशास्त्रोक्तक्रियाविशेषेण सक्त-तर्जन्यनामिकापृष्ठारूढमध्यमाङ्गुलिरूपेण। तर्जन्यनामिकायुक्ता मध्यमा पृष्ठतो यदि। करिहस्त इति प्रोक्तः कामशास्त्रविशारदैरिति शास्त्रान्। विलीडिते विस्फारिते साधनात् योनिमध्ये उपसर्पन् गतागतं कुर्वन् पुंसः ध्वजः लिङ्गं विराजते। अत्र व्रीडाव्यञ्जकमश्लीलं गुणः। पिशुनयेत् सूचयेत् रहस्यवस्तु गोप्यं विषयम्। कामशास्त्रस्थितिः कामशास्त्रनियमः। शमकथाप्रभृतिषु इति तत्र शमकथायां यथा—उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे। क्लेदिनि स्त्रीव्रणे सक्तिः रक्तिमे कस्य जायते? इति शान्तिशतकम्। अत्र जुगुप्साव्यञ्जकमश्लीलं गुणः।

(ह) स्यातामिति। श्लेषादौ निहतार्थत्वम् अप्रयुक्तत्वञ्च अदोषौ स्यातां नापि गुणः नापि दोष इत्यर्थः।

(च) पर्वतेति। हरिमिव इन्द्रमिव पर्वतभेदि पर्वतं भित्त्वा निर्गच्छदित्यर्थं इन्द्रोऽपि कुलिशेन पर्वतानां पक्षांश्चिच्छेदेति भावः। पवित्रं पावनं पापध्वंसकर-मित्यर्थः अन्यत्र पविं कुलिशं त्रायते रक्षतीति तथोक्तं, कुलिशं भिदुरं पविरित्य-मरः। हरिमिव नारायणमिव नरकस्य निरयस्य असुरविशेषस्य च जैत्रं विजयि, हरिमिव सिंहमिव बहुमतङ्गहनं बहुमतं बहुभिर्जनैः सम्मानितं गहनं घनम् अतिप्रवृद्धमित्यर्थः अन्यत्र बहून् मतङ्गान् हस्तिनः हन्तीति तथोक्तं, पतत् सुर-सरितः गङ्गायाः अम्भः जलं नमत यूयमिति शेषः।

**गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद् वक्तृवाच्ययोः॥**

**५८४॥ (क)**

यथा।

"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम्।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदु." ॥ (ख)

**स्वयं वापि परामर्शे ॥ ५८५ ॥ (ग)**

अप्रतीत्वं गुण इत्यनुषज्यते। यथा।

"युक्तः कलाभिस्तमसा विवृद्धैर
क्षीणश्च ताभिः क्षतये य एषाम्।
शुद्धं निरालम्बपदावलम्बं
तमात्मचन्द्रं परिशीलयामि" ॥ (घ)

---

(क) गुण इति। वक्तृवाच्ययो वक्तु बोद्धव्यस्य च ज्ञत्व सङ्केतज्ञानित्व चेत् तदा अप्रतीतत्व गुण. स्यात्।

(ख) उदाहरति त्वामिति। ब्रह्माणं प्रति तारकोपद्रुताना देवाना स्तुतिरियम्। त्वा पुरुषार्थप्रवर्त्तिनी पुरुषार्थौ भोगापवर्गौ तयो. प्रवर्त्तिनी साधयित्री प्रकृति मूलकारण, "प्रकृति पञ्चभूतेषु प्रधाने मूलकारणे" इत्यमर। आमनन्ति कथयन्ति बुधा इति शेष। त्वामेव तद्दर्शिन तस्या प्रकृते द्रष्टार साक्षित्वेनेति भाव. उदासीनं कूटस्थ पुरुष विदु जानन्ति। अत वक्तृणा देवाना बोद्धव्यस्य ब्रह्मणश्च ज्ञत्वात् योगशास्त्रप्रसिद्धप्रकृतिपुरुषशब्दौ अप्रतीतौ अपि गुणाय कल्पेते।

(ग) स्वयमिति। परामर्शे कथने।

(घ) युक्त इति। य' तमसा तमोगुणाना विवृद्ध्यै विशेषेण वर्द्धनाय कलाभि मायाभिर्युक्त स्यात्, यश्च एषा तमसा क्षतये ध्वंसाय ताभि' कलाभि क्षीण' रहित. स्यात, शुद्ध पूत केवल वा निरालम्बपदावलम्ब निरालम्बम् आकाशमेव पदम् अवलम्ब, आश्रय यस्य तादृश त प्रसिद्धम् आत्मा एव चन्द्र. त परमात्मानमित्यर्थ परिशीलयामि चिन्तयामि। उपजातिवृत्तम्। अत कलादिशब्दानाम् अप्रतीतत्वेऽपि स्वयं परामर्षात् गुणत्वम्।

कथितञ्च पदं पुनः।
विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि॥
दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने।
अर्थान्तरसङ्क्रमितवाच्ये हर्षेऽवधारणे॥५८६॥ (ङ)

गुण इत्येव यथा। "उदेति सविता ताम्र" इत्यादि। अत्र विहितानुवादः।

"हन्त ! हन्त ! गतः कान्तो वसन्ते सखि नागतः"।

अत्र विषादः।

"चित्रं चित्रमनाकाशे कथं सुमुखि ! चन्द्रमाः"। (च)

अत्र विस्मयः।

"सुनयने नयने निधेहीति"

अत्र लाटानुप्रासः। "नयने तस्यैव नयने चेति" अादावर्थान्तरसङ्क्रमितवाच्यो ध्वनिः।

सन्दिग्धत्वं तथा व्याजस्तुतिपर्य्यवसायि चेत्॥
५८७॥ (छ)

गुण इत्येव यथा।

"पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव !।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम्"॥ (ज)

---

(ङ) कथितमिति। कथितपदत्व विहितानुवाद्यत्वादिषु एकादशप्रकारेषु गुण स्यादित्यथ।

(च) चित्रमिति। नायिकाया मुख दृष्ट्वा नायकस्य उक्तिरियम्।

(छ) सन्दिग्धत्वमिति। व्याजस्तुतौ पर्य्यवस्यतीति व्याजस्तुतिपर्य्यवसायि व्याजस्तुतिप्रत्यायकमित्यर्थः।

(ज) पृथ्विति। राजान प्रति कस्यचित् दरिद्रस्योक्तिरियम्। हे देव !

वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि ।
कष्टत्वं दुःश्रवत्वं वा ॥ ५८८ ॥ (झ)

गुण इत्येव यथा ।

"दीधीवेवीसमः कश्चिद् गुणवृद्ध्योरभाजनम् ।
क्विप्प्रत्ययनिभः कश्चिद् यत्र सन्निहिते न ते" ॥ (ञ)

---

सम्प्रति आवयो तव मम इत्यर्थं सदन गृह सम तुल्यम् । साम्य प्रतिपादयति पृथ्विति । पृथूनि प्रचुराणि कार्त्तस्वरपात्राणि स्वर्णभाजनानि यस्मिन् तदित्येकोऽर्थ । पृथुकाना शिशूना, पृथुक. शावक' शिशुरित्यमर । आर्त्तस्वरस्य पात्र स्थानम् इत्यपरोऽथ । भूषिता अलङ्कृता. निःशेषा सर्वा' परिजना परिवारा यस्मिन् तदित्येकोऽर्थ । भुवि उषिता. निःशेषा परिजना पुत्रकलत्रादय यत्र तदित्यपरोऽर्थ । विलसद्भि' शोभमानैः करेणुभि हस्तिभि हस्तिनीभिवा, करेणुरिभ्या स्त्री नेभे इत्यमर । गहनं निविड दुष्प्रवेशमिति भाव । इत्येकोऽर्थ । विलेषु सीदन्तीति विलसद ते एव इति विलसत्का स्वार्थे कन्प्रत्यय मूषिका इत्यर्थ तेषा रेणुभि धूलिभि. गहन पूर्णमित्यर्थ । इत्यपरोऽर्थ । अत्र श्रुत्या पर्य्यवसानात् सन्दिग्धार्थत्व गुण ।

(झ) वैयाकरणेति । व्याकरण वेत्ति अधीते वा वैयाकरण स' मुख्य आदिर्यस्य तादृशे वक्तरि प्रतिपाद्ये बोद्धव्ये वा । आदिपदेन नीरसतार्किकादीना ग्रहणम् ।

(ञ) उदाहरति दीधीति । कश्चित् जन दीधीवेवीसम' दीधीवेवीधातुभ्या तुल्य गुणवृद्ध्यो' दाक्षिण्यादिगुणस्य अभ्युन्नतेश्च इत्यर्थं. अभाजनम् अनाश्रय' । अन्यत्र व्याकरणविहिते गुणवृद्धी दीधीवेव्योर्न विद्येते इति भाव' । तथा कश्चित् जन. क्विप्प्रत्ययनिभ. विलुप्त इवेत्यर्थः क्विप सर्वाभावस्य कथनादिति भावः यत्र जने क्विपि च ते गुणवृद्धी न सन्निहिते । क्विपि परे गुणवृद्धिनिषेधश्च द्रष्टव्यः । अत्र तयोर्धात्वोर्गुणवृद्धिनिषेधानभिज्ञाना क्विपः सर्वाभावानभिज्ञानाच्च एतत्प्रतीतौ कष्टत्वं परन्त्वत्र वैयाकरणस्य वक्तृत्वात् न दोषः ।

अत्रार्थः कष्टं वैयाकरणस्य वक्ता। एवमस्य प्रतिपाद्यत्वेऽपि। अत्रातार्ममुपाध्याय' त्वामहं न कदाचन"। (ट)

अत्र दुःश्रवत्वम्। वैयाकरणो वाच्यः। एवमस्य वक्तृत्वेऽपि।

**ग्राम्यत्वमधमोक्तिषु ॥ ५८९ ॥ (ठ)**

गुण इत्येव। यथा मम।

"एसो ससहरबिबो दीसइ हेअङ्गवीणपिंडो ब्ब।
एदे अस्ससमोहा पडन्ति आसासु दुद्धधार ब्ब" (ड)

इयं विदूषकोक्तिः।

**निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति ॥**

**५९० ॥ (ढ)**

यथा।

"सम्प्रति सन्ध्यासमयश्चक्रद्वन्द्वानि विघटयति"। (ण)

**कवीनां समये ख्याते गुणः ख्यातविरुद्धता ॥**

**५९१ ॥ (त)**

---

(ट) अत्रेति। हे उपाध्याय। अहम् अत्र कदाचन त्वा न अतार्मं क तर्पितवान्, अस्मार्षमिति वा पाठ। अत्र अतार्ममिति दु श्रवत्व गुण।

(ठ) ग्रामत्वमिति। अधमाना नीचानाम् उक्तिषु ग्राम्यत्व गुण.।

(ड) उदाहरति "एष शशधरबिम्बो दृश्यते हैयङ्गवीनपिण्ड इव। एते चाश्रुसमूहा पतन्त्याशासु दुग्धधारा इव॥" इति संस्कृतम्। एष इति। अत्र हैयङ्गवीनपिण्डदुग्धधाराशब्दप्रयोगो ग्राम्य'।

(ढ) निर्हेतुतेति। निर्हेतुता हेतुशून्यत्व ख्याते प्रसिद्धे अर्थे दोषता नैव गच्छति प्राप्नोति।

(ण) उदाहरति सम्प्रतीति। अत्र सन्ध्यासमयस्य चक्रवाकमिथुनविघटकत्व प्रसिद्ध नात्र हेतोराकाङ्क्षेति न दोष.।

कविसमयख्यातानि च ।

मालिन्यं व्योम्नि पापे यशसि धवलता
वर्ण्यते हासकीर्त्त्योः
रक्तौ च क्रोधरागौ सरिदुदधिगतं
पङ्कजेन्दीवरादि ।
तोयाधारेऽखिलेऽपि प्रसरति च
मरालादिकः पक्षिसङ्घो
ज्योत्स्ना पेया चकोरैर्जलधरसमये
मानसं यान्ति हंसाः ॥
पादाघातादशोकं विकसति वकुलं
योषितामास्यमद्यैः
यूनामङ्गेषु हाराः स्फुटति च हृदयं
विप्रयोगस्य तापैः ।
मौर्वीरोलम्बमाला धनुरथ विशिखाः
कौसुमाः पुष्पकेतो-

---

(त) कवीनामिति। ख्याते प्रसिद्धे समये सिद्धान्ते नियमे वा ख्यातविरुद्धता लौकिकी प्रसिद्धिविरोधिता इत्यर्थ गुण ।

(थ) मालिन्यमिति। व्योम्नि आकाशे पापे च मालिन्यं, यशसि तथा हासकीर्त्त्योश्च धवलता शुभ्रता वर्ण्यते कविभिरिति शेष । क्रोधरागौ कोपानुरागौ रक्तौ रक्तवर्णौ वर्ण्येते इति शेष.। पङ्कजेन्दीवरादि पद्मकुवलयादि सरिदुदधिगतं सरित्सु नदीषु उदधिषु समुद्रेषु च विकसतीति शेष । अखिलेऽपि सर्वस्मिन्नेव तोयाधारे जलाशये मरालादिकः हंसादि पक्षिसङ्घः प्रसरति विचरति

भिन्नं स्यादस्य बाणैर्युवजनहृदयं
स्त्रीकटाक्षेण तद्वत् ॥
अह्न्यम्भोजं निशायां विकसति कुमुदं
चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां
नाप्यशोके फलं स्यात्।
न स्याज्जाती वसन्ते न च कुसुमफले
गन्धसारद्रुमाणा-
मित्याद्युन्नेयमन्यत् कविसमयगतं
सत्कवीनां प्रबन्धे ॥५८२॥ (थ)

एषामुदाहरणान्याकरेषु स्पष्टानि।

---

च। चकोरैः पक्षिभेदैः ज्योत्स्ना पेया पातव्या। जलधरसमये वर्षासु इत्यर्थः हंसाः मानसं सरः यान्ति। योषितां रमणीनां पादाघातात् चरणताडनात् अशोकः पुष्पम् आस्यमद्यैः मुखनिःसृतसीधुगण्डूषैः वकुलः विकसति। यूनां तरुणानाम् अङ्गेषु हाराः वर्णनीया इति शेषः। विप्रयोगस्य विरहस्य तापैः सन्तापैः हृदयं स्फुटति विदीर्य्यते। पुष्पकेतोः कामस्य मौर्वी ज्या रोलम्बमाला भ्रमरश्रेणी धनुः कौसुमं विशिखाः बाणाश्च कौसुमाः कुसुमनिर्मिताः। अस्य कामस्य बाणैः युवजनानां हृदयं भिन्नं विदीर्णं स्यात् तद्वत् स्त्रीणां कटाक्षेण भिन्नं स्यादिति शेषः। अह्नि दिवसे अम्भोजं पद्मं निशायां कुमुदं तथा शुक्लपक्षे चन्द्रिका विकसति चन्द्रिकायाः शुक्लपक्षीयसमस्तरात्रिभागे असद्भावेऽपि सा वर्णनीया इति भावः। मेघानां ध्वाने ध्वनौ सति शिखिनां मयूराणां नृत्यं भवति, अशोके च फलं नापि नैव स्यात्। वसन्ते जाती जातीपुष्पं न स्यात्। गन्धसारद्रुमाणां चन्दनानां कुसुमं फलञ्च न स्यात् इत्यादि अन्यत् कवीनां समयगतं सिद्धान्तसिद्धं वस्तु सत्कवीनां प्रबन्धे ग्रन्थे उन्नेयं द्रष्टव्यम्।

**धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः ॥**

५९३ ॥ (द)

आरूढत्वादिबोधाय, यथा।

"पूरिता रोदसी ध्वानैर्धनुर्ज्यास्फालनोद्भवैः"।

अत्र ज्याशब्देनापि गतार्थत्वे धनुःशब्देन ज्याया धनुष्यातनीकरणं बोध्यते। आदिशब्दात् "भाति कर्णावतंसस्ते। अत्र कर्णस्थितत्वबोधनाय कर्णशब्दः। एव श्रवणकुण्डलशिरःशेखरप्रभृतिः। एवं निरुपपदो मालाशब्दः पुष्पस्रजमेवाभिधत्ते इति स्थितावपि (ध)। "पुष्पमाला विभाति ते"। अत्र पुष्पशब्द उत्कृष्टपुष्पबुद्धेः। एवं मुक्ताहार इत्यत्र मुक्ताशब्देन अन्यरत्नामिश्रितत्वम्।

**प्रयोक्तव्याः स्थिता अमी** ॥५९४॥ (न)

धनुर्ज्यादयः सत्काव्यस्थिता एव निबद्धव्याः न तु अस्थिता जघनकाञ्चीकरकङ्कणादयः।

**उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः ॥**

५९५॥ (प)

---

(द) पुनरुक्ततायाः अदोषत्वमाह धनुरिति। ज्याशब्देनैव धनुर्ज्याया बोधनात् धनुःशब्दो निरर्थकोऽपि अत्र आरूढत्वबोधनेन अदोषत्वमावहति।

(ध) उदाहरति पूरितेति। धनुषा ज्यास्फालनेन उद्भवन्तीति तथोक्तैः ध्वानैः ध्वनिभिः रोदसी द्यावापृथिव्योरन्तरं पूरिता। अत्रेति आततीकरणं विस्तारणम्। श्रवणेति कुण्डलशब्द एव कर्णभूषणविशेषः शेखरशब्दश्च शिरोभूषणमभिधत्ते एतयोः श्रवणशिरःसंयोगः तत्र स्थितत्वं बोधयतीत्यर्थः। निरुपपदः उपपदरहितः पदान्तरसंयोगविरहित इत्यर्थः।

(न) प्रयोक्तव्या इति। जघनकाञ्चीप्रभृतीनां सत्काव्येषु अदर्शनादिति भावः।

(प) उक्ताविति। आनन्देन मग्नादेः जनस्य उक्तौ वचने न्यूनपदता गुणः स्यात्।

यथा।

"गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।
मामा मानद! माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु? मृता नु किम्? मनसि मे लीना विलीना नु किम्?" ॥ (फ)

अत्र पीडयेति न्यूनम्।

## क्वचिन्न दोषो न गुणः ॥५९६॥

न्यूनपदत्वमित्येव। यथा।

"तिष्ठेत्कोपवशात् प्रभावपिहिता? दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेत्? मयि पुनर्भावार्द्रमस्या मनः।
तां हर्त्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः" ॥ (ब)

---

(फ) उदाहरति गाढेति। सखायं प्रति कस्यचित् नायकस्य उक्तिरियम्। गाढं दृढं यत् आलिङ्गनम् आश्लेषः तेन वामनीकृतौ खर्वीकृतौ कुचौ यस्याः तथोक्ता, अतएव प्रोद्भिन्नः प्रकर्षेण उद्भेदं गतः रोमोद्गमः रोमाञ्चः यस्यास्तादृशी, सान्द्रः घनः यः स्नेहरसः प्रणयः तस्य अतिरेकेण आतिशय्येन विगलत् स्खलत् श्रीमतः मनोहरात् नितम्बात् अम्बरं वसनं यस्यास्तथाभूता, सा इति पदमूह्यम्। हे मानद! मा मा माम् अति अत्यर्थं मा पीडय अलम् इति क्षामाक्षरोल्लापिनी मितवचनभाषिणी सती सुप्ता किं नु? मृता किं नु? मे मम मनसि लीना किं नु? विलीना किं नु? शार्दूलविक्रीडितं वृत्तम्।

(ब) तिष्ठेदिति। उर्वशीविच्छेदातुरस्य राज्ञः पुरूरवसो वितर्कवचनमिदम्। कोपवशात् प्रणयकोपात् प्रभावेण दिव्यमहिम्ना इत्यर्थः पिहिता आवृता सती तिष्ठेत्? सा दीर्घं न कुप्यति स्वर्गाय उत्पतिता प्रस्थिता भवेत्? मयि पुनः अस्याः उर्वश्याः मनः भावार्द्रं प्रणयप्रवणमिति भावः मे मम पुरोवर्त्तिनीम् अग्रस्थितां तां हर्त्तुं विबुधद्विषः असुराः अपि न च शक्ताः समर्थाः? किन्तु सा

अत्र "प्रभावपिहितेति" "भवेदिति" चेत्यनन्तरं "नैतत्यत:" इति पदानि न्यूनानि। एषां पदानां न्यूनतायामपि एतद्वाक्यव्यङ्ग्यस्य वितर्काख्यव्यभिचारिभावस्योत्कर्षाकरणान्न गुण: दीर्घं न सेत्यादिवाक्यजन्यया च प्रतिपत्त्या तिष्ठेदित्यादिवाक्यप्रतिपत्तेर्बाध: (भ) स्फुटमेवावभासत इति न दोष:।

**गुण: क्वाप्यधिकं पदम्॥ ५९७॥**

यथा।

"आचरति दुर्जनो यत्सहसा मनसोऽप्यगोचरानर्थान्।
तन्न न जाने जाने स्पृशति मन: किन्तु नैव निष्ठुरताम्"॥ (म)

अत्र न न जाने इत्यनेन अयोगव्यवच्छेद: (य)। द्वितीये जाने इत्यनेन अहमेव जाने इत्यन्ययोगव्यवच्छेदाद्विच्छित्तिविशेष:।

**समाप्तपुनरात्तत्वं न दोषो न गुण: क्वचित्॥ ५९८॥**

यथा।

"अन्यास्ता गुणरत्न!" इत्यादि। अत्र प्रथमार्द्धेन वाक्य-

---

अत्यन्त नयनयोरगोचरं याता गता इति अयं को विधि: व्यापार:। शार्दूलविक्रीडितं वृत्तम्।

(भ) अत्रेति। प्रतिपत्त्या प्रतीत्या वाक्यप्रतिपत्ते वाक्यजन्यबोधस्य।

(म) आचरतीति। दुर्जन: सहसा अतर्कितभावेन मनसोऽपि अगोचरान् अविषयान् कदापि मनसि अचिन्तितानित्यर्थ: अर्थान् कार्य्याणीति यावत् यत् आचरति करोति तत् न जाने इति न, जाने किन्तु मन. निष्ठुरतां नैव स्पृशति आश्रयति दुर्जनजनस्य दौर्जन्यनिवारणे निष्ठुरता आवश्यकी, मनस्तु तामवलम्बितुं नेच्छतीति फलितार्थ:।

(य) अत्रेति। अयोगव्यवच्छेद: अयोगस्य ज्ञानायोगस्य इत्यर्थ. व्यवच्छेद: निरास:। अन्ययोगेति। अन्यस्य योग: ज्ञानयोग: इत्यर्थ: तस्य व्यवच्छेद: निराकरणं तस्मात् विच्छित्तिविशेष. वैचित्र्यातिशय:।

समाप्तावपि द्वितीयार्द्धवाक्यं पुनरुपात्तम्। एवञ्च विशेषण-मात्रस्य पुनरुपादाने समाप्तपुनरात्तत्वं न वाक्यान्तरस्येति विज्ञेयम् (र)।

## गर्भितत्वं गुण: क्वापि ॥५९९॥

यथा।

"दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिता: पश्यत।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मात् प्रादुरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम्" ॥ (ल)

अत्र वदन्त एवेत्यादि वाक्यं वाक्यान्तरप्रवेशात् चमत्कारातिशयं पुष्णाति।

## पतत्प्रकर्षता तथा ॥६००॥

तथेति क्वचित् गुण:। यथा। "चञ्चद्भुजेत्यादि"। अत्र चतुर्थपादे सुकुमारार्थतया शब्दाडम्बरत्यागो गुण:।

---

(र) समाप्तेति। समाप्तपुनरात्तत्वं समाप्तं सत् पुनरात्तं पुनर्गृहीतं तस्य भाव:। क्वचिदिति। यत्र विशेषणमात्रस्य पुनरुपादानं तत्रैवास्य दोषत्वं वाक्यान्तरस्य पुनरुपादानेन न दोष: इति भाव:।

(ल) दिङ्मातङ्गेति। दिङ्मातङ्गानां दिग्गजानां घटाभि: समूहै: विभक्ता-श्चत्वार: आघाटा: सीमान: यस्यास्तादृशी मही साध्यते उपार्ज्यते वशीक्रियते। सा मही सिद्धापि समस्तदिग्विजयेन उपार्जितापीत्यर्थ: वदन्त एव कथयन्त एव वयं रोमाञ्चिता: भवाम इति शेष:, पश्यत अवलोकयत। विप्राय कश्यपाय प्रतिपाद्यते समर्प्यते, किमपरम् अन्यत् वक्तव्यमिति शेष:, यस्मात् इदं कथाद्भुतम् अद्भुता कथा इत्यर्थ: प्रादुरभूत् यत्रैव अस्तं गतं तस्मै रामाय भार्गवाय नम:। ईदृगद्भुतं कर्म्म केनापि कर्त्तुं न शक्यते कदापीति भाव:।

**क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः।**
**अनुभावविभावाभ्यां रचना यत्र नोचिता ॥६०१॥**

यत्र विभावानुभावमुखेन प्रतिपादने विशदप्रतीतिर्नास्ति यत्र च विभावानुभावकृतपुष्टिराहित्यमेवानुगुणं तत्र व्यभिचारिणः स्वशब्देनोक्तौ न दोषः (व)। यथा।

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया
तैस्तैर्बन्धुबधूजनस्य वचनैर्नीताभिमुख्यं पुनः।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः" ॥

अत्रौत्सुक्यस्य त्वराख्यानुभावमुखेन प्रतिपादने न झटिति प्रतीतिः। त्वराया भयादिनापि सम्भवः। ह्रियोऽनुभावस्य च व्यावर्त्तनस्य कोपादिनापि सम्भवात्। साध्वसहासयोस्तु विभावादिपरिपोषस्य प्रकृतरसप्रतिकूलप्रायत्वादित्येषां स्वशब्दाभिधानमेव न्याय्यम् (श)।

---

(व) क्वचिदिति। यत्र अनुभावविभावाभ्यां रचना उद्भावनं नोचिता तत्र क्वचित् व्यभिचारिणः स्वशब्देन उक्तौ न दोषः। यत्रेति प्रतिपादने कथने विशदप्रतीतिः स्फुटावभासः। पुष्टिराहित्यं पोषणाभावः अनुगुणम् अनुकूलम्।

(श) औत्सुक्येनेति। नवे सङ्गमे औत्सुक्येन चिरात् पतिसङ्गमलाभकौतूहलेन कृतत्वरा त्वरावती, सहभुवा स्वभावजातया ह्रिया लज्जया व्यावर्त्तमाना गन्तुमनिच्छन्तीत्यर्थः तैः तैः तत्कालोचितैरित्यर्थः बन्धुवधूजनस्य सखीजनस्य वचनैः पुनः आभिमुख्यं नीता गौरी पार्वती अग्रे पुरतः स्थितमिति शेषः, वरं दृष्ट्वा आत्तः गृहीतः साध्वसरसः भयावेशः यया तादृशी हसता हरेण श्लिष्टा आलिङ्गिता अतएव संरोहत्पुलका रोमाञ्चिताङ्गी वः युष्माकं शिवाय कल्याणाय अस्तु भवतु। अत्रेति प्रतिपादने कथने झटिति न प्रतीतिः. औत्सुक्यस्येति शेषः। व्यावर्त्तनस्य विमुखीभावस्य। साध्वसेति। यदि साध्वसं विभावादिभिः परिपोष्यते तदासौ भयानकरसत्वमायाति स च प्रकृतरसस्य शृङ्गारस्य प्रतिकूलः।

सञ्चार्य्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः ॥

६०२॥ (ष)

"क्वाकार्य्यं शशलक्ष्मणः क्व च कुलमित्यादि"।

अत्र शमाङ्गानां वितर्कमतिशङ्काधृतीनामभिलाषाङ्गौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारः पर्य्यन्ते चिन्ताप्रधानमास्वादप्रकर्षमाविर्भावयति (स)।

विरोधिनोऽपि स्मरणे साम्येन वचनेऽपि वा ।
भवेद्विरोधो नान्योन्यमङ्गिन्यङ्गत्वमाप्तयोः ॥

६०३॥ (ह)

क्रमेण यथा। "अयं स रशनोत्कर्षी" इत्यादि। अत्र आलम्बनविच्छेदेन रतेररसात्मतया स्मर्य्यमाणानां तदङ्गानां शोकोद्दीपकतया करुणानुकूलता (च्च)।

---

हासस्तु यदि विभावादिभि परिपोष्यते तदासौ हास्यरसत्वमेति। तथात्वे अस्य प्राधान्यात् प्रकृतरसस्य शृङ्गारस्य नाङ्गत्व स्यादिति भाव ।

(ष) सञ्चार्य्यादेरिति। विरुद्धस्य प्रतिकूलस्य सञ्चार्य्यादे. व्यभिचारिभावादेः बाध्यत्वेन खण्डनीयत्वेन वच कथन गुण ।

(स) उदाहरति क्वेति। अत्र तिरस्कार खण्डन निरास इत्यर्थ. पर्य्यन्ते पर्य्यवसाने इत्यर्थ आह्लादप्रकर्षं रसोत्कर्षम् आविर्भावयति जनयति।

(ह) विरुद्धयो समावेशो दोष इत्युक्त साम्प्रतं तत् प्रतिप्रसूते विरोधिन इति। विरोधिन विरुद्धस्य स्मरणे वा साम्येन सादृश्येन वचने कीर्त्तने तथा अङ्गिनि प्रधाने विशेष्ये अङ्गत्वम् आप्तयो प्राप्तयो अङ्गभावेन स्थितयोरित्यर्थ. द्विवचनमुपलक्षण बहूनामपीति द्रष्टव्यम्। अन्योन्यं परस्पर न विरोध भवेत्।

(च्च) अयमिति। अत्र आलम्बनविच्छेदेन आलम्बनस्य नायकस्य विच्छेदेन नाशेन रते' अनुरागस्य अरसात्मतया अप्राप्तरसभावतया। तदङ्गाना तस्य शृङ्गारस्य अङ्गाना करस्य रशनोत्कर्षित्वादीनाम्।

"सरागया स्रुतघनघर्मतोयया,
कराहतिध्वनितपृथूरुपीठया।
मुहुर्मुहुर्दशनविलङ्घितोष्ठया,
रुषा नृपाः प्रियतमयेव भेजिरे"॥ (क)

अत्र सम्भोगशृङ्गारो वर्णनीयस्य वीरव्यभिचारिणः क्रोधस्यानुभावसाम्येन विवक्षितः।

"एकं ध्याननिमीलनान्मुकुलितप्रायं द्वितीयं पुनः
पार्वत्या वदनाम्बुजस्तनभरे सम्भोगभावालसम्।
अन्यद् दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः"॥ (ख)

---

(क) सरागयेति। शिशुपालं कृष्णं प्रति कटुभाषिणं दृष्ट्वा राज्ञां क्रोधोदयवर्णनमिदम्। नृपाः सभासदो राजानः सरागया रागः मुखलौहित्यम् अनुरागश्च तत्सहितया स्रुतानि चरितानि घनानि अविरलानि घर्मतोयानि यस्याः तथाभूतया क्रोधेन सम्भोगेच्छया च स्वेदनिर्गमोदयादिति भावः. कराहत्या कराघातेन ध्वनितं शब्दितं पृथु विशालम् ऊरु पीठं यस्याः यस्याश्च तथाभूतया, तथा मुहुर्मुहुः पुनः पुनः दशनेन विलङ्घितः दष्टः ओष्ठः यस्याः यस्याश्च तादृश्या रुषा क्रोधेन प्रियतमयेव कान्तया भेजिरे सिषेविरे। रुचिरावृत्तं, जभौ सजौ गितिरुचिरा चतुर्ग्रहैरिति तल्लक्षणात्।

(ख) एकमिति। एकं नेत्रं ध्याननिमीलनात् मुकुलितप्रायं प्रायेण मुकुलभावमापन्नं द्वितीयं नेत्रं पार्वत्याः गौर्याः वदनमेव अम्बुजं पद्मं तथा स्तनयोर्भरः उच्छ्रायः तस्मिन् सम्भोगभावेन अलसं सतृष्णमित्यर्थः अन्यत् तृतीयं नेत्रमित्यर्थः दूरम् अतिमात्रं विकृष्टं चापं येन तादृशो यो मदनः तस्मिन् यः क्रोधः एव अनलः अग्निः तेन उद्दीपितम् अतएव समाधिसमये योगावसरे भिन्नः पृथक् रसः भावो यस्य तादृशं शम्भोः शिवस्य नेत्रत्रयं त्रीणि लोचनानि वः

अत्र शान्तशृङ्गाररौद्रपरिपुष्टा भगवद्विषया रतिः ।

यथा वा ।

"क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोऽंशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः" ॥ (ग)

अत्र कविगता भगवद्विषया रतिः प्रधानम् । तस्याः परिपोषकतया भगवतस्त्रिपुरविध्वंसं प्रति उत्साहस्य अपरिपुष्टतया रसपदवीमप्राप्तया भावमात्रस्य करुणोऽङ्गम् । तस्य च कामीवेति साम्यबलादायातः शृङ्गारः । एवञ्चाविश्रान्तिधामतया करुणस्याङ्गतैवेति द्वयोरपि करुणशृङ्गारयोर्भगवदुत्साहपरिपुष्टतद्विषयरतिभावास्वादप्रकर्षतया यौगपद्यसद्-

---

युष्मान् पातु रक्षतु । शार्दूलविक्रीडितं वृत्तम् । अत्र अङ्गिनि भगवद्विषयकरतिभावे अङ्गतां प्राप्तानां शान्तशृङ्गारवीराणां न विरोधः परं भावस्य परिपोषकत्वम् ।

(ग) परम्परयापि अङ्गभावमापन्नानां समावेशं दर्शयति क्षिप्त इति । यः शाम्भवः शम्भुसम्बन्धी शराग्निः त्रिपुरदाहार्थं निक्षिप्त इति शेषः आर्द्रः अभिनवः अपराधो यस्य तादृशः अचिरकृतापराध इत्यर्थः कामीव कान्त इव साश्रूणि सजलानि नेत्रोत्पलानि नयनेन्दीवराणि यासां तादृशीभिः पतिवियोगात् पत्यपराधाद्देति भावः त्रिपुरयुवतिभिः त्रिपुरस्थिताभिरसुराङ्गनाभिरित्यर्थः हस्तावलग्नः गृहीतहस्त इत्यर्थः क्षिप्तः निराकृतः, प्रसभं बलात् अभिहतः ताडितोऽपि अंशुकान्तं वसनदशाम् आददानः गृह्णन् तथा केशेषु गृह्णन् गृहीतकेशः एकत्र दहनार्थम् अपरत्र चुम्बनाद्यर्थमिति भावः अपास्तः निराकृतः तत्र चरणयोः निपतितः दहनार्थम् अपराधभञ्जनार्थञ्चेति भावः सम्भ्रमेण भयेन गौरवेण च न ईक्षितः न दृष्टः एकत्र तेजोऽतिरेकात् अन्यत्राभिमानादिति भावः, ततश्च आलिङ्गन् एकत्र सर्वशरीरमाक्रामन् अन्यत्र आश्लिष्यन् अवधूतः निराकर्त्तुं चेष्टितः अन्यत्र तिरस्कृतः, सः वः युष्माकं दुरितं पापं दहतु भस्मीकरोतु । स्रग्धरावृत्तम् ।

भावादङ्गत्वेन न विरोधः। ननु समूहालम्बनात्मकपूर्णघनानन्दस्वरूपस्य रसस्य च तादृशेनेतररसेन कथं विरोधः सम्भावनीयः। एकवाक्ये निवेशप्रादुर्भावयौगपद्यविरहेण परस्परोपमर्दकत्वानुपपत्तेः। नाप्यङ्गाङ्गिभावः। द्वयोरपि पूर्णतया स्वातन्त्र्येण विश्रान्तेः। सत्यमुक्तम्। अत एव अत्र प्रधानेतरेषु रसेषु स्वातन्त्र्यविश्रामराहित्यात् पूर्णरसभावमात्राच्च विलक्षणतया सञ्चारिरसनाम्ना व्यपदेशः प्राच्यानाम्। अस्मत्पितामहानुजकविपण्डितमुख्यश्रीचण्डीदासपादानान्तु खण्डरसनाम्ना (घ)। यदाहुः।

---

(घ) अत्रेति। तस्या रतेः परिपोषकतया पोषणकारित्वेन। अपरिपुष्टतया परिपोषणमप्राप्ततया रसपदवीं रसत्वमित्यर्थः अप्राप्ततया विभावादिभिः परिपुष्टस्यैव रसत्वादिति भावः। भावमात्रस्य उद्बुद्धमात्रतया भावशब्दप्रतिपाद्यस्येत्यर्थः उद्बुद्धमात्रः स्थायी च भावः इत्यभिधीयते इति वचनात्। तस्य करुणस्य साम्यबलात् सादृश्यवशात् आयातः उपस्थितः शृङ्गारः अङ्गमिति शेषः। ननु तर्हि करुणस्यैव रसत्वमायातं शृङ्गारस्तस्याङ्गमित्यनेन तस्याङ्गित्वकथनादित्याशङ्क्याह एवमिति। अनया रीत्या इत्यर्थः अविश्रान्तिधामतया विश्रामस्य अनाश्रयतया भगवद्विषयिण्याः रतेरेव विश्रामधामत्वादिति भावः। करुणस्य अङ्गिनोऽपीति शेषः अङ्गतैव अप्राधान्यमेव। यौगपद्यसद्भावात् समकालसमावेशात्, अपिरत्राध्याहर्त्तव्यः। नन्विति। समूहः विभावादिसमष्टिरित्यर्थः आलम्बनम् आश्रयः यस्य तदात्मकः यः पूर्णघनानन्दः स एव स्वरूपं यस्य तथाभूतस्य। तादृशेतरेण तादृशेन समूहालम्बनात्मकपूर्णघनानन्दस्वरूपेण इतरेण अपरेण रसेन। निवेशेति। निवेशः स्थितिः प्रादुर्भावः उद्भवः तथा यौगपद्यं समकालिकत्वं तेषां विरहेण अभावेन यतो द्वौ नैकत्र तिष्ठतः, नोद्भवतः नापि समकालिकौ स्त इति भावः। परस्परस्य अन्योन्यस्य उपमर्दकत्वानुपपत्तेः व्याघातकत्वासम्भवादित्यर्थः। अङ्गाङ्गिभावः गुणप्रधानभावः। स्वातन्त्र्येण स्वाधीनतया इत्यर्थः। प्रधानेतरेषु अङ्गेषु इत्यर्थः। पूर्णरसभावमात्राच्च पूर्णरसत्वमात्रात् विलक्षणतया विभिन्नतया सञ्चारिरसनाम्ना व्यपदेशः कीर्त्तन

"अङ्गं बाध्योऽथ संसर्गी यद्यङ्गी स्याद्रसान्तरे।
नास्वाद्यते समग्रं यत्ततः खण्डरसः स्मृतः इति" ॥ (ङ)

ननु "आद्यः करुणबीभत्सरौद्रवीरभयानकैः" इत्युक्तनयेन विरोधिनोर्वीरशृङ्गारयोः कथमेकत्र।

"कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरस्फारोड्डमरपुलकं वक्त्रकमलम्।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलम्
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः" ॥ (च)

इत्यादौ समावेशः। अत्रोच्यते। इह खलु रसानां विरोधितायाः अविरोधितायाश्च त्रिधा व्यवस्था। कयोश्चिदालम्ब-

---

आद्यानां पूर्वपण्डितानाम्, पूर्वाचार्य्या हि तादृशमङ्गं रसं सञ्चारिणं व्यभिचारिभावमित्यर्थं कथयन्तीति भावः।

(ङ) अङ्गमिति। अङ्गी रसः यदि रसान्तरे अन्यस्मिन् रसे अङ्गम् अप्रधानं, बाध्यं विरुद्धस्मरणादिना बाधितोऽपि विरोधपरिहारात् लब्धसमावेशः अथवा संसर्गी स्वातन्त्र्येण संसृष्टं स्यात् ततस्तया यत् यस्मात् समग्रं सम्यक् यथा तथा नास्वाद्यते न आस्वादं नीयते ततः सः खण्डरसः स्मृतः कथितः।

(च) कपोले इति। रघूणां परिवृढः प्रभुः रामः करिकलभस्य हस्तिशावकस्य यः दन्तः तस्य द्युतिं कान्तिं मुष्णाति हरतीति तथोक्ते अतिस्वच्छे इत्यर्थः जानक्याः सीतायाः कपोले गण्डे, अवच्छेदे सप्तमी। गण्डावच्छेदे इत्यर्थः स्मरेण कामोद्रेकेण स्मेरः विकसन् स्फारोड्डमरः अत्युद्भटः पुलकः लोमाञ्चः यत्र तादृशं वक्त्रकमलं वदनपङ्कजं पश्यन् मनसेति शेषः, तथा रजनिचराणां राक्षसानां या सेनास्तासां कलकलं सिंहनादमित्यर्थः मुहुः शृण्वन् आकर्णयन् जटाजूटग्रन्थिं द्रढयति दृढीकरोति युद्धार्थमिति भावः। शिखरिणीवृत्तम्। अत्र वीरः शृङ्गारश्च विरोधिनौ स्थितौ। तथाहि वीरस्यात्र रजनीचरसेना आलम्बनविभावः। तदीयकलकलस्वनः उद्दीपनम्। जटाजूटग्रन्थनम् अनुभावः। शृङ्गारस्य तु जानकी आलम्बनं तस्याः कपोले पुलकाङ्कितत्वम् उद्दीपनविभावः तन्मुखकमलावलोकनमनुभावेन बोद्धव्यम्।

नैक्येन कयोश्चिदाश्रयैक्येन कयोश्चिन्नैरन्तर्य्येण इति। तत्र वीरशृङ्गारयोरालम्बनैक्येन विरोधः। तथा हास्यरौद्रवीभत्सैः सम्भोगस्य। वीरकरुणरौद्रादिभिर्विप्रलम्भस्य। आलम्बनैक्येन आश्रयैक्येन च वीरभयानकयोः। नैरन्तर्य्यविभावैक्याभ्यां शान्तशृङ्गारयोः। त्रिधापि अविरोधी वीरस्याद्भुतरौद्राभ्याम्। शृङ्गारस्याद्भुतेन। भयानकस्य वीभत्सेनेति। तेनात्र वीरशृङ्गारयोर्भिन्नालम्बनत्वान्न विरोधः। एवञ्च वीरस्य नायकनिष्ठत्वेन भयानकस्य प्रतिनायकनिष्ठत्वेन निबन्धे भिन्नाश्रयत्वेन विरोधः। यञ्च नागानन्दे प्रशमाश्रयस्यापि जीमूतवाहनस्य मलयवत्यनुरागो दर्शितः। तत्र "अहो गीतमहो वादित्रमिति" अद्भुतस्यान्तरानिवेशनान्नैरन्तर्य्याभावान्न शान्तशृङ्गारयोर्विरोधः। एवमन्यदपि विज्ञेयम्। "पाण्डुक्षामं वदनम्" इत्यादौ च पाण्डुतादीनामङ्गभावः करुणविप्रलम्भेऽपीति न विरोधः (छ)।

**अनुकारे च सर्वेषां दोषाणां नैव दोषता॥**

**६०४॥ (ज)**

---

(छ) समाधत्ते इहेति। त्रिधा त्रिविधा व्यवस्था स्थिति' नियम इति यावत्। नैरन्तर्य्येण अव्यवधानेन शान्तशृङ्गारयोर्विरोध इत्यनेनान्वय। अत्र उदाहरणे वीरशृङ्गारयो भिन्नालम्बनत्वात् वीरस्य आलम्बन रजनीचरसेना, शृङ्गारस्य आलम्बन जानकीत्येवम् आलम्बनभेदादिति भावः। प्रशमाश्रयस्य शान्तरसाश्रयस्य। अद्भुतस्य रसस्य अन्तरानिवेशात् मध्यसन्निवेशात नैरन्तर्य्याभावात् अव्यवधानेनास्थितेरित्यर्थं। विरुद्धरसस्य विभावादिपरिग्रहस्याप्यदोषत्वं दर्शयति पाण्डु इति। पाण्डुतादीना करुणरसाङ्गानामिति भाव., एतेन असाधारणाङ्गस्य परिग्रह एव दोषः न तु साधारणाङ्गस्येति भावः।

(ज) अनुकारे चेति। अनुकारे अनुकरणे परोक्तवाक्यकथने इत्यर्थः।

सर्व्वेषां दुःश्रवत्वप्रभृतीनाम्। यथा।

"एष दुश्श्रवनं नौमीत्यादि जल्पति कश्चन" (झ)

अत्र दुश्श्रवनशब्दोऽप्रयुक्तः।

**अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः।**

**अदोषता च गुणता ज्ञेया चानुभयात्मता।**

**६०५॥ (ञ)**

अनुभयात्मता अदोषगुणात्मता।

इति साहित्यदर्पणे दोषनिरूपणो नाम सप्तमः परिच्छेदः।

---

## अथ अष्टमः परिच्छेदः।

---

गुणानाह।

**रसस्याङ्गित्वमाप्तस्य धर्माः शौर्य्यादयो यथा॥६०६॥**

गुणाः यथा खल्वङ्गित्वमाप्तस्यात्मन उत्कर्षहेतुत्वात् शौर्य्यादयो गुणशब्दवाच्याः तथा काव्येऽङ्गित्वमाप्तस्य रसस्य धर्माः स्वरूपविशेषाः माधुर्य्यादयोऽपि। स्वसमर्पकपदसन्दर्भस्य

---

(झ) उदाहरति एष इति। दुश्श्रवन. इन्द्र.।

(ञ) अन्येषामिति। इत्यम् औचित्यात् हेती मनीषिभिर्विद्वद्भिः अन्येषामपि दोषाणाम् अदोषता गुणता तथा अनुभयात्मता अदोषत्व गुणत्वञ्च इत्यर्थ.।

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता विमलाख्या साहित्यदर्पणस्य सप्तमपरिच्छेदव्याख्या समाप्ता।

---

काव्यव्यपदेशस्यौपायिकानुगुण्यभाज इत्यर्थः। यथा चैषां रसमात्रस्य धर्मत्वं तथा दर्शितम् (क)।

**एवं माधुर्य्यमोजोऽथ प्रसाद इति ते त्रिधा॥६०७॥**

ते गुणाः। तत्र।

**चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते ॥६०८॥**

यत् तु केनचिदुक्तं "माधुर्य्यं द्रुतिकारणम्" इति तन्न। द्रवीभावस्य आस्वादस्वरूपाह्लादाभिन्नत्वेन तत्कार्य्यत्वाभावात्। द्रवीभावश्च स्वाभाविकानाविष्टत्वात्मककाठिन्यमन्युक्रोधादिकृतदीप्तत्वविस्मयहासाद्युपहितविक्षेपपरित्यागेन रत्याद्याकारानुविद्धानन्दोद्बोधेन सहृदयचित्तार्द्रप्रायत्वम् (ख)। तच्च।

---

(क) रसस्येति। अङ्गित्वं मुख्यभात्र शौर्य्यादय. आदिपदेन दयादाक्षिण्यादीना ग्रहणम्। स्वरूपविशेषा स्वस्य रसस्य रूप विशेषयन्ति उत्कर्षयन्तीति तथोक्ताः स्वसमर्पकेति स्वम् आत्मानं गुणमित्यर्थः समर्पयति प्रत्यायतीति तथोक्तस्य पदसन्दर्भस्य वाक्यस्य काव्यव्यपदेशस्य काव्यनाम्ना अभिहितस्य इत्यर्थः औपयिक युक्तियुक्तं समुचितमित्यर्थ आनुगुण्यम् आनुकूल्य भजन्ते कुर्वन्तीति तथोक्ता. अतएव तेषा गुणवाच्यत्वमिति भाव.।

(ख) माधुर्य्यमाह चित्तेति। चित्तस्य मनस द्रवीभावमय. द्रवभावस्वरूप इत्यर्थ. ह्लाद' आनन्दविशेष. माधुर्य्यम्। परमत दूषयति यत्त्विति आस्वादस्वरूपः य' आह्लाद. तस्मात् अभिन्नत्वेन अभेदेन तस्य माधुर्य्यस्य कार्य्यत्वाभावात्। द्रवीभावमाह द्रवीभाव इति। स्वाभाविक सहज यत् अनाविष्टात्मकम् अमनोयोगितारूप काठिन्य दुर्बोधत्व' तथा मन्यु. शोक. क्रोधः कोप. आदिपदेन मोहादीना परिग्रहः तै. कृत जनित यत् दीप्तत्व मनसो ज्वलितत्व विस्मय चकितता हासः अबोधपूर्वं हास्यम् आदिपदेन अवज्ञादीना ग्रहण तै उपहित. उत्पादितः यः विक्षेप. आवरणम् आस्वादप्रतिरोध इत्यर्थ. तस्य परित्यागेन वर्जनेन रत्यादीनाम् आदिपदेन हासादिपरिग्रहः आकारेण परिणत्या परिपोषेणेत्यर्थः अनुविद्धस्य संवलितस्य आनन्दस्य उद्बोधेन आविर्भावेण सहृदयाना सामाजिकाना चित्तस्य आर्द्रप्रायत्वं प्रायेण आर्द्रीभावः गलितत्वमिति यावत्।

सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ॥
६०९ ॥

सम्भोगादिशब्दा उपलक्षणानि । तेन सम्भोगाभासादिष्व-
प्येतस्य स्थितिर्ज्ञेया ।

यथा ।

मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना ।
रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः ॥
अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ॥ ६१० ॥ (ग)

यथा ।

"अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः ।
जनयन्ति मुहुर्यूनामन्तः सन्तापसन्ततिम्" ॥ (घ)

यथा वा मम ।

"लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् ।

---

(ग) मूर्ध्नीति । मूर्ध्नि शिरसि वर्गाणां कवर्गादीनाम् अन्त्यवर्णेन चरमवर्णेन युक्ताः वर्णाः टठडढान् विना टठडढानां मूर्ध्नि अन्त्यवर्णयोगेऽपि न माधुर्य्याभिव्यक्तिरिति भावः । लघू वर्णान्तरयोगराहित्येन स्वल्पप्रयत्नोच्चार्य्यौ इत्यर्थः. तद्व्यक्तौ तस्य माधुर्य्यस्य व्यक्तौ व्यञ्जने कारणतां गताः तथा अवृत्तिः समासरहिता अल्पवृत्तिः अल्पसमासा मधुरा मनोहारिणी रचना तद्व्यक्तौ कारणतां गता इति शेषः ।

(घ) उदाहरति यथेति । अनङ्गस्य कामस्य मङ्गलभुवः मङ्गलनिकेतनानि तस्याः कान्तायाः अपाङ्गभङ्गयः. नैतान्तकौटिल्यानि मुहुः पुनः पुनः यूनां तरुणानाम् अन्तः अन्तःकरणे स्थितामिति शेषः सन्तापसन्ततिं सन्तापातिशयं जनयन्ति उत्पादयन्ति ।

मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि" ॥(ङ)

**ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते। (च)**
**वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ॥६११॥**

अस्य ओजसः। अत्रापि वीरादिशब्दा उपलक्षणानि तेन वीराभासादावप्यस्यावस्थितिः।

**वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ।**
**उपर्य्यधोद्वयोर्वा सरेफष्टठडढैः सह ॥**
**शकारश्च षकारश्च तस्य व्यञ्जकतां गता।**
**तथा समासबहुला घटनौद्धत्यशालिनी ॥**
**६१२॥ (छ)**

---

(ङ) लतेति। मरुत् पवन गुञ्जन्त स्वनन्त मदवन्त. मत्ता अलिपुञ्जा. भ्रमरसमूहा यस्मिन् तादृश लताकुञ्ज लतावेष्टितविहारस्थान चपलयन् कम्पयन् अङ्ग शरीर समालिङ्गन् स्पृशन् द्रुततरम् अतिशीघ्रम् अनङ्ग काम प्रबलयन् बर्द्धयन् दलित विकसितम् अरविन्द पद्म मन्द मन्द तरलयन् कम्पयन् रजोवृन्दं परागपुञ्ज विन्दन् लभमान सन् दिशि दिशि मकरन्दं पुष्परस किरति विक्षिपति। वसन्तवायुवर्णनमिदम्। शिखरिणीवृत्तम्।

(च) ओज इति। चित्तस्य मनस विस्ताररूप विस्फारस्वरूप दीप्तत्वं विकासविशेष इत्यर्थ।

(छ) वर्गस्येति। वर्गस्य आद्यतृतीयाभ्या वर्णाभ्या युक्तौ तदन्तिमौ द्वितीय-चतुर्थावित्यर्थं तत्राद्येन युक्तो द्वितीय, तृतीयेन युक्तश्चतुर्थ इति बोध्यम्। उपरि शिरसि, अध पदतले वा द्वयो उर्द्ध्वाधोभागयोरित्यर्थ सरेफ रेफयुक्त. वर्णं क्रमेण यथा—अर्क। अग्रम्। आर्द्रम् इत्यादि। औद्धत्यशालिनी उल्बणार्थप्रतिपादनीत्यर्थः घटना रचना।

यथा "चञ्चद्भुजेत्यादि"।

चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः।
स प्रसादः समस्तेषु रसेषु रचनासु च
६१३॥ (ज)

व्याप्नोति अविष्करोति।

शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः॥
६१४॥ (झ)

यथा।

"सूचीमुखेन सकृदेव कृतव्रणस्त्वं
मुक्ताकलाप! लुठसि स्तनयोः प्रियायाः।
बाणैः स्मरस्य शतशो विनिकृत्तमर्मा
स्वप्नेऽपि तां कथमहं न विलोकयामि" (ञ)

एषां शब्दगुणत्वञ्च गुणवृत्त्योच्यते बुधैः॥६१५॥(ट)

---

(ज) चित्तमिति। अनल अग्नि शुष्क नीरसम् इन्धनमिव काष्ठमिव य चित्त व्याप्नोति आविष्करोति सहसार्थबोधेन विमलयतीत्यर्थ स प्रसाद.।

(झ) शब्दा इति। श्रुतिमात्रत श्रवणमात्रेणेवेत्यर्थ।

(ञ) उदाहरति यथेति। सूचीति। हे मुक्ताकलाप! मौक्तिकहार। त्व सूचीमुखेन अतिसूक्ष्माग्रेणेति भाव सकृत् एकवारमेव न तु पुन पुनरिति भाव. कृतव्रण छिद्रित इत्यर्थ सूत्रप्रवेशार्थमिति भाव प्रियाया स्तनयो. लुठसि लुण्ठन करोषि, अह स्मरस्य कामस्य बाणै शरै शतश विनिकृत्त विशेषेण निकृत्त छिन्न मर्म यस्य तथाभूतोऽपि स्वप्नेऽपि ता कथ न विलोकयामि पश्यामि। वसन्ततिलक वृत्तम्।

(ट) एषामिति। एषा माधुर्य्यौज:प्रसादाना शब्दगुणत्व गुणवृत्त्या

शरीरस्य शौर्य्यादिगुणयोग इवेति श्लेषः।

श्लेषः समाधिरौदार्य्यं प्रसाद इति ये पुनः।
गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते॥

६१६॥ (ड)

ओजसि भक्त्या ओजःपदवाच्ये शब्दार्थधर्मविशेषे तत्र श्लेषो बहूनामपि पदानामेकपदवद्भासनात्मा (ड)। यथा।

"उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथाऽयं तथा
प्रायःप्रेङ्खदसङ्ख्यशङ्खधवला वेलेयमुद्गच्छति"॥

अयं बन्धवैकट्यात्मकत्वादोज एव (ढ)। समाधिरा-

---

परम्परया बुधै. उच्यते कथ्यते। गुणवृत्तिश्चात्र स्वाश्रयोपस्थापकत्वरूपेति बोद्धव्यम्।

(ठ) साम्प्रत प्राचीनोक्ताना शब्दगुणाना समाधानमाह श्लेष इति। श्लेषादय' चत्वारो ये गुणा चिरन्तनै प्राचीनैरुक्ता ते ओजसि परम्परया ओज.पदप्रतिपाद्ये शब्दार्थगुणविशेषे अन्तर्भवन्ति अन्तर्भूता भवन्ति।

(ड) श्लेषमाह तत्रेति। तत्र तेषु मध्ये इत्यर्थ. एकपदवत् भासम स्फुरणम् आत्मा स्वरूप यस्य तादृश. शब्दधर्मविशेष श्लेष।

(ढ) उदाहरति यथेति। उन्मज्जदिति। उन्मज्जता जलादुत्तिष्ठता जलकुञ्जरेन्द्राणा जलीयगजेन्द्राणा रभसेन वेगेन य. आस्फाल शुण्डास्फालन तस्य अनुबन्धेन सातत्येन उद्धत उन्नत श्रुतिपथोन्माथी कर्णविवरविदारो उच्चै महान् अयं ध्वनि सर्वा पर्वताना कन्दरोदरभुव गुहाभ्यन्तरस्थानानि प्रतिध्वानिनी प्रतिध्वनिवती. कुर्वन् यथा उच्चरति उत्तिष्ठति, तथा प्रायेण बाहुल्येन प्रेङ्खद्भि- श्चलद्भि असङ्ख्यै' शङ्खै धवला इयं वेला जलं, वेला स्यात्तीरनीरयोरित्यमर। उद्गच्छति उत्तिष्ठति। शार्दूलविक्रीडित वृत्तम्। अय गुण इत्यर्थ.। बन्धस्य रचनाया. वैकट्यात्मकत्वात् उम्बररूपत्वात्।

रोहावरोहक्रमरूपः। आरोह उत्कर्षः। अवरोहोऽपकर्ष-स्तयोः क्रमो वैरस्यानावहो विन्यासः। यथा "चञ्चद्भुजे-त्यादि"। अत्र पादत्रये क्रमेण बन्धस्य गाढ़ता। चतुर्थ-पादे तु अपकर्षः। तस्यापि च तीव्रप्रयत्नोचार्य्यतया ओज-स्विता (ण)। उदारता विकटत्वलक्षणा। विकटत्वञ्च पदानां नृत्यत्प्रायत्वम् (त)। यथा।

"स्वचरणविनिविष्टैर्नूपुरैर्नर्त्तकीनाम्।
झणितिरणितमासीत् तत्र चित्रं कलञ्च" ॥

अत्र च तन्मतानुसारेण रसानुसन्धानमन्तरेणैव शब्द-प्रौढोक्तिमात्रेणौजः (थ)। प्रसाद ओजोमिश्रितशैथिल्यात्मा-(द) यथा।

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।

---

(ण) समाधिमाह समाधिरिति। तस्यापि चतुर्थपादस्यापि इत्यर्थः तीव्रेण द्रुतेन प्रयत्नेन उच्चार्य्यतया कीर्त्तनीयतया। ओजस्विता ओजोगुणवत्त्वम्।

(त) औदार्य्यमाह उदारतेति। विकटत्वं लक्षणं स्वरूपं यस्यास्तथाभूता। नृत्यत्प्रायत्वं प्रायेण नर्त्तनशीलत्वमिव।

(थ) उदाहरति यथेति। स्वचरणेति। नर्त्तकीनां स्वचरणविनिविष्टैः नूपुरैः तत्र नृत्यशालायां चित्रं विचित्रं कलं मधुरं झणिति रणितं रणनम् आसीत्। अत्रेति। तन्मतानुसारेण तेषां प्राचीनानां मतानुसारेण मतमाश्रित्येत्यर्थः। अन्तरेण विना। शब्दानां प्रौढोक्तिमात्रेण विकटोक्तिवशेन इत्यर्थः।

(द) प्रसादमाह प्रसाद इति। ओजोमिश्रितं शैथिल्यं बन्धनश्लथीभावः आत्मा स्वरूपं यस्य तादृशशैथिल्ययुक्तबन्धनगाढत्वमित्यर्थः।

(ध) उदाहरति यथेति। य इति। पितरि द्रोणे अन्यायेन पाञ्चाल-सुतेन धृष्टद्युम्नेन निहते क्रुद्धस्य अश्वत्थाम्न उक्तिरियम्। पाण्डवीनां चमूनां सेनानां मध्ये यः यः स्वभुजयोः निजबाह्वोः गुरुः महान् मदः गर्वः यस्य तादृशः सन् शस्त्रं बिभर्त्ति धारयति, पाञ्चालगोत्रे द्रुपदकुले यः यः शिशुः अप्राप्तवयाः,

यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्"॥(ध)

**माधुर्य्यव्यञ्जकत्वं यदसमासस्य दर्शितम्।**
**पृथक्पदत्वं माधुर्य्यं तेनैवाङ्गीकृतं पुनः॥**

**६१७॥ (न)**

यथा। "श्वासान् मुञ्चति इत्यादि"।

**अर्थव्यक्तेः प्रसादाख्यगुणेनैव परिग्रहः॥**
**अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम्॥**

**६१८॥ (प)**

---

अधिकवया, प्रौढ इत्यर्थ वा गर्भशय्या गत. गर्भस्थ, यः य तस्य कर्मण' मत्तातनिधनस्य इत्यर्थ. साक्षी साक्षात् द्रष्टा दृष्टापि न निषेद्धा वा अनुमन्ता इति भाव., तथा मयि रणे चरति रणव्यापारे अनुतिष्ठतीति यावत्, यश्च यश्च प्रतीप प्रतिकूल इत्यर्थः भविष्यतीति शेष मया सह योत्स्यते इति 'यावत्, अहं क्रोधेन पितृनिधनजनितेनेति भाव. अन्ध कर्त्तव्याकर्त्तव्यविवेकशून्य सन् स्वय साक्षात् जगतामन्तकस्यापि नाशकस्य यमस्यापीत्यर्थ. तस्य तस्य अन्तकः नाशक त तं नाशयिष्यामीत्यर्थ। स्रग्धरावृत्तम्। अत्र बन्धस्य गाढत्व शैथिल्यञ्चास्तीति द्रष्टव्यम्।

(न) प्राचीनोक्त माधुर्य्यं शब्दगुण समाधत्ते माधुर्य्येति। असमासस्य अवृत्तिरल्पवृत्तिर्वेति वचनोक्तस्य समासाभावस्य यत् माधुर्य्यव्यञ्जक माधुर्य्यगुणाविष्कारकत्व दर्शित मयेति शेषः तेनैव पृथक्पदत्व माधुर्य्यं प्राचीनोक्तमिति शेष अङ्गीकृत स्वीकृतम्। एतेनास्य परम्परया स्वोक्ते माधुर्य्ये एव अन्तर्भाव इति बोध्यम्।

(प) प्राचीनोक्तामर्थव्यक्तिं समाधत्ते अर्थव्यक्तेरिति। प्रसादाख्यगुणेनैव अर्थव्यक्तेः चिरन्तनोक्तशब्दगुणविशेषस्य परिग्रह. ग्रहण हि यतः पदाना झटिति अर्थसमर्पणम् अर्थावबोध. एवेति अध्याहार्य्यम् अर्थव्यक्तिः। एतेन अस्य प्रसादे एव अन्तर्भावो बोद्धव्यः।

स्पष्टमुदाहरणम् ।

**ग्राम्यदुःश्रवतात्यागात् कान्तिश्च सुकुमारता ॥**

**६१९॥**

अङ्गीकृतेति सम्बन्धः । कान्तिरौज्ज्वल्यम् । तच्च हालिकादिपदन्यासवैपरीत्येनालौकिकशोभाशालित्वम् । सुकुमारता अपारुष्यम् (फ) । अनयोरुदाहरणे स्पष्टे ।

**क्वचिद्दोषस्तु समता मार्गाभेदस्वरूपिणी ।**
**अन्यथोक्तगुणेष्वस्या अन्तःपातो यथायथम् ॥**

**६२०॥ (ब)**

मसृणेन विकटेन वा मार्गेणोपक्रान्तस्य सन्दर्भस्य तेनैव परिनिष्ठानं (भ) मार्गाभेदः, स च क्वचिद् दोषः । तथाहि ।

"अध्यूढाङ्कमरूढपाणिजठराभोगश्च बिभ्रद्वपुः
पारीन्द्रः शिशुरेष पाणिपुटके सम्मातु किं तावता ।

---

(फ) चिरन्तनोक्तां कान्तिं सुकुमारताञ्च समाधत्ते ग्राम्येति । ग्राम्यस्य दोषविशेषस्य दुःश्रवतायाश्च त्यागात् परिहारात् कान्तिर्नाम शब्दगुणः सुकुमारता नाम शब्दगुणश्च अङ्गीकृत इति शेषः । तत्र ग्राम्यदोषपरित्यागेन कान्तिः, दुःश्रवतापरित्यागेन सुकुमारता इति बोध्यम् । कान्तिमाह कान्तिरिति । हालिकेति । हालिकः निकृष्टजातिविशेषः हाडीति प्रसिद्धः आदिपदेन तथाविधचाण्डालादिपरिग्रहः तेषां यः पदन्यासः शब्दप्रयोगः तस्य वैपरीत्येन साधुपदप्रयोगेणेत्यर्थः अलौकिकी विलक्षणा या शोभा तया शालते शोभते इति तथात्वम् । सुकुमारतामाह सुकुमारतेति । अपारुष्यं श्रुतिकटुशब्दानाम् अप्रयोगेण श्रवणसुभगत्वमित्यर्थः ।

(ब) प्राचीनोक्तां समतां समाधत्ते क्वचिदिति । मार्गस्य रीतेः अभेदः अभिन्नता एव स्वरूपं तद्विद्यते अस्याः इति तथाविधा समता समभावेन पदरचना इत्यर्थः क्वचित् प्रदेशे दोषः स्यात् । अन्यथा अदोषत्वे इत्यर्थः उक्तगुणेषु कथितेषु गुणेषु श्लेषादिषु अस्याः समतायाः यथायथं यथासम्भवम् अन्तःपातः अन्तर्भावः ।

उद्यद्दुर्द्धरगन्धसिन्धुरशतप्रोद्दामदानार्णव-
स्रोतः शोषणरोषणात् पुनरितः कल्पाग्निरल्पायते" ॥

अत्र उद्धतेऽर्थे वाच्ये सुकुमारबन्धत्यागो गुण एव। अनेवं-विधस्थले माधुर्य्यादावेवान्तःपातः (म)। यथा लताकुञ्जं गुञ्जदित्यादि"।

**ओजः प्रसादो माधुर्य्यं सौकुमार्य्यमुदारता।**
**तदभावस्य दोषत्वात् स्वीकृता अर्थगा गुणाः॥**
**६२१॥ (य)**

ओजः साभिप्रायत्वरूपम्। प्रसादोऽर्थवैमल्यम्। माधुर्य्य-मुक्तिवैचित्र्यम्। सौकुमार्य्यमपारुष्यम्। उदारता अग्राम्यत्वम्।

---

(भ) मसृणेति। मसृणेन कोमलेन विकटेन डम्बरेण वा मार्गेण प्रणाल्या उपक्रान्तस्य आरब्धस्य। तेनैव पूर्वप्रणाल्या एवेत्यर्थ परिनिष्ठानं समापनम्।

(म) मार्गाभेदस्य दोषत्वमुदाहरति अव्यूढेति। अव्यूढानि विशेषेण अपरिपुष्टानि अङ्गानि यस्य तादृशं तथा अरुढ' असञ्जात पाणेः करतलस्य जठरस्य उदरस्य च आभोग विस्तारः यस्य तथाभूत वपु शरीर बिभ्रत दधान' एष पारीन्द्र. शिशु सिंहशावक पाणिपुटके पुटकाकारे संयुक्ते पाणिद्वये इत्यर्थः सम्यातु सम्यक् परिमाण प्राप्नोतु तावता, तेन किम् ? न कापि तस्य माहात्म्यहानिरिति भाव', उद्यताम् उदय गच्छता वर्द्धमानानामित्यर्थः दुर्द्धराणा दुरासदाना गन्धसिन्धु राणा गन्धगजाना गजविशेषाणा शतस्य प्रोद्दाम. उत्कट' य दानार्णव मदजलराशि' तस्य स्रोतस प्रवाहस्य शोषणे रोषण क्रोध' यस्य तथाविधात् इत अस्मात् सिंहशिशो कल्पाग्नि. प्रलयानल' अल्पायते अल्प इव आचरति। शार्दूलविक्रीडित वृत्तम्। अत द्वितीयार्द्धे उद्धते उत्कटे वाच्ये वक्तव्ये। एवंविधस्थानेषु मार्गाभेदो दोष एवेति बोद्धव्यम्।

(य) साम्प्रत प्राचीनोक्तानामर्थगुणाना समाधानमाह ओज इति। ओज.-प्रभृतय पञ्च अर्थगाः गुणा' तदभावस्य तेषामोजःप्रभृतीनाम् अभावस्य असद्-भावस्येत्यर्थः दोषत्वात् दोषत्वेन परित्यागादित्यर्थ' स्वीकृता।

त्वम् (र)। एषाञ्च पञ्चानामप्यर्थगुणानां यथाक्रममपुष्टार्थाधिकपदानवीकृतामङ्गलरूपाश्लीलग्राम्यतानां निराकरणेनैवाङ्गीकारः। स्पष्टान्युदाहरणानि।

**अर्थव्यक्तिः स्वभावोक्त्यलङ्कारेण तथा पुनः।**
**रसध्वनिगुणीभूतव्यङ्ग्याभ्यां कान्तिनामकः॥**
**६२२॥**

अङ्गीकृत इति सम्बन्धः। अर्थव्यक्तिर्वस्तुस्वभावस्फुटत्वम्। कान्तिर्दीप्तरसत्वम् (ल)। स्पष्टे उदाहरणे।

**श्लेषो विचित्रतामात्रमदोषः समतापरम्॥**
**६२३॥ [व]**

श्लेषः क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा। तत्र क्रमः क्रियासन्ततिः। विदग्धचेष्टितं कौटिल्यम्। अप्रसिद्धवर्णनाविरहोऽनुल्बणत्वम्। उपपादकयुक्तिविन्यास उप-

---

(र) ओज इत्यादि। साभिप्रायत्वरूपम् अभिप्रायप्रकाशकत्वमित्यर्थः. अपुष्टार्थत्वदोषराहित्यमेव। अर्थानां वैमल्यं विशदीभावः प्रसादः अधिकपदत्वदोषराहित्यमेव। उक्तेर्वैचित्र्यं विभिन्नरूपत्वं माधुर्य्यम् अनवीकृतत्वदोषराहित्यमेव। अपारुष्यं श्रुतिकटुत्वं सौकुमार्य्यम् अमङ्गलरूपाश्लीलत्वदोषराहित्यमेव। अग्राम्यता इतरजनाप्रयोज्यत्वरूपा। उदारता ग्राम्यतादोषराहित्यमेवेति फलितार्थः।

(ल) प्राचीनोक्तामर्थगतामर्थव्यक्तिं कान्तिञ्च समाधत्ते अर्थव्यक्तिरिति। स्वभावोक्तिर्नाम अलङ्कारः तेन अर्थव्यक्तिः तथा रसध्वनिः रसरूपेण ध्वनिना गुणीभूतेन व्यङ्ग्येन च कान्तिनामकः अर्थगुणः स्वीकृत इति शेषः। अर्थव्यक्तिमाह अर्थव्यक्तिरिति। वस्तूनां पदार्थानां स्वभावस्य स्फुटत्वं सम्यगाविष्करणमित्यर्थः। कान्तिमाह कान्तिरिति। दीप्तरसत्वं रसस्योज्ज्वलत्वमित्यर्थः।

(व) प्राचीनोक्तार्थगुणं श्लेषं समताञ्च समाधत्ते श्लेष इति। विचित्रतामात्रं केवलं वैचित्र्यमित्यर्थः, श्लेषः। समता परं केवलम् अदोषः, दोषराहित्यम्।

पत्तिः। एषा योगः सम्मेलनं स एव रूपं यस्या घटनायास्त-द्रूपः श्लेषो वैचित्र्यमात्रम्। अनन्यसाधारणरसोपकारित्वाति-शयविरहादिति भावः (श)। यथा।

"दृष्ट्वैकासनसंस्थिते प्रियतमे" इत्यादि।

अत्र दर्शनादयः क्रियाः। उभयसमर्थनरूपं कौटिल्यम्। लोकसंव्यवहाररूपमनुल्बणत्वम्। "एकासनसंस्थिते, पश्चा-दुपेत्य, नयने निमील्य, ईषद्वक्रितकन्धर इति चोपपादकानि एषा योगः। अनेन च वाच्योपपत्तिग्रहणव्यग्रतया रसा-स्वादो व्यवहितप्राय इत्यस्य अगुणता समता च। प्रक्रान्त-प्रकृतिप्रत्ययविपर्य्यासेनार्थस्य विसंवादितारविरहः। स च प्रक्रमभङ्गरूपदोषविरह एव (ष)। स्पष्टमुदाहरणम्।

**न गुणत्वं समाधेश्च** ॥ ६२४ ॥

**समाधिश्चायोन्यन्यच्छायायोनिरूपद्विविधार्थदृष्टिरूपः। तत्र अयोनिरर्थो यथा।**

---

(श) वैचित्र्यमात्रं न तु गुणशब्देनाभिधीयते इति भावः। अनन्येति। यो हि असाधारण्येन रसमुपकरोति स एव गुणशब्दवाच्य इति भावः।

(ष) उदाहरति यथेति। अत्र दर्शनादयः आदिपदेन उपगमनादीनां ग्रहणम्। उभयोः कान्तयोः समर्थनं रञ्जनं तदेव रूपं यस्य तादृशम्। लोकेति। लोकानां संव्यवहारः तादृग्व्यवहारः एव रूपं यस्य तथाभूतम्। उपपादकानि अभीष्टार्थसम्पादकानि। योगः मेलनम्। वाच्येति। वाच्यस्य अभिधेयार्थस्य उपपत्तिः युक्तिः तस्याः ग्रहणे बोधे व्यग्रतया आसक्ततया सामाजिकानामिति शेषः। व्यवहितप्रायः प्रायेण व्यवहितः विच्छिन्न इत्यर्थः। प्रक्रान्तेति। प्रक्रान्तयोः आरब्धयोः प्रकृतिप्रत्यययोः विपर्य्यासेन वैपरीत्येन अर्थस्य या विसंवादिता विभिन्नता तद्विरहः यादृशेन प्रकृतिप्रत्यययोगेन उपक्रान्तं तादृशेनैव समापनमिति भावः।

(स) समाधिमर्थगुणं समाधत्ते नेति। समाधिरर्थदृष्टिविशेषः द्विविधः

"सद्योमुण्डितमत्तहूणचिवुकप्रस्पर्द्धिनारङ्गकम्। (ङ)

अन्यच्छायायोनिर्यथा।

"निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी"॥

अत्र नीलोत्पलनयनयोरप्रसिद्धं सादृश्यं विच्छित्तिविशेषेण निबद्धम्। अस्य च असाधारणशोभानावायकत्वान्न गुणत्वं किन्तु काव्यशरीरमात्रनिवर्त्तकत्वम् (च)। क्वचिच्चन्द्रमित्येकस्मिन् पदार्थे वक्तव्ये "अत्रेर्नयनसमुत्थं ज्योतिः" इति वाक्यरचनम्। क्वचित् "निदाघशीतलहिमकालोष्णसुकुमारशरीरावयवा योषित्" इति वाक्यार्थे वक्तव्ये "वरवर्णिनी" इति पदाभिधानम्। क्वचित् "एकस्य वाक्यार्थस्य किञ्चिद्विशेषनिवेशादनेकैर्वाक्यैरभिधानमित्येवरूपः व्यासः"। क्वचिद् "बहुवाक्यप्रतिपाद्यस्य एकवाक्येनाभिधानमित्येवरूपः समासश्च"

---

अयोनि मूलरहित केनापि कविना अनिबद्धपूर्व इत्यर्थ। अन्यच्छायायोनि॰ कविसमयप्रसिद्ध इत्यर्थः।

(ङ) अयोनिमुदाहरति सद्य इति। सद्य तत्क्षण मुण्डितं क्षौरकर्मणा कृतनिर्लोमकमित्यर्थ यत् मत्तस्य मद्यपानेनेति भाव हूणस्य जातिविशेषस्य चिवुक तस्य प्रस्पर्द्धि प्रकर्षेण स्पर्द्धक नारङ्गक फलविशेष। अत्र मुण्डितहूणचिवुकेन उपमा न केनापि निबद्धेति अयोनित्वम्।

(च) अन्यच्छायायोनिमुदाहरति निजेति। कापि कुसुमलावी मालिनीत्यर्थ निजनयनयो प्रतिबिम्बैः अम्बुनि बहुश पुन पुनः प्रतारिता सती नीलोत्पलेऽपि करम् अर्पयितु चयनार्थमिति शेष। विमृशति संशेते इत्यर्थ। आर्यावृत्तम्। विच्छित्तिविशेषेण वैचित्र्यविशेषेण निबद्ध रचितम्। अस्य समावे असाधारणशोभानाधायकत्वात् रसस्य अनन्यसामान्यशोभाया अनिर्वाहकत्वादित्यर्थ। काव्यशरीरेति केवल काव्यशरीरस्य पोषकत्वमित्यर्थ।

(छ) व्याससमासयोरपि प्राचीनोक्त गुणत्व समाधत्ते क्वचिदिति। व्यास एकपदेन वा एकवाक्येन वाच्यस्य किञ्चित् वैशिष्ट्यप्रतिपत्तये बहुभिः पदै-

इत्येवमादीनामन्यैरुक्तानां न गुणत्वमुचितम् अपि तु वैचित्र्य-मात्रावहत्वम् (क)।

तेन नार्थगुणाः पृथक् ॥ ६२५ ॥

तेनोक्तप्रकारेण। अर्थगुणा ओजःप्रभृतयः प्रोक्ताः।

इति साहित्यदर्पणे गुणविवेचनो नाम अष्टमः परिच्छेदः॥

---

## नवमः परिच्छेदः।

अथोद्देशक्रमप्राप्तमप्यलङ्कारनिरूपणं बहुवक्तव्यत्वेनोल्लङ्घ्य रीतिमाह (क)।

पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत्।
उपकर्त्री रसादीनाम् ॥ ६२६ ॥ [ख]

---

वाक्यैर्वा कथनम्। तत्र चन्द्रमित्यादि प्रथममुदाहरणं द्वितीयन्तु स्वम्यम्। समासः बहुभिः पदैः वाक्यैर्वा प्रतिपाद्यस्य अर्थस्य एकपदेन वा वाक्येन कथनम्। तत्रोदाहरणं निदाघेति बोध्यम्। अन्ये प्राचीनैरित्यर्थः न गुणत्वम् अनन्यसाधारण्येन रसस्य शोभानाधायकत्वादिति भावः।

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता विमलाख्या साहित्यदर्पणस्य अष्टमपरिच्छेदव्याख्या समाप्ता।

---

(क) अथेति। उल्लङ्घ्य सूचीकटाहन्यायेनेति भावः।

(ख) पदेति। पदानां सङ्घटना सम्यक् योजना यथास्थानविनिवेशनमित्यर्थः रीतिः। सा अङ्गानां संस्था संस्थानं यथायथं विन्यासः तद्वत्। रसादीनाम् आदिपदेन भावरसाभासादीनां ग्रहणम्। उपकर्त्री पोषिका।

रसादीनामर्थात् शब्दार्थशरीरस्य काव्यस्यात्मभूतानाम्।

**सा पुनः स्याच्चतुर्विधा।**

**वैदर्भी चाथ गौड़ी च पाञ्चाली लाटिका तथा**

**॥ ६२७ ॥** [ ग ]

सा रीतिः। तत्र।

**माधुर्य्यव्यञ्जकैर्वर्णैरचना ललितात्मिका।**

**अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥**

**६२८ ॥** [ घ ]

यथा। "अनङ्गमङ्गलभुव." इत्यादि। रुद्रटस्त्वाह

"असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी।

वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया" ॥ (ङ)

अत्र दशगुणास्तन्मतोक्ता श्लेषादयः।

**ओजःप्रकाशकैर्वर्णैर्बन्ध आड़म्बरः पुनः।**

**समासबहुला गौड़ी** ॥ ६२९ ॥ [च]

---

( ग ) तस्या भेदानाह सेति। स्पष्टम्।

( घ ) वैदर्भीमाह माधुर्य्येति। माधुर्य्यव्यञ्जकै पूर्वोक्तै वर्णै ललितात्मिका मनोहारिणी अवृत्ति समासरहिता वा अल्पसमासा रचना विदर्भदेशप्रचलिता इति वैदभी रीति. इष्यते कथ्यते इत्यर्थ ।

( ङ ) असमस्तैकेति। असमस्ता समासरहिता वा एकसमस्ता अल्पसमस्ता इत्यर्थ दशभि पूर्वोक्तै श्लेषादिभिः गुणै. युक्ता वर्गद्वितीयैर्वर्णै बहुला युक्ता इत्यथ स्वल्प प्राण. उच्चारणकालः येषा तथाभूतानि अक्षराणि यस्या तादृशी रचना वैदभीनाम्ना विधेया।

( च ) गौडीमाह ओज इति। ओज प्रकाशकै. डम्बरार्थप्रतिपादकैरित्यर्थ. वर्णै. आडम्बर उत्कट. बन्धः रचनाविशेष गौडी।

यथा "चञ्चद्भुज इत्यादि"। पुरुषोत्तमस्त्वाह।

"बहुतर-समासयुक्ता सुमहाप्राणाक्षरा च गौडीया।
रीतिरनुप्रास-महिमपरतन्त्रास्तोभवाक्या च" (छ)।

**वर्णैः श्लेषैः पुनर्द्वयोः।
समस्तपञ्चषपदो बन्धः पाञ्चालिका मता॥६३०॥ [ज]**

द्वयोर्वैदर्भीगौड्योः। यथा।

"मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे"॥ (झ)

ओजस्त्वाह।

"समस्तपञ्चषपदामोज:कान्तिसमन्विताम्।
मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः"॥ (ञ)

---

(छ) बहुतरेति। बहुतरैः समासैः समस्तपदैरित्यर्थः युक्ता, सुमहान् प्राणः उच्चारणकालः येषां तादृशानि अक्षराणि यस्यां तथोक्ता, अनुप्रासस्य महिम्नः परतन्त्रा पराधीना अनुप्रासबहुला इत्यर्थः अस्तोभम् उद्धतं वाक्यं पद-समुदायः यस्यां तथाविधा रीतिः गौडीया।

(ज) पाञ्चालीमाह वर्णैरिति। द्वयोः उक्तयोः द्वयोः वैदर्भीगौड्योः, श्लेषैः श्लिष्टैः वर्णैः उपलक्षणे तृतीया समस्तानि पञ्चषाणि पदानि यत्र तादृशः, बन्धः रचना पाञ्चालिका मता।

(झ) उदाहरति यथेति। मधुरया मनोहारिण्या मधुना वसन्तेन समेधिता सवर्द्धिता मेधा यस्यास्तथाभूतया उन्मदध्वनिभृता मधुकराङ्गनया भ्रमर्या मुहुः पुनः पुनः, निभृतानि मन्दोच्चरितानि अक्षराणि यस्मिन् तत् यथा तथा उज्जगे उच्चैः गीतम्।

(ञ) समस्तेति। कवयः विद्वांसः समस्तानि पञ्चषाणि पदानि यस्यां तथाभूताम्, ओजसा कान्त्या च गुणेन समन्विता, मधुरां मनोहारिणीं, सुकुमारां कोमलां रचनां पाञ्चालीं विदुः।

**लाटी तु रीतिर्वैदर्भी-**
**पाञ्चाल्योरन्तरा स्थिता ॥ ६३१ ॥ [ ट ]**

यथा ।

"अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि" ॥ ( ठ )

कश्चिदाह ।

"मृदुपदसमाससुभगा युक्तैर्वर्णैर्न चातिभूयिष्ठा ।
उचितविशेषणपूरितवस्तुन्यासा भवेल्लाटी" ॥ ( ड )

अन्ये त्वाहुः ।

"गौडी डम्बरबन्धा स्यात् वैदर्भी ललितक्रमा ।

---

( ट ) लाटीमाह लाटीति । वैदर्भीपाञ्चाल्यौ अन्तरास्थिता मध्यवर्त्तिनी उभयधर्माक्रान्तेत्यर्थः रीतिः लाटी ।

( ठ ) उदाहरति यथेति । अयमिति । पद्मिनीनां मुद्राभञ्जनः विकाशकः इत्यर्थः, उदयगिरेः उदयाचलस्य या वनाली वनश्रेणयः तासु स्थितं बालं नवं मन्दारपुष्पं, विरहेण विधुरं यत् । कोकानां चक्रवाकाणां द्वन्द्वं मिथुनं तस्य बन्धुः सूर्य्योदये तेषां पुनर्मेलनादिति भावः । कुपितस्य कपेर्वानरस्य यः कपोलः तस्य क्रोडः उत्सङ्गः मध्यभागः इत्यर्थः तद्वत् ताम्रः रक्तवर्णः इत्यर्थः अयं सूर्य्य इति शेषः तमांसि अन्धकारान् भिन्दन् अपसारयन् उदेति उदयं गच्छति । मालिनीवृत्तम् ।

( ड ) मृदिति । मृदूनि पदानि यत्र तादृशेन समासेन सुभगा मनोज्ञा, युक्तैः वर्णैः न च अतिभूयिष्ठा नातिबहुला इत्यर्थः, उचितेन साभिप्रायेणेत्यर्थः विशेषणेन पूरितः पोषितः वस्तुनः प्रतिपाद्यस्य इतिवृत्तस्य न्यासः निवेशः यत्र तादृशी रचना लाटी भवेत् ।

पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः" ॥

**क्वचित्तु वक्त्राद्यौचित्या-**
**दन्यथा रचनादयः ॥ ६३२ ॥ [ ढ ]**

वक्त्रादीत्यादिशब्दाद्वाच्यप्रबन्धौ। रचनादीत्यादिशब्दाद् वृत्तिवर्णौ। तत्र वक्त्रौचित्याद्यथा। "मन्थायस्तार्णवाम्भ." इत्यादि। अत्र वाच्यस्य क्रोधाद्यव्यञ्जकत्वेऽपि भीमसेन-वक्तृत्वेनोद्धता रचनादय.। वाच्यौचित्याद्यथोदाहृते। "मूर्द्ध-व्याधूयमान इत्यादौ"। प्रबन्धौचित्याद्यथा नाटकादौ। रौद्रेऽपि अभिनयप्रतिकूलत्वेन न दीर्घसमासादय.। एव-माख्यायिकाया शृङ्गारेऽपि न मसृणवर्णादयः। कथायां रौद्रेऽपि नात्यन्तमुद्धताः एवमन्यदपि ज्ञेयम्।

इति साहित्यदर्पणे रीतिविवेको नाम नवमः परिच्छेदः।

---

( ढ ) क्वचिदिति। वक्त्रादीनाम् औचित्यात् अन्यथा विभिन्नरूपा रचनादय. भवन्तीति शेष ।

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता विमलाख्या साहित्यदर्पणस्य नवमपरिच्छेदव्याख्या समाप्ता ।

# दशमः परिच्छेदः ।

—०७:०७—

अथावसरप्राप्तानलङ्कारानाह ।

**शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः ।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ॥६३३॥**

यथा अङ्गदादयः शरीरशोभातिशायिनः शरीरिणमुपकुर्वन्ति तथानुप्रासोपमादयः शब्दार्थशोभातिशायिनो रसादेरुपकारका ये तेऽलङ्कारा अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः। शब्दार्थयोः प्रथम (क) शब्दस्य बुद्धिविषयत्वात् शब्दालङ्कारेषु वक्तव्येषु शब्दार्थालङ्कारस्यापि पुनरुक्तवदाभासस्य चिरन्तनैः शब्दालङ्कारमध्ये लक्षितत्वात् प्रथमं तमेवाह ।

**आपाततो यदर्थस्य पौनरुक्त्यावभासनम् ।**
**पुनरुक्तवदाभासः स भिन्नाकारशब्दगः ॥**
**६३४ ॥ [ ख ]**

उदाहरणम्।

"भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः ।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः" ॥

अत्र भुजङ्गकुण्डल्यादिशब्दानाम् आपातमात्रेण सर्पाद्यर्थ-

---

( क ) प्रथममिति। सूचीकटाहन्यायेनेति भावः ।

( ख ) आपातत इति। आपाततः श्रवणमात्रतः अर्थस्य वाच्यस्य यत् पौनरुक्त्यावभासनं पुनरुक्तवत् स्फुरणं स भिन्नाकारशब्दगः पृथगाकारशब्दगामी पुनरुक्तवदाभासो नाम अलङ्कारः ।

तया पौनरुक्त्यप्रतिभासनम्। पर्य्यवसाने तु भुजङ्गरूपं कुण्डलं विद्यते यस्येत्याद्यन्यार्थत्वम्। पायादव्यादित्यत्र क्रियागतोऽयमलङ्कारः। पायादित्यस्यापायादित्यत्र पर्य्यवसानात् भुजङ्गकुण्डलीतिशब्दयो प्रथमस्यैव परिवृत्तिसहत्वम्। हर. शिव इति द्वितीयस्यैव। शशिशुभ्रांशु इति द्वयोरपि। "भाति सदा न त्यागः" इति न द्वयोरपीति शब्दपरिवृत्तिसहत्वासहत्वाभ्याम् अस्य उभयालङ्कारत्वम् (ग)।

**अनुप्रासः शब्दसाम्यं**
**वैषम्येऽपि स्वरस्य यत्॥ ६३५॥ [घ]**

---

(ग) उदाहरति भुजङ्गेति। भुजङ्ग एव कुण्डलं विद्यते अस्य स तथोक्त, व्यक्त उज्ज्वल श्च शशी कर्पूर तद्वत शुभ्रा अंशव यस्य तादृश., चेतोहरः मनोहर शिव सदा अपायात् जगन्ति अव्यात रक्षतु। परिवृत्तिसहत्व शब्दपरिवर्त्तनेऽपि प्रकृतार्थबोधनक्षमत्वम्। भातीति श्लोकस्य कियदंशोऽयम्। श्लोकस्तु अरिवधदेहशरीर सहसा, रथिसूततुरगपादात.। भाति सदा न त्याग स्थिरतायामवनितलतिलक॥ इति अरीणा वध ददातीति तथोक्ता ईहा चेष्टा यस्य तादृश शरीर यस्य तथाभूत, सारथिभि सहायभूतै सूततुरगपादातै सारथ्यश्वपदातिभि सह वर्त्तमान अवनितलतिलक पृथिवीललाटभूषणभूत इत्यर्थ अनत्या अप्रणतभावेन स्थिरताया दृढतरस्थित्या अग पर्वत इव अत्र प्रतीयमानोत्प्रेक्षा सदा भाति विराजते। अत्र देहशरीरयो सारथिसूतयो दानत्यागयोश्च एकार्थत्वात् आपातत पौनरुक्त्यमिव। अत्र तु देहशरीरयो सारथिसूतयोश्च द्वितीयस्यैव परिवृत्तिसहत्व दानत्यागयोर्द्वयोरपि न इति बोध्यम्। अस्येति। अस्य पुनरुक्तवदाभासस्य उभयालङ्कारत्वं शब्दार्थालङ्कारत्वमित्यर्थ यत्र शब्दपरिवर्त्तनेऽपि तदलङ्कारसद्भाव तत्रार्थालङ्कार यत्र तत्तच्छब्दाना सद्भाव एवालङ्कार तत्र शब्दालङ्कार यत्र तु कियदंशे शब्दपरिवृत्तिसहत्व कियदंशे न तथा तत्रोभयालङ्कार इति तदन्वयव्यतिरेकेणालङ्कारव्यवस्थितिरिति बोध्यम्।

(घ) अनुप्रासमाह अनुप्रास इति। स्वरस्य वैषम्ये वैलक्षण्ये भिन्नत्वेऽपी-

स्वरमात्रेऽपि सादृश्य वैचित्र्याभावान्न गणितम्। रसा-नुगतत्वेन प्रकर्षेण न्यासोऽनुप्रास:।

छेको व्यञ्जनसङ्घस्य

सकृत् साम्यमनेकधा ॥ ६३६ ॥ [ ङ ]

छेकश्छेकानुप्रास:। अनेकधेति स्वरूपत: क्रमतश्च। रस: सर इत्यादिक्रमभेदेन सादृश्य नास्यालङ्कारस्य विषय: (च)। उदाहरणं मम तातपादानाम्।

"आदाय वकुलगन्धानन्धीकुर्वन् पदे पदे भ्रमरान।
अयमेति मन्दमन्दं कावेरीवारिपावन: पवन:" ॥ (छ)

अत्र गन्धानन्धीतिसयुक्तयो: कावेरीवारीत्यसयुक्तयो: पावन: पवन इति बहूना व्यञ्जनानां सकृदावृत्ति:। छेको विदग्ध:। तत्प्रयोज्यत्वादेष छेकानुप्रास:।

अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा।
एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥६३७॥ [ज]

---

त्यर्थ यत् शब्दाना साम्य सादृश्य समभावेनावृत्तिरिति यावत् स अनुप्रास । स च पञ्चविध छेकादिभेदात्।

( ङ ) तत्र छेकमाह छेक इति। व्यञ्जनाना हल्वर्णाना सङ्घस्य समूहस्य अनेकधा स्वरूपत क्रमतश्च सकृत् एकवार साम्य सादृश्येनावर्त्तन छेक ।

( च ) नास्यालङ्कारस्येति। अस्य अलङ्कारस्य छेकानुप्रासस्य इत्यर्थ न विषय. न स्थानम्।

( छ ) आदायेति। अय पवन' वकुलाना गन्धान् आदाय पदे पदे भ्रमरान् अन्धीकुर्वन् वकुलगन्धेन उन्मादयन्नित्यर्थ कावेर्य्या नद्या. वारिणा तत्सङ्गेनेति भाव. पावन. पवित्रतामादधान' सन् मन्द मन्दम् एति गच्छति वहतीत्यर्थ.।

( ज ) वृत्त्यनुप्रासमाह अनेकस्येति। अनेकस्य एकभिन्नस्य व्यञ्जनस्य

एकधा स्वरूपत एव न तु क्रमतोऽपि। अनेकधा स्वरूपतः क्रमतश्च। सकृदपीत्यपिशब्दादसकृदपि। उदाहरणम्।

"उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः॥" (झ)

अत्र रसोल्लासैरमी इति रमयोरेकधैव साम्यम्। न तु तेनैव क्रमेणापि। द्वितीये पादे तु कलयोरसकृत्। तेनैव क्रमेण च प्रथमे एकस्य तकारस्य सकृत् धकारस्य च असकृत्। रसविषयव्यापारवती वर्णरचना वृत्तिस्तदनुगतत्वेन प्रकर्षेण न्यसनाद् वृत्त्यनुप्रासः (ञ)।

**उच्चार्य्यत्वाद् यदेकत्र स्थाने तालुरदादिके।**

---

एकधा स्वरूपत एव न तु क्रमतोऽपीत्यर्थ वा किंवा असकृत पुन पुन अनेकधा स्वरूपत क्रमतश्च इत्यर्थ तथा एकस्य व्यञ्जनस्य सकृत् अपिशब्दात् असकृच्च साम्य समभावेनावर्त्तनम् एष वृत्त्यनुप्रास उच्यते कथ्यते।

(झ) उन्मीलदिति। वसन्तवर्णनमिदम्। उन्मीलतसु उद्गच्छतसु मधुगन्धेषु लुब्धा ये मधुपा भ्रमरा तै व्याधूतेषु विशेषेणाकम्पितेषु चूताङ्कुरेषु क्रीडता विहरता कोकिलाना काकलीना सूक्ष्मकलध्वनीना कलकलै कोलाहलै उद्गीर्ण सञ्जनित कर्णज्वर येषु तथाविधा अमी वासरा वासन्ता दिवसा इत्यर्थः पथिकै ध्याने प्रियाया इति भाव यत् अवधान मनोनिवेश तस्य क्षणे प्राप्तेन अनुभूतेन प्राणसमाया. प्रियतमाया समागमरसेन सङ्गमसुखेन इत्यर्थ उल्लसन्ति सन्तुष्यन्तीति तथोक्तै सद्भि कथ कथमपि अतिकष्टेणेत्यर्थ नीयन्ते अतिवाह्यन्ते। शार्दूलविक्रीडित वृत्तम्।

(ञ) रसेति। रसविषय य व्यापार व्यञ्जनध्वननादिकं तद्वती तदुद्भावयित्रीत्यर्थ।

(ट) श्रुत्यनुप्रासमाह उच्चार्य्यत्वादिति। एकत्र स्थाने वर्णानामुच्चारण-

**साहश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ॥**

**६३८ ॥ [ ट ]**

उदाहरणम्।

"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः" ॥ (ठ)

अत्र "जीवयन्ति" इति "या" इति "जयिनीः" इति अत्र जकारयकारयोरेकत्र स्थाने तालौ उच्चार्य्यत्वात् साहश्यम्। एवं दन्त्यकण्ठ्यानामप्युदाहार्य्यम्। एष च सहृदयानामतीव श्रुतिसुखावहत्वाच्छ्रुत्यनुप्रासः।

**व्यञ्जनं चेद् यथावस्थं सहाद्येन स्वरेण तु।**
**आवर्त्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत् ॥**

**६३९ ॥ [ ड ]**

"यथावस्थम्" इति यथासम्भवमनुस्वारविसर्गस्वरसंयुक्ताक्षरविशिष्टम्। एष च प्रायेण पादस्य पदस्य चान्ते प्रयोज्यः। पादान्तगो यथा मम।

"केशः काशस्तवकविकासः कायः प्रकटितकरभविलासः।

---

स्थाने तालुरदादिके तालुदन्तप्रभृतौ उच्चार्य्यत्वात् व्यञ्जनस्य यत् साहश्यं स श्रुत्यनुप्रासः उच्यते।

(ठ) दृश्येति। या. दृशा हरनेत्रेणेत्यर्थः दग्ध भस्मीकृत मनसिजं कामं दृशैव नेत्रेणैव जीवयन्ति नेत्रविक्षेपेण कामाविष्करणादिति भावः; विरूपाक्षस्य विषमनयनस्य त्रिलोचनस्य इत्यर्थ जयिनी ता. वामलोचना. वामाक्षीः स्तुम.।

(ड) अन्त्यानुप्रासमाह व्यञ्जनमिति। चेत् यदि यथावस्थं यादृश्या अवस्थया स्थितं व्यञ्जनम् आद्येन स्वरेण सह आवर्त्त्यते तत् तदा अन्त्ययोज्यत्वात् अन्ते पादस्य पदस्य वा अवसाने योज्यत्वात् प्रयोज्यत्वात् एष अन्त्यानुप्रास.।

चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम्” ॥ (ढ)

पदान्तगो यथा ।

“मन्दं हसन्तः पुलकं वहन्तः” इत्यादि ।

**शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्य्यमात्रतः ।**
**लाटानुप्रास इत्युक्तः ॥ ६४० ॥ [ ण ]**

उदाहरणम् ।

“स्मेरराजीवनयने ! नयने किं निमीलिते ? ।
पश्य निर्जितकन्दर्पं कन्दर्पवशगं प्रियम्” ॥

अत्र विभक्त्यर्थस्य अपौनरुक्त्येऽपि मुख्यतरस्य प्रातिपदिकांशद्योत्यधर्म्मिरूपस्य अभिन्नार्थत्वाल्लाटानुप्रासत्वमेव । “नयने तस्यैव नयने च” अत्र द्वितीयनयनशब्दो भाग्यवत्तादिगुणविशिष्टत्वरूपतात्पर्य्यमात्रेण भिन्नार्थः (त) । यथा वा ।

---

(ढ) केश इति। केश' काशस्य काशकुसुमस्य स्तवकवत् विकासः प्रकाश यस्य तथाभूत धवल इत्यर्थं, काय देह प्रकटित प्रकाशित करभस्यैव करिशावकस्यैव विलास येन तथाविध कुब्जीभावमापन्न इति भाव, चक्षु. दग्ध यत् वराटक तस्मात् ईषदून तत् सदृशमित्यर्थ, तथापि चेत अनल्प काम विषयाभिलाष न त्यजति। अत्र विकास इति प्रथमपादान्तस्थित' आस इति पदाश द्वितीयपादान्ते आवर्त्तित । तथा तृतीयपादान्तस्थित अल्पमिति पदाश चतुर्थपादान्ते पुन पठित. ।

(ण) लाटानुप्रासमाह शब्दार्थयोरिति। तात्पर्य्यमात्रत न तु अर्थत इति भाव' भेदे सति शब्दार्थयो पौनरुक्त्य लाटानुप्रास इति उक्त ।

(त) स्मेरेति। स्मेर विकसित यत् राजीव तद्वत् नयने यस्या तत्सम्बुद्धौ नयने कि कथ निमीलिते ? निर्जित कन्दर्पो येन तादृशम् अतिसुन्दरमित्यर्थ प्रियं कान्त कन्दर्पवशग कामपरतन्त्र पश्य अवलोकय। अत्र विभक्त्यर्थस्य एकत्र सम्बोधनरूपस्य अन्यत्र कर्मरूपस्य मुख्यतरस्य विभक्त्यपेक्षया प्रधानस्य प्रकृतिप्रत्यययो. प्रकृतेरेव प्राधान्यम् आश्रयत्वादिति भाव. प्रातिपदिकांशेन

"यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य" ॥ (थ)

अत्र अनेकपदानां पौनरुक्त्यम् । एष च प्रायेण लाटजनप्रियत्वाल्लाटानुप्रासः ।

**अनुप्रासः पञ्चधा ततः ॥ ६४१ ॥ [ द ]**

स्पष्टम् ।

**सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।**
**क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥६४२ ॥ [ध]**

अत्र द्वयोरपि पदयोः क्वचित् सार्थकत्वं क्वचिन्निरर्थकत्वं क्वचिदेकस्य सार्थकत्वमपरस्य निरर्थकत्वमत उक्तं सत्यर्थ इति । तेनैव क्रमेणेति दमो मोद इत्यादेर्विविक्तविषयत्वं सूचितम् । एतच्च पदपादार्द्धश्लोकावृत्तित्वेन पादाद्यावृत्तेश्चानेकविधतया प्रभूततमभेदम् । दिङ्मात्रमुदाह्रियते (न) ।

श्लोकांशेन द्योत्यस्य प्रतिपाद्यस्य धर्मिरूपस्य नेतरूपार्थस्य अभिन्नत्वात् एकार्थत्वात् । अत्र विभक्तेर्भिन्नत्वात् तात्पर्य्यभिन्नत्व बोध्यम् ।

(थ) यस्येति । यस्य सविधे समीपे दयिता प्रिया न विद्यते इति शेष, तस्य तुहिनदीधिति चन्द्र दवदहन, दावाग्नि । यस्य सविधे दयिता विद्यते इति शेष, तस्य दवदहन तुहिनदीधिति । अत्र प्रथमार्द्धे दवदहनस्य तुहिनदीधितेश्च दाहकत्व द्वितीयार्द्धे तयो. शीतलत्वमिति तात्पर्य्यभेदो द्रष्टव्य. ।

(द) अनुप्रास इति । तत पूर्वोक्तया रीत्या अनुप्रास पञ्चधा पञ्चविध. ।

(ध) यमकमाह सतीति । अर्थे सति विद्यमाने पृथगर्थाया. भिन्नार्थाया स्वरव्यञ्जनाना सहते समूहस्य तेनैव पूर्वोक्तेनैव क्रमेण आवृत्ति. आवर्त्तन पुन. कथनमित्यर्थ यमक विनिगद्यते कथ्यते ।

(न) विविक्तविषयत्व विभिन्नविषयत्व दमो मोद इति नास्यालङ्कारस्य विषय इत्यर्थः । प्रभूततमभेद बहुभेदमित्यर्थ । दिङ्मात्र किञ्चिन्मात्रमित्यर्थ. ।

"नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम्।
मृदुलतान्तलतान्तमलोकयत्
ससुरभिं सुरभिं सुमनोभरैः"॥ (प)

अत्र पदावृत्तिः पलाशपलाशेति। सुरभिं सुरभिमित्यत्र च द्वयोः सार्थकत्वम्। लतान्तलतान्तेत्यत्र प्रथमस्य निरर्थकत्वम्। परागपरागेत्यत्र द्वितीयस्य। एवमन्यत्राप्युदाहार्य्यम्।

* "यमकादौ भवेदैक्यं डलोर्बवोर्लरोस्तथा"।

इत्युक्तनयात् "भुजलतां जडतामबलाजनः" इत्यत्र न यमकत्वहानिः।

**अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद् यदि।**
**अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा**
**॥ ६४२ ॥ [ फ ]**

द्विधेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च। क्रमेणोदाहरणम्।

"के यूयं स्थल एव सम्प्रति वयं प्रश्नो विशेषाश्रयः
किं ब्रूते विहगः स वा फणिपतिर्यत्रास्ति सुप्तो हरिः।

(प) नवेति। स कृष्णः पुरः अग्रतः नवानि पलाशानि पत्राणि यत्र तादृशं पलाशवनं किंशुककाननं यत्र तादृशं, स्फुटैः प्रभूतैः परागैः रजोभिः, "परागः कौसुमं रजः" इत्यमरः। परागतानि व्याप्तानि पङ्कजानि यस्मिन् तथाभूतं, तथा मृदुलः कोमलः तान्तः कुसुमभरेण क्लान्त इत्यर्थः, लतान्तः लतासमूहः यत्र तादृशं, सुमनसां पुष्पाणां भरैः सुरभिं सुगन्धं सुरभिं वसन्तम् अलोकयत् ददर्श। द्रुतविलम्बितं वृत्तम्।

(फ) अन्यस्येति। अन्यस्य जनस्य अन्यार्थकं वाक्यं श्लेषेण वा काक्वा ध्वनिविकारविशेषेण अन्यथा अन्यार्थत्वेनेत्यर्थः यदि योजयेत् सङ्घटयेत् सा वक्रोक्तिः। सा च द्विधा—श्लेषनिबन्धना, काकुनिबन्धना चेति।

(ब) के इति। के यूयम्? इति प्रश्नः, सम्प्रति वयं स्थले एव न तु

वामा यूयमहो विडम्बरसिकः कीदृक् स्मरो वर्त्तते
येनास्मासु विवेकशून्यमनसः पुंस्वेव योषिद्भ्रमः" ॥ (ब)

अत्र विशेषपदस्य विः पक्षी शेषो नाग इति अर्थद्वय-योगात् सभङ्गश्लेषः। अन्यत्र तु अभङ्गः।

"काले कोकिलवाचाले सहकारमनोहरे।
कृतागसः परित्यागात् तस्याश्चेतो न दूयते ?" ॥ (भ)

अत्र कयाचित् सख्या निषेधार्थे नियुक्तो नञ्, अन्यथा काक्वा दूयत एवेति विध्यर्थे घटितः।

**शब्दैरेकविधैरेव भाषासु विविधास्वपि।**
**वाक्यं यत्र भवेत् सोऽयं भाषासम इतीष्यते॥**

**६४४ ॥ [म]**

---

के जले इति भाव उत्तरमिद, प्रश्न. विशेषमाश्रयतीति तथोक्त. प्रश्नार्थक किंशब्द इति भाव. प्रत्युत्तरमिदम्। किं ब्रूते कथयति भवान् इति शेष' विहग पक्षी, वा सः प्रसिद्धः फणिना नागाना पतिः अनन्त. यत्र हरिर्नारायण सुप्त' निद्रा-तीत्यर्थ, वर्त्तमाने क्तप्रत्यय। तदाश्रय' प्रश्न इति भाव, विशेषशब्दौ पक्षिनाग-पतिवाचकौ इति बोध्यम्। द्वितीयस्य उत्तरमिदम्। यूय वामा. प्रतिकूलवादिन इत्यर्थ. एकार्थतया प्रयुक्त मद्वाक्य, विपरीतार्थतया ग्राहिण इत्यर्थ। प्रथमस्योक्ति-रियम्। अहो आश्चर्य्य विडम्बे प्रतारणाया रसिक पटुरित्यर्थ', कीदृक् स्मर काम वर्त्तते तवेति शेष, येन कामविडम्बनेन विवेकशून्यमनस निर्विवेकस्य तव पुंसु पुरुषेषु एव अस्मासु योषिद्भ्रम नारीभ्रान्तिः वामाशब्दस्य नारीवाचकत्वादिति भाव', द्वितीयस्य प्रत्युक्तिरियम्। शार्दूलविक्रीडित वृत्तम्। अत्र श्लेषवशेन एकस्य अन्यार्थकवाक्यस्य अन्यार्थतया सङ्घटनात् वक्रोक्तिः।

(भ) काले इति। कोकिलवाचाले कोकिलरवपूर्णे इत्यर्थ. सहकारेण आम्रेण तद्विकासेन इति भाव मनोहरे काले वसन्ते कृतागस. कृतापराधस्य कान्तस्य कर्मणि षष्ठी, परित्यागात् निराकरणात् तस्याः नार्य्या. चेत. चित्त न दूयते ? अपि तु दूयत एवेत्यर्थ.।

(म) शब्दैरिति। विविधासु अपि भाषासु एकविधैरेव एकरूपैरेव शब्दैः

यथा मम।

"मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे।
विरसासि केलिकीरे किमालि। धीरे च गन्धसारसमीरे" ॥(य)

एष श्लोकः संस्कृतप्राकृतसौरसेनीप्राच्यावन्तीनागरापभ्रंशेषु एकविध एव।

"सरसं कइण कव्वं" (१)।

इत्यादौ तु सरसमित्यत्र संस्कृतप्राकृतयोः साम्येऽपि वाक्यगतत्वाभावे वैचित्र्याभावान्नायमलङ्कारः।

**श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते।**
**वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि।**
**श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः॥**

**६४५॥ [र]**

(१) सरस कवे काव्यमिति संस्कृतटीका।

---

यत्रेत्यव्यय यदित्यर्थ वाक्यं भवेत् स अय भाषासम इति शब्दालङ्कार इष्यते बुधैरिति शेष।

(य) मञ्जुलेति। हे आलि! सखि! आली सखी वयस्या चेत्यमर। कलेन मधुरास्फुटेन स्वनेन गम्भीरे, मञ्जुल मनोहर य मणिमञ्जीरं रत्ननूपुर, मञ्जीरो नूपुरोऽस्त्रियामित्यमर। तस्मिन्, विहारसरस्या क्रीडावाप्या तीरे, केलिकीरे क्रीडाशुके, धीरे मन्दमन्दसञ्चारिणीत्यर्थ गन्धसारसमीरे चन्दनसुरभिमलयमरुति च किं कथं विरसा अरुचि असि भवसि? आर्य्यावृत्तम्।

(र) श्लिष्टैरिति। श्लिष्टै अनेकार्थै. पदै अनेकार्थयोरनेकार्थानां वा अभिधाने अभिधया प्रतिपादने श्लेष इष्यते अनेकार्थाभिधानमेव श्लेष इति भाव। स च वर्णादीनामष्टानां श्लेषात अनेकार्थतया प्रतिपादनात् अष्टधा अष्टविधः। वर्णश्लेष. प्रत्ययश्लेष. लिङ्गश्लेषः प्रकृतिश्लेष. पदश्लेष. विभक्तिश्लेष

क्रमेण उदाहरणम्।

"प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्त्तुरभूत्
न पतिष्यतः करसहस्रमपि" ॥ (ल)

अत्र विधाविति विधुविधिशब्दयोरुकारेकारयोर्वर्णयोरौकाररूपत्वात् श्लेषः।

"किरणा हरिणाङ्कस्य दक्षिणश्च समीरणः।
कान्तोत्सङ्गजुषां नूनं सर्व एव सुधाकिरः" ॥ (व)

अत्र "सुधाकिरः इति क्विप् कप्रत्यययोः। किञ्च अत्र बहुवचनैकवचनयोरैकरूप्याद्वचनश्लेषोऽपि।

---

वचनश्लेष भाषाश्लेषश्चेति। प्रकृतिश्लेषोऽपि द्विधा धातुप्रातिपदिकभेदात्। पदश्लेषश्च सुबन्ततिङन्तभेदात् द्विविध इति बोध्यम।

(ल) वर्णश्लेषमुदाहरति प्रतिकूलतामिति। विधौ दैवे, विधिर्विधाने दैवे चेत्यमर। प्रतिकूलता विमुखताम् उपगते प्राप्ते सति बहूनि साधनानि उपाया तेषा भाव उपायाना सद्भाव इत्यर्थ हि निश्चित विफलता व्यर्थताम् एति प्राप्नोति। तथाहि, पतिष्यत पतनोन्मुखस्य दिनभर्त्तु कराणा किरणाना हस्तानाञ्च सहस्रमपि साधनमिति भाव अवलम्बनाय आश्रयाय रक्षणाय न अभूत् अवलम्बनसाधन नासीदित्यर्थ। अत्र विधाविति पदस्य औकाररूपवर्णस्य इकारोकारजन्यत्वात् अनेकार्थप्रतिपादकत्व बोध्यम्।

(व) प्रत्ययश्लेषमुदाहरति किरणा इति। हरिणाङ्कस्य चन्द्रस्य किरणाः दक्षिण समीरणश्च सर्व एव नून निश्चित कान्तोत्सङ्गजुषा कान्तक्रोडस्थिताना कान्ताना कान्ताक्रोडस्थिताना कान्तानाञ्च सुधाकिर अमृतवर्षिण अमृतवर्षी चेत्यथ। अत्र सुधा किरन्तीति क्विपि सुधाकिर्शब्दस्य प्रथमाबहुवचने तथा सुधा किरतीति कप्रत्यये सुधाकिरशब्दस्य प्रथमैकवचने सुधाकिर इति पदस्य प्रत्ययवचनाभ्यामुभयथा सिद्धत्वात् अनेकार्थाभिधायित्व बोध्यम्। किञ्चात्र कान्तोत्सङ्गजुषामिति लिङ्गश्लेषोऽपि बोद्धव्य.।

"विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी।
तव दत्तां सदा मोदं लसत्तरलहारिणी" ॥ (श)

अत्र नपुंसकस्त्रीलिङ्गयोः श्लेषो वचनश्लेषोऽपि।

"अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति।
सामर्थ्यकृदमित्राणां मित्राणाञ्च नृपात्मजः" ॥ (ष)

अत्र वक्ष्यतीति वहिवच्योः सामर्थ्यकृदिति कृन्ततिकरोत्योः प्रकृत्योः।

"पृथु कार्त्तस्वरपात्रमित्यादि"।

अत्र पदभङ्गे विभक्तिसमासयोरपि वैलक्षण्यात् पदश्लेषो न तु प्रकृतिश्लेषः (स)। एवञ्च।

---

(श) लिङ्गश्लेषमुदाहरति विकसदिति। तन्व्याः कृशाङ्ग्याः लसत्तरलहारिणी विकसन्नेत्रे एव नीलाब्जे नीलपङ्कजे तथा स्तन्योः द्वयी तव सदा मोदं हर्षं दत्ताम्। अत्र दत्तामिति क्रियापदं विकसन्नेत्रनीलाब्जे इत्यनेन यदान्वेति तदास्य लोट्परस्मैपदप्रथमपुरुषद्विवचनान्तता, यदा स्तनद्वयीत्यनेनान्वेति तदा लोट्परस्मैपदप्रथमपुरुषैकवचनान्तता। तस्मादस्य अनेकार्थत्वम्। तथा लसत्तरलहारिणीति पदं यदा विकसन्नेत्रनीलाब्जे इत्यस्य विशेषणं तदास्य क्लीवलिङ्ग द्विवचनान्तता, यदा स्तनद्वयीत्यस्य विशेषणं तदा स्त्रीलिङ्गैकवचनान्तता इत्यनयोः क्रियापदविशेषणपदयोरनेकार्थाभिधायित्वमवधेयम्।

(ष) प्रकृतिश्लेषमुदाहरति अयमिति। अमित्राणां शत्रूणां मित्राणां सुहृदाञ्च सामर्थ्यकृत् सामर्थ्यच्छेदकः सामर्थ्यकरश्च अयं नृपात्मजः हृदि हृदये ज्ञेषु विद्वत्सु च सर्वाणि शास्त्राणि वक्ष्यति धारयिष्यति कथयिष्यति चेत्यर्थः। अत्र वक्ष्यतीति क्रियापदस्य वहनकथनोभयार्थत्वात् अनेकार्थाभिधायित्वम्। तथा सामर्थ्यं कृन्तति वा करोति इत्युभयथा निष्पन्नस्य सामर्थ्यकृदिति पदस्य अनेकार्थाभिधायित्वं बोध्यम्।

(स) पदश्लेषमुदाहरति पृथ्विति। व्याख्यातं प्राक्। अत्र पृथुकार्त्तस्वरपात्रमित्यादिपदानामनेकार्थाभिधायित्वम्। अत्रेति यत्र विभक्तिसमासभेदः तत्रैव पदश्लेषः, यत्र न तथा तत्र प्रकृतिश्लेष इति बोध्यम्।

"नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः।
सदृशे वनवृद्धानां कमलानां तदीक्षणे" ॥ (छ)

अत्र लुब्धशिलीमुखादिशब्दानां श्लिष्टत्वेऽपि विभक्तेरभेदात् प्रकृतिश्लेषः। अन्यथा सर्वत्र पदश्लेषप्रसङ्गः।

"सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः।
नयोपकारसाम्मुख्यमायासि तनुवर्त्तनम्" ॥

अत्र हर इति पक्षे शिवसम्बोधनमिति सुप्। पक्षे च हृधातोस्तिङिति विभक्तिः। एवं भवेत्यादौ अस्य च भेदस्य प्रत्ययश्लेषेणापि गतार्थत्वे प्रत्ययान्तरासाध्यसुबन्ततिङन्तगतत्वेन विच्छित्तिविशेषाश्रयणात् पृथगुक्तिः (च)।

"महदे सुरसन्धं मे तमव समासङ्गमागमाहरणे।

---

(छ) नीतानामिति। तस्याः ईक्षणे नयने लुब्धैः व्याधैः लोलुपैश्च भूरिशिलीमुखैः बहुशरवद्भिः बहुभिर्भ्रमरैश्च आकुलीभावं नीतानां प्राप्तानां वनवृद्धानां कानने वृद्धिं प्राप्तानां जले वृद्धिं प्राप्तानाञ्च कमलानां हरिणानां पद्मानाञ्च सदृशे। अत्र प्रकृतिश्लेषः, प्रकृतिरत्र प्रातिपदिकरूपा बोध्या।

(च) विभक्तिश्लेषमुदाहरति सर्वस्वमिति। हे हर। त्वं सर्वस्य जगतः सर्वस्वं समस्तधनं तथा भवस्य संसारस्य छेदे खण्डने तत्परः संसाराशेषदुःखध्वंसनार्थी सन्नित्यर्थः। नवेन नीतिप्रदर्शनेन यः उपकारः तस्मिन् साम्मुख्यम् आनुकूल्यं यस्य तादृशं तनुवर्त्तनं शरीरधारणम् आयासि प्राप्नोषि लोकहितार्थं जन्म गृह्णासीत्यर्थः। अपरार्थस्तु तस्करं प्रति तन्मातुरुक्तिः। सर्वस्य जनस्य सर्वस्वं सर्वधनं हर चोरय, छेदतत्परः प्रतिबन्धिनो विनाशय इत्यर्थः। आयासि आयासयुक्तं क्लेशावहमित्यर्थः तनुवर्त्तनं क्षुद्रं जीवनं जीवनोपायम् उपकारसाम्मुख्यं नय प्रापय अतिकष्टे स्थिता वयं तत्त्वं चौर्य्यं कृत्वा यथा वयं सुखेन जीवामस्तथा कुरु इति भावः। भवेत्यादावित्ति भव इति पदम् एकत्र भूधातोस्तिङन्तरूपम् अन्यत्र सम्बन्धिपदत्वात् लुप्तषष्ठ्यन्तमिति विभक्तिबलात् अनेकार्थाभिधायकमिति भावः। गतार्थत्वे उक्तत्वे इत्यर्थः। विच्छित्तिविशेषाश्रयणात् वैचित्र्यातिशयप्रतिपादनात्।

हर बहुसरणं तं चित्तमोहमवसर उमे ! सहसा” ॥ (क)

अत्र संस्कृतमहाराष्ट्र्योः ।

**पुनस्त्रिधा सभङ्गोऽथाभङ्गस्तदुभयात्मकः ॥ ६४६ ॥**

एतद्भेदत्रयञ्च उक्तभेदाष्टके यथासम्भवं ज्ञेयम् (ख) ।

यथा वा ।

“येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो-

यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गाञ्च योऽधारयत् ।

---

(क) भाषाश्लेषमाह महदे इति । हे महदे । उत्सवदायिनि । मह उद्भव उत्सव इत्यमर । उमे । गौरि । मे मम तं सुरसम्म देवप्रार्थनीयम् आगमाहरणे शास्त्रज्ञाने समासङ्ग सम्यक् आसक्तिम् अव रक्ष, तथा अवसरे समये त बहुसरण बहुव्यापिन चित्तमोहम् अज्ञानमित्यर्थः सहसा झटिति हर नाशय । महाराष्ट्रीभाषार्थस्तु मह मम धम्मे धर्मे रसम् अनुराग देसु देहि गमागमा गमागमात संसारात् इत्यर्थं णे न अस्माकमित्यर्थ. तमत्त्स तमोवशा तमोगुणजनितामित्यर्थ आसम् आशामित्यर्थ. हर नाशय । हे हरवहु । हरवधु । त ल सरण शरण रचित्री असोत्यर्थ मे मम चित्तमोह चित्तमोह इत्यर्थ सहसा अवसरउ अपसरतु । भाषासमालङ्कारे भाषाणामेकरूपत्व न तु अर्थतो भेदः इह तु महदेसुरसम्मे इति पदानामनेकार्थता इति भेद ।

(ख) उक्तभेदाष्टके इति । पृथुकार्त्तस्वरपात्रमिति सभङ्गश्लेषः । प्रतिकूलतामुपगते हि विधौ इति अभङ्गश्लेषः । स्वर्वस्त्रमित्यत्र सभङ्गाभङ्गात्मकश्लेष इति बोध्यम् ।

(ग) येनेति । सर्वद सर्वाभीष्टप्रदायी स मा लक्ष्मीः तस्या. धव' पति कृष्ण इत्यर्थ त्वा पायात् रक्षतु । माधवं विशिनष्टि येनेत्यादिना । येन अभवेन अजेन माधवेन अन शकटम्, ध्वस्त पादप्रक्षेपेण परावर्त्तित तथा पुरा पूर्वस्मिन् काले बलिजित्काय. शरीर वामनदेह इत्यर्थ स्त्रीकृतः असुराणा मोहनार्थम् अमृतपरिवेशनकाले मोहिनीमूर्त्तिपपरिग्रह कृत इत्यर्थ. । यश्च उद्वृत्तभुजङ्गहा उद्वृत्तं भुजङ्ग सर्परूपिणमघासुर कालिय वा हतवानित्यर्थः, तथा आरम् अरिसम्बन्धि बल सैन्य यातीति आरवलय अथवा उद्वृत्तभुजङ्ग हरतीति उद्वृत्तभुजङ्गहारी गरुडः तस्य बलेन याति गच्छतीति तथोक्तः । य.

यस्याहुः शशिमच्छिरो हर इति स्तुत्यञ्च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्व्वदो माधवः" ॥ (ग)

अत्र "येन ध्वस्तेत्यादौ" सभङ्गश्लेषः। "अन्धकेत्यादौ" अभङ्गः। अनयोश्चैकत्र सम्भवात् सभङ्गाभङ्गात्मको ग्रन्थगौरव-भयात् पृथङ् नोदाहृतः। इह केचिदाहुः "सभङ्गश्लेष एव शब्दश्लेषविषयः। यत्रोदात्तादिस्वरभेदाद्भिन्नप्रयत्नोच्चार्य्य-त्वेन भिन्नयोः शब्दयोर्जतुकाष्ठन्यायेन श्लेषः। अभङ्गस्तु अर्थ-श्लेष इव। यत्र स्वराभेदादभिन्नप्रयत्नोच्चार्य्यतया शब्दाभेदा-दर्थयोरेकवृन्तगतफलद्वयन्यायेन श्लेषः, यो हि यदाश्रितः स तदलङ्कार एव, अलङ्कार्य्यालङ्करणभावस्य लोकवदाश्रया-

अग पर्वत गोवर्द्धन, शैलवृक्षौ नगावगावित्यमरः। कृष्णरूपेण गा पृथिवीञ्च कूर्म्मरूपेण अधारयत्। अमरा देवा यस्य शशिन चन्द्र मथ्नातीति शशिमत् राहु तस्य शिर हरतीति शशिमच्छिरोहर इति स्तुत्य स्तवनीय नाम आहु. कथयन्ति। यश्च स्वयम् अन्धकाना यादवाना क्षयकर द्वारकाख्यनिवासनिर्माता इत्यर्थ'। द्वितीयार्थस्तु उमाधव शिव' सर्व्वदा त्वा पायात्। ध्वस्तमनोभवेन दग्धकामेन येन पुरा त्रिपुरविध्वसकाले इत्यर्थ बलिजित्काय विष्णुशरीरम् अस्त्रीकृत विष्णुशरीर शर कृत्वा तेन त्रिपुरासुरा निपातिता इति पौराणिकी वार्त्ता। यश्च उद्वृत्त, भुजङ्ग पन्नगः हार वलयश्च यस्य तथाविध। य गङ्गाम् अधारयत् शिरसि दधार इत्यर्थ। अमरा देवा यस्य शशिमत् चन्द्रवत् शिरः तथा हर इति स्तुत्य नाम च आहु, तथा यश्च स्वयम् अन्धकक्षयकर अन्धकाख्य-मसुर निहतवानित्यर्थ। शार्दूलविक्रीडित वृत्तम्। अत्रेति सभङ्गाभङ्गोभयात्मक-स्त्रिविध श्लेष अत्र कथित इति बोध्यम्।

(घ) उदात्तादिस्वरभेदात् उदात्त' उच्चै स्वर' अनुदात्त नीचैस्वरः, स्वरितो मध्यमस्वर इति स्वराणा भेदात् भिन्नेन प्रयत्नेन स्वरभेदजनितप्रयासे-नेत्यर्थ उच्चार्य्यतया उच्चारणीयत्वेन भिन्नयो स्वरभेदात् भेद गतयो' शब्दयो' जतुकाष्ठन्यायेनेति यथा जतुकाष्ठञ्च समवेत प्रयत्नभेदेन जतुन काष्ठ काष्ठा-याश्च जतु पृथक् क्रियते तथा स्वरभेदेन समवेतयो' शब्दयो भेदोऽवगम्यते इति भाव। अभिन्नप्रयत्नोच्चार्य्यतया एकप्रयत्नोच्चारणीयत्वेन अर्थयो' द्वयोरित्यर्थ।

श्रयिभावेनोपपत्तिरिति" तदन्ये न मन्यन्ते, तथाह्यत्र ध्वनि-गुणीभूतव्यङ्ग्यदोषगुणालङ्काराणां शब्दार्थगतत्वेन व्यवस्थिते-रन्वयव्यतिरेकानुविधायित्वेन नियम इति। न च "अन्धक-क्षयेत्यादौ" शब्दाभेदः। "अर्थभेदेन शब्दभेदः" इति दर्श-नात्। किञ्चात्र शब्दस्यैव मुख्यतया वैचित्र्यबोधोपायत्वेन कविप्रतिभयोट्टङ्कनात् शब्दालङ्कारत्वमेव। विसदृशशब्दद्वयस्य बन्धे चैवंविधस्य वैचित्र्यस्याभावाद् वैचित्र्यस्यैव च अलङ्कार-त्वादर्थमुखप्रेक्षितया च अर्थालङ्कारत्वेऽनुप्रासादीनामपि रसा-दिपरत्वे नार्थमुखप्रेक्षितयार्थालङ्कारत्वप्रसङ्गः। शब्दस्याभिन्न-प्रयत्नोच्चार्य्यत्वे नार्थालङ्कारत्वे "प्रतिकूलतामुपगते हि विधौ"

---

एकवृन्तेति। यथा एकस्मिन् वृन्ते फलद्वयं तिष्ठति तथा एकप्रयत्नोच्चरिते एकस्मिन् शब्दे अर्थद्वयसमावेश इति भाव। यदाश्रित इति। यमाश्रित्य तिष्ठतीत्यर्थ तदलङ्कार तस्य आश्रयस्य अलङ्कार इत्यर्थ। लोकवदिति। यथा लोके यो यमलङ्कार परिधत्ते स तस्यैवालङ्कारस्तद्वदिहापीति भाव'। तथाहि तमेवार्थं जानीहीत्यर्थ. अत्र अलङ्कारग्रन्थे इत्यर्थ शब्दार्थगतत्वेन अयं ध्वनि' दोषः गुण वा अलङ्कार शब्दगत वा अर्थगत इत्येव या व्यवस्थिति. व्यवस्था तस्या। तदन्वयेति। तत्सत्त्वे तत्सत्ता अन्वय, तदसत्त्वे तदसत्ता व्यतिरेक. तौ अनुविदधाति अनुसरतीति तथोक्ता तस्या. भाव तेन नियम निर्धारण-मित्यर्थः यदि यस्य शब्दस्य सत्तायामेव तस्य ध्वन्यादे सद्भाव न तु तत्परिवृत्तौ, तदा ध्वन्यादीना शब्दगतत्वम् अन्यथा अर्थगतत्वमिति भाव। तस्मात् अन्धक-क्षयकर इत्यादौ शब्दाभेदेऽपि नार्थश्लेष शब्दपरिवृत्त्यसहत्वात् शब्दानामेवात्र प्राधान्यमिति बोध्यम्। अर्थभेदेनेति। सकृदुच्चरित शब्द सकृदेवार्थं गम-यतीति न्यायादिति भाव.। किञ्चेति अत्र अन्धकेत्यादौ मुख्यतया प्राधान्येन कविप्रतिभया कवे प्रज्ञोन्मेषेण उट्टङ्कनात् उत्कीर्त्तनात् उत्थापनादित्यर्थ। विसदृशेति। विसदृशस्य अन्यविधस्य शब्दद्वयस्य बन्धे रचनाया वैचित्र्यस्य चमत्कारस्य। अर्थमुखेति। अर्थानुगुण्यदर्शनेन च यो हि अर्थानुगुण्य दर्शयति स एवार्थालङ्कार इत्येव वाच्ये अनुप्रासादीनामिति आदिपदेन वर्णोक्तिभाषासम-यमकादीना परिग्रह रसादिपरत्वे रसादीनाम् आदिपदेन रसाभासवादीना

इत्यादौ शब्दभेदेऽप्यर्थालङ्कारत्वं तवापि प्रसज्यतीत्युभयत्रापि शब्दालङ्कारत्वमेव। यत्र तु शब्दपरिवर्त्तनेऽपि न श्लेषत्व-खण्डना (घ)। तत्र।

"स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥" (ङ)

इत्यादावर्थश्लेषः। अस्य च अलङ्कारान्तरविविक्तविषयताया असम्भवात् विद्यमानेषु अलङ्कारान्तरेषु अपवादत्वेन तद्बाधकतया तत्प्रतिभोत्पत्तिहेतुत्वमिति केचित्। इत्यमत्र विचार्य्यते समासोक्त्यप्रस्तुतप्रशंसादौ द्वितीयार्थस्यानभिधेयतया नास्य गन्धोऽपि "विद्वन्मानसहंसेत्यादौ" श्लेषगर्भे रूपकेऽपि मानस-

---

ग्रहण रसाद्यनुकूलत्वे अर्थमुखप्रेक्षितया रसादीना व्यङ्ग्यार्थत्वादिति भावः अर्थालङ्कारत्वप्रसङ्गः अर्थालङ्कारत्वापत्तिरित्यर्थः। शब्दस्येति। अभिन्नप्रयत्नोच्चार्य्यत्वेन एकप्रयासोच्चारणीयत्वेन शब्दभेदेऽपि विधुविधिशब्दयोर्भिन्नत्वेऽपीत्यर्थः. तवापि मते इति शेष। इति अस्मात् कारणात् उभयत्रापि प्रतिकूलतामित्यत्र अन्धकक्षयकर इत्यत्र च इत्यर्थः। शब्दपरिवर्त्तने इति शब्दस्य परिवर्त्तने पर्य्याय-शब्देनोपादानेऽपि श्लेषत्वखण्डना श्लेषत्वव्याघात.।

(ङ) स्तोकेनेति। अहो आश्चर्य्यं तुलाकोटेः खलस्य दुर्जनस्य च वृत्तिः व्यवहारः सुसदृशी, तथाहि स्तोकेन अल्पेन उन्नतिम् ऊर्द्धगतिम् अभ्युदयञ्च आयाति प्राप्नोति, स्तोकेन अल्पेन अधोगतिं निम्नगामित्वं दुरवस्थाञ्च आयाति। अत्र उन्नत्यधोगतिशब्दयोः, परिवृत्तावपि न श्लेषत्वखण्डनमिति बोध्यम्।

(च) अलङ्कारेति। अलङ्कारान्तरेभ्यः विविक्तः विभिन्नः। विषयो यस्य तद्भावस्य यत्र यत्र श्लेषोऽस्ति तत्र तत्रान्योऽपि कश्चिदलङ्कारोऽस्तीति भावः। विद्यमानेषु तिष्ठत्सु श्लेषेण सहेति शेषः. अलङ्कारान्तरेषु अन्येषु अलङ्कारेषु सत्सु तद्बाधकतया तेषामलङ्काराणां बाधकतया आच्छादकतया तेभ्यः प्राबल्येनेत्यर्थः तत्प्रतिभेति तेषाम् अलङ्काराणा प्रतिभा स्फुरणम् एव उत्पत्तिहेतुः यस्य तथात्वं तैः परिपोष्यत्वमिति भावः। अनभिधेयतया अवाच्यतया व्यङ्ग्यतयेत्यर्थः. श्लेषे तु उभयार्थयोरेव वाच्यत्वमिति भावः। विद्वन्मानसहंसेति विदुषां मानसमेव मानसं सरः तत्र हंसः तत्सदृशः विद्वन्मानसचारिन्नित्यर्थः श्लेषगर्भे श्लेषप्रति-

शब्दस्य चित्तसरोरूपोभयार्थत्वेऽपि रूपकेण श्लेषो बाध्यते। सरोरूपस्यैवार्थस्य विश्रामधामतया प्राधान्यात्। श्लेषे हि अर्थद्वयस्यापि समकक्षत्वं "सन्निहितबालान्धकारा भास्वन्मूर्त्तिश्च" इत्यादौ विरोधाभासेऽपि विरुद्धार्थस्य प्रतिभातमात्रस्य प्ररोहाभावान्न श्लेषः। एवं पुनरुक्तवदाभासेऽपि। तेन "येन ध्वस्तेत्यादौ" प्राकरणिकयोर्नीतानामित्यादावप्राकरणिकयोरेकधर्माभिसम्बन्धात् तुल्ययोगितायाम् (च)।

"स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति, मार्गणशतैश्च ददाति दुःखम्।

---

भीत्यापिते इत्यर्थ अत्र रूपकस्यैव श्लेषबाधकत्वम्। सरोरूपस्येति। मानसशब्दस्य य सरोरूपोऽर्थ तस्यैव विश्रामधामतया हसस्य विश्रामास्पदतया प्राधान्यात् रूपकप्रतीतिपर्य्यवसायित्वेनेति भाव। समकक्षत्व तुल्यबलत्वम्। सन्निहितेति। अत्र भास्वन्मूर्त्ति. सूर्य्यमूर्त्ति सन्निहितबालान्धकारा नवान्धकारसन्निधाना इत्यापातत विरोध पर्य्यवसाने तु सुवेशानायिकावर्णनमिद सन्निहित बाल केश' अन्धकारो यस्या तादृशी भास्वन्मूर्त्ति दीप्यमाना तनु। प्रतिभातमात्रस्य स्फुरितमात्रस्य प्ररोहाभावान अङ्कुराभावात् अपर्य्यवसायित्वादित्यर्थ न श्लेष अर्थयो समकक्षताभावादिति भाव। पुनरुक्तवदाभासे इति अत्रापि आपातत एव पुनरुक्तवत स्फुरणं न तु पर्य्यवसायितेति भाव'। एकधर्माभिसम्बन्धात् एक. धर्म. गुणक्रियारूप तस्य अभिसम्बन्धात संयोगात् येनेत्यादौ माधवमाधवयो पदार्थयोरेकरक्षणक्रियाभिसम्बन्ध नीतानामित्यादौ कमलेक्षणयो. पदार्थयो आकुलीभावादिरूपैकगुणसम्बन्धस्य बोध्य। तुल्ययोगितायां पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्। एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगितेति वक्ष्यमाणलक्षणायाम्।

(छ) स्वेच्छेति। निर्बोधराजसेवकस्योक्तिरियम्। प्रसूनविशिख' काम. अल्पबुद्धि प्रभुश्च कष्ट क्लेशहेतुरित्यर्थ.। तथाहि, प्रसूनविशिख स्वेच्छं यथेष्टम् उपजाता सम्भवन्त. विषया लक्ष्याणि यस्य तथोक्त, अपि स्वेच्छया कामिजनरूपाणि लक्ष्याणि विध्यन्नपि देही शरीरीति वक्तु न याति योग्यता न याति न आप्नोतीत्यर्थः अनङ्गत्वादिति भाव, मार्गणशतैः शरसमूहैः दुःखं कामिभ्य इति

मोहात् समुत्क्षिपति जीवनमप्यकाण्डे
कष्टं प्रसूनविशिखः प्रभुरल्पबुद्धिः" ॥ (छ)

इत्यत्र प्राकरणिकाप्राकरणिकयोरेकधर्माभिसम्बन्धाद्दीपके(ज)।

"सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव" इत्यादौ च उपमायां विद्यमानायामपि श्लेषस्यैतद्विषयपरिहारेण असम्भवात्। एषाञ्च श्लेषविषयपरिहारेणापि स्थितेः। एतद्विषये श्लेषस्य प्राबल्येन चमत्कारित्वप्रतीतेश्च श्लेषेणैव व्यपदेशो भवितु युक्तः, अन्यथा तद्व्यपदेशस्य सर्वथाऽभावप्रसङ्गाच्चेति (झ)। अत्रोच्यते न तावत् परमार्थतः श्लेषस्या-

---

शेष ददाति। मोहात् अज्ञानात् स्वविकारजनितं मोह दत्त्वा इत्यर्थं यत्रर्थे पञ्चमी। जीवनमपि कामिजनस्येति शेष अकाण्डे सहसा समुतक्षिपति हरति च। अल्पबुद्धि प्रभुश्च स्वेच्छया उपजाता अधिगता विषया: सम्पद येन तादृश यथेच्छ व्ययोपयोगिसम्पदोऽधिकुर्वन्नपीत्यथ: देहीति वक्तु न याति क योग्यता प्राप्नोति याचकेभ्य देहीति वक्तु न ददातीति भाव.। मार्गणशतै प्रार्थनशतै दुःख याचकेभ्य इति शेष ददाति। मोहात् अज्ञानात् अपराधमज्ञात्वा इत्यर्थ जीवनमपि लोकानामिति शेष: अकाण्डे सहसा हरति।

(ज) प्राकरणिकाप्राकरणिकयो. अल्पबुद्धि प्रभु. प्राकरणिक: कामस्तु तदुपमानतया अप्राकरणिक तयो एकधर्माभिसम्बन्धात एकेन धर्मेण गुणक्रियारूपेण सम्बन्धात् दीपके अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते इत्युक्तलक्षणे।

(झ) सकलेति। एतत् पुरं नगर सम्प्रति सुधांशुबिम्बमिव चन्द्रबिम्बमिव सकलकल कलकलेन कलरवेण सह वर्त्तमानमित्यर्थ. अन्यत्र सकलकल सम्पूर्णकल जातम्। अत्र सकलकलत्वरूपधर्मसाम्यात पुर चन्द्रबिम्बेनोपमीयते इति उपमाया साम्य वाच्यमवैधर्म्यं वाक्यैक्ये उपमा द्वयोरित्युक्तलक्षणाया विद्यमानाया तिष्ठन्त्यामपि एतद्विषयपरिहारेण एतद्विषयपरित्यागेन असम्भवात् एतान् विषयान् परित्यज्य श्लेषो न सम्भवतीति भाव। एषाञ्चेति एषा तुल्ययोगितादीनामलङ्काराणा श्लेषविषयपरिहारेणापि विना श्लेषमित्यर्थ स्थिते. सम्भवादित्यर्थ: प्राबल्येन प्राधान्येन चमत्कारित्वप्रतीते वैचित्र्यबोधात् व्यपदेश: कीर्त्तन श्लेषालङ्कारोऽयमिति कथनमित्यर्थ। अन्यथा एतादृशस्थले श्लेषाव्यपदेशे इत्यर्थ.

लङ्कारान्तराविविक्तविषयता। "येन ध्वस्तेत्यादिना" विविक्त-विषयत्वात्, न च अत्र तुल्ययोगिता, तस्याञ्च द्वयोरप्यर्थयो-र्वाच्यत्वनियमाभावात्। अत्र हि माधवमाधवयोरेकस्य वाच्यत्वनियमेऽपरस्य व्यङ्ग्यत्वं स्यात्। किञ्च तुल्ययोगितायामेकस्यैव धर्मस्यानेकधर्मिसम्बन्धतया प्रतीतिः इह तु अनेकेषां धर्मिणां पृथक् पृथक् धर्मसम्बन्धतया (ञ)। "सकलकलेत्यादौ" च न उपमाप्रतिभोत्पत्तिहेतुः श्लेषः। पूर्णोपमाया निर्विषयत्वापत्तेः। कमलमिव मुखं मनोज्ञमेतदित्याद्यस्ति पूर्णोपमाविषय इति चेन्न। यदि "सकलेत्यादौ" शब्दश्लेष-तया नोपमा तत् किमपराद्धं मनोज्ञमित्यादावर्थश्लेषेण (ट) स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ, किन्तु। आश्रित्य शब्द-मात्रं सामान्यमिहापि सम्भवतः" इति रुद्रटोक्तदिशा (ठ)

---

तदव्यपदेशस्य श्लेषालङ्कारकीर्त्तनस्य सर्वथा सर्वे प्रकारे अभावप्रसङ्गात् लोप सम्भवादित्यर्थः।

(ञ) परमार्थतः तत्त्वतः। अलङ्कारेति। अलङ्कारान्तरेण अविविक्तः अविभिन्नः सवलित इत्यर्थः, विषयो यस्य तस्य भाव न तावत् नैवेत्यर्थः। विविक्तविषयत्वात् विभिन्नविषयत्वात्। तस्याश्चेति। तस्या तुल्ययोगिताया द्वयो-रप्यर्थयो प्राकरणिकाप्राकरणिकयो वाच्यत्वनियमाभावात् द्वावेव वाच्यौ भवत इत्येव नियमो नास्ति अत्र तु उभयोरेवार्थयोर्वाच्यत्वं स्यादेव ननु तावत् तुल्य-योगितायां वाच्यत्वनियम तत्र का हानिरित्याशङ्क्य दोषान्तरमुत्थापयति किञ्चेति धर्मस्य गुणक्रियारूपस्य अनेकधर्मिसम्बन्धतया बहुव्यक्तिसंसृष्टतया। इह तु श्लेषे इत्यर्थः अनेकेषां बहूनां धर्मिणां बहुवचनमुपलक्षणं द्वयोरपि धर्मिणो यथा येन ध्वस्तेत्यादिषु माधव उमाधवश्च द्वौ धर्मिणौ तयोः पृथक् पृथक् धर्मेण सम्बन्ध इति द्रष्टव्यम्।

(ट) न उपमेति। उपमाया प्रतिभा उत्पत्तिहेतुर्यस्य तादृश न उपमानु प्राणित श्लेषो नेत्यर्थः। निर्विषयत्वापत्ते स्थानाभावापत्तेरित्यर्थः। किम-पराद्धं को दोष कृत इत्यर्थः मनोज्ञमित्यादौ अर्थश्लेष एवास्तामिति भावः।

(ठ) स्फुटमिति। एतौ उपमासमुच्चयौ स्फुटं स्पष्टम् अर्थालङ्कारौ किन्तु

गुणक्रियासाम्यवच्छब्दसाम्यस्याप्युपमाप्रयोजकत्वात्। ननु गुणक्रियासाम्यस्यैव उपमा प्रयोजकता युक्ता तत्र साधर्म्यस्य वास्तवत्वात्, शब्दसाम्यस्य तु न तथा तत्र साधर्म्यस्य अवास्तवत्वात्, ततश्च पूर्णोपमाया अन्यथानुपपत्तेर्गुणक्रियासाम्यस्यैवार्थश्लेषविषयतापरित्यागे पूर्णोपमाविषयता युक्ता न तु "सकलेत्यादौ" शब्दसाम्यस्य इति चेन्न। साधर्म्यमुपमेत्येवाविशिष्टस्य उपमालक्षणस्य शब्दसाम्याद् व्यावृत्तेरभावात्। यदि च शब्दसाम्ये साधर्म्यमवास्तवत्वान्नोपमाप्रयोजकं तदा कथं "विद्वन्मानसेत्यादौ" आधारभूते चित्तादौ सरोवराद्यारोपो राजादेर्हंसाद्यारोपरूपकप्रयोजकः। किञ्च यदि वास्तवसाम्य एवोपमाङ्गीकार्य्या तदा कथं त्वयापि "सकलकलेत्यादौ" बाध्यभूतोपमाङ्गीक्रियते। किञ्च अत्र श्लेषस्यैव साम्यनिर्वाहकता न तु साम्यस्य श्लेषनिर्वाहकता, श्लेषबन्धतः प्रथमं साम्यस्यासम्भवादित्युपमाया एवाङ्गित्वेन व्यपदेशो ज्यायान्। "प्रधानेन व्यपदेशा

---

सामान्य शब्दमात्रम् आश्रित्य इहापि अर्थालङ्कारमध्येऽपि सम्भवत इति रुद्रटेन ग्रन्थकारेण उक्ता या दिक् नय तया।

(ङ) गुणेति। यथा गुणक्रियासाम्यम् उपमाप्रयोजक तथा शब्दसाम्यमपि उपमाप्रयोजकमिति भाव। उपमाप्रयोजकता औपम्यसाधकत्वम्। साधर्म्यस्य समानधर्मवत्त्वस्य वास्तवत्वात् तात्त्विकत्वात। तथा उपमाप्रयोजकता युक्ता इत्यर्थ। अन्यथानुपपत्ते' अन्यप्रकारेण अनुपपत्त्या उपपत्त्यभावेन इत्यर्थ। अविशिष्टस्य सामान्येनाभिहितस्येत्यर्थ। व्यावृत्ते व्यवच्छेदस्य। विद्वन्मानसेत्यादि उपमानोपमेययोरभेदप्रतिपत्तिरूपस्य रूपकस्य कथमत्र अवास्तवेऽपि सद्भाव, भवन्मते अवास्तवे उपमानोपमेयभावस्यासत्त्वादिति भाव। स्ववचनेनैव प्रतिपक्ष दूषयति किञ्चेति। बाध्यभूता बाधिता इत्यर्थ। यच्चात्र श्लेषस्य प्राधान्यमुक्त।तदपि दूषयति किञ्चेति। अत्र सकलकलमित्यादौ साम्यनिर्वाहकता औपम्यप्रयोजकता, श्लेषबन्धत. श्लेषरचनाया. प्रथम पूर्वम् अङ्गित्वेन

भवन्ति" इत्युक्तनयात् ननु शब्दालङ्कारविषयेऽङ्गाङ्गिभावसङ्करो नाङ्गीक्रियते तत् कथमत्र श्लेषोपमयोरङ्गाङ्गिभावः सङ्कर इति चेन्न। अर्थानुसन्धानविरहिण्यनुप्रासादावेव तथानङ्गीकारात्। एवं दीपकादावपि ज्ञेयम् (ङ)।

"सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः।
निपतन्ति धार्त्तराष्ट्राः कालवशात् मेदिनीपृष्ठे"॥ (ढ)

अत्र शरद्वर्णनया प्रकरणेन धार्त्तराष्ट्रादिशब्दानां हंसाद्यर्थाभिधाने नियमात् दुर्य्योधनादिरूपोऽर्थः शब्दशक्तिमूलो वस्तुध्वनिः। इह च प्रकृतप्रबन्धाभिधेयस्य द्वितीयस्यार्थस्य सूच्यतयैव विवक्षितत्वादुपमानोपमेयभावो न विवक्षित इति नोपमाध्वनिर्न च श्लेष इति सर्वमवदातम् (ण)।

---

प्राधान्येन व्यपदेश कीर्त्तनं ज्यायान् श्रेष्ठ। अत्रेति। अर्थानुसन्धानविरहिणि अर्थानुसन्धानरहिते केवल शब्दानुसन्धानमात्रसाध्ये इति भाव। तथानङ्गीकारात् अङ्गाङ्गिभावास्वीकारादित्यर्थ। एवमिति। यथा सकलकलमित्यत्र उपमायाः प्राधान्य तथा स्वेच्छोपजातविषय इत्यादौ श्लेषसत्त्वेऽपि दीपकस्य प्राधान्यमिति भाव, आदिशब्दात् तुल्ययोगितादिपरिग्रह।

(ढ) सत्पक्षा इति। सत्पक्षा उत्कृष्टपक्षशालिन अन्यत्र सुसहाया, मधुरगिरः मनोहरवचस उभयत्र समान, प्रसाधिता शोभिता आशा दिश यै तादृशा. अन्यत्र अर्थिनामाशापूरका, मदोद्धताः आरम्भा. विचेष्टितानि येषा तथाभूता धार्त्तराष्ट्रा हंसविशेषा धृतराष्ट्रसुता दुर्य्योधनादयश्च कालवशात् समयक्रमात् मेदिनीपृष्ठे पृथिव्या निपतन्ति मानससरस इति शेष जलधरसमये मानस यान्ति हंसा इति कविसमयप्रसिद्धे साम्प्रत वर्षापगमादिति भावः अन्यत्र रणक्षेत्रे निपतन्ति निहता शेरते इति भाव।

(ण) प्रकरणेन संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता। अर्थः प्रकरण लिङ्गमिति लक्षणोक्तेन नियमनात् व्यवस्थापनात्। सूच्यतयैव सामान्येन प्रकाश्यतयैव विवक्षितत्वात् वक्तुमिष्टत्वात्। अवदात विशुद्ध निर्मलमिति यावत्।

पद्माद्याकारहेतुत्वे
वर्णानां चित्रमुच्यते ॥ ६४७ ॥ [ त ]

आदिशब्दात् खड्गमुरजचक्रगोमूत्रिकादयः। अस्य च तथाविधलिपिसन्निवेशविशेषवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाशसमवायविशेषवशेन चमत्कार-विधायिभिर्वर्णैरभेदेनोपचाराच्छब्दालङ्कारत्वम् ( थ )। तत्र पद्मबन्धो यथा मम।

"मारमासुषमा चारुरुचा मारवधूत्तमा।
मात्तधूर्त्तमावासा सा वामा मेऽस्तु मा रमा" ॥ (द)

एषोऽष्टदलपद्मबन्धो दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टवर्णः किन्तु विदिग्दलेषु अन्यथा कर्णिकाक्षरन्तु श्लिष्टमेव (ध)। एवं खड्गबन्धादिकमपि ऊह्यम्।

---

( त ) चित्रमाह पद्मे ति। वर्णाना पद्मादीनाम् आकारहेतुत्वे आदिपदेन खड्गमुरजादयो गृह्यन्ते। पद्मादिसदृशवर्णाना विन्यास चित्रमिति तात्पर्य्यार्थ.।

( थ ) तथाविधेति। पद्मादिसदृशलिपिसन्निवेशवशेन चमत्कारविधायिना वैचित्र्यबोधकानामित्यर्थ। तथाविधेति। तादृशकर्णविवररूपे आकाशे सम-वायविशेषवशेन सम्बन्धविशेषवशेन चमत्कारविधायिभि विस्मयजनकै. अभेदेन तादात्म्येन उपचारात् अध्यवसायात्।

( द ) मारमेति। मारस्य कामस्य मा जननी सुषमा परमा शोभा तत्-स्वरूपेत्यर्थ चारुरुचा मनोहरकान्त्या मारवध्वा रतेरपि उत्तमा श्रेष्ठा मात्त न गृहीत. धूर्त्तमस्य आवास यया सा रमा लक्ष्मी मे मम वामा प्रतिकूला मा अस्तु।

( ध ) एष इति। दिग्दलेषु पूर्वदक्षिणपश्चिमोत्तरपटेषु निर्गमप्रवेशाभ्या निर्गमेण एकार्थं प्रवेशेन अन्यार्थं इति श्लिष्टवर्ण विभिन्नरूपवर्ण इत्यर्थ। विदिग्दलेषु अग्न्यादिकोणवर्त्तिदलेषु अन्यथा अश्लिष्टवर्ण इत्यर्थ. कर्णिकाक्षर पद्ममध्यस्थितमक्षरम्।

**काव्यान्तर्गडुभूता या सा तु नेह प्रपञ्च्यते । [न]**
**रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका ॥**
**उक्तिवैचित्र्यमात्रा सा च्युतदत्ताक्षरादिका ॥**
**६४८॥ [ प ]**

च्युताक्षरा दत्ताक्षरा च्युतदत्ताक्षरा च । उदाहरणम् ।

"कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम् ।
किं करोतु कुरङ्गाक्षी वदनेन निपीडिता" ॥ ( फ )

अत्र "रसाले" इति वक्तव्ये "साले" इति रश्च्युतः । "वने" इत्यत्र "यौवने" इति यौर्दत्तः । "वदनेन" इत्यत्र "मदनेन" इति मश्च्युतो वो दत्तः । आदिशब्दात् क्रियाकारकगुप्त्यादयः । तत्र क्रियागुप्तिर्यथा ।

"पाण्डवानां सभामध्ये दुर्योधन उपागतः ।
तस्मै गाञ्च हिरण्यञ्च सर्वाण्याभरणानि च" ॥ (ब)

---

( न ) काव्यान्तरिति । काव्यान्तर्वर्त्तिरोगविशेषतया तु इह न प्रपञ्च्यते विस्तार्य्यते चित्रालङ्कार इति शेष ।

( प ) रसस्येति । परिपन्थित्वात् प्रतिकूलत्वात् । सा प्रहेलिका उक्ति-वैचित्र्यमात्र वचनचातुर्य्यमेव । सा च च्युताक्षरा दत्ताक्षरा च्युतदत्ताक्षरा आदि-पदेन क्रियाकारकगुप्त्यादीना ग्रहणम् ।

( फ ) कूजन्तीति । कोकिला साले रसाले इत्यर्थ कूजन्ति, यौवने वने जले इत्यर्थ अम्बुज पद्म फुल्ल विकसितम् । कुरङ्गाक्षी हरिणनयना वदनेन मदनेनेत्यर्थ निपीडिता सती किं करोतु ।

( ब ) पाण्डवानामिति । पाण्डवाना सभामध्ये य अधन, उपागत' तस्मै गाञ्च हिरण्यञ्च सर्वाणि आभरणानि अलङ्कारांश्च अदु, दत्तवन्तः पाण्डवा इति शेषः ।

अत्र "दुर्य्योधनः" इत्यत्र "अदुर्योऽधनः" इति अदुरिति क्रिया गुप्ता। एवमन्यत्रापि। अथावसरप्राप्तेषु अर्थालङ्कारेषु प्राधान्यात् सादृश्यमूलेषु लक्षितव्येषु तेषामप्युपजीव्यत्वेन प्रथममुपमालङ्कारमाह।

साम्यं वाच्यमवैधर्म्यं
वाक्यैक्ये उपमा द्वयोः॥ ६४६॥ (भ)

रूपकादिषु साम्यस्य व्यङ्ग्यत्वं व्यतिरेके च वैधर्म्यस्याप्युक्तिः उपमेयोपमाया वाक्यद्वयम् अनन्वये च एकस्यैव साम्योक्ति-रित्यस्याभेदः।

सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च।
उपमेयं चोपमानं भवेद्वाच्यम्॥ ६५०॥ (म)

सा उपमा साधारणधर्मो द्वयोः सादृश्यहेतू गुणक्रिये मनोज्ञत्वादि, औपम्यवाचकमिवादि, उपमेयं मुखादि उपमानं चन्द्रादि।

इयं पुनः।

श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि।
आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः॥
६५१॥ (य)

---

(भ) साम्यमिति। वाक्यैक्ये एकस्मिन् वाक्ये द्वयो उपमानोपमेययो अवैधर्म्यं वैधर्म्यरहितं विरुद्धधर्मरहितं वाच्यम् अभिधेयं साम्यं सादृश्यम् उपमा।

(म) सेति। स्पष्टम्।

(य) श्रौतीति। श्रुत्या श्रवणमात्रेणैव औपम्यं बोधयन्ती श्रौती। आर्थी अर्थानुसन्धानेन औपम्यं बोधयन्ती आर्थी। अन्यत् स्पष्टम्।

यथेववादयः शब्दा उपमानानन्तरप्रयुक्ततुल्यादिपदसाधारणा अपि श्रुतिमात्रेणोपमानोपमेयगतसादृश्यलक्षणसम्बन्धं बोधयन्तीति तत्सद्भावे श्रौती उपमा । एवं तत्र "तस्येवेत्यनेन" इवार्थे विहितस्य वतेरुपादाने । तुल्यादयस्तु "कमलेन तुल्यं मुखम्" इत्यादौ उपमेय एव । "कमलं मुखस्य तुल्यम्" इत्यादावुपमान एव । "कमलं मुखञ्च तुल्यम्" इत्यादावुभयत्रापि विश्राम्यन्तीति अर्थानुसन्धानादेव साम्यं प्रतिपादयन्तीति तत्सद्भावे आर्थी । एवं "तेन तुल्यम्" इत्यादिना तुल्यार्थे विहितस्य वतेरुपादाने ।

द्वे तद्धिते समासेऽथ वाक्ये ॥ ६५२ ॥

द्वे श्रौती आर्थी च उदाहरणम् ।

"सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ ।
हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले !" ॥ (र)

अत्र क्रमेण त्रिविधा श्रौती ।

"मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः ।
चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः" ॥ (ल)

---

(र) तद्धितसमासवाक्यगतां त्रिविधां श्रौतीमुदाहरति सौरभमिति । हे बाले ! तव मुखस्य सौरभम् अम्भोरुहवत् अम्भोरुहस्य तुल्यम् अत्र तुल्यार्थे वत्प्रत्ययस्य तद्धितगता श्रौती । स्तनौ कुम्भाविव पीनौ अत्र कुम्भाविवेति समासगता इवेन सह नित्यसमासो विभक्त्यलुक् चेति लक्षणात् । वदनं शरदिन्दुर्यथा हृदयं मदयति ह्लादयति । अत्र वाक्यगता श्रौती ।

(ल) त्रिविधामार्थीमुदाहरति मधुर इति । तस्याः अधरः सुधावत् मधुरः अत्र सुधया तुल्य इति तुल्यार्थे वत्प्रत्ययात् तद्धितगता आर्थी । पाणिः पल्लवतुल्यः पल्लवेन सदृशः अतिपेलवः अतिकोमलः । अत्र समासगता आर्थी । लोचने च चकितमृगलोचनाभ्यां सदृशी चपले च । अत्र वाक्यगता आर्थी ।

अत्र क्रमेण विविधा आर्थी।

पूर्णा षड़ेव तत् ॥ ६५३ ॥

अथ लुप्ताम्।

सा सामान्यधर्मादेरेकस्य यदि वा द्वयोः।
त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्ववत् ॥
६५४ ॥ (ब)

सा लुप्ता। तद्भेदमाह।

पूर्णावद्धर्मलोपे सा
विना श्रौतीन्तु तद्धिते ॥ ६५५ ॥ (भ)

सा लुप्तोपमा धर्मस्य साधारणगुणक्रियारूपस्य लोपे पूर्णावदिति पूर्वोक्तरीत्या षट्प्रकारा, किन्त्वत्र तद्धिते श्रौत्या असम्भवात् पञ्चप्रकारा।

उदाहरणम्।

"मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये!।
वाचः सुधा इवौष्ठस्ते विम्बतुल्यो मनोऽश्मवत्" ॥ (म)

---

(ब) लुप्तोपमामाह लुप्तेति। सामान्यधर्मादेः एकस्य द्वयोर्वा त्रयाणां वा अनुपादाने सा उपमा लुप्ता भवति सा च पूर्ववत् पूर्णावत् श्रौती आर्थी च।

(भ) पूर्णेति। सा लुप्तोपमा धर्मस्य साधारणगुणक्रियारूपस्य लोपे तद्धिते श्रौतीं विना पूर्णावत् भवति।

(म) मुखमिति। हे प्रिये। ते तव मुखम् इन्दुर्यथा, पाणिः पल्लवेन समः, वाचः वचनानि सुधा इव, ओष्ठः विम्बतुल्यः, मनः हृदयम् अश्मवत् पाषाणतुल्यं कठिनमिति भावः। अत्र प्रथमे वाक्यगता श्रौती, द्वितीये वाक्यगता आर्थी तृतीये समासगता श्रौती, चतुर्थे समासगता आर्थी पञ्चमे तद्धितगता आर्थी।

**आधारकर्म्मविहिते द्विविधे च क्यचि क्यङि।**
**कर्म्मकर्त्रोर्णमुलि च स्यादेवं पञ्चधा पुनः॥**

६५६॥ (स)

धर्म्मलोपे लुप्तेत्यनुषज्यते। क्यच्क्यङ्णमुलः कलापमतेयिष्वायिणमः। क्रमेणोदाहरणम्।

"अन्तःपुरीयसि रणेषु सुतीयसि त्वं
पौरं जनं तव सदा रमणीयते श्रीः।
दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्र-
सञ्चारमत्र भुवि सञ्चरसि क्षितीश!"॥ (ह)

"अत्रान्तःपुरीयसि" इत्यत्र सुखविहारास्पदस्य "सुतीयसि" इत्यत्र स्नेहनिर्भरत्वस्य च साधारणधर्मस्य लोपः। एवमन्यत्र। इह च यथादितुल्यादिविरहात् श्रौत्यादिविशेषचिन्ता नास्ति। इदञ्च केचित् औपम्यप्रतिपादकस्य वतेर्लोपे उदाहरन्ति तदयुक्तम्। क्यङादेरपि तदर्थविहितत्वेनौपम्यप्रतिपादकत्वात्। ननु क्यङादिषु सम्यगौपम्यप्रतीतिर्नास्ति

---

(स) आधारेति। आधारकर्म्मविहिते द्विविधे क्यचि, क्यङि कर्म्मकर्त्रोर्णमुलि च इत्येवं पञ्चधा पञ्चप्रकारा लुप्ता पुनः धर्म्मलोपे भवति।

(ह) अन्तःपुरीयसीति। हे क्षितीश। त्वं रणेषु अन्तःपुरीयसि अन्तःपुरेषु इव आचरसि, अत्र आधारविहितक्यच्। पौरं जनं सुतीयसि सुतमिवाचरसि, अत्र कर्म्मविहितक्यच्। श्रीः लक्ष्मीः सदा तव रमणीयते रमणीव आचरति, अत्र क्यङ्। प्रियाभिः अमृतद्युतिदर्शम् अमृतद्युतिरिवेत्यर्थं दृष्टः, अत्र कर्म्मविहितणमुल्। अत्र भुवि इन्द्रसञ्चारम् इन्द्र इव सञ्चरसि, अत्र कर्त्तृविहितणमुल्। अत्र प्रथमे सुखविहारितयेति द्वितीये स्नेहातिशयेनेति तृतीये सन्तोषदायितयेति चतुर्थे आह्लादकत्वेनेति पञ्चमे निर्भयत्वेनेति साधारणधर्म्मलोपः।

प्रत्ययत्वेनास्वतन्त्रत्वात् इवादिप्रयोगाभावाच्चेति न वाच्यम् । कल्पपादावपि तथा प्रसङ्गात् । न च कल्पपादीनामिवादितुल्यतयौपम्यस्य वाचकत्वं, क्यङादीनान्तु द्योतकत्वम्, इवादीनामपि वाचकत्वे निश्चयाभावात् । वाचकत्वे वा समुदितं पदं वाचकं "प्रकृतिप्रत्ययौ स्वस्वार्थबोधकौ" इति च मतद्वयेऽपि वत्यादिक्यङाद्योः साम्यमेवेति । यच्च केचिदाहुः "वत्यादय इवाद्यर्थेऽनुशिष्यन्ते (च) क्यङादयस्त्वाचारार्थे इति" तदपि न । न खलु क्यङादय आचारमात्रार्था अपि तु सादृश्याचारार्था इति तदेवं धर्मलोपे दशप्रकारा लुप्ता ।

**उपमानानुपादाने**
**द्विधा वाक्यसमासयोः ॥६५७॥ (क)**

उदाहरणम् ।

"तस्या मुखेन सदृशं रम्यं नास्ति न वा नयनतुल्यम्" ।

अत्र मुखनयनप्रतिनिधिवस्त्वन्तरयोर्गम्यमानत्वादुपमानलोपः । अत्रैव च "मुखेन सदृशम्" इत्यत्र "मुख यथेदम्"

---

(च) तदर्थेति । तदर्थविहितत्वेन वत्यर्थविहितत्वेन औपम्यप्रतिपादकत्वात् बोधकत्वात् । सम्यक् सम्पूर्णा, अस्वतन्त्रत्वादिति प्रत्ययाना स्वातन्त्र्येणार्थबोधकत्व नास्ति प्रकृतिप्रत्ययौ सहार्थं ब्रूत इति नियमात् । कल्पपादाविति । कल्पपादिप्रत्ययस्थले त्वया वतेर्लोपे इति वक्तुं न शक्यते, तत्र धर्मलोपे एव त्वया वाच्यं तदयमेषा को भेद इति भावः । निश्चयाभावादिति । सर्वे हि निपाता द्योतका एव न तु वाचका इति केचित् वदन्ति । तन्मते इवादीनामपि साक्षात् औपम्यवाचकत्वेनाभिमताना वाचकत्वे सन्देह, किं वाच्य प्रत्ययानामिति भाव' । अनुशिष्यन्ते विधीयन्ते ।

(क) उपमानेति । उपमीयते अनेनेति उपमानम् अस्य अनुपादाने वाक्यसमासयो. द्विधा—वाक्यगता लुप्ता, समासगता लुप्ता इत्यर्थः ।

इति "नयनतुल्यम्" इत्यत्र "दृगिव" इति पाठे श्रौत्यपि सम्भवतीत्यनयोर्भेदयोः प्रत्येकं श्रौत्यार्थीत्वभेदेन चतुर्विधत्व-सम्भवेऽपि प्राचीनरीत्या द्विप्रकारत्वमेवोक्तम्।

औपम्यवाचिनो लोपे
समासे क्विपि च द्विधा ॥ ६५८ ॥ (ख)

क्रमेणोदाहरणम्।

"वदनं मृगशावाक्ष्याः सुधाकरमनोहरम्"।
"गर्दभति श्रुतिपरुषं व्यक्तं निनदन् महात्मना पुरतः" ॥ (ग)

अत्र "गर्दभति" इत्यत्र औपम्यवाचिनः क्विपो लोपः। चेह उपमेयस्यापि लोपः। "निनदन्" इत्यनेनैव निर्देशात्।

द्विधा समासे वाक्ये च
लोपे धर्मोपमानयोः ॥ ६५९ ॥ (घ)

"तस्या मुखेनेत्यादौ" "रम्यम्" इति स्थाने "लोके" इति पाठेऽनयोरुदाहरणम्।

क्विप्समासगता द्वेधा
धर्मे वादिविलोपने ॥ ६६० ॥

---

(ख) औपम्येति। औपम्यवाचिन इवादेः लोपे समासे क्विपि च प्रत्यये द्विधा भवति।

(ग) वदनमिति। मृगशावाक्ष्याः वदनं सुधाकरवत् मनोहरम्, अत्र औपम्यवाचकलोपे समासगता लुप्ता। गर्दभतीति। महात्मना पुरतः जगतः श्रुतिपरुषं श्रोत्रकटु निनदन् व्यक्तं स्पष्टं गर्दभति गर्दभ इवाचरति।

(घ) द्विधेति। धर्मस्य उपमानस्य च उभयोः लोपे समासे वाक्ये च द्विधा भवति। क्विबिति धर्मस्य इवादेश्च उभयोर्विलोपने क्विप्समासगतत्वेन द्विधा भवति।

उदाहरणम्। "विधवति मुखाब्जमस्याः"। अत्र "विधवतीति" मनोहरत्वक्किप्प्रत्यययोर्लोपः। केचित्त्वत्रापि प्रत्ययलोपमाहुः "मुखाब्जम्" इति च समासगा (ङ)।

**उपमेयस्य लोपे तु**

**स्यादेका प्रत्यये क्यचि ॥ ६६१ ॥ [ च ]**

यथा।

"अरातिविक्रमालोकविकस्वरविलोचनः।

कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति" ॥ (छ)

अत्र स सहस्रायुधमिव आत्मानमाचरतीति वाक्ये उपमेयस्यात्मनो लोपः। न चेह औपम्यवाचकलोप उक्तादेव न्यायात्। अत्र केचिदाहुः "सहस्रायुधेन सह वर्त्तते" इति ससहस्रायुधः "स इवाचरति" इति वाक्यात् ससहस्रायुधीयतीति पदसिद्धौ विशेष्यस्य शब्दानुपपात्तत्वादिहोपमेयलोप इति तन्न विचारसहम्। कर्त्तरि क्यचोऽनुशासनविरुद्धत्वात्।

**धर्मोपमेयलोपेऽन्या ॥ ६६२ ॥**

यथा।

"यशसि प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्वे"।

---

(ङ) विधवतीति। अस्या मुखाब्जं विधवति विधुरिवाचरति। मुखाब्जमिति मुखम् अब्जमिवेति समासे औपम्यवाचकलोप, धर्मस्य मनोहरत्वादेश्च लोपो बोध्यः।

(च) उपमेयस्येति। उपमीयते य इति उपमेयः तस्य। स्पष्टम्।

(छ) अरातीति। अरातीनां शत्रूणां विक्रमस्य आलोकेन दर्शनेन विकस्वरे विकासं गते विस्फारिते इत्यर्थः विलोचने यस्य तथाभूतः, तथा कृपाणेन खड्गेन उदग्रः भीषणः दोर्दण्डः बाहुदण्डः यस्य तथोक्तः सः, सहस्रायुधीयति। अनुशासनविरुद्धत्वात् व्याकरणशास्त्रविरोधात् आधारकर्मणोरेव तद्विधानादिति भावः।

अत्र क्षीरोदमिवात्मानमाचरन्तीत्युपमेय आत्मा साधारणधर्मः शुक्लता च लुप्तौ ।

**त्रिलोपे च समासगा ॥ ६६३ ॥**

यथा । "राजते मृगलोचना" ।

अत्र मृगस्य लोचने इव चञ्चले लोचने यस्या इति समासे उपमाप्रतिपादकसाधारणधर्मोपमानानां लोपः ।

**तेनोपमाया भेदाः स्युः**
**सप्तविंशतिसंख्यकाः ॥ ६६४ ॥**

पूर्णा षड्विधा लुप्ता च एकविंशतिविधेति मिलित्वा सप्तविंशतिप्रकारोपमा । एषु च उपमाभेदेषु अलुप्तसाधारणधर्मेषु [ भेदेषु विशेषः प्रतिपाद्यते ।

**एकरूपः क्वचित् क्वापि भिन्नः साधारणो गुणः ।**
**भिन्ने विम्बानुविम्बत्वं शब्दमात्रेण वा भिदा ॥**
**६६५ ॥ [ ज ]**

अत्र एकरूपे यथा उदाहृतम् । "मधुरः सुधावदधरः" इत्यादि । विम्बप्रतिविम्बत्वे यथा ।

"भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव" ॥ (झ)

---

( ज ) एकरूप इति । विम्बानुविम्बत्वं प्रणिधानेन मन्यसाम्यत्वम् । भिदा भेदः ।

( झ ) भल्लेति । रघुदिग्विजयवर्णनमिदम् । स रघुः भल्लेन अस्त्रविशेषेण अपवर्जितानि छिन्नानि तैः श्मश्रुलैः तेषां शिरोभिः सरघाभिर्मधुमक्षिकाभिर्व्याप्तैः क्षौद्रपटलैरिव मधुचक्रैरिव महीं पृथ्वीं तस्तार छादयामास ।

अत्र "श्मश्रुलैः" इत्यस्य "सरघाव्याप्तैः" इति दृष्टान्तवत्-प्रतिबिम्बनम्। शब्दमात्रेण भिन्नत्वे यथा।

"स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं मयि सा।
कथयामास कृशाङ्गी मनोगतं निखिलमाकूतम्"॥

अत्र एक एव स्मेरत्वविकसितत्वे प्रतिवस्तूपमावच्छब्द-भेदेन निर्दिष्टे।

**एकदेशविवर्त्तिन्युपमा वाच्यत्वगम्यते।**
**भवेतां यत्र साम्यस्य ॥ ६६६ ॥ (ञ)**

यथा।

"नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव"॥

अत्र उत्पलादीनां नेत्रादीनां सादृश्यं वाच्यं, सरःश्रीणा-ञ्चाङ्गनासादृश्यं गम्यम्।

**कथिता रशनोपमा।**
**यथोर्ध्वमुपमेयस्य यदि स्यादुपमानता॥**
**६६७ ॥ (ट)**

---

(ञ) एकदेशविवर्त्तिनीमुपमामाह एकदेशेति। यत्र साम्यस्य सादृश्यस्य वाच्यत्वगम्यते वाच्यत्वं गम्यत्वञ्च इत्यर्थः भवेतां सा एकदेशविवर्त्तिनी उपमा एकदेशे स्थितत्वात् अस्या एकदेशविवर्त्तिनी सञ्ज्ञेति बोध्यम्।

(ट) रशनोपमामाह कथितेति। यथोर्ध्वम् उत्तरोत्तरम् उपमेयस्य यदि उपमानता स्यात् तदा रशनोपमा कथिता, रशना काञ्ची तत्सदृशग्रथनात् इयं सञ्ज्ञेति भावः।

यथा।

"चन्द्रायते शुक्लरुचापि हंसो-
हंसायते चारुगतेन कान्ता।
कान्तायते स्पर्शसुखेन वारि
वारीयते स्वच्छतया विहायः"॥ (ठ)

**मालोपमा यदेकस्यो-**
**पमानं बहु दृश्यते॥ ६६८॥ (ड)**

यथा।

"वारिजेनेव सरसी शशिनेव निशीथिनी।
यौवनेनेव वनिता नयेन श्रीर्मनोहरा"॥

क्वचिदुपमानोपमेययोर्द्वयोरपि प्रकृतत्वं दृश्यते।

"हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा।
विमलाः कुमुदानीव तारकाः शरदागमे॥
अस्य राज्ञो गृहे भान्ति भूपानीता विभूतयः।
पुरन्दरस्य भवने कल्पवृक्षभवा इव"।

अत्रोपमेयभूतविभूतिभिः "कल्पवृक्षभवा इव" इत्युपमानभूता विभूतय आक्षिप्यन्त इति आक्षेपोपमा। अत्रैव "गृहे" इत्यस्य "भवने" इत्यनेन प्रतिनिर्देशात् प्रतिनिर्देश्योपमा इत्यादयश्च न लक्षिताः। एवंविधवैचित्र्यस्य सहस्रधा सन्दर्शनात्।

---

(ठ) चन्द्रायते इति। विहायः आकाशम् "आकाशविहायसी" इत्यमरः। अन्यत् स्पष्टम्।

(ड) मालोपमामाह मालोपमेति। एकस्य उपमेयस्य यत् बहु उपमानं दृश्यते सा मालोपमा।

**उपमानोपमेयत्व-**

**मेकस्यैव त्वनन्वयः ॥ ६६९ ॥ [ ढ ]**

अर्थादेकवाक्ये। यथा।

"राजीवमिव राजीवं जलं जलमिवाजनि।

चन्द्रश्चन्द्र इवातन्द्रः शरत्समुदयोद्यमे" ॥

अत्र राजीवादीनामनन्यसदृशत्वप्रतिपादनार्थमुपमानोपमेयभावो वैवक्षिकः। "राजीवमिव पाथोजम्" इति चास्य लाटानुप्रासाद्भिविक्तो विषयः। किन्त्वत्रोचितत्वादेकशब्दप्रयोग एव श्रेयान्। तदुक्तम्।

"अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम्। (ण)

अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकमिति" ॥

**पर्य्यायेण द्वयोरेत-**

**दुपमेयोपमा मता ॥ ६७० ॥ [ त ]**

एतदुपमानोपमेयत्वम्। अर्थाद्वाक्यद्वये। यथा।

"कमलेव मतिर्मतिरिव कमला

तनुरिव विभा विभेव तनुः।

धरणीव धृतिर्धृतिरिव धरणी

सततं विभाति तव यस्य वत" ॥

---

( ढ ) अनन्वयमाह उपमानेति। एकस्यैव उपमानोपमेयत्वम् अनन्वयः।

( ण ) अनन्वये इति। आनुषङ्गिकम् आयत्तम्।

( त ) उपमेयोपमामाह पर्य्यायेणेति। द्वयोः उपमानोपमेययोः एतत् उपमेयोपमानत्वम् इत्यर्थः उपमेयोपमा मता।

अत्रास्य राज्ञः श्रीहर्षादिसदृशं नान्यदस्तीत्यभिप्रायः।

**सदृशानुभवाद् वस्तुस्मृतिः स्मरणमुच्यते ॥**

**६७१ ॥ [ थ ]**

यथा।

"अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम्।
स्मरामि वदनं तस्याश्चारु चञ्चललोचनम्" ॥

"मयि सकपटम्" इत्यादौ च स्मृतिः सादृश्यानुभव विनोत्थापितत्वान्नायमलङ्कारः। राघवानन्दमहापात्रास्तु वैसादृश्यात् (द) स्मृतिमपि स्मरणालङ्कारमिच्छन्ति। तत्रोदाहरणं तेषामेव यथा।

"शिरीषमृद्वी गिरिषु प्रपेदे
यदा यदा दुःखशतानि सीता।
तदा तदास्याः सदनेषु सौख्य-
लक्षाणि दध्यौ गलदश्रु रामः" ॥ (ध)

**रूपकं रूपितारोपाद्**
**विषये निरपह्नवे ॥ ६७२ ॥ [ न ]**

---

(थ) स्मरणमाह सदृशेति। सदृशस्य वस्तुन. अनुभवात् दर्शनादिजन्यज्ञानात् वस्तुनः अन्यस्य स्मृति. अनुभवः स्मरणम् उच्यते।

(द) वैसादृश्यात् विसदृशस्य वस्तुनः अनुभवादित्यर्थः।

(ध) शिरीषेति। शिरीषमृद्वी शिरीषकुसुमसुकुमाराङ्गी सीता गिरिषु पर्वतेषु यदा यदा दुःखशतानि प्रपेदे प्राप, रामः तदा तदा सदनेषु गृहेषु अस्याः सीतायाः सौख्यलक्षाणि सुखसन्तानान् गलदश्रु यथा तथा दध्यौ चिन्तयामास सस्मारेत्यर्थः। अत्र विसदृशस्य दुःखशतस्यानुभवात् सुखसन्तानस्मरणम्।

(न) रूपकमाह रूपकमिति। निरपह्नवे प्रकृतिगोपनम् अपह्नवः तद्रहिते

"रूपितेति" परिणामाद् व्यवच्छेदः। एतच्च परिणाम-प्रस्तावे विवेचयिष्यामः। "निरपह्नवः" इत्यपह्नुतिव्यवच्छेदार्थम्।

तत् परम्परितं साङ्गं
निरङ्गमिति च त्रिधा ॥ ६७३ ॥

तद्रूपकम्। तत्र।

यत्र कस्यचिदारोपः परारोपणकारणम्।
तत् परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम्।
प्रत्येकं केवलं मालारूपञ्चेति चतुर्विधम् ॥
६७४ ॥ [प]

तत्र श्लिष्टशब्दनिबन्धनं केवलपरम्परितं यथा।
"आहवे जगदुद्दण्डराजमण्डलराहवे।
श्रीनृसिंहमहीपाल! स्वस्त्यस्तु तव बाहवे" ॥ (फ)

अत्र राजमण्डलं नृपसमूह एव चन्द्रबिम्बमित्यारोपो राजबाहोः राहुत्वारोपे निमित्तम्। मालारूपं यथा।

---

विषये उपमेये रूपितस्य उपमानस्य आरोपात् तादात्म्याध्यासात् रूपकं रूपकालङ्कारः. अध्यासश्च अत्राहार्य्य. न तु वास्तव इति बोध्यम्।

(प) यत्रेति। कस्यचित् आरोप परस्य आरोपणे कारण तत् परम्परित रूपक, तत् चतुर्विंध श्लेषाधीनतया केवल मालारूपञ्च, अश्लेषेण च केवल मालारूपञ्चेति।

(फ) आहवे इति। हे श्रीनृसिंहमहीपाल! आहवे युद्धे जगत्सु उद्दण्डानाम् उद्दृप्ताना राजमण्डलाना राहवे तव बाहवे स्वस्ति अस्तु।

"पद्मोदयदिनाधीशः सदागतिसमीरणः।
भूभृदावलिदम्भोलिरेक एव भवान् भुवि" ॥ (ब)

अत्र पद्मायाा उदय एव पद्मानामुदयः, सतामागतिरेव सदागमनं, भूभृतो राजान एव पर्वता इत्याद्यारोपो राज्ञः सूर्य्यत्वाद्यारोपे निमित्तम्। अश्लिष्टशब्दनिबन्धनं केवलं यथा।

"पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः।
त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः" ॥ (भ)

अत्र त्रैलोक्यस्य मण्डपत्वारोपो हरिबाहूनां स्तम्भत्वारोपे निमित्तम्। मालारूपं यथा।

"मनोजराजस्य सितातपत्रं
श्रीखण्डचित्रं हरिदङ्गनायाः।
विराजति व्योमसरःसरोजं
कर्पूरपूरप्रभमिन्दुबिम्बम्" ॥ (म)

---

(ब) पद्मेति। एक एव भवान् भुवि पद्मायाः लक्ष्म्याः उदये अन्यत्र पद्मानामुदये दिनाधीशः सूर्य्यः सताम् आगतौ अन्यत्र सदा गतौ समीरणः वायुः, तथा भूभृतां राज्ञाम् अन्यत्र पर्वतानाम् आवलिषु श्रेणिषु दम्भोलि. वज्रम्।

(भ) पान्त्विति। जलदश्यामा नवनीरदश्यामवर्णा शार्ङ्गस्य धनुषः ज्यायाः मौर्व्याः आघातेन आस्फालनेन कर्कशा कठिना त्रैलोक्य त्रिभुवनमेव मण्डपः गृह तस्य स्तम्भाः अवलम्बनदारूणीत्यर्थः. चत्वारः. हरिबाहवः वः युष्मान् पान्तु रक्षन्तु।

(म) मनोजेति। मनोजराजस्य कामनृपतेः सितातपत्रं श्वेतच्छत्रं हरिदङ्गनायाः दिगङ्गनायाः श्रीखण्डचित्रं चन्दनतिलकं व्योम आकाशमेव सरः तस्य सरोजं पद्मं कर्पूरप्रभं कर्पूरपूरपुञ्जसदृशम् इन्दुबिम्बं चन्द्रमण्डलं विराजति।

अत्र मनोजादेः राजत्वाद्यारोपश्चन्द्रबिम्बस्य सितातपत्रत्वाद्यारोपे निमित्तम्। एषु च "राजभुजादीनां राजत्वाद्यारोपो राजमण्डलादीनां चन्द्रमण्डलत्वाद्यारोपे निमित्तम्" इति केचित्।

**अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्।**
**समस्तवस्तुविषयमेकदेशविवर्त्ति च ॥६७५॥ (य)**

तत्र।

**आरोप्याणामशेषाणां**
**शाब्दत्वे प्रथमं मतम् ॥ ६७६ ॥ (र)**

प्रथमं समस्तवस्तुविषयं यथा।

"रावणावग्रहक्लान्तमिति वागमृतेन सः।
अभिवृष्य मरुच्छस्यं कृष्णमेघस्तिरोदधे" ॥ (ल)

अत्र कृष्णस्य मेघत्वारोपे वागादीनाममृतत्वाद्यारोपितत्वम्।

---

(य) अङ्गिन इति। साङ्गस्य अङ्गसहितस्य अङ्गिनः यत् रूपणं तत् साङ्गरूपकम्। तच्च द्विविधं—समस्तवस्तुविषयं, तथा एकदेशविवर्त्ति।

(र) समस्तवस्तुविषयमाह। आरोप्याणामिति। अशेषाणां सर्वेषाम् आरोप्याणाम् उपमानानां शाब्दत्वे शब्दप्रतिपाद्यत्वे प्रथमं समस्तवस्तुविषयमित्यर्थः मतम्।

(ल) उदाहरति रावणेति। कृष्णः एव मेघः कृष्णमेघः रावणः एव अवग्रहः वृष्टिप्रतिबन्धः तेन क्लान्तं मरुत् देवः एव शस्यं तत् इति पूर्वोक्तेन वागेव अमृतं जलं तेन अभिवृष्य तिरोदधे अन्तर्हितः। अत्र कृष्णस्य मेघत्वारोपसम्पादनाय तदङ्गानां सर्वेषाम् अमृतादीनां वागादिषु आरोपात् साङ्गत्वं रूपकमिति बोध्यम्।

**यत्र कस्यचिदार्थत्व-**

**मेकदेशविवर्त्ति तत् ॥ ६७७ ॥ (व)**

कस्यचिदारोप्यमाणस्य । यथा ।

"लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम् ।

लोकलोचनरोलम्बकदम्बैः कैर्न पीयते ?" ॥ (श)

अत्र लावण्यादौ मध्वाद्यारोपः शाब्दो मुखे पद्मत्वारोप आर्थः । न च इयमेकदेशविवर्त्तिन्युपमा विकस्वरत्वधर्मस्यारोप्यमाणे पद्मे मुख्यतया वर्त्तनात् मुखे चोपचरितत्वात् (ष) ।

**निरङ्गं केवलस्यैव रूपणं तदपि द्विधा ।**

**मालाकेवलरूपत्वात् ॥६७८॥ (स)**

तत्र मालारूपं निरङ्गं यथा ।

"निर्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम् ।

क्रीड़ागृहमनङ्गस्य सेयमिन्दीवरेक्षणा ॥ (ह)

---

(व) एकदेशविवर्त्तिरूपकमाह यत्रेति । यत्र कस्यचित् आरोप्यमाणस्य आर्थत्वम् अर्थवशात् लभ्यत्व तत् एकदेशविवर्त्तिरूपकमिति शेष ।

(श) उदाहरति लावण्येति । अस्या कान्ताया' लावण्यानि एव मधूनि तैः पूर्णं विकस्वरम् आस्यं मुख कैः लोकाना लोचनान्येव रोलम्बकदम्बानि भ्रमरसमूहा तैः न पीयते ? अपि तु सर्वैरेव पीयते इत्यर्थ. ।

(ष) विकस्वरत्वेति । विकस्वरत्वधर्मस्य विकासस्य इत्यर्थः मुख्यतया प्राधान्येन वर्त्तनात् अवस्थानात् मुखे च उपचरितत्वात् आरोपितत्वात् गुणभावेन वर्त्तनादित्यर्थ । तथा च यत्र साधर्म्यम् उपमाने मुख्यतया स्थित तत्रैव रूपक, यत्र तु उपमेये स्थित तत्र उपमैवेति फलितम् ।

(स) निरङ्गमाह निरङ्गमिति । केवलस्य एकमात्रस्यैव अङ्गिन. रूपणं निरङ्गम् । तदपि द्विविध—मालारूप केवलरूपञ्च ।

(ह) तत्र मालारूपमुदाहरति निर्माणेति । सा इयम् इन्दीवरेक्षणा

केवलं यथा ।

"दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि ! नात्र दूये ।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यङ्गिद्यते मृदु पदं ननु सा व्यथा मे" ॥ (च)

तेनाष्टौ रूपके भिदाः ॥ ६७९ ॥

चिरन्तनैरुक्ता इति शेषः । क्वचित् परम्परितमप्येकदेश-
विवर्त्ति (क) यथा ।

"खड्गः क्ष्मासौविदल्लः समिति
विजयते मानवाखण्डलस्य" । (ख)

अत्रार्थः क्ष्माया महिषीत्वारोपः खड्गे सौविदल्लत्वारोपे
हेतुः । अस्य भेदस्य पूर्ववन्मालारूपत्वेऽप्युदाहरणं मृग्यम् ।

---

धातु. विधातुः निर्माणकौशलसृष्टिवैचित्र्यं लोकचक्षुषा चन्द्रिका कौमुदी तथा अनङ्गस्य कामस्य क्रीडागृहम् । अत्र इन्दीवरेत्यत्ररूपे अङ्गिनि मालारूपेण निर्माणकौशलादीनाम् आरोपः ।

(च) केवलमुदाहरति दासे इति । हे सुन्दरि ! दासे किङ्करे कृतागसि कृतापराधे सति प्रभूणा पादप्रहारः उचितः इति हेतो. अत्र पादप्रहारे न दूये न दुःखमनुभवामीत्यर्थ. । उद्यद्भिः कठोरैः पुलकाङ्कुरैरेव कण्टकाग्रैः पादस्पर्श-जनितैरिति भावः मृदु कोमलं पद तवेति शेषः यत् भिद्यते विध्यते, ननु भोः । सा मे मम व्यथा पीडा । सदा प्रहरन्तीं कान्तां प्रति तत्कामुकस्योक्तिरियम् । अत्र पुलकाङ्कुररूपे अङ्गिनि केवलस्य कण्टकाग्रस्य आरोपः ।

(क) क्वचिदिति । एकदेशविवर्त्तिपरम्परितरूपके कस्यचिदार्थत्वमित्यर्थः ।

(ख) उदाहरति खड्ग इति । मानव. एव आखण्डल. इन्द्रः अथवा मानवानाम् आखण्डलः तस्य क्ष्मा पृथिवी तस्याः सौविदल्लः कञ्चुकी स्त्रीजनानां रक्षणनियुक्तभृत्यविशेष, "सौविदल्लाः कञ्चुकिनः" इत्यमरः । खड्ग. समिति संग्रामे विजयते ।

दृश्यन्ते क्वचिदारोप्याः

श्लिष्टाः साङ्गेऽपि रूपके ॥ ६८० ॥ (ग)

तत्रैकदेशविवर्त्ति श्लिष्टं यथा मम।

"करमुदयमहीधरस्तनाग्रे
गलिततमःपटलांशुके निवेश्य।
विकसितकुमुदेक्षणं विचुम्ब-
त्ययममरेशदिशो मुखं सुधांशुः" ॥ (घ)

समस्तवस्तुविषयं यथा। अत्रैव "विचुम्बति" इत्यादौ चुचुम्बे "हरिदबलामुखमिन्दुनायकेन" इति पाठे। न चात्र श्लिष्टपरम्परितम् (ङ)। तत्र हि। "भूभृदावलिदम्भोलिः" इत्यादौ राजादौ पर्वतत्वादिरूपणं विना वर्णनीयस्य राजादेर्दम्भोलितादिरूपणं सर्वथैव सादृश्यासम्भवादसङ्गतम्। तर्हि कथं "पद्मोदयदिनाधीशः" इत्यादौ परम्परितं, राजादेः सूर्यादिना सादृश्यस्य तेजस्वितादिहेतुकस्य सम्भवादिति न वाच्यम्। तथाहि राजादेस्तेजस्वितादिहेतुकं सुव्यक्तं सादृश्यं न तु प्रकृते तद्विवक्षितं, पद्मोदयादेरेव द्वयोः साधारणधर्मतया

---

(ग) दृश्यन्ते इति। श्लिष्टा अनेकार्था इत्यर्थः।

(घ) करमिति। चन्द्रोदयवर्णनमिदम्। अयं सुधांशुः चन्द्रः अमरेशदिशः प्राच्याः गलितं तमसां पटलं समूहः एव अंशुकं यस्मात् तादृशे उदयमहीधर एव स्तनः तस्याग्रे तदुपरि करं किरणं हस्तञ्च निवेश्य विकसितानि कुमुदान्येव ईक्षणानि नयनानि यत्र यादृशं मुखं विचुम्बति। पुष्पिताग्रावृत्तम्। अत्र अमरेशदिशि अङ्गनारोपस्य सुधांशौ नायकारोपस्य च आर्थत्वात् एकदेशविवर्त्तित्वम्।

(ङ) श्लिष्टपरम्परितमिति। यत्र सादृश्यासम्भवेन विना आरोपणं वाक्यार्थासङ्गतिः तत्रैव परम्परितं यत्र न तथा तत्र साङ्गनिरङ्गयोरवसर इति तात्पर्य्यम्।

विवक्षितत्वात्, इह तु महीधरादेः स्तनादिना सादृश्यं पीनोत्तुङ्गत्वादिना सुव्यक्तमेवेति न श्लिष्टपरम्परितम्। क्वचित् समासाभावेऽपि रूपकं दृश्यते। यथा।

"मुखं तव कुरङ्गाक्षि! सरोजमिति नान्यथा"।

क्वचिद्वैयधिकरण्येऽपि (च)।

यथा।

"विदधे मधुपश्रेणीमिह भ्रूलतया विधिः"। (छ)

क्वचिद्वैधर्म्येऽपि (ज)।

यथा।

"सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा।
यैरेषापि दुराशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत् कौशलम्"॥(झ)

इदं मम। अत्र च केषाञ्चिद्रूपकाणां शब्दश्लेषमूलत्वेऽपि

---

(च) वैयधिकरण्ये इति। उपमानोपमेययोर्भिन्नविभक्तिकत्वे इत्यर्थः।

(छ) उदाहरति विदधे इति। विधिः इह नायिकाया भ्रूलतया मधुपश्रेणी भ्रमरावली विदधे। अत्र भ्रूलताया व्यधिकरणाया मधुपश्रेण्यारोपः।

(ज) वैधर्म्ये इति। विरुद्धधर्मसद्भावे इत्यर्थः।

(झ) उदाहरति सौजन्येति। सौजन्यमेव अम्बु जलं तस्य मरुस्थली मरुभूमिः सौजन्यहीनेत्यर्थः, सुचरितमेव आलेख्यं चित्रकर्म तस्य द्युभित्तिः आकाशरूपकुड्यं दुश्चरित्रेति भावः, गुणा एव ज्योत्स्ना तासां कृष्णचतुर्दशी गुणशून्या इत्यर्थः, सरलतायाः योगः तस्य श्वपुच्छच्छटा कुक्कुरलाङ्गुलविस्तार एवं ईदृशी राजावली यैः कलियुगे दुराशया दुष्टधनतृष्णया सेविता तेषां भक्तिमात्रसुलभे एकमात्रभक्तिलभ्ये शूलिनि शम्भौ सेवा कियत् कौशलम्? शार्दूलविक्रीडितं वृत्तम्। अत्र राजावल्या मरुस्थल्याद्यारोपः सौजन्याम्बुशालित्वसाधर्म्यस्यासद्भाववशात् वैपरीत्येनाभिहितः।

रूपकविशेषत्वादर्थालङ्कारमध्ये गणनम् (ञ)। एवं वक्ष्यमाणालङ्कारेषु बोद्धव्यम्।

**अधिकारूढ़वैशिष्ट्यं रूपकं यत्तदेव तत् ॥**

**६८१ ॥ (ट)**

तदेवाधिकारूढ़वैशिष्ट्यसंज्ञरूपकम्। यथा मम।

"इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः
सुधाधाराधारश्चिरपरिणतं विम्बमधरः।
इमे नेत्रे रात्रिन्दिवमधिकशोभे कुवलये
तनुर्लावण्यानां जलधिरवगाहे सुखतरः" ॥ (ठ)

अत्र कलङ्कराहित्यादिना अधिकं वैशिष्ट्यम्।

**विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि।**
**परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा ॥**

**६८२ ॥ (ड)**

---

(ञ) शब्दश्लेषमूलत्वेऽपीति रूपकविशेषत्वात् रूपकस्य विशेषत्वात् प्राधान्यादित्यर्थः।

(ट) अधिकेति। अधिकम् आरूढं प्राप्तं वैशिष्ट्यं वैचित्र्यं येन तत् रूपकं तदेव अधिकारूढवैशिष्ट्यनामकम्।

(ठ) उदाहरति इदमिति। इदं दृश्यमानमित्यर्थः वक्त्रं मुखं साक्षात् स्वयं विरहितकलङ्कः निष्कलङ्कः शशधरः चन्द्रः। सुधाधाराणाम् अमृतधाराणाम् आधारः आस्पदम् अधरः चिरपरिणतं सम्यक् परिपक्वं विम्बं फलविशेषः। इमे नेत्रे रात्रिन्दिवम् अधिके शोभे अधिकशोभाशालिनी कुवलये नीलोत्पले, "नीलोत्पलं कुवलयम्" इत्यमरः। तनुः शरीरं लावण्यानां जलधिः समुद्रः परम् अवगाहे सुखतरः अतिसुखप्रद इत्यर्थः।

(ड) परिणामालङ्कारमाह विषयेति। आरोप्ये आरोप्यमाणे वस्तुनि विषयात्मतया आरोपविषयाभिन्नतया प्रकृतार्थस्य प्रस्तुतस्य कार्य्यस्य उपयोगिनि उपकारिणि सम्पादके सतीत्यर्थः परिणामः भवेत् प्रकृतार्थोपयोगितया विषये

आरोप्यमाणस्यारोपविषयात्मतया परिणमनात् परिणामः। यथा।

"स्मितेनोपायनं दूरादागतस्य कृतं मम।]
स्तनोपपीडमाश्लेषः कृतो द्यूते पणस्तया" ॥

अन्यत्रोपायनपणौ वसनाभरणादिभावेनोपयुज्येते, अत्र तु नायकसम्भावनद्यूतयोः स्मिताश्लेषरूपतया। अत्र प्रथमार्द्धे वैयधिकरण्येन प्रयोगः (ढ)। द्वितीये सामान्याधिकरण्येन। रूपके "मुखचन्द्रं पश्यामि" इत्यादौ आरोप्यमाणचन्द्रादेरुपरञ्जकतामात्रं न तु प्रकृते दर्शनादावुपयोगः, इह तु उपायनादेर्विषयेण तादात्म्यं प्रकृते च नायकसम्भावनादावुपयोगः। अतएव रूपके आरोप्यस्यावच्छेदकत्वमात्रेणान्वयः। अत्र तु तादात्म्येन, "दासे कृतागसि" इत्यादौ रूपकमेव न तु परिणामः। आरोप्यमाणकण्टकस्य पादभेदनकार्य्यस्याप्रस्तुतत्वात्। न खलु तत् कस्यचिदपि प्रस्तुतकार्य्यस्य घटनार्थमनुसन्धीयते (ण)।

---

विषयिण आरोप परिणाम इति भाव। स च द्विधा—तुल्याधिकरणः व्यधिकरणश्च।

(ढ) उदाहरति स्मितेनेति। सखाय प्रति कस्यचित् स्वकान्तासद्भाववर्णनमिदम्। तया मत्कान्तया स्मितेन मृदुहसितेन दूरात् आगतस्य उपस्थितस्य मम उपायनम् उपहार कृतम्। तथा द्यूते द्यूतक्रीडाया स्तनोपपीड यथा तथा आश्लेष आलिङ्गन पण, कृत। प्रथमार्द्धे इति वैयधिकरण्येन भिन्नविभक्तिकत्वेन।

(ण) आरोप्यमाणेति। आरोप्यमाणस्य उपमानस्य चन्द्रादेरुपरञ्जकतामात्रम् उपमेयस्य शोभाविस्तारकत्वमात्र प्रकृते प्रस्तुते। उपयोग उपकारित्वम्। इह तु विषयेण स्मितेन तादात्म्यम् अभेद, प्रकृते प्रस्तुते नायकसम्भावनादौ नायकसंवर्द्धनकर्मणि उपयोग उपकारित्वम्। आरोप्यस्य उपमानस्य अवच्छेदकत्वमात्रेण विशेषकत्वमात्रेण अत्र तु परिणामे तादात्म्येन अभिन्नतये-

अयमपि रूपकवदधिकारूढ़वैशिष्ट्यो दृश्यते। यथा।

"वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः" ॥ (त)

अत्र प्रदीपानामोषध्यात्मतया प्रकृते सुरतोपयोगिनि अन्धकारनाशे उपयोगोऽतैलपूरत्वेनाधिकारूढ़वैशिष्ट्यम्।

**सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः।**
**शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा ॥**
**६८३ ॥ (थ)**

यत्र संशय एव पर्य्यवसानं स शुद्धः। यथा।

"किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी ?
वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारां निधेः ?।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ? ॥ (द)

---

त्यर्थः। प्रस्तुतकार्य्यस्येति। अत्र नायिकाया अनुनयनमेव प्रस्तुत पुलकी कण्टकारीपस्य न खलु तदुपयोगित्वमिति भाव।

(त) वनेचराणामिति। यत्र हिमाद्रौ रजन्या रात्रौ दर्थ्य कन्दरा एव गृहाणि तेषाम् उत्सङ्गेषु अभ्यन्तरेषु निषक्ता पतिता भास यासा ता' ओषधय लताविशेषा वनितासखाना सभार्य्याणा वनेचराणाम् अतैलपूरा सुरतप्रदीपा भवन्ति। उपेन्द्रवज्रावृत्तम्।

(थ) सन्देहालङ्कारमाह सन्देह इति। प्रकृते प्रस्तुते उपमेये इत्यर्थः प्रतिभोत्थित. प्रतिभया प्रौढोक्त्या उत्थित अन्यस्य उपमानस्य संशय सन्देहः असौ सन्देह त्रिधा शुद्ध, निश्चयगर्भ, तथा निश्चयान्त.।

(द) शुद्धमुदाहरति किमिति। नायिकादर्शने कामिजनाना वितर्कोक्तिरियम्। इय पुरत. परिदृश्यमाना कापीत्यर्थः तारुण्यतरोः योवनद्रुमस्य रसभरेण रसातिरेकेण उद्भिन्ना निःसृता नवा वल्लरी मञ्जरी किम्? वेलासु

यत्र आदावन्ते च संशय एव मध्ये च निश्चयः स निश्चयमध्यः । यथा ।

"अयं मार्त्तण्डः किम् ? स खलु तुरगैः सप्तभिरितः
कृशानुः किम् ? सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किम् ? साक्षान्महिषवहनोऽसाविति पुनः ।
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः" ॥ (ध)

अत्र मध्ये मार्त्तण्डाद्यभावनिश्चयः राजनिश्चये द्वितीयसंशयोत्थानासम्भवात् । यत्रादौ संशयोऽन्ते च निश्चयः स निश्चयान्तः । यथा ।

"किं तावत् सरसि सरोजमेतदारात् ?
आहोस्विन्मुखमवभासते तरुण्याः ? ।
संशय्य क्षणमिति निश्चिकाय कश्चित् ।
विब्बोकैर्वकसहवासिनां परोक्षैः" ॥ (न)

---

तटेषु प्रोच्छलितस्य स्फीतोत्थितस्य लावण्यवारां निधेः लावण्यसागरस्य लहरिका किम् ? अथवा उद्गाढा अत्युत्कटा या उत्कण्ठा कान्ताविषयिणी उत्सुकता तद्वता कामिनामित्यर्थः स्वसमयस्य निजसिद्धान्तस्य उपन्यासे ज्ञापने विश्रम्भिणः प्रणयिनः शृङ्गारिणः देवस्य मदनस्येत्यर्थः साक्षात् मूर्त्तिमतीत्यर्थः उपदेशयष्टिरे । एवमेव कुरुतेति शिक्षादण्डः किम् ? शार्दूलविक्रीडितं वृत्तम् ।

(ध) निश्चयमध्यमुदाहरति अयमिति । राजस्तुतिरियम् । अयं मार्त्तण्डः सूर्य्यः किम् ? सः मार्त्तण्डः सप्तभिः तुरगैः इतः युक्तः खलु, तस्मान्नायं सूर्य्य इति निश्चयः । कृशानुः अग्निः किम् ? एषः अग्निः नियतं सर्वाः दिशः न प्रसरति तस्य ऊर्द्ध्वप्रसरस्य प्रसिद्धत्वादिति भावः । तस्मान्नायम् अग्निरिति निश्चयः । साक्षात् स्वयं कृतान्तः यमः किम् ? असौ यमः महिषवहनः तस्मान्नायं कृतान्त इति निश्चयः । इति इत्थं त्वाम् आजौ युद्धे समालोक्य दृष्ट्वा प्रतिभटाः प्रतियोद्धारः विकल्पान् वितर्कान् विदधति कुर्वन्ति । शिखरिणीवृत्तम् ।

(न) निश्चयान्तमुदाहरति किमिति । आरात् समीपे पुरोवर्त्तिनीत्यर्थः सरसि एतत् दृश्यमानं सरोजं पद्मं किम् ? आहोस्वित् अथवा तरुण्याः युवत्याः

"पद्मोदयदिनाधीशः सदागतिसमीरणः।
भूभृदावलिदम्भोलिरेक एव भवान् भुवि" ॥ (ब)

अत्र पद्माया उदय एव पद्मानामुदयः, सतामागतिरेव सदागमनं, भूभृतो राजान एव पर्वता इत्याद्यारोपो राज्ञः सूर्य्यत्वाद्यारोपे निमित्तम्। अश्लिष्टशब्दनिबन्धनं केवलं यथा।

"पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः।
त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः" ॥ (भ)

अत्र त्रैलोक्यस्य मण्डपत्वारोपो हरिबाहूनां स्तम्भत्वारोपे निमित्तम्। मालारूपं यथा।

"मनोजराजस्य सितातपत्रं
श्रीखण्डचित्रं हरिदङ्गनायाः।
विराजति व्योमसरःसरोजं
कर्पूरपूरप्रभमिन्दुबिम्बम्" ॥ (म)

---

(ब) पद्मेति। एक एव भवान् भुवि पद्मायाः लक्ष्म्याः, उदये अन्यत्र पद्मानामुदये दिनाधीशः सूर्य्यः, सताम् आगतौ अन्यत्र सदा गतौ समीरणः वायुः, तथा भूभृतां राज्ञाम् अन्यत्र पर्वतानाम् आवलिषु श्रेणिषु दम्भोलिः वज्रम्।

(भ) पान्त्विति। जलदश्यामाः नवनीरदश्यामवर्णाः शार्ङ्गस्य धनुषः ज्यायाः मौर्व्याः आघातेन आस्फालनेन कर्कशाः कठिनाः, त्रैलोक्यं त्रिभुवनमेव मण्डपः गृहं तस्य स्तम्भाः अवलम्बनदारूणीत्यर्थः, चत्वारः हरिबाहवः वः युष्मान् पान्तु रक्षन्तु।

(म) मनोजेति। मनोजराजस्य कामनृपतेः सितातपत्रं श्वेतच्छत्रं हरिदङ्गनायाः दिगङ्गनायाः श्रीखण्डचित्रं चन्दनतिलकं व्योम आकाशमेव सरः तस्य सरोजं पद्मं कर्पूरप्रभं कर्पूरपूरपुञ्जसदृशम् इन्दुबिम्बं चन्द्रमण्डलं विराजति।

अत्र मनोजादेः राजत्वाद्यारोपश्चन्द्रबिम्बस्य सितातपत्रत्वाद्यारोपे निमित्तम्। एषु च "राजभुजादीनां राजत्वाद्यारोपो राजमण्डलादीनां चन्द्रमण्डलत्वाद्यारोपे निमित्तम्" इति केचित्।

**अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्।**
**समस्तवस्तुविषयमेकदेशविवर्त्ति च ॥६७५॥ (य)**

तत्र।

**आरोप्याणामशेषाणां**
**शाब्दत्वे प्रथमं मतम् ॥ ६७६ ॥ (र)**

प्रथमं समस्तवस्तुविषयं यथा।

"रावणावग्रहक्लान्तमिति वागमृतेन सः।
अभिवृष्य मरुच्छस्यं कृष्णमेघस्तिरोदधे" ॥ (ल)

अत्र कृष्णस्य मेघत्वारोपे वागादीनाममृतत्वाद्यारोपितत्वम्।

---

(य) अङ्गिन इति। साङ्गस्य अङ्गसहितस्य अङ्गिन यत् रूपणं तत साङ्गं रूपकम्। तद्व द्विविध—समस्तवस्तुविषयं, तथा एकदेशविवर्त्ति।

(र) समस्तवस्तुविषयमाह। आरोप्याणामिति। अशेषाणा सर्वेषाम् आरोप्याणाम् उपमानाना शाब्दत्वे शब्दप्रतिपाद्यत्वे प्रथम समस्तवस्तुविषयमित्यर्थः मतम्।

(ल) उदाहरति रावणेति। कृष्ण एव मेघः कृष्णमेघ रावण एव अवग्रहः वृष्टिप्रतिबन्ध तेन क्लान्त मरुत् देव एव शस्यं तत् इति पूर्वोक्तेन वागेव अमृत जल तेन अभिवृष्य तिरोदधे अन्तर्हित। अत्र कृष्णस्य मेघत्वारोपसम्पादनाय तदङ्गाना सर्वेषाम् अमृतादीना वागादिषु आरोपात् साङ्गत्व रूपकमिति बोध्यम्।

आभासोऽप्यर्थ एकस्मिन्ननुसन्धानसाधितः" ॥ (र)

अत्र भगवतः प्रियत्वादीनां वास्तवत्वाद् ग्रहीतृभेदाच्च न मालारूपक,न च भ्रान्तिमान् न च अयमभेदे भेद इत्येवंरूपा अतिशयोक्तिः (ल)। तत्र हि "अन्यदेवाङ्गलावण्यम्" इत्यादौ लावण्यादेर्विषयस्य पृथक्त्वेनाध्यवसानम्। न चेह भगवति गोपवधूप्रभृतिभिः प्रियत्वाद्यध्यवसीयते। प्रियत्वादेर्भगवति तत्काले तात्त्विकत्वात्। केचिदाहुः "अयमलङ्कारो नियमेनावश्यम्भाविनालङ्कारान्तराविच्छित्तिमूलः, उक्तोदाहरणे च शिशुत्वादीनां नियमाभिप्रायात् प्रियत्वादेर्भिन्नत्वाध्यवसायः" इत्यतिशयोक्तिरस्ति तत्सद्भावेऽपि च ग्रहीतृभेदेन नानात्वप्रतीतिरूपो विच्छित्तिविशेष उल्लेखाख्यभिन्नालङ्कारप्रयोजकः (व)। श्रीकण्ठजनपदवर्णने "वज्रपञ्जरम्" इति "शरणागतैः अम्बरविवरम्" इति "वातिकैः" इत्यादिश्चातिशयोक्तेर्विविक्तो विषयः। इह च रूपकालङ्कारयोगः। वस्तुतस्तु "अम्बरवि-

---

(र) यथारुचीति। यथारुचि यथाभिलाष यथार्थित्व यथाप्रयोजनवत्त्वं यथाव्युत्पत्ति यथाज्ञानम् एकस्मिन् अर्थे विषये वस्तुनीत्यर्थ अनुसन्धानेन भावनया साधित जनित आभास ज्ञानम् अपि भिद्यते पृथक् भवति।

(ल) अत्रेति। वास्तवत्वात् तात्त्विकत्वात न मालारूपकमिति रूपके आरोपस्य अवास्तवत्वादिति भाव। अध्यवसीयते आरोप्यते वास्तवत्वादिति भाव।

(व) अयमिति। नियमेन अवश्यम्भावेन अलङ्कारान्तरस्य अन्यस्य अलङ्कारस्य विच्छित्ति वैचित्र्य मूल यस्य तथोक्त अलङ्कारान्तरेणोत्थापित इत्यर्थ। अन्यसहकृत. एवाय चमत्करोतीति भाव। शिशुत्वादीनामिति प्रियत्वादेर्नियमाभिप्रायात् अयमस्माक प्रिय एव नाय शिशुरिति व्यवच्छेदाभिप्रायत्वादित्यर्थ. भिन्नत्वाध्यवसाय इति अभेदे भेदारोप इत्यर्थ. तत्सद्भावे अतिशयोक्तिसद्भावे नानात्वप्रतीतिरूप. विभिन्नज्ञानरूप विच्छित्तिविशेष वैचित्र्यातिशय.।

वरम्" इत्यादौ भ्रान्तिमन्तमेवेच्छन्ति न रूपकं भेदप्रतीतिपुरःसरस्यैवारोपस्य गौणीमूलरूपकादिप्रयोजकत्वात् । यदाहुः शारीरकमीमांसाभाष्यव्याख्याने श्रीमद्वाचस्पतिमिश्राः "अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्त्तते" इति । यत्र प्रयोक्तृसम्प्रतिपत्त्रोः सम्प्रतिपत्तिः स गौणः, स च भेदप्रत्ययपुरःसर इति । इह तु वार्तिकानां श्रीकण्ठजनपदवर्णने भ्रान्तिकृत एव अम्बरविवरत्वाद्यारोप इति । अत्रैव च "तपोवनम्" इति मुनिभिः "कामायतनम्" इति वेश्याभिरित्यादौ च परिणामालङ्कारयोगः (श) ।

"गाम्भीर्य्येण समुद्रोऽपि गौरवेणासि पर्वतः" ।

इत्यादौ च अनेकधोल्लेखे गाम्भीर्य्यादिविषयभेदः प्रयोजकः (ष) । अत्र च रूपकयोगः । "गुरुर्वचसि पृथुरुरसि अर्जुनो यशसि" इत्यादि च अस्य रूपकात् विविक्तो विषय इति । अत्र हि श्लेषमूलातिशयोक्तियोगः (स) ।

---

(श) अपि चेति । परशब्द अन्यशब्द परच अन्यत लक्ष्यमाणगुणयोगेन वर्त्तते यथा मुखचन्द्र मनोहरं पश्यतीत्यत मुखे यश्चन्द्रत्वारोप. स लक्ष्यमाणगुणेन मनोहरत्वरूपेण योगादिति । यत्र आरोपे प्रयोक्तृसम्प्रतिपत्त्रो वक्तृबोद्धव्ययोः सम्प्रतिपत्ति सम्यक् ज्ञान स गौण । परिणामालङ्कारयोगः प्रकृतोपयोगित्वादिति भावः ।

(ष) विषयभेदेनोल्लेखमुदाहरति गाम्भीर्य्येणेति । अत्र गाम्भीर्य्यादिविषयभेदेन एकस्य अनेकधा उल्लेख' ।

(स) वचसि गुरु महान् सुवक्तेत्यर्थ. वृहस्पतिश्च उरसि वचसि पृथुः विशालः तदाख्यो भूपतिश्च यशसि अर्जुन धवल' धनञ्जय कार्त्तवीर्य्यो वा । अत्र एकस्य पुंस वचनादिविषयभेदेन अनेकधा उल्लेख । इत्यादिश्च अस्य उल्लेखस्य विषयः रूपकात् विविक्त विभिन्न. । अत्रेति । अत्र गुरुरित्यादौ श्लेषमूलातिशयोक्तियोगः तस्यैव प्राधान्यादिति भावः ।

प्रकृतं प्रतिषिध्यान्य-
स्थापनं स्यादपह्नुतिः ॥ ६८६ ॥ (ङ)

इयं द्विधा क्वचिदपह्नवपूर्वक आरोपः क्वचिदारोपपूर्वको-ऽपह्नव इति ।

क्रमेण उदाहरणम् ।

"नेदं नभोमण्डलमम्बुराशि-
र्नैताश्च तारा नवफेनभङ्गाः ।
नायं शशी कुण्डलितः फणीन्द्रो-
नासौ कलङ्कः शयितो मुरारिः" ॥ (च)

"एतद् विभाति चरमाचलचूडचुम्बि-
हिण्डीरपिण्डरुचिशीतमरीचिविम्बम् ।
उज्ज्वालितस्य रजनीं मदनानलस्य
धूमं दधत्प्रकटलाञ्छनकैतवेन" ॥ (छ)

---

(ङ) अपह्नुतिमाह प्रकृतमिति। प्रकृतं प्रस्तुतं प्रतिषिध्य अन्यस्य अप्रकृतस्य स्थापनम् अपह्नुतिः स्यात् ।

(च) नेदमिति। इदं नभोमण्डलम् आकाशं न, अम्बुराशिः समुद्रः, एताश्च ताराः नक्षत्राणि न, नवाः फेनभङ्गाः फेनच्छेदाः, अयं शशी चन्द्रः न, कुण्डलितः मण्डलाकारेण स्थितः फणीन्द्रः शेषः, असौ कलङ्कः चन्द्रस्थित इति शेषः, न, शयितः शयनं गतः मुरारिः कृष्णः । अत्र प्रकृतम् आकाशादिकं प्रतिषिध्य अम्बुराश्यादीनां स्थापनम् ।

(छ) एतदिति। एतत् चरमाचलः अस्ताचलः तस्य चूडं शिखरं चुम्बतीति तथोक्तम् अस्ताचलचूडावलम्बीत्यर्थः, हिण्डीरपिण्डरुचि फेनपुञ्जनिभं, "हिण्डीरोऽब्धिकफः फेनः" इत्यमरः । शीतमरीचिविम्बं चन्द्रमण्डलं प्रकटलाञ्छनकैतवेन सुव्यक्तकलङ्कव्याजेन रजनीं व्याप्य प्रज्वालितस्य मदनानलस्य धूमं दधत् विभाति विराजते । अत्र लाञ्छने धूमत्वारोपः प्रकृतस्य अपह्नवात् प्राक् इति आरोपपूर्वकोऽपह्नव इति बोध्यम् ।

इदं पद्यं मम । एवम् ।

"विराजति व्योमवपुः पयोधिस्तारामयास्तत्र च फेनभङ्गाः" ।

इत्याद्याकारेण च प्रकृतनिषेधो बोद्धव्यः ।

**गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन ।**
**यदि श्लेषेणान्यथा वाऽन्यथयेत् साप्यपह्नुतिः ॥**

६८७ ॥ (ख)

श्लेषेण यथा ।

"काले वारिधराणा-
मपतितया नैव शक्यते स्थातुम् ।
उत्कण्ठितासि तरले !
न हि न हि सखि ! पिच्छिलः पन्थाः ॥ (ग)

अत्र अपतितयेत्यत्र पतिं विनेत्युक्त्वा पतनाभावेनेत्यन्यथाकृतम् । अश्लेषेण यथा ।

"इह पुरोऽनिलकम्पितविग्रहा
मिलति का न वनस्पतिना लता ।

---

(ख) प्रकारान्तरेण अपह्नुतिमाह गोपनीयमिति । गोपनीय रहस्य कमपि अर्थं कथञ्चन द्योतयित्वा प्रकटय्य यदि श्लेषेण वा अन्यथा अश्लेषेण इत्यर्थः अन्यथयेत् अन्यथा कुर्य्यात् सापि अपह्नुति ।

(ग) तत्र श्लेषमूलापह्नुतिमुदाहरति काले इति । वारिधवाणा काले वर्षाकाले अपतितया पतिशून्यतया स्थातु नैव शक्यत । इति सखी प्रति कयाचिदुक्तम् । हे तरले ! चञ्चले ! उत्कण्ठिता असि इति सख्या प्रत्युक्तम् । हे सखि ! न हि न हि नैव नैव पतिशून्यतया स्थातु नैव शक्यते इति मया नोक्तमित्यर्थः पन्था, पिच्छिल इति नायिकया पुनर्गोपितम् । अत्र अपतितयेति श्लिष्टम् ।

(घ) अश्लेषमूलापह्नुतिमुदाहरति इहेति । इह वर्षाकाले पुर, अग्रतः

स्मरसि किं सखि ! कान्तरतोत्सव
न हि घनागमरीतिरुदाहृता" ॥ (घ)

वक्रोक्तौ परोक्तेरन्यथाकारः, इह तु स्वोक्तेरेवेति भेदः। गोपनकृतागोपनस्यापि प्रथममभिहितत्वाच्च व्याजोक्तिः।

अन्यन्निषिध्य प्रकृत-
स्थापनं निश्चयः पुनः ॥ ६८८ ॥ (ङ)

निश्चयाख्योऽयमलङ्कारः। अन्यदित्यारोप्यमाणम्। यथा मम।

"वदनमिदं न सरोजं नयने नेन्दीवरे एते।
इह सविधे मुग्धदृशो मधुकर ! न मुधा परिभ्राम्य" ॥ (च)

यथा वा।

"हृदि बिसलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः।

---

अनिलेन वायुना कम्पितः विग्रहः शरीरं यस्याः तादृशी का लता वनस्पतिना न मिलति न सङ्गच्छते ? अपि तु सर्वैवेति। इति कयाचित् सखीं प्रति उक्तम्। हे सखि ! कान्तस्य रतोत्सवं स्मरसि किम् ? इति सख्या प्रत्युक्तम्। न हि नैव कान्तरतोत्सवं स्मरामीत्यर्थः, घनागमस्य वर्षाकालस्य रीतिः उदाहृता उक्ता। इति पुनर्नायिकया श्लेषेण गोपितम्।

(ङ) निश्चयालङ्कारमाह अन्यदिति। अन्यत् अप्रकृतं निषिध्य प्रकृतस्य प्रस्तुतस्य स्थापनं निश्चयः।

(च) उदाहरति वदनमिति। हे मधुकर ! इदं वदनं सरोजं पद्मं न, नयने एते, न इन्दीवरे नीलोत्पले, तस्मात् इह मुग्धदृशः कान्तायाः सविधे सन्निधौ मुधा निरर्थकं मा परिभ्राम्य। अत्र सरोजादिकमप्रकृतं निषिध्य प्रकृतस्य वदनादेः स्थापनम्।

(छ) हृदीति। हे अनङ्ग ! अयं हृदि वक्षसि बिसलताहारः मृणालहारः, न भुजङ्गमनायकः पन्नगपतिः, कण्ठे इयं कुवलयदलानां नीलोत्पलपत्राणां

मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्याऽनङ्ग । क्रुधा किमु धावसि ?" ॥ (छ)

न ह्ययं निश्चयान्तः सन्देहस्तत्र संशयनिश्चययोरेकाश्रयत्वेनावस्थानात्। अत्र तु भ्रमरादेः संशयो नायकादेर्निश्चयः किञ्च न भ्रमरादेरपि संशयः। एककोट्यनधिके ज्ञाने तथा समीपागमनासम्भवात्। तर्हि भ्रान्तिमानस्तु। अस्तु नाम भ्रमरादेर्भ्रान्तिः। न च इह तस्याश्चमत्कारविधायित्वम् अपि तु तथाविधनायकाद्युक्तेरेवेति सहृदयसंवेद्यम्। किञ्च अविवक्षितेऽपि भ्रमरादेः पतनादौ भ्रान्तौ वा नायिकाचाट्वादिरूपेणैव सम्भवत्येव तथाविधोक्तिः। न च रूपकध्वनिरयं मुखस्य कमलत्वेन अनिर्द्धारणात्। न च अपह्नुतिः प्रस्तुतस्य अनिषेधादिति पृथगेवायमलङ्कारश्चिरन्तनोक्तालङ्कारेभ्यः (ज)। शुक्तिकायां रजतधिया पतति पुरुषे शुक्तिकेयं न रजतमिति कस्यचिदुक्तेर्नायमलङ्कारो वैचित्र्याभावात्।

**भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना।**

---

श्रेणी, सा प्रसिद्धा गरलद्युतिः कालकूटप्रभा न, इदं मलयजरजः चन्दनधूलिः न भस्म, तस्मात् प्रियारहिते मयि हरभ्रान्त्या शिवभ्रमेण न प्रहर, क्रुधा कोपेन किमु किमर्थं धावसि ? अत्र भुजङ्गमनायकादीनामप्रकृतानां निषेधः प्रकृतानां बिसलताहारादीनां स्थापनञ्च।

(ज) एककोट्यनधिके इति। एककोटिमात्रावलम्बिनि उभयकोटिकज्ञानं हि संशयः, यदि भ्रमरादेः तादृक् संशयः स्यात् तदा कथं समीपागमनं सम्भवेत्, निश्चितमेवेदं सरोजमित्येव ज्ञाने एव समीपागमनं सम्भवतीति भावः। तथाविधनायकाद्युक्तेरेव चमत्कारविधायित्वमिति शेषः। नायिकेति। नायिकायाः चाट्वादिरूपेण प्रियोक्त्या रञ्जनाभिप्रायेणैव तथाविधा उक्तिः नायकवचनं सम्भवति। रूपकध्वनिरिति। तत्र मुखे कमलत्वारोपस्य निर्द्धारणम् अत्र तु न तथा इति भावः। पृथक् भिन्नः।

वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता ॥
वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः।
जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि ॥
तदष्टधापि प्रत्येकं भावाभावाभिमानतः।
गुणक्रियास्वरूपत्वान्निमित्तस्य पुनश्च ताः ॥
द्वात्रिंशद्विधतां यान्ति ॥६८६॥ (भ)

तत्र वाच्योत्प्रेक्षायामुदाहरणं दिङ्मात्रं यथा।
"ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति।
सपताकः कनकमयो विजयस्तम्भः स्मरस्येव" ॥ (ञ)

---

(भ) उत्प्रेक्षामाह भवेदिति। प्रकृतस्य प्रस्तुतस्य परात्मना अप्रकृतस्वरूपेण सम्भावना उत्कटैककोटिक संशय इत्यर्थ उत्प्रेक्षा भवेत्। प्रथमं सा उत्प्रेक्षा द्विविधा—वाच्या प्रतीयमाना च। इवादीनाम् उत्प्रेक्षावाचकाना प्रयोगे वाच्या अप्रयोगे इवादीनामिति शेष परा प्रतीयमाना स्यात्। यत् यस्मात् द्वयोरपि वाच्यप्रतीयमानयो जाति गुण क्रिया द्रव्यम् एतच्चतुष्टयम् उत्प्रेक्ष्य सम्भावनीय तस्मात् सा उत्प्रेक्षा अष्टधा। अष्टधापि सा भावाभावाभिमानत भावाभिमानेन अभावाभिमानेन च प्रत्येक द्वैविध्यात् षोडशधा। पुनश्च ता षोडशप्रकारा उत्प्रेक्षा प्रत्येक निमित्तस्य उत्प्रेक्षाकारणस्य गुणक्रियास्वरूपत्वात् कुत्रचित् गुणस्वरूपत्वात् कुत्रचित् क्रियास्वरूपत्वात् द्वैविध्येन द्वात्रिंशद्भेदा भवन्ति।

(ञ) जात्युत्प्रेक्षामुदाहरति ऊरुरिति। कुरङ्गकदृश हरिणाक्ष्या: चञ्चल चेलाञ्चल सूक्ष्मवस्त्र यस्मिन् तादृश ऊरु स्मरस्य कामस्य सपताक: पताकासहित कनकमय काञ्चनमय विजयस्तम्भ शत्रून् विजित्य तन्नगरे य स्तम्भ आरोप्यते स विजयस्तम्भ, स इव भाति राजते। अत्र इव प्रयोगात् वाच्योत्प्रेक्षा, स्तम्भस्य बहुश सद्भावाच्च जातिरुत्प्रेक्षिता नित्यानेकसमवायिनी जातिरिति स्तम्भत्वजातेरनेकसमवेतत्वादिति बोध्यम्। स्तम्भश्च भावपदार्थ इति भावाभिमानिन्युत्प्रेक्षेयम्। उत्प्रेक्षानिमित्तञ्च नायिकोरुरूप गुण।

अत्र विजयस्तम्भस्य बहुवाचकत्वाज्जात्युत्प्रेक्षा।

"ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्य्ययः।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव" ॥ (ट)

अत्र सप्रसवत्वं गुणः।

"गङ्गाम्भसि सुरत्राण! तव निर्याणनिस्वनः।
स्नातीवारिवधूवर्गगर्भपातनपातकी" ॥ (ठ)

अत्र स्नातीति क्रिया।

"मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः"।

अत्र चन्द्र इत्येकव्यक्तिवाचित्वाद् द्रव्यशब्दः। एते भावाभिमाने च (ड)। अभावाभिमाने यथा।

---

(ट) गुणोत्प्रेक्षामुदाहरति ज्ञाने इति। तस्य दिलीपस्य ज्ञाने सत्यपि मौनं तूष्णीम्भावः मितभाषित्वं न तु वाचालत्वमिति भावः, शक्तौ सामर्थ्ये सत्यपि क्षमा अपराधसहनं, त्यागे दाने श्लाघाविपर्य्ययः अनात्मप्रशंसनमित्यर्थः आसीदिति शेषः, अतस्तस्य दिलीपस्य गुणाः गुणानुबन्धित्वात् परस्परसहचारित्वादिति भावः सप्रसवा इव सहोदरा इव आसन्निति शेषः। अत्र इव प्रयोगात् वाच्योत्प्रेक्षा, उत्प्रेक्षणीयो गुणः सप्रसवत्वं कुक्षिगर्भयोर्विभागस्यैव प्रसवपदार्थत्वात् विभागस्य च गुणत्वेनोक्तत्वात् तदुक्तं भाषापरिच्छेदे, "अथ गुणा रूपं रसो गन्धस्ततः परम्। स्पर्शः संख्या परिमितिः संयोगश्च विभागश्चेति"। भावाभिमानिन्युत्प्रेक्षेयं प्रसवस्य भावपदार्थत्वात। उत्प्रेक्षाया निमित्तञ्च गुण इत्यवधेयम्।

(ठ) क्रियोत्प्रेक्षामुदाहरति गङ्गेति। राजस्तुतिरियम्। सुरान् देवान् त्रायते रक्षति असुरेभ्य इति भावः तत्सम्बुद्धौ। हे सुरत्राण! अरिवधूनां शत्रुनारीणां गर्भपातनेन पातकी पातकवान् तव निर्याणस्य प्रयाणवाद्यस्य निस्वनः शब्दः गङ्गाम्भसि स्नातीव। स्नानक्रियाया भावपदार्थत्वात् भावाभिमानिन्युत्प्रेक्षा।

(ड) द्रव्योत्प्रेक्षामुदाहरति मुखमिति। एणीदृशः हरिणाक्ष्याः मुखम् अपरः प्रसिद्धातिरिक्तः इत्यर्थः पूर्णचन्द्र इव भाति। नेयमुपमा प्रसिद्धोप-

"कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ" ॥ (ढ)

अत्र अपश्यन्ताविति क्रियाया अभावः। एवमन्यत्। निमित्तस्य गुणक्रियारूपत्वे यथा। "गङ्गाम्भसि" इत्यादौ स्नातीवेत्युत्प्रेक्षानिमित्तं पातावत्व गुणः। "अपश्यन्ताविव" इत्यादौ क्षामतागमनरूपं निमित्तं क्रिया। एवमन्यत्। प्रतीयमानोत्प्रेक्षा यथा।

"तन्वङ्ग्या स्तनयुग्मेन मुखं न प्रकटीकृतम्।
हाराय गुणिने स्थानं न दत्तमिति लज्जया" ॥ (ण)

अत्र लज्जयेवेति इवाद्यभावात् प्रतीयमानोत्प्रेक्षा। एवमन्यत्। ननु ध्वनिनिरूपणप्रस्तावेऽलङ्काराणां सर्वेषामपि

---

मानसद्भावे एव तस्या अधिकारात न खलु अपरस्य चन्द्रस्य प्रसिद्धत्वमिति बोध्यम्। चन्द्रस्य च भावपदार्थत्वात भावाभिमानिनी इव प्रयोगात वाच्या च। अतीतप्रेक्षानिमित्तं मुखस्य रूपं वेदितव्यम्। एते इति। एते जात्यादय इत्यर्थः।

(ढ) अभावाभिमानिनीमुदाहरति कपोले इति। कष्टमिति खेदे, अस्याः कान्तायाः कपोलफलकौ गण्डदेशौ तथाविधौ अतिसुन्दराविति भावः भूत्वा अन्योन्य परस्परम् अपश्यन्ताविव ईदृक्षाम एतादृशी क्षामतां कृशतां गतौ। पूर्वं प्रफुल्लतया स्फीतत्वात उभौ अन्योन्यं ददृशतुः इदानीं विरहे कार्श्यातिशयात् अवनतत्वेन उन्नतनासाव्यवधानेन च दर्शनाभावः सम्भवति परन्तु अचेतनतया दर्शनस्यासम्भवात् दर्शनमुत्प्रेक्षितमिति सुधीभिरवधेयम्। अत्रादर्शनस्य अभावपदार्थत्वात् अभावाभिमानिनीयं क्रियोत्प्रेक्षा इवप्रयोगात् वाच्या च।

(ण) प्रतीयमानामुदाहरति यथेति। तन्वङ्ग्या कृशाङ्ग्या, स्तनयुग्मेन गुणिने सूत्रगुम्फिताय इत्यर्थः अन्यत्र दयादाक्षिण्यादिगुणशालिने स्थानम् अवकाशं न दत्तम् इति लज्जया मुखं न प्रकटीकृतं मुखस्य कालिमावृतत्वादप्रकटनमिति भावः।

व्यङ्ग्यत्वं भवतीत्युक्तं, सम्प्रति पुनर्विशिष्य कथमुत्प्रेक्षायाः प्रतीयमानत्वमुच्यते। उच्यते व्यङ्ग्योत्प्रेक्षायाम्।

"महिलासहस्सभरिए तुह हिअए सुहअ। सा अमाअंती।
अणुदिण अणस्सअंमा अङ्गं तणु अपि तणूएइ" (१)॥

इत्यादौ उत्प्रेक्षणं विनापि व क्यविश्रान्तिः, इह तु स्तनयोलज्जादौ असम्भवात लज्जयेवेत्युत्प्रेक्षयैवेति व्यङ्ग्यप्रतीयमानोत्प्रेक्षयोर्भेदः (त)। अत्र वाच्योत्प्रेक्षायाः षोडशसु भेदेषु मध्ये विशेषमाह।

**तत्र वाच्या भिदाः पुनः।**
**विना द्रव्यं त्रिधा सर्वाः**
**स्वरूपफलहेतुगाः ॥६६०॥ (थ)**

तत्रोक्तेषु वाच्यप्रतीयमानोत्प्रेक्षयोर्भेदेषु मध्ये ये वाच्योत्प्रेक्षयोः षोडश भेदास्तेषु जात्यादीना त्रयाणां ये द्वादश भेदास्तेषा प्रत्येकं स्वरूपफलहेतुगत्वेन द्वादशभेदतया षट्-

---

(१) महिलासहस्रभरिते तव हृदये सुभग। सा अमान्ती।
अनुदिनमनन्यकर्माङ्गं तन्वपि तनूकरोति॥ इति संस्कृतम्।

---

(त) उत्प्रेक्षणं विनापीति। तव हृदये वस्तुमिवेति उत्प्रेक्षामन्तरेणैव वाक्यविश्रान्ति वाक्यार्थसङ्गतिरित्यर्थः। तथाच यत्र वाक्यार्थविश्रान्ते पर तात्पर्यालोचनया अलङ्काराणा प्रतीति तत्र तेषा व्यङ्ग्यत्व यत्र तु तदलङ्कारमन्तरेण वाक्यार्थाविश्रान्तिस्तत्र प्रतीयमानत्वमिति बोध्यम्।

(थ) तत्रेति। तत्र तयोर्वाच्यप्रतीयमानयोर्मध्ये विना द्रव्यं द्रव्यभिन्नाः सर्वाः द्वादशेत्यर्थः, वाच्याभिदा वाच्योत्प्रेक्षाभिदा स्वरूपफलहेतुगा स्वरूपगा फलगा, हेतुगाश्चेति त्रिधा भवन्ति।

त्रिंशद्भेदाः, द्रव्यस्य स्वरूपोत्प्रेक्षणमेव सम्भवतीति चत्वार इति मिलित्वा चत्वारिंशद्भेदाः। तत्र स्वरूपोत्प्रेक्षा यथा। पूर्वोदाहरणेषु "स्मरस्य विजयस्तम्भः" इति। "सप्रसवा इव" इत्यादयः जातिगुणरूपाः। फलोत्प्रेक्षा यथा।

"रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम्"॥ (द)

अत्र "आख्यातुम्" इति भूप्रवेशस्य फलं क्रियारूपमुत्प्रेक्षितम्। हेतूत्प्रेक्षा यथा।

"सैषा स्थली यत्र विचिन्वता त्वां
भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्द-
विश्लेषदुःखादिव बद्धमौनम्"॥ (ध)

अत्र दुःखरूपो गुणो हेतुत्वेनोत्प्रेक्षितः। एवमन्यत्।

**उक्त्यनुक्त्योर्निमित्तस्य**
**द्विधा तत्र स्वरूपगाः॥६९१॥ (न)**

---

(द) फलोत्प्रेक्षामुदाहरति यथेति। रावणस्येति। रामेण अस्तः निक्षिप्तः आशुगः शरः रावणस्य हृदयं भित्त्वापि उरगेभ्यः नागेभ्यः पातालनिलयेभ्य इति भावः प्रियम् आख्यातुं कथयितुमिव तेषामपि रावणेनोत्पीडितत्वादिति भावः। भुवं पृथिवीं विवेश।

(ध) हेतूत्प्रेक्षामुदाहरति सैषेति। रावणं हत्वा पुष्पकेण अयोध्यामागच्छतः रामस्य पथि सीतां प्रत्युक्तिरियम्। प्रिये। सा एषा स्थली वनभूमिः, यत्र त्वां विचिन्वता अन्वेषयता मया उर्व्यां पृथिव्यां भ्रष्टं च्युतम् एकं नूपुरं तव चरणारविन्दात् पादपद्मात् यः विश्लेषः वियोगः तेन यत् दुःखं तस्मादिव बद्धमौनं निःशब्दम् अदृश्यत दृष्टम्। उपजातिवृत्तम्।

(न) पुनः स्वरूपोत्प्रेक्षाभेदानाह उक्तीति। तत्र मध्ये स्वरूपगाः उत्प्रेक्षाः निमित्तस्य गुणक्रियारूपस्य उक्त्यनुक्त्योः उक्तौ अनुक्तौ चेति द्विधा।

तेषु चत्वारिंशत्सङ्ख्यकेषु भेदेषु मध्ये ये स्वरूपगायाः षोडश भेदास्ते उत्प्रेक्षानिमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशद्भेदा इति मिलित्वा षट्पञ्चाशद्भेदा वाच्योत्प्रेक्षायाः। तत्र निमित्तस्योपादानं यथा। पूर्वोदाहृते "स्नातीव" इत्युत्प्रेक्षाया निमित्तं पातकित्वमुपात्तम्। अनुपादाने यथा। "चन्द्र इवापर" इत्यत्र तथाविधसौन्दर्य्याद्यतिशयो नोपात्तः। हेतुफलयोस्तु नियमेन निमित्तस्योपादानमेव (प)। तथाहि "विश्लेषदुःखादिव" इत्यत्र यन्निमित्तं बद्धमौनत्वम् "आख्यातुमिव" इत्यत्र च भूप्रवेशस्तयोरनुपादानेऽसङ्गतमेव वाक्यं स्यात्। प्रतीयमानायाः षोडशसु भेदेषु विशेषमाह।

प्रतीयमानाभेदाश्च

प्रत्येकं फलहेतुगाः॥ ६८२॥

यथोदाहृते "तन्वङ्ग्याः स्तनयुग्मेन" इत्यत्र "लज्जयेवेति" हेतुरुत्प्रेक्षितः। अस्यामपि निमित्तस्यानुपादानं न सम्भवति। इवाद्यनुपादाने निमित्तस्य च अकीर्त्तने उत्प्रेक्षणस्य प्रमातुर्निश्चेतुमशक्यत्वात्। स्वरूपोत्प्रेक्षापि अत्र न भवति। धर्म्यन्तरतादात्म्यनिबन्धनायामस्यामिवाद्यप्रयोगे विशेषणयोगे सत्यतिशयोक्तेरभ्युपगमात्। यथा। "अयं राजाऽपरः पाकशासनः" इति। विशेषणाभावे च रूपकस्य यथा राजा

---

(प) हेतुफलयोरिति हेतूत्प्रेक्षायां फलोत्प्रेक्षायाञ्च इत्यर्थः नियमेन अवश्यमेव।

(फ) प्रमातुः प्रतिपत्तुः। धर्म्यन्तरेति। धर्म्यन्तरेण अन्येन धर्मिणा यत् तादात्म्यम् अभेदप्रतीतिः तदेव निबन्धनं कारणं यस्याः तथाभूतायाम् अस्यामुत्प्रेक्षायाम्। अभ्युपगमात् स्वीकारात् प्राचीनैरिति शेषः। अयमिति।

पाकशासन इति तदेव द्वात्रिंशत्प्रकारा प्रतीयमानोत्प्रेक्षा (फ)।

उक्त्यनुक्त्योः प्रस्तुतस्य
प्रत्येकं ता अपि द्विधा ॥ ६९७ ॥ [ब]

ता उत्प्रेक्षाः। उक्तौ यथा। "ऊरुः कुरङ्गकदृशः" इति। अनुक्तौ यथा मम प्रभावत्या प्रद्युम्नः।

"इह हि सम्प्रति प्रतिदिगन्तमाच्छादयता तिमिरपटलेन
घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः।
ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम्" ॥ (भ)

अत्र अञ्जनेन घटितत्वादेरुत्प्रेक्षणीयस्य विषयव्यापत्वं नोपात्तम् (म)। यथा वा।

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः"। (य)

---

अत्र अपर इत्यनेन पाकशासनस्य अप्रसिद्धत्व ततश्च यत्र प्रसिद्धमुपमान तत्रैव रूपकस्यावसर यत्र तु उपमानस्य अप्रसिद्धत्व तत्रातिशयोक्तिरिति रूपकातिशयोक्त्योर्भेद। तत्रापि यदि फलस्य हेतोश्च सद्भाव स्यात तदा प्रतीयमानोत्प्रेक्षेति परस्पर भेद इति बोध्यम्।

(ब) उक्तोति। प्रस्तुतस्य प्रकृतस्य उक्त्यनुक्त्यो उक्तौ अनुक्तौ चेति ताः अपि उत्प्रेक्षा अष्टाशीतिप्रकारा पूर्वोक्ता इत्यर्थ द्विधा भवन्ति ततश्च षट्सप्तत्यधिकशतसङ्ख्यका उत्प्रेक्षा इति बोध्यम्।

(भ) घटितमिति। भुवन जगत अञ्जनपुञ्जै कज्जलराशिभि घटितमिव निर्मितमिव मृगमदक्षोदै कस्तूरीचूर्णै पूरितमिव व्याप्तमिव, तमालतरुभिः तत विस्तृतमिव, नीलांशुकै नीलवसनै वृतमिव आच्छादितमिव।

(म) विषय प्रकृत व्याप्तत्व व्यापनरूपम्।

(य) लिम्पतीति। तम अन्धकारम् अङ्गानि शरीराणि लिम्पतीव। नभ, आकाशम् अञ्जन वर्षतीव। तम सम्पात. विषय इत्यर्थः।

अत्र तमसो लेपनस्य व्यापनरूपो विषयो नोपात्तः। अञ्जनवर्षणस्य तमःसम्पातः अनयोरुत्प्रेक्षानिमित्तञ्च तमसोऽतिबहुलत्व धारारूपेणाधःसंयोगश्च यथासङ्ख्यम्। केचित् तु "अलेपनकर्तृभूतमपि तमोलेपनकर्तृत्वेनोत्प्रेक्षित व्यापनञ्च निमित्तम्, एव नभोऽपि वर्षणक्रियाकर्तृत्वेन" इत्याहुः।

अलङ्कारान्तरोत्था सा

वैचित्र्यमधिकं वहेत् ॥६९४॥ (र)

तत्र सापह्नवोत्प्रेक्षा। यथा मम।

"अश्रुच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः।
अप्राप्य मानमङ्गे विगलति लावण्यवारिपूर इव" ॥ (ल)

श्लेषहेतुगा यथा।

"मुक्तोत्कर सङ्कटशुक्तिमध्याद्-
विनिर्गत. सारसलोचनायाः।
जानीमहेऽस्याः कमनीयकम्बु-
ग्रीवाधिवासाद् गुणवत्त्वमाप" ॥ (व)

---

(र) अलङ्कारेति। अलङ्कारात् उत्थिता उत्प्रेक्षा अधिक वैचित्र्य वहेत्।

(ल) अश्रुति। हुतस्य पावकस्य अग्नेः धूमेन कलुषे आविले अक्षिणी यस्यास्तथाभूताया सुदृशः अश्रुच्छलेन नेत्राम्बुव्याजेन लावण्यवारिपूर लावण्यजलप्रवाह अङ्गे शरीरे मानम् अप्राप्येव विगलति। अत्राश्रुजलम् अपह्नुत्य लावण्यवारित्वेन उत्प्रेक्ष्यते।

(व) मुक्तोत्कर इति। सङ्कट सङ्कीर्ण यत शुक्तिमध्यं तस्मात् विनिर्गतः मुक्तानाम् उत्कर समूहः अस्याः सारसलोचनायाः कान्तायाः कमनीया कम्बुवत् शङ्खसदृशी या ग्रीवा तस्याम् अधिवासात् अवस्थानात् गुणवत्त्वं सूत्रवत्त्वं सत्सङ्गजनिततद्गुणशालित्वञ्च आप इति जानीमहे मन्यामहे। उपजातिवृत्तम्।

अत्र गुणवत्त्वे श्लेषः। "कम्बुग्रीवाधिवासादिव" इति हेतूत्प्रेक्षाया हेतुः। अत्र "जानीमहे" इत्युत्प्रेक्षावाचकम्। एवम्।

मन्ये शङ्के ध्रुवं प्रायो
नूनमित्येवमादयः॥ ६९५ ॥

क्वचिदुपमोपक्रमोत्प्रेक्षा (अ) यथा।

"पारे जलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराशीः।
वनावलीरुत्कलिकासहस्र-प्रतिक्षणोत्कूलितशैवलाभाः" ॥ (ब)

इत्यत्र आभाशब्दस्योपमावाचकत्वादुपक्रमे उपमा पर्य्यवसाने तु जलधितीरे शैवालस्थितेः सम्भवानुपपत्तेः सम्भावनोत्थानमित्युत्प्रेक्षा। एवं विरहवर्णने। "केयूरायितमङ्गदैः" (स) इत्यत्र "विकासिनीलोत्पलति स्म कर्णे मृगायताक्ष्याः कुटिलः कटाक्षः (ह)।" इत्यादौ च ज्ञेयम्। भ्रान्तिमदलङ्कारे "मुग्धा दुग्धधिया" इत्यादौ भ्रान्तानां वल्लवादीनां विषयस्य चन्द्रिका-

(अ) क्वचिदिति। उपमा उपक्रमे यस्यास्तादृशी उत्प्रेक्षा।

(ब) पारे इति। मुरारिः कृष्णः नीरनिधेः समुद्रस्य पारेजलं जलस्य पारे इत्यर्थः आनीलाः पलाशानां पत्राणां राशयः यासां तथोक्ताः तथा उत्कलिकानां तरङ्गाणां सहस्रैः प्रतिक्षणम् उत्कूलितानि कूलमुन्नतानि यानि शैवलानि तेषाम् आभेव आभा यासां तादृशीः वनावलीः काननराजीः अपश्यत्। उपजातिवृत्तम्।

(स) केयूरायितमिति। अङ्गदैः कङ्कणैः केयूरायितं केयूरो भुजमध्यदेशालङ्कारविशेषः तद्वदाचरितम्। अत्र आयप्रत्ययस्य उपमावाचकत्वात् उपक्रमे उपमायाः प्रतीतावपि भुजमध्ये कङ्कणधारणस्यासम्भवात् उत्प्रेक्षैव।

(ह) विकासीति। मृगायताक्ष्याः कुटिलः कटाक्षः कर्णे विकासि यत् नीलोत्पलं तदिवाचरति स्म। अत्र क्विप्प्रत्ययस्य उपमावाचकत्वादुपक्रमे उपमायाः प्रतीतावपि कर्णे कटाक्षस्यासम्भवात् उत्प्रेक्षैवेति बोध्यम्।

ऽज्ञानं नास्ति तदुपनिबन्धनस्य कविनैव कृतत्वात्, इह तु सम्भावनाकर्त्तुर्विषयस्यापि ज्ञानमिति द्वयोर्भेदः (च)। सन्देहे तु समकक्षतया कोटिद्वयस्य प्रतीतिः। इह तु उत्कटासम्भाव्य-भूतैका कोटिः। अतिशयोक्तौ विषयिणः प्रतीतस्य पर्य्यवसाना-दसत्यता प्रतीयते, इह तु प्रतीतिकाल एवेति भेदः।

"रञ्जिता नु विविधास्तरुशैला
नामितं नु गगनं स्थगितं नु।
पूरिता नु विषमेषु धरित्री
संहृता नु ककुभस्तिमिरेण" ॥ (क)

इत्यत्र यत्तर्वादौ तिमिराक्रान्तता रञ्जनादिरूपेण सन्दि-ह्यत इति "सन्देहालङ्कार." इति केचिदाहुः। तन्न एकविषये समानबलतयानेककोटिस्फुरणस्यैव सन्देहत्वात्। इह तु तर्वा-दिव्याप्तेः प्रतिसम्बन्धिभेदः व्यापनादेर्निगरणेन रञ्जनादेः स्फुर-णञ्च (ख)। अन्ये तु "अनिर्द्धारणरूपविच्छित्त्याश्रयस्त्वनेक-

---

(च) तदुपनिबन्धनस्येति। तद्वर्णनस्य विषयस्य प्रकृतस्य। विषयिण आरोप्यमाणस्य प्रतीतस्य ज्ञातस्य पर्य्यवसानात् अभिनिवेशात् असत्यता अवास्तवत्वम्। इह तु उत्प्रेक्षायामित्यर्थ.।

(क) रञ्जितेति। अन्धकारवर्णनमिदम्। तिमिरेण अन्धकारेण विविधास्तरुशैला रञ्जिता नु अलङ्कृता. किम्? गगनम् आकाश नामित नु ऊर्द्ध-देशात अध. पातित किम्? वा स्थगित नु आच्छादितं किम्? धरित्री पृथ्वी विषमेषु उन्नतानतेषु स्थानेषु पूरिता नु पूर्णता नीता किम्? ककुभ दिश संहृता नु एकत्र समावेशिताः किम्?

(ख) एकविषये इति। एकस्मिन् वस्तुनि इत्यर्थ, समानबलतया तुल्य-कक्षतया अनेककोटिस्फुरणस्य बहुकोटिकप्रतीतेरेव यथा स्थाणुर्वा पुरुषो वेति। इह अस्मिन् उदाहरणे तर्वादिव्याप्ते तरुशैलगगनपृथ्वीदिशा व्याप्ते प्रतिसम्बन्धि-भेदे नानासम्बन्धिवशात् भिन्नत्वमित्यर्थः। आस्तां प्रतिसम्बन्धिभेदस्तत्र सन्देहस्य का क्षतिरित्याशङ्का दोषान्तरमाह व्यापनादेरिति निगरणेन अध.करणेन।

कोव्यधिकोऽपि भिन्नोऽयं सन्देहप्रकारः" इति वदन्ति स्म। तदप्ययुक्तम्। निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिर्हि सम्भावना। तस्याश्चात्र स्फुटतया सद्भावान्मन्ये न च इवशब्दवत्तस्या द्योतनादुत्प्रेक्षैवेयं भवितुं युक्ता। अलमदृष्टसन्देहप्रकारकल्पनया (ग)।

"यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा।
अहन्त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम्" ॥ (घ)

इत्यत्र मन्ये शब्दप्रयोगेऽपि उक्तरूपायाः सम्भावनाया अप्रतीतेर्वितर्कमात्रं नासावपह्नवोत्प्रेक्षा (ङ)।

---

तथाच यदि व्यापन वा रञ्जन वा इत्येवं समबलत्वं स्यात् तदैव सन्देहप्रसरः अत्र तु व्यापनमध.कृत्य रञ्जनस्यैव स्फुरणात् न सन्देहालङ्कार इति भाव'।

(ग) अन्ये त्विति। एककोट्यधिकोऽपि अधिकबलैककोटिरपीत्यर्थ. अत्र तु व्यापनरूपा कोटि हीनबला रञ्जनरूपा कोटिरधिकबलेति द्रष्टव्यम्। निगीर्णस्वरूपस्य अध.कृतस्वरूपस्य विषयस्य अन्येन अप्रकृतेन यत् तादात्म्यम् अभेद तस्य प्रतीति. अवबोध'। तस्या सम्भावनाया. स्फुटतया स्पष्टतया द्योतनात् प्रकाशनात्। अदृष्टेति। अदृष्टस्य क्वचिदपि ग्रन्थे अनालोकितस्य सन्देह-प्रकारस्य कल्पनया रचनया।

(घ) यदिति। राजस्तुतिरियम्। चन्द्रान्त. चन्द्रस्य मध्ये यत् एतत् वस्तु जलदलवलीला मेघखण्डविलास वितनुते विस्तारयति, लोक. जन तत् शशक इति आचष्टे कथयति। मा प्रति तथा नो प्रतिभातीति शेष' अहन्तु इन्दु चन्द्रं तव अरीणा शत्रूणा विरहाक्रान्ता विरहिण्य' या तरुण्य' तासा कटाक्षोल्कापातेन यत व्रण तस्य किण एव कलङ्कः तेन अङ्किता चिह्निता तनुर्यस्य ताद्दशमिव, मन्ये सम्भावयामि। शिखरिणीवृत्तम्।

(ङ) उक्तरूपाया इति। उत्कटैककोटिकाया. वितर्कमात्र सम्भावनमात्रं सामान्येन सम्भावन न तु उत्कटैककोटिकत्वेनेति भाव.।

**सिद्धत्वेऽध्यवसायस्या-**

**तिशयोक्तिर्निगद्यते ॥ ६९६ ॥**

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः। तस्य च उत्प्रेक्षायां विषयिणोऽनिश्चितत्वेन निर्देशात् साध्यत्वम् (छ)। इह तु निश्चितत्वेनैव प्रतीतिरिति सिद्धत्वम्। विषयनिगरणं च उत्प्रेक्षायां विषयस्याधःकरणमात्रेण इहापि "मुख द्वितीयश्चन्द्रः" इत्यादौ यदाहुः।

"विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः।

अधः करणमात्रेण निगीर्णत्वं प्रचक्षते"। इति। (ज)

**भेदेऽप्यभेदः सम्बन्धे ऽसम्बन्धस्तद्विपर्य्ययौ।**

**पौर्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा ततः ॥**

**६९७ ॥ [ झ ]**

---

( च ) अतिशयोक्तिमाह सिद्धत्वे इति। अध्यवसायस्य अध्यासस्य सिद्धत्वे सिद्धवत् निर्देश्यत्वे अतिशयोक्ति. निगद्यते कथ्यते। सिद्धवन्निर्दिष्टोऽध्यवसाय एवातिशयोक्तिरिति फलितार्थ ।

( छ ) विषयेति। विषयस्य प्रकृतस्य निगरणेन अध करणेन विषयिणः आरोप्यमाणस्य अभेदप्रतिपत्ति अभेदज्ञान विषयादिति शेष। अनिश्चितत्वेन अनिर्द्धारितत्वेन निर्देशात् आरोपात् साध्यत्व साधनीयत्वम्।

( ज ) विषयस्येति। सूरय. विद्वास विषयस्य अनुपादाने अप्रयोगे उपादाने प्रयोगेऽपि अध.करणमात्रेण विषयस्येति शेष', निगीर्णत्वं निगरणं प्रचक्षते वदन्ति, निगरणमेवाध करणमिति फलितार्थ ।

( झ ) तद्भेदानाह भेदे इति। सा अतिशयोक्तिः भेदेऽपि अभेदरूपा अभेदेऽपि भेदरूपा सम्बन्धेऽपि असम्बन्धरूपा असम्बन्धेऽपि सम्बन्धरूपा तथा कार्य्यहेत्वो. कार्य्यकारणयो. पौर्वापर्य्यविपर्य्ययरूपा चेति पञ्चधा।

तद्विपर्य्ययौ अभेदे भेदः। असम्बन्धे सम्बन्धः। साऽति-शयोक्तिः। अत्र भेदेऽभेदो यथा मम।

"कथमुपरि कलापिनः कलापो-
विलसति तस्य तलेऽष्टमीन्दुखण्डम्।
कुवलययुगलं ततो विलोल
तिलकुसुमं तदधः प्रवालमस्मात्" ॥ (ञ)

अत्र कान्ताकेशपाशादेर्मयूरकलापादिभिरभेदेनाध्यवसायः यथा वा। "विश्लेषदुःखादिव बद्धमौनम्" अत्र चेतनगतं मौनित्वमन्यदचेतनगतं च अन्यदिति द्वयोर्भेदः। एवम्।

"सहाधरदलेनास्या यौवने रागभाक् प्रियः" ॥

अत्राधरस्य रागो लौहित्यं प्रियस्य रागः प्रेम द्वयोरभेदः। अभेदे भेदो यथा।

"अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पदः।
तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम्" ॥ (ट)

---

(ञ) भेदे अभेदमुदाहरति कथमिति। नायिकावर्णनमिदम्। उपरि शिरसीत्यर्थः कलापिनः मयूरस्य कलापः बर्हं कथमिति सर्वत्र योज्यम्। कलापस्य पुच्छवर्त्तित्वं सर्वत्र दृष्टम् इह तु उपरि कथमिति भावः। केशवर्णनमिदम्। तस्य कलापस्य तले अष्टम्यास्तिथेः इन्दुखण्डम् अर्द्धचन्द्र इत्यर्थः विलसति विराजते। भालवर्णनमिदम्। ततः तस्मात् अधः इति शेषः विलोलं चपलं कुवलययुगलं नीलोत्पलद्वयं राजते इति शेषः। नेत्रद्वयवर्णनमिदम्। तदधः तस्मात् अधः तिलकुसुमं विराजते इति शेषः। नासिकावर्णनमिदम्। अस्मात् तिलकुसुमात् अधः इति शेषः प्रवालं नवपल्लवम्। ओष्ठवर्णनमिदम्। अत्र कान्ताकेशपाशादिर्भिन्नोऽपि मयूरकलापाद्यभेदेनाध्यवसीयते।

(ट) अभेदे भेदमुदाहरति। अन्यदिति। तस्याः पद्मपलाशाक्ष्याः अङ्गलावण्यम् अन्यत् असाधारणमित्यर्थः, सौरभसम्पदः गुणपरम्पराः अन्याः असाधारण्य इत्यर्थः, तथा सरसत्वं रसिकत्वम् अलौकिकं लोकातीतम्। अत्र अभिन्नमपि अङ्गलावण्यादिकं भिन्नत्वेनाध्यवसीयते।

सम्बन्धेऽसम्बन्धो यथा।

"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः?॥ (ठ)

अत्र पुराणप्रजापतिनिर्माणसम्बन्धेऽप्यसम्बन्धः। असम्बन्धे सम्बन्धो यथा।

"यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम्।
तदोपमीयते तस्या वदनं चारुलोचनम्॥ (ड)

---

(ठ) सम्बन्धे असम्बन्धमुदाहरति अस्या इति। उर्वशीं दृष्ट्वा पुरुरवसो वितर्कवर्णनमिदम्। अस्याः उर्वश्याः सर्गविधौ सृष्टिकर्मणि कान्तिप्रदः चन्द्रः प्रजापतिः स्रष्टा अभूत् नु वितर्कें। चन्द्रस्य कान्तिमयत्वात् कान्तिप्रदत्वं वितर्क्यते इति भावः। शृङ्गारे एकः केवलः रसः अनुरागो यस्य तादृशो मदनः कामः स्वयं नु प्रजापतिरभूदित्यनेनान्वयः, अन्यथा कथमेव विलासित्वमिति भावः। पुष्पाकरो वासन्तो मासः चैत्र इत्यर्थः प्रजापतिरभूत्, अन्यथा कथमेव कुसुमवत् अङ्गानां सौकुमार्य्यमिति भावः। वेदाभ्यासेन वेदानां पुनः पुनरनुशीलनेन जडः कामव्यापारानभिज्ञ इति भावः विषयेभ्यः भोग्यवस्तुभ्यः व्यावृत्तं निवृत्तं कौतूहलम् औत्सुक्यं यस्य तथाभूतः पुराणः चिरन्तनः मुनिः नारायणः ईदृशं मनोहरं रूपं निर्मातुं कथं नु केन प्रकारेण वा प्रभवेत? कथमपि नैव प्रभवेदित्यर्थः। पुरा किल नारायणमृषिं घोरे तपसि तिष्ठन्तं दृष्ट्वा भीतैर्देवैस्तत्प्रलोभनाय अप्सरसः प्रहिताः। तासु समीपे तथा विलासान् प्रदर्शयन्तीषु दृष्टासौ नारायणः स्वात् ऊरुदेशात् ताभ्योऽपि वराङ्गनामेकां सृष्ट्वा ताभ्यो दत्तवान्। तेन च ताः सर्वा विलज्जितास्तां गृहीत्वा सुरलोकं जग्मुः। सा च ऊरुदेशोत्पन्नत्वात् उर्वशीति संज्ञां लेभे इति पौराणिकी गाथात्रानुसन्धेया। अत्र पुराणप्रजापतिनिर्मातापि तदनिर्मितत्वसम्बन्धेनाध्यवसीयते। शार्दूलविक्रीडितं वृत्तम्।

(ड) असम्बन्धे सम्बन्धमुदाहरति यदीति। यदि इन्दोश्चन्द्रस्य मण्डले इन्दीवरद्वयं सक्तं युक्तं स्यात्, तदा तस्याः चारुलोचनं वदनम् उपमीयते सेन्दीवरद्वयेन चन्द्रमण्डलेनेति भावः।

अत्र यद्यर्थबलादाहृतेन सम्बन्धेन सम्भावनया सम्बन्धः (ढ)। कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययश्च द्विधा भवति। कारणात् प्रथमं कार्य्यस्य भावे द्वयोः समकालत्वेन च। क्रमेण यथा।

"प्रागेव हरिणाक्षीणां चित्तमुत्कलिकाकुलम्।
पश्चादुद्भिन्नवकुलरसालमुकुलश्रियः" ॥

"सममेव समाक्रान्तं द्वयं द्विरदगामिना।
तेन सिंहासनं पित्र्यं मण्डलञ्च महीक्षिताम्" ॥ (ण)

इह केचिदाहुः। "केशपाशादिगतो लौकिकोऽतिशयोऽलौकिकत्वेनाध्यवसीयते, केशपाशादीनां कलापादिभिरध्यवसायेऽप्याङ्गीक्रियते" "प्रागेव हरिणाक्षीणाम्" इत्यत्र वकुलादिश्रीणां प्रथमभावितापि पश्चाद्भावित्वेनाध्यवसिता, अतएव अत्रापि इवशब्दप्रयोगे उत्प्रेक्षा (त)। एवमन्यत्र।

**पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्।**

---

(ढ) अत्र यद्यर्थेति। यदिशब्दस्य अर्थबलात् सम्भावनया आहृतेन आरोपितेन सम्बन्धेन इन्दीवरसयोगेन सम्बन्धः। इन्दीवरासम्बद्धमपि वदन तत्सम्बद्धत्वेनाध्यवसीयते इति भाव ।

(ण) कारणात प्रथम कार्य्यस्य भावमुदाहरति प्रागेवेति। हरिणाक्षीणा चित्त प्रागेव पूर्वमेव उत्कलिकया उत्कण्ठया आकुल जातमिति शेष । उद्भिन्ना. वकुलाना रसालानाञ्च मुकुलाना श्रिय पश्चात्। अत्रोत्कण्ठाया कारणात् वकुलरसालमुकुलश्रीणामुद्भेदात प्राक् कार्य्यस्य उत्कण्ठारूपस्य उत्पत्ति.।

(त) इह केचिदाहुरिति। कलापादिभिरध्यवसाये विवक्षिते इति शेष । अन्यदेवाङ्गलावण्यमित्यादिप्रकारेषु अव्याप्तिर्लक्षणस्येति अन्यदेवेति लावण्यान्तरस्य भिन्नत्वेन तादात्म्यासम्भवादिति भाव अन्यदिवेति पाठे उत्प्रेक्षाऽङ्गीक्रियते। तन्न अत्र हि अन्यदङ्गलावण्यमन्यत्वेनाध्यवसितम् ॥

(थ) तुल्ययोगितामाह पदार्थानामिति। प्रस्तुताना वा अन्येषामप्रस्तुताना

एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥

६६८ ॥ [ थ ]

अन्येषामप्रस्तुतानां,धर्मो गुणक्रियारूपः। उदाहरणम्।

"अनुलेपनानि कुसुमान्यबलाः
कृतमन्यवः पतिषु दीपदशाः।
समयेन तेन सुचिरं शयित-
प्रतिबोधितस्मरमबोधिषत" ॥ (द)

अत्र सन्ध्यावर्णनस्य प्रस्तुतत्वादप्रस्तुतानामनुलेपनादीना-मेकबोधनक्रियाभिसम्बन्धः।

"त्वदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते।
मालतीशशभृल्लेखाकदलीनां कठोरता" ॥ (ध)

इत्यत्र मालत्यादीनामप्रस्तुतानां कठोरतारूपैकगुण-सम्बन्धः। एवम्।

---

पदार्थाना यदा एकधर्माभिसम्बन्धः एकेन धर्मेण गुणक्रियान्यतररूपेण सयोग भवेत् तदा तुल्ययोगिता स्यात्।

(द) क्रियारूपधर्मसम्बन्धमुदाहरति अनुलेपनानीति। सन्ध्यावर्णनमिदम्। तेन समयेन सन्ध्याकालेन अनुलेपनानि अङ्गरागद्रव्याणि, कुसुमानि पतिषु कृत-मन्यव मानवत्य इत्यर्थ अबला नार्य्य तथा दीपस्य दशा वर्त्तय सुचिरम् आदौ शयित निद्रित' पश्चात् प्रतिबोधित जागरित स्मर कामो यत्र तत् यथा तथा अबोधिषत बोधिता. अनुलेपनादीना कुसुमानाञ्च उद्दीपकत्वात् सन्ध्याकालस्य कामोद्दीपकत्वेन मानभञ्जनसाधनत्वात् दीपवर्त्तीना सुरतसामग्रीत्वाच्च अप्रबुद्ध-कामप्रबोधकत्वमिति भाव। प्रमिताचरावृत्तम्। अत्र क्रियारूपधर्मसम्बन्ध।

(ध) गुणरूपधर्मसम्बन्धमुदाहरति त्वदिति। तव अङ्गस्य मार्दव सौकु-मार्य्यं द्रष्टु पश्यत इत्यर्थ कस्य जनस्य चित्ते मालतीशशभृल्लेखाकदलीना कठो-रता कार्कश्य' न भासते न प्रतिभाति? अपितु सर्वस्यैवेत्यर्थ.।

"दानं वित्तादृतं वाचः कीर्त्तिधर्मौ तथायुषः ।
परोपकरणं कायादसारात् सारमाहरेत्" ॥ (न)

अत्र दानादीनां कर्मभूतानां सारतारूपैकगुणसम्बन्ध एकाहरणक्रियासम्बन्धः ।

**अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते ।**
**अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥**

६९९ ॥ [प]

क्रमेण उदाहरणम् ।

"बलावलेपादधुनापि पूर्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा ।
सती च योषित् प्रकृतिश्च निश्चला
पुमांसमभ्येति भवान्तरेष्वपि" ॥ (फ)

अत्र प्रस्तुताया निश्चलायाः प्रकृतेरप्रस्तुतायाश्च सत्या योषित एकानुगमनक्रियासम्बन्धः ।

---

(न) दानमिति । असारात् वस्तुन सारम् आहरेत्, तथाहि वित्तात् धनात् असारभूतादित्यर्थ. दान सारमिति सर्वत्रान्वेतव्यम् । असाराया वाच ऋत सत्यम्, आयुष जीवनकालात् असारादिति शेष कीर्त्तिधर्मौ, तथा कायात् परोपकरणम् आहरेदित्यन्वय ।

(प) दीपकमाह अप्रस्तुतेति । अप्रस्तुतप्रस्तुतयोरेकधर्माभिसम्बन्ध. दीपक निगद्यते । अथ किवा चेत् यदि अनेकासु क्रियासु एक कारक स्यात् तदपि दीपकमिति शेष' ।

(फ) बलेति । अधुनापि अस्मिन् जन्मन्यपि जिगीषुणा तेन रावणेन बलावलेपात् बलदर्पात् जगत् प्रबाध्यते प्रपीड्यते । तथाहि, सती साध्वी योषित् सुनिश्चला प्रकृतिश्च भवान्तरेषु जन्मान्तरेषु अपि पुमासम् अभ्येति प्राप्नोति । वंशस्थविल वृत्तम् ।

"दूरं समागतवति त्वयि जीवनाथे
भिन्ना मनोभवशरेण तपस्विनी सा ।
उत्तिष्ठति स्वपिति वासगृह त्वदीय-
मायाति याति हसति श्वसिति चणेन" ॥ (ब)

इद मम । अत्रैकस्या नायिकाया उत्थानाद्यनेकक्रिया-सम्बन्धः अत्र च गुणक्रिययोरादिमध्यावसानसद्भावेन त्रैविध्यं न लक्षितम् । तथाविधवैचित्र्यस्य सर्वत्रापि सहस्रधा सम्भवात् ।

**प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः ।**
**एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक्**
**॥७००॥ (भ)**

यथा ।

"धन्यासि वैदर्भि ! गुणैरुदारै-
र्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया
यदब्धिमप्युत्तरलीकरोति" ॥ (म)

---

(ब) दूरमिति । दूत्या नायकं प्रत्युक्तिरियम् । त्वयि जीवनाथे प्राणवल्लभे दूरं समागतवति सति सा तपस्विनी वराकी मनोभवशरेण भिन्ना विद्धा सती चणेन उत्तिष्ठति स्वपिति निद्राति त्वदीय वासगृहमायाति, याति गच्छति, हसति, श्वसिति निश्वासान् त्यजति । जीवनाथेति पाठान्तरं तथात्वे, हे जीवनाथ ! इति सम्बुद्धि । वसन्ततिलकं वृत्तम् ।

(भ) प्रतिवस्तूपमामाह प्रतीति । गम्यं प्रणिधानवेद्यं साम्यं सादृश्यं ययो; तादृश्योः वाक्ययो एकोऽपि सामान्य साधारणो धर्मः गुणक्रियारूप पृथक् पर्य्यायशब्देन यत्र निर्दिश्यते सा प्रतिवस्तूपमा स्यात् ।

(म) धन्यासीति । हे वैदर्भि ! विदर्भराजनन्दिनि ! दमयन्ति ! त्वं धन्याऽसि साधुवादार्हाऽसीत्यर्थं यया त्वया नैषधः निषधाधिप नलोऽपि उदारैः

अत्र समाकर्षणमुत्तरलीकरणञ्च क्रिया एकैव पौनरुक्त्य-निरासाय भिन्नवाचकतया निर्दिष्टा। इयं मालयापि दृश्यते। यथा।

"विमल एव रविर्विशदः शशी
प्रकृतिशोभन एव हि दर्पणः।
शिवगिरिः शिवहाससहोदरः
सहजसुन्दर एव हि सज्जनः"॥ (य)

अत्र विमलविशदादिरर्थत एक एव। वैधर्म्येण (र) यथा।

"चकोर्य्य एव चतुराश्चन्द्रिकापानकर्मणि।
विनावन्तीर्न निपुणाः सुदृशो रतनर्मणि॥ (ल)

**दृष्टान्तस्तु सधर्मस्य**
**वस्तुनः प्रतिबिम्बनम्॥७०१॥ (व)**

सधर्मस्येति प्रतिवस्तूपमाव्यवच्छेदः (श)। अयमपि साधर्म्यवैधर्म्याभ्यां द्विधा। क्रमेण उदाहरणम्।

---

महद्भि गुणै समाकृष्यत सम्यक् आकृष्ट इत्यर्थ। चन्द्रिकाया' ज्योत्स्नाया इत अस्मात् परा अधिका स्तुति का? यत् अब्धि समुद्रमपि उत्तरलीकरोति चपलयति। उपजातिवृत्तम्।

(य) विमल इति। स्पष्टम्।

(र) वैधर्म्येणेति विपरीतधर्मेणेत्यर्थः।

(ल) चकोर्य्य इति। चकोर्य्य एव चन्द्रिकाया' पानकर्मणि पानक्रियाया चतुरा निपुणा, अवन्ती अवन्तिदेशीया. कामिनीर्विना सुदृश रतनर्मणि सुरतविलासे न निपुणा। अत्र चतुरा इति न निपुणा इति विपरीतधर्म-त्वम्।

(व) दृष्टान्तमाह दृष्टान्त इति। सधर्मस्य समानधर्मस्य वस्तुन' विषयस्य प्रतिबिम्बन प्रणिधानगम्यसाम्यत्व दृष्टान्तः।

(श) सधर्मस्येति। अत्र धर्मस्य साम्य न तु एकरूपत्वं प्रतिवस्तूपमायाम् एकरूपत्व न तु साम्यमित्यनयोर्भेद इति भाव.।

अविदितगुणापि सत्कविभणितिः
कर्णेषु वमति मधुधाराम्।
अनधिगतपरिमलापि हि
हरति दृशं मालतीमाला" ॥ (ष)

"त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदनव्यथा।
दृष्टानुदयभाजीन्दौ ग्लानिः कुमुदसंहतेः" ॥ (स)

"वसन्तलेखैकनिबद्धभावं
परासु कान्तासु मनः कुतो नः ?।
प्रफुल्लमल्लीमधुलम्पटः किं
मधुव्रतः काङ्क्षति वल्लिमन्याम् ?" ॥ (ह)

इदं पद्यं मम। अत्र "मनः कुतो नः ?" इत्यस्य "काङ्क्षति वल्लिमन्याम्" इत्यस्य चैकरूपतयैव पर्य्यवसानात् प्रतिवस्तूपमैव। इह तु कर्णे मधुधारावमनस्य नेत्रहरणस्य च साम्य-

---

(ष) अविदितेति। सतां कवीनां भणितिं वाणी अविदितगुणा अर्थबोधविरहादिति भावः कर्णेषु मधुधारां वमति उद्गिरति। मालतीमाला अनधिगतं अप्राप्तं परिमलो यस्यास्तादृशी अपि दृशं नेत्रं हरति। अत्र मधुधारावमनस्य नेत्रहरणस्य च नैकरूपत्वं परं प्रणिधानेन गम्यसाम्यत्वमस्तीति द्रष्टव्यम्।

(स) त्वयीति। त्वयि दृष्टे सति कुरङ्गाक्ष्याः मदनव्यथा स्रंसते नश्यति। इन्दौ अनुदयभाजि उदयमप्राप्ते सति कुमुदसंहतेः ग्लानिं मालिन्यं दृष्टा। अत्र मदनव्यथास्रंसनस्य ग्लानिदर्शनस्य च वैपरीत्येन प्रणिधानगम्यसाम्यत्वमस्तीति बोध्यम्।

(ह) वसन्तेति। वसन्तलेखायां तदाख्यायां कान्तायाम् एकनिबद्धभावं केवलानुरक्तमित्यर्थः नः अस्माकं मनः परासु कान्तासु कुतः ? प्रफुल्लायाः विकसितायाः मल्ल्याः मल्लिकायाः मधुलम्पटः रसलुब्धः मधुव्रतः भ्रमरः अन्याम् अपरां मल्लिकातिरिक्तामित्यर्थः वल्लिं लतां काङ्क्षति अभिलषति किम् ? नैवाभिलषतीत्यर्थः। उपजातिवृत्तम्।

मेव न तु ऐकरूप्यम् । अथ समर्थ्यसमर्थकवाक्ययोः सामान्य-विशेषभावोऽर्थान्तरन्यासः, प्रतिवस्तूपमादृष्टान्तयोस्तु न तथेति भेदः (च) ।

**सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् ।**
**यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना ॥**
**७०२॥ (क)**

अथ सम्भवद्वस्तुसम्बन्धनिदर्शना यथा ।
"कोऽत्र भूमिवलये जनान् मुधा
तापयन् सुचिरमेति सम्पदम् ।
वेदयन्निति दिनेन भानुमान्
आससाद चरमाचलं ततः" ॥ (ख)

अत्र रवेरीदृशार्थवेदनाक्रियायां कर्तृत्वेनान्वयः सम्भवत्येव ईदृशार्थज्ञापनसमर्थचरमाचलप्राप्तिरूपधर्मवत्त्वात्, स च रवेरस्ताचलगमनस्य परतापिनां विपत्प्राप्तेश्च बिम्बप्रतिबिम्ब-

---

(च) समर्थ्येति । समर्थ्यस्य दृढीकार्यस्य समर्थकस्य दृढीकारकस्य वाक्यद्वयस्य इत्यर्थः । सामान्यविशेषभावे इति उभयोरेकस्य सामान्यत्वे अपरस्य विशेषत्वे इत्यर्थः । प्रतिवस्तूपमादृष्टान्तयोस्तु न तथा सामान्यविशेषभाव इत्यर्थः ।

(क) निदर्शनामाह सम्भवन्निति । कुत्रचित् सम्भवन् कुत्रचिद्वा असम्भवन् वस्तुसम्बन्धः यत्र बिम्बानुबिम्बत्वं प्रणिधानगम्यसाम्यञ्च बोधयेत् सा निदर्शना ।

(ख) कोऽत्रेति । अत्र भूमिवलये भूमण्डले को जन जनान् मुधा निरर्थकं तापयन् पीडयन् सुचिरं सम्पदम् एति प्राप्नोति ? न कोऽपीत्यर्थः । भानुमान् सूर्य्यः दिनेन इति वेदयन् ज्ञापयन् ततः चरमाचलम् अस्ताचलम् आससाद प्राप । इन्द्रवज्रावृत्तम् ।

(ग) अत्रेति । ईदृशार्थस्य उक्तरूपार्थस्य वेदनक्रियाया ज्ञापनव्यापारे ।

भावं बोधयति (ग)। असम्भवद्वस्तुसम्बन्धनिदर्शना तु एकवाक्यानेकवाक्यगतत्वेन द्विविधा। तत्रैकवाक्यगा यथा।

"कलयति कुवलयमालाललितं
कुटिलः कटाक्षविक्षेपः।
अधरः किसलयलीला-
माननमस्याः कलानिधेर्विलासम्" ॥ (घ)

अत्र अन्यस्य धर्मं कथमन्यो वहत्विति कटाक्षविक्षेपादीनां कुवलयमालादिगतललितादीनां कलनमसम्भवत् तल्ललितादिसदृशं ललितादिकमवगमयत् कटाक्षविक्षेपादेः कुवलयमालादेश्च विम्बप्रतिविम्बभाव बोधयति। यथा वा।

"प्रयाणे तव राजेन्द्र। मुक्ता वैरिमृगीदृशाम्।
राजहंसगतिः पद्भ्यामाननेन शशिद्युतिः ॥ (ङ)

अत्र पादाभ्यामसम्बद्धराजहंसगतेस्त्यागोऽनुपपन्न इति तयोस्तत्सम्बन्धः कल्प्यते, स च असम्भवन् राजहंसगतिमिव गतिं बोधयति। अनेकवाक्यगा यथा।

इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति।

---

इदृशार्थेति। ज्ञापनसमर्थं ज्ञापननिष्पादक य चरमाचलप्रातिरूपी धर्मः तद्वत्वात तच्छालित्वादित्यर्थ.। बिम्बप्रतिविम्बभावं गम्यसादृश्यम्।

(घ) कलयतीति। अ[illegible]। कुटिल कटाक्षविक्षेपः कुवलयमालायाः नीलोत्पलस्रज ललित सौन्दर्य[illegible] अधरः किसलयस्य पल्लवस्य लीलां तथा आननं कलानिधेः चन्द्रस्य विलासं कल[illegible]न धारयति।

(ङ) प्रयाणे इति। हे [illegible]। तव प्रयाणे युद्धयात्रायां वैरिणा [illegible] या मृगीदृशः कामिन्य. तासा प[illegible] राजहंसगतिः तथा आननेन मुखेन [illegible]द्युति. मुक्ता त्यक्ता।

भ्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति" ॥ (च)

अत्र यत्तच्छब्दनिर्दिष्टवाक्यार्थयोरभेदेनान्वयोऽनुपपद्यमानस्तादृशवपुषस्तपःक्षमत्वसाधनेच्छा नीलोत्पलपत्रधारया शमीलताच्छेदनेच्छेवेति विम्बप्रतिविम्बभावे पर्य्यवस्यति (छ)। यथा वा।

"जन्मेदं बन्ध्यतां नीतं भवभोगोपलिप्सया।
काचमूल्येन विक्रीतो हन्त! चिन्तामणिर्मया॥ (ज)

अत्र भवभोगलोभेन जन्मनो व्यर्थतानयनं काचमूल्येन चिन्तामणिविक्रय इवेति पर्य्यवसानम्। एवम्।

"क्व सूर्य्यप्रभवो वंशः? क्व चाल्पविषया मतिः?।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्" ॥ (झ)

---

(च) इदमिति। शकुन्तलाया रूपं दृष्ट्वा राज्ञो दुष्मन्तस्योक्तिरियम्। य ऋषिः इदम् अव्याजमनोहरं स्वभावमनोहरं वपुः शरीरं तपःक्षमं तपश्चरणक्लेशसहं साधयितुं कर्त्तुम् इच्छति सः ध्रुवं निश्चितं नीलोत्पलपत्रस्य धारया अग्रभागेण अतिकोमलया इति भावः शमीलताम् अतिकर्कशामिति भावः छेत्तु व्यवस्यति उद्युङ्क्ते। वंशस्थविलं वृत्तम्।

(छ) अत्रेति। यच्छब्दनिर्दिष्टवाक्यमित्यादि इच्छेति पर्य्यन्तं तच्छब्दनिर्दिष्टवाक्यं ध्रुवमित्यादि व्यवस्यतीत्यन्तं तयोरर्थयोः अभेदेन अभिन्नतया अन्वयः सम्बन्धः अनुपपद्यमानः असम्भवन् विम्बप्रतिविम्बभावे गम्यसादृश्ये पर्य्यवस्यति परिणमति।

(ज) जन्मेति। मया भवस्य संसारस्य भोगः सुखं, भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः। तस्य उपलिप्सया लालसया इत्यर्थः इदं जन्म बन्ध्यतां विफलत्वं नीतम्। हन्त खेदे काचमूल्येन चिन्तामणिः विक्रीतः।

(झ) क्वेति। सूर्य्यः प्रभवति अस्मादिति प्रभवः उत्पत्तिस्थानं यस्य अथवा सूर्य्यात् प्रभवः उत्पत्तिर्यस्य तादृशः वंशः सूर्य्यवंशः क्व? अल्पविषया यत्किञ्चिद्धारणसमर्था मतिः बुद्धिश्च क्व? क्वद्वयं महदन्तरं सूचयति। अल्पमतिसूर्य्य-

अत्र मन्मत्या सूर्य्यवंशवर्णनमुडुपेन सागरतरणमिवेति पर्य्यवसानम्। इयं क्वचिदुपमेयवृत्तस्योपमानेऽसम्भवेऽपि भवति।

यथा।

"योऽनुभूतः कुरङ्गाक्ष्यास्तस्या मधुरिमाधरे।
समास्वादि स मृद्वीकारसे रसविशारदैः॥ (ञ)

अत्र प्रकृतस्याधरस्य मधुरिमधर्मस्य द्राक्षारसेऽसम्भवात् पूर्ववत् साम्ये पर्य्यवसानम्। मालारूपापि यथा मम।

"क्षिपसि शुकं वृषदंशकवदने
मृगमर्पयसि मृगादनरदने।
वितरसि तुरगं महिषविषाणे
निदधच्चेतो भोगविताने"॥ (ट)

इह विम्बप्रतिविम्बताक्षेपं विना वाक्यार्थापर्य्यवसानं, दृष्टान्ते तु पर्य्यवसितेन वाक्यार्थेन सामर्थ्याद्विम्बप्रतिविम्बताप्रत्यायनम् (ठ)। नापीयमर्थापत्तिः, तत्र "हारोऽयं हरिणाक्षीणाम्" इत्यादौ सादृश्यपर्य्यवसानाभावात्।

---

वंशयोर्महदन्तरमिति भावः। अस्मि अहं मोहात् अज्ञानात् उडुपेन भेलेन दुस्तरं सागरं तितीर्षुः तर्त्तुमिच्छुः।

(ञ) य इति। तस्याः कुरङ्गाक्ष्याः अधरे यः मधुरिमा माधुर्य्यम् अनुभूतः, स मधुरिमा रसविशारदैः रसास्वादाभिज्ञैः जनैः मृद्वीकारसे द्राक्षारसे समास्वादि सम्यक् आस्वादितः।

(ट) क्षिपसीति। भोगविताने संसारसुखसमूहे चेतः निदधत् त्वं वृषदंशकस्य विडालस्य वदने शुकं क्षिपसि, मृगादनस्य तरक्षोः रदने दन्ते मृगम् अर्पयसि, महिषस्य विषाणे शृङ्गे तुरगम् अश्वं वितरसि ददासि। अत्र भोगविताने चेतोनिधानस्य वृषदंशकवदनादिषु शुकादिक्षेपणस्य च अभेदेनान्वयः अनुपपद्यमानः परस्परं विम्बप्रतिविम्बभावं गमयति।

**आधिक्यमुपमेयस्योपमानान्न्यूनताथवा।**
**व्यतिरेक एक उक्ते हेतौ नोक्ते स च त्रिधा॥**
**चतुर्विधोऽपि साम्यस्य बोधनाच्छब्दतोऽर्थतः।**
**आक्षेपाच्च द्वादशधा श्लेषेऽपीति त्रिरष्टधा।**
**प्रत्येकं स्यान्मिलित्वाष्टाचत्वारिंशद्विधः पुनः॥**
**७०३॥ (ड)**

उपमेयस्योपमानादाधिक्ये हेतुरुपमेयगतमुत्कर्षकारण-मुपमानगतं निकर्षकारणञ्च। तयोर्द्वयोरप्युक्तावेकः प्रत्येकं समुदायेन वानुक्तौ त्रिविध इति चतुर्विधेऽप्यस्मिन्नुपमानोप-मेयस्य निवेदनं शब्देनार्थेनाक्षेपेण चेति द्वादशप्रकारोऽपि श्लेषेऽपिशब्दाद्दश्लेषेऽपि चतुर्विंशतिप्रकारः। उपमानान्न्यून-तायामप्यनयैव भङ्ग्या चतुर्विंशतिप्रकारतेति मिलित्वा अष्ट-चत्वारिंशत्प्रकारो व्यतिरेकः। उदाहरणम्।

"अकलङ्कं मुखं तस्या न कलङ्की विधुर्यथा"॥ (ढ)

---

(ठ) इह निदर्शनाया विम्बप्रतिविम्बताया आक्षेप प्रतीतिं विना वाक्यार्थस्य अपर्य्यवसानम् असङ्गतिः, पर्य्यवसितेन सङ्गतता प्राप्तेन। सामर्थ्यात् योग्यता-वशात् विम्बेति गम्यसादृश्यावगतिरित्यर्थः।

(ड) व्यतिरेकमाह आधिक्यमिति। उपमेयस्य उपमानात् आधिक्यम् अथवा न्यूनता व्यतिरेक.। स च हेतौ उक्ते एक. एकविध, हेतौ नोक्ते अकथिते त्रिधा। तथा चतुर्विधोऽपि साम्यस्य सादृश्यस्य शब्दत अर्थत आक्षे-पाच्च बोधनात् प्रत्यायनात् द्वादशधा। द्वादशविधोऽपि श्लेषनिबन्धनत्वात अश्लेषत्वाच्च द्वैविध्येन त्रिरष्टधा चतुर्विंशतिप्रकार.। प्रत्येकम् आधिक्यन्यून-तयोश्च मिलित्वा अष्टाचत्वारिंशत्प्रकार इति।

(ढ) अकलङ्कमिति। सुगमम्।

अत्र उपमेयगतमकलङ्कत्वमुपमानगतञ्च कलङ्कित्वं हेतुद्वयमपि उक्तम्। यथाशब्दप्रतिपादनाच्च शाब्दमौपम्यम्। अत्रैव "न कलङ्कि विधूपमम्" इति पाठे आर्थं "जयतीन्दुं कलङ्किनम्" इति पाठे तु इवादितुल्यादिपदविरहादाक्षिप्तम्। अत्रैवाकलङ्कपदत्यागे उपमेयगतोत्कर्षकारणानुक्तिः, कलङ्किपदत्यागे च उपमानगतनिकर्षकारणानुक्तिः, द्वयोरनुक्तौ द्वयोरनुक्ति। श्लेषे यथा।

"अतिगाढगुणायाश्च नाब्जवद् भङ्गुरा गुणाः॥" (ण)

अत्र वार्थे वतिरिति शाब्दमौपम्यम् उत्कर्षनिकर्षकारणयोर्द्वयोरप्युक्तिः। गुणशब्दः श्लिष्टः। अन्ये भेदाः पूर्ववदूह्याः। एतानि च उपमेयस्योपमानादाधिक्ये उदाहरणानि। न्यूनत्वे दिङ्मात्रम्। यथा।

"क्षीणः क्षीणोऽपि शशी भूयोभूयोऽभिवर्द्धते नित्यम्।
विरम प्रसीद सुन्दरि। यौवनमनिवर्त्ति यातं तु"॥ (त)

अत्र उपमेयभूतयौवनास्थैर्य्यस्याधिक्यं तेनात्र "उपमानादुपमेयस्याधिक्ये विपर्य्यये वा व्यतिरेक" इति केषाञ्चिल्लक्षणे

---

(ण) अतीति। अतिगाढा अतिघना गुणा यस्याः तथाभूतायाः तस्याः कान्तायाः गुणा दयादाक्षिण्यादय. सूत्राणि च अब्जवत् पद्मवत् भङ्गुराः भङ्गप्रवणा. छिदुरा इत्यर्थः न। अत्रोपमेय नायिका, उपमान पद्मम् उपमेयस्य उत्कर्षकारणम् अतिगाढगुणत्वम् उपमानस्य निकर्षकारण भङ्गुरगुणत्वमिति बोध्यम्।

(त) क्षीण इति। हे सुन्दरि। शशी चन्द्रः क्षीण. क्षीण अपि नित्य प्रत्यहं भूय. भूयः पुन. पुनः अभिवर्द्धते वृद्धिं गच्छति, विरम मानात् निवर्त्तस्व, प्रसीद प्रसन्ना भव, यौवनं गतमिति शेष. अनिवर्त्ति न पुनर्निवर्त्तते इत्यर्थः, यात तु गतमेव तु।

"विपर्य्यये वेति पदमनर्थकम्" इति यत् केचिदाहुः तन्न विचारसहम्। तथाहि अत्राधिकन्यूनत्वे सत्त्वासत्त्वे एव विवक्षिते। अत्र च चन्द्रापेक्षया यौवनस्यासत्त्वं स्फुटमेव। अस्तु वा अत्रोदाहरणे यथा कथञ्चिद्गतिः। (थ)

"हनूमदाद्यैर्यशसा मया पुन-
र्द्विषा हसैर्दूतपथः सितीकृतः"। (द)

इत्यादिषु का गतिरिति सुष्ठूक्तं "न्यूनताथवा" इति।

**सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः।**
**सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत्॥**
**७०४॥ (ध)**

अतिशयोक्तिरत्राभेदाध्यवसायमूला कार्य्यकारणपौर्वापर्य्यविपर्य्ययरूपा च। अभेदाध्यवसायमूलापि श्लेषभित्तिका अन्यथा च (न)। क्रमेण उदाहरणम्।

"सहाधरदलेनास्या यौवने रागभाक् प्रियः"। (प)

---

(थ) सत्त्वासत्त्वे स्थायित्वास्थायित्वे। ननु यथा कथञ्चित् अधिक्योक्तावेव व्यतिरेक आस्तां को दोष इत्याशङ्क्य अनुपपत्त्यन्तरं दर्शयति अस्त्विति।

(द) हनूमदाद्यैरिति। दमयन्तीं प्रति प्रेरितस्य नलस्य दौत्ये अकृतार्थस्योक्तिरियम्। हनूमदाद्यैः, दूतपथः यशसा सितीकृत उज्ज्वलीकृतः, मया पुनः द्विषा शत्रुणा हसैः, हास्यैः, दूतपथः सितीकृतः मां दौत्ये अकृतकार्य्यं दृष्ट्वा सर्व्वे हसिष्यन्तीति भावः।

(ध) सहोक्तिमाह सहेति। यत्र सहार्थस्य बलात् सामर्थ्यात् एकं वस्तु द्वयोर्वाचकं स्यात् यदा यदि तत्र अतिशयोक्तिः मूलभूता कारणभूता भवेत् तदा सा सहोक्तिः।

(न) श्लेषभित्तिका श्लेषनिबन्धना अन्यथा अश्लेषा।

(प) सहेति। अत्र रागशब्दः द्वयोर्लौहित्यानुरागयोर्वाचकः। अतिशयोक्तिश्च भेदेऽप्यभेदरूपा।

अत्र रागपदे श्लेषः ।

"सह कुमुदकदम्बैः काममुल्लासयन्तः
सह घनतिमिरौघैर्धैर्य्यमुत्सारयन्तः ।
सह सरसिजषण्डैः स्वान्तमामीलयन्तः
प्रतिदिशममृताशोरंशवः सञ्चरन्ति" ॥ (फ)

इदं मम । अत्र उल्लासादीनां सम्बन्धभेदादेव भेदो न तु श्लिष्टतया ।

"सममेव नराधिपेन सा गुरुसम्मोहविलुप्तचेतना ।
अगमत् सह तैलविन्दुना तनुदीपार्चिरिव क्षितेस्तलम्" ॥ (ब)

इयञ्च मालयापि सम्भवति । तथोदाहृते "सह कुमुदकदम्बैः" इत्यादौ ।

"लक्ष्मणेन समं रामः काननं गहनं ययौ" इत्यादौ च अतिशयोक्तिमूलत्वाभावान्नायमलङ्कारः ।

## विनोक्तिर्यद्विनान्येन
## न साध्वन्यदसाधुवा ॥७०५॥ (भ)

---

(फ) सहेति । चन्द्रवर्णनमिदम् । अमृतांशो चन्द्रस्य अंशवः किरणाः कुमुदानां कदम्बैः समूहैः सह कामम् उल्लासयन्तः विकासयन्तः घनैः सान्द्रैः तिमिराणाम् अन्धकाराणाम् ओघैः समूहैश्च सह धैर्य्यं कामिजनानामिति शेषः उत्सारयन्तः विध्वंसयन्तः उद्दीपकत्वादिति भावः । सरसिजानां पद्मानां षण्डैः समूहैः सह स्वान्तं मनः आमीलयन्तः सङ्कोचयन्तः प्रतिदिशं दिशि दिशि सञ्चरन्ति । मालिनीवृत्तम् ।

(ब) सममिति । सा इन्दुमती गुरुणा महता सम्मोहेन विलुप्तं चेतनं यस्यास्तथाभूता सती तनुदीपार्चिः क्षीणा दीपशिखा तैलविन्दुना सहैव नराधिपेन अजेन सममेव क्षितेस्तलम् अगमत् । अत्र कार्य्यकारणपौर्वापर्य्यविपर्य्ययरूपातिशयोक्तिः ।

(भ) विनोक्तिमाह विनोक्तिरिति । अन्येन विना यत् न असाधु अशोभनं न भवति, तथा अन्येन विना अन्यत् यत् असाधु भवति सा विनोक्तिः ।

न असाधु अशोभनं न भवति । एवञ्च यद्यपि शोभनत्वे एव पर्य्यवसानं तथापि अशोभनत्वाभावमुखेन शोभनवचनस्यायमभिप्रायो यत् कस्यचिद्वर्णनीयस्याशोभनत्वं तत्परसन्निधेरेव दोषः । तस्य पुनः स्वभावतः शोभनत्वमेवेति । यथा ।

"विना जलदकालेन चन्द्रो निस्तन्द्रतां गतः ।
विना ग्रीष्मोष्मणा मञ्जुर्वनराजिरजायत" ॥ (म)

असाधु अशोभनम् । यथा ।

"अनुयान्त्या जनातीत कान्तं साधु त्वया कृतम् ।
का दिनश्रीर्विनार्केण ?" का निशा शशिना विना" ॥ (य)

"निरर्थकं जन्म गतं नलिन्या-
यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव
दृष्टा विनिद्रा नलिनी न येन" ॥ (र)

अत्र परस्परविनोक्तिभङ्ग्या चमत्कारातिशयः । विनाशब्दप्रयोगाभावेऽपि विनार्थविवक्षया विनोक्तिरेवायम् । एवं सहोक्तिरपि सहशब्दप्रयोगाभावेऽपि सहार्थविवक्षया भवतीति बोद्धव्यम् ।

---

(म) विनेति । चन्द्र जलदकालेन विना निस्तन्द्रता निर्मलता गत । ग्रीष्मोष्मणा विना वनराजि मञ्जुः मनोहारिणी अजायत । अत्र जलदकालापगमात् चन्द्रस्य तथा ग्रीष्मोष्मापगमात् वनराजेरशोभनत्वम् अपगतम् ।

(य) अनुयान्त्येति । जनातीत लोकातिशायिन कान्त प्रियम् अनुयान्त्या अनुगच्छन्त्या त्वया साधु सम्यक् कृतम् । तथाहि, अर्केण विना दिनश्रीः तथा शशिना विना निशा च का ? सीतां प्रति अनसूयाया अत्रिपत्न्या उक्तिरियम् ।

(र) निरर्थकमिति । नलिन्याः पद्मिन्या जन्म निरर्थकं गतं, यया नलिन्या तुहिनांशुबिम्बं चन्द्रबिम्बं न दृष्टम् । इन्दोश्चन्द्रस्यापि उत्पत्तिः निष्फलैव, येन इन्दुना विनिद्रा विकसिता नलिनी न दृष्टा । उपजातिवृत्तम् ।

समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः।
व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥

७०६॥ (ल)

अत्र समेन कार्य्येण प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः। यथा।

"व्याधूय यद्वसनमम्बुजलोचनाया-
वक्षोजयोः कनककुम्भविलासभाजोः।
आलिङ्गसि प्रसभमङ्गमशेषमस्या
धन्यस्त्वमेव मलयाचलगन्धवाह!॥ (व)

अत्र गन्धवाहे हठकामुकव्यवहारसमारोपः। लिङ्गसाम्येन यथा।

"असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः।
अनाक्रम्य जगत् कृत्स्नं नो सन्ध्यां भजते रविः॥" (श)

अत्र पुंस्त्रीलिङ्गत्वमात्रेण रविसन्ध्ययोर्नायकनायिका-व्यवहारः। विशेषणसाम्यन्तु श्लिष्टतया साधारण्येनौपम्य-गर्भत्वेन च त्रिधा। तत्र श्लिष्टतया यथा मम।

---

(ल) समासोक्तिमाह समासोक्तिरिति। समैः कार्य्यलिङ्गविशेषणैः यत्र प्रस्तुते अन्यस्य अप्रस्तुतस्य वस्तुनः विषयस्य व्यवहारसमारोपः सा समासोक्तिः।

(व) व्याधूयेति। हे मलयाचलगन्धवाह! यत् यस्मात् त्वम् अस्याः अम्बुजलोचनायाः पद्मनयनायाः कनककुम्भविलासभाजोः वक्षोजयोः स्तनयोः वसनम् अवधूय अपसार्य्य अशेषं समस्तम् अङ्गं प्रसभं बलात् आलिङ्गसि तस्मात् त्वमेव धन्यः। वसन्ततिलकं वृत्तम्।

(श) असमाप्तेति। असमाप्ता समाप्तिमप्राप्ता जिगीषा यस्य तादृशस्य मनस्विनः महानुभावस्य जिगीषोरित्यर्थः स्त्रीचिन्ता कान्ताभिलाषः का? रविः कृत्स्नं समग्रं जगत् अनाक्रम्य सन्ध्यां नो भजते।

"विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं
दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः ।
जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः
श्रयति हरित हन्त ! प्राचेतसीं तुहिनद्युतिः" ॥ (ष)

अत्र मुखरागादिशब्दानां श्लिष्टता । अत्र हि "तिमिरावृतिम्" इत्यत्र "तिमिरांशुकाम्" इति पाठे एकदेशस्य रूपणेऽपि समासोक्तिरेव न तु एकदेशविवर्त्ति रूपकम् । तत्र हि तिमिरांशुकयोः रूप्यरूपकभावो द्वयोरावरकत्वेन स्फुटसादृश्यतया परसाचिव्यमनपेक्ष्यापि स्वमात्रविश्रान्त इति न समासोक्तिबुद्धिं व्याहन्तुमीशः । यत्र तु रूप्यरूपकयोः सादृश्यमस्फुट तत्रैकदेशान्तररूपणं विना तदसङ्गतं स्यादित्यशाब्दमप्येकदेशान्तररूपणमाथमपेक्षत (स) एवेति । तत्रैकदेशविवर्त्तिरूपकमेव यथा ।

---

(ष) विकसितेति । हन्तेति खेदसूचकमव्ययम् । तुहिनद्युति. चन्द्रः पुरः अग्रत' रागस्य लौहित्यस्य अनुरागस्य च आसङ्गात् आवेशात विकसितमुखी प्रकाशितमुखीं प्रसन्नमुखीञ्च तथा गलन्ती निर्गच्छन्ती तिमिरमेव आवृतिः आवरण यस्या तथाभूता दिनकरस्य सूर्य्यस्य उपनायकस्य चेति ध्वनि करेण किरणेन हस्तेन च स्पृष्टाम् ऐन्द्री पूर्वां दिश निरीक्ष्य दृष्ट्वा जरठा परिणता या लवली तदाख्यफलविशेष. तद्वत् पाण्डुः छाया कान्तिर्यस्य तथाभूतं भृशम् अत्यर्थं कलुषान्तर' मलिनान्त करण. सन् प्राचेतसीं पश्चिमा हरित दिश श्रयति अवलम्बते । शिखरिणीवृत्तम् ।

(स) अत्रेति । अत्र विकसितमुखीमित्युदाहरणे रूप्यरूपकभाव' रूप्यम् आरोपविषय तिमिर रूपकम् आरोप्यमाणम् अंशुक तयोर्भाव' द्वयो: तिमिरांशुकयोरावरणत्वेन आच्छादकत्वेन परसाचिव्यम् अपरसाहाय्य वाक्यार्थपर्यालोचनसाहाय्यमित्यर्थ; अनपेक्ष्य अगृहीत्वापि स्वमात्रे स्वार्थे एव विश्रान्त' सादृश्यावबोधकतया स्वत सिद्ध इत्यर्थ इति हेतो: समासोक्तिबुद्धिं आहन्तुं खण्डयितुं न ईश. न शक्त. । यत्रेति । यत्र वाक्ये इति शेष. अस्फुटम् अस्पष्ट तत्र

"जस्स रणंतउरए करे कुणंतस्स मण्डलग्गलअम्।
रससंमुहीवि सहसा परंमुही होइ रिउसेणा" (३)॥ (छ)

अत्र रणान्तःपुरयोः सादृश्यमस्फुटमेव। क्वचिच्च यत्र स्फुट-सादृश्यानामपि बहूनां रूपणं शाब्दमेकदेशस्य चार्थं तत्रैक-देशविवर्त्ति रूपकमेव। रूपकप्रतीतिर्व्यापितया समासोक्ति-प्रतीतितिरोधायकत्वात्। ननु अस्ति रणान्तःपुरयोरपि सुख-सञ्चारतया स्फुटं सादृश्यमिति चेत् (च)। सत्यमुक्तम्। अस्त्येव किन्तु वाक्यार्थपर्य्यालोचनासापेक्षं न खलु निरपेक्षम्। मुखचन्द्रादेर्मनोहरत्वादिवत् रणान्तःपुरयोः स्वतः सुख-सञ्चारत्वाभावात्। साधारण्येन यथा।

"निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी।

---

(३) जस्स इति।
यस्य रणान्तःपुरे करे कुर्वाणस्य मण्डलाग्रलताम्।
रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥ इति संस्कृतम्।

---

एकदेशान्तरस्य रूपणं विना तत वाक्यम् असङ्गतम् अनुपपन्नम्। अशाब्दम् शब्दाप्रतिपाद्यम् आर्थम् अर्थबललभ्यम्।

(छ) यस्येति। रण एव अन्तःपुरं तत्र करे मण्डलाग्रलताम् असिलताम् अपरां नायिकामिति च ध्वनिः करे कुर्वतः यस्य रससम्मुखी उत्साहाभिमुखी अनुरागवती च रिपुसेना शत्रुबलं कान्ता चेति ध्वनिः सहसा पराङ्मुखी भवति।

(च) रूपकप्रतीतिरिति। व्यापितया बहुगामितया इत्यर्थः समासोक्ति-प्रतीतेः तिरोधायकत्वात् आवरकत्वात यथा लावण्यमधुभिः पूर्णमित्यादि। सुख-सञ्चारतयेति। यथा अन्तःपुरे सुखं सञ्चरति तथा रणेऽपीति भावः। निरपेक्षं काव्यार्थपर्य्यालोचननिरपेक्षमित्यर्थः। ततश्च बहूनां स्फुटसादृश्यानां सद्भावे तथा अस्फुटसादृश्यानां सद्भावे रूपणस्य अव्यापित्वेऽपि यदि एकदेशस्य रूपणं स्यात् तदा एकदेशविवर्त्तिरूपकमेवेति बोध्यम्।

(ज) निसर्गेति। निसर्गसौरभेण स्वभावसौगन्ध्येन उद्भ्रान्ताः ये भृङ्गा-

उदिते वासराधीशे स्मेराजनि सरोजिनी ॥" (क)

अत्र निसर्गेत्यादिविशेषणसाम्यात् सरोजिन्यां नायिकाव्यवहारप्रतीतौ स्त्रीमात्रगामिनः स्मेरत्वधर्मस्य समारोपः कारणम्। तेन विना विशेषणसाम्यमात्रेण नायिकाव्यवहारप्रतीतिरसम्भवात्। औपम्यगर्भत्वं पुनस्त्रिधा सम्भवति। उपमारूपकसङ्करगर्भत्वात्। अत्रोपमागर्भत्वे यथा।

"दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी।
केशपाशालिवृन्देन सुवेशा हरिणेक्षणा" ॥ (ख)

अत्र सुवेशत्ववशात् प्रथमं दन्तप्रभाः पुष्पाणीवेत्युपमागर्भत्वेन समासः। अनन्तरञ्च दन्तप्रभासदृशैः पुष्पैश्चितेत्यादिसमासान्तराश्रयेण समानविशेषणमाहात्म्याद्धरिणेक्षणाया लताव्यवहारप्रतीतिः। रूपकगर्भत्वे यथा।

"लावण्यमधुभिः पूर्णम्" इत्यादि। सङ्करगर्भत्वे यथा। "दन्तप्रभापुष्पचिता" इत्यादौ "सुवेशा" इत्यत्र पाठे ह्युपमारूपकसाधकाभावात् सङ्करसमाश्रयणम्। समासान्तरं पूर्ववत्। समासान्तरमहिम्ना लताप्रतीतिः। एषु च येषां मते

---

स्मेषा सङ्गीतशालिनी सरोजिनी पद्मिनी वासवाधीशे सूर्य्ये उदिते सति स्मेरा विकसिता सस्मिता च अजनि अभूत्।

(ख) दन्तेति। दन्तानां प्रभाः पुष्पाणीवेति दन्तप्रभापुष्पाणि तैः चिता व्याप्ता, पाणिः पल्लव इव पाणिपल्लवस्तेन शोभते इति पाणिपल्लवशोभिनी केशपाश अलिवृन्दमिव तेन उपलक्षिता सुवेशा सुष्ठु परिच्छदवती हरिणेक्षणा विभातीति शेष। लतापक्षे दन्तप्रभा इव पुष्पाणि तैश्चिता। पाणिरिव पल्लवः तेन शोभिनी, केशपाश इव अलिवृन्द तेन। अत्र सुवेशत्वधर्मस्य मुख्यतया उपमेये हरिणेक्षणाया वर्त्तनात् औपम्यगर्भत्वम्।

(ग) उपमारूपकेति। उपमासाधकस्य उपमेये मुख्यतया स्थितस्य धर्मस्य रूपकसाधकस्य उपमाने मुख्यतया स्थितस्य धर्मस्य बाधकस्य च उपमेयात्र न

उपमासङ्करयोरेकदेशविवर्त्तिता नास्ति तन्मते आद्यतृतीययोः समासोक्तिः। द्वितीयस्तु प्रकार एकदेशविवर्त्तिरूपकविषय एव। पर्य्यालोचने तु आद्ये प्रकारे एकदेशविवर्त्तिन्युपमैवाङ्गी-कर्त्तुमुचिता (ग)। अन्यथा।

"ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरप्यधिकं चकार"॥

इत्यत्र कथं शरदि नायिकाव्यवहारप्रतीतिः। नायिका-पयोधरेणार्द्रनखक्षताभशक्रचापधारणासम्भवात्। ननु अत्र "आर्द्रनखक्षताभम्" इत्यत्र स्थितमप्युपमानत्वं वस्तुपर्य्या-लोचनया ऐन्द्रे धनुषि सञ्चारणीयम्। यथा "दध्ना जुहो-तीति" इत्यादौ हवनस्यान्यथासिद्धेर्दधि सञ्चार्य्यते विधिः। एवं च इन्द्रचापाभमार्द्रनखक्षतं दधानेति प्रतीतिर्भविष्यतीति चेन्न। एवंविधनिर्वाहे कष्टसृष्टिकल्पनादेकदेशविवर्त्तिन्युप-माङ्गीकारस्यैव ज्यायस्त्वात्। अस्तु वा अत्र यथाकथञ्चित् समासोक्तिः। "नेत्रैरिवोत्पलैः पद्मैः" इत्यादौ च अन्यगत्य-

---

रूपक रूपकमेवात्र नोपमा इत्येवरूपस्य अभावादित्यर्थः। समासान्तर पूर्ववत् उपमापक्षे उपमितिसमासः रूपकपक्षे रूपकसमास यथा दन्तप्रभा पुष्पाणीव तथा दन्तप्रभा एव पुष्पाणि इत्यादि बोध्यम्। आद्यतृतीययो दन्तप्रभापुष्पचितेत्यादि-रूपे आद्ये उदाहरणे तृतीये अत्रैव सुवेशित्वत परीतेति पाठे न परिवर्त्तिते इत्यर्थः।

(घ) ऐन्द्रमिति। शरद्वर्णनमिदम्। शरत् पाण्डुपयोधरेण निर्वृष्टत्वात् सितजलधरेण आर्द्रम् अभिनव यत् नखक्षतं तस्येव आभा यस्य तादृशम् ऐन्द्रं धनुः शक्रचाप दधाना धारयन्ती सती सकलङ्कम् इन्दुं प्रसादयन्ती विकासयन्ती रवे सूर्य्यस्य अभ्यधिक तापं चकार। शरदि चन्द्रस्य उज्ज्वलत्व सूर्य्यस्य च उग्र-तापत्वं स्यादिति प्रसिद्धिरिति भावः। वस्तुपर्य्यालोचनया विषयानुशीलनेन। हवनस्य होमस्य अन्यथा अन्यप्रकारेण साय प्रातर्जुहोतीत्यादिविधिना सिद्धेः प्राप्तेः। दध्नेति। यथा अत्र दधिकरणत्वे विधिः सञ्चार्य्यते तथात्रापीति भावः।

सम्भवात् । किञ्च उपमायां व्यवहारप्रतीतेरभावात् कथं तदुपजीविकायाः समासोक्तेः प्रवेशः (घ) । यदाहुः ।

"व्यवहारोऽथवा तत्त्वं नौपम्ये यत् प्रतीयते ।
तन्नौपम्यसमासोक्तिरेकदेशोपमा स्फुटा" ॥ (ङ)

एवञ्च उपमारूपकयोरेकदेशविवर्त्तिताङ्गीकारे तन्मूलसङ्करेऽपि समासोक्तेरप्रवेशो न्यायसिद्ध एव तेनौपम्यगर्भविशेषणोत्थापितत्वं नास्या विषय इति विशेषणसाम्ये श्लिष्टविशेषणोत्थापिता साधारणविशेषणोत्थापिता चेति द्विधा । कार्य्यलिङ्गयोस्तुल्यत्वे च द्विविधेति चतुष्प्रकारा समासोक्तिः सर्वत्रैवात्र व्यवहारसमारोपः कारणम् (च) । स च क्वचिल्लौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः । शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपः । लौकिके वा शास्त्रीयवस्तुव्यवहारसमारोपः । शास्त्रीये वा लौकिकवस्तुव्यवहारसमारोप इति चतुर्द्धा । तत्र लौकिकवस्त्वपि रसादिभेदादनेकविधम् । शास्त्रीयमपि तर्कायुर्वेदज्योतिःशास्त्रादिप्रसिद्ध-

---

यथाकथञ्चिदिति । कष्टसृष्ट्या आर्द्रनखक्षते स्थितस्य उपमावाचकस्य आभाशब्दस्य ऐन्द्रे धनुषि सञ्चारणेनेति भावः । ननु अत्रापि सरःश्रिया सङ्गत्वाव्यवहारसमारोपेण समासोक्तिरस्तु का क्षतिरित्याशङ्क्य दूषयति किञ्चेति । तथा च यत्र व्यवहारसमारोपप्रतीतिः स्फुटा, तत्रैव समासोक्तिः न तु कष्टसृष्ट्या व्यवहारप्रतीत्यानयने इति भावः ।

(ङ) व्यवहार इति । यत् यस्मात् औपम्ये औपम्यगर्भविशेषणसाम्ये इत्यर्थः व्यवहारः साधर्म्यं वा तत्त्वं स्वरूपम् अप्रस्तुतस्येति शेषः न प्रतीयते न बुध्यते तत् तस्मात् औपम्यसमासोक्तिः औपम्यगर्भविशेषणसाम्योत्थापिता समासोक्तिर्न भवतीति शेषः, यतः सा स्फुटा सुव्यक्ता सर्वजनानुभवसिद्धा एकदेशोपमा एकदेशविवर्त्तिनी उपमेत्यर्थः ।

(च) तन्मूलसङ्करे उपमारूपकसङ्करे इत्यर्थः न्यायसिद्धः युक्तिसिद्धः व्यवहारसमारोपाभावादिति भावः ।

तयेति बहुप्रकारा समासोक्तिः। दिङ्मात्रं यथा "व्याधूय यद्वसनम्" इत्यादौ लौकिके वस्तुनि लौकिकस्य हठकामुकस्य व्यवहारादेः समारोपः।

"यैरेकरूपमखिलास्वपि वृत्तिषु त्वां
पश्यद्भिरव्ययमसङ्ख्यतया प्रवृत्तम्।
लोपः कृतः किल परत्वजुषो विभक्ते-
स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये"॥ (छ)

अत्र आगमशास्त्रप्रसिद्धे वस्तुनि व्याकरणप्रसिद्धवस्तुव्यवहारसमारोपः (ज)। एवमन्यत्र। रूपकेऽप्रकृतमात्मस्वरूपसन्निवेशेन प्रकृतस्य रूपमवच्छादयति। इह तु स्वावस्थासमारोपेणानवच्छादितस्वरूपमेव तं पूर्वावस्थातो विशेषयति (झ)। अत एव अत्र "व्यवहारसमारोपो न तु स्वरूपसमारोपः" इति वदन्ति। उपमाध्वनौ श्लेषे च विशेष्यस्यापि साम्यमिह तु विशेषणमात्रस्य अप्रस्तुतप्रशंसायां प्रस्तुतस्य गम्यत्वमिह तु अप्रस्तुतस्येति भेदः।

---

(छ) यैरिति। ईश्वरं प्रति कस्यचिदुक्तिरियम्। हे भगवन्! अखिलासु समग्रासु वृत्तिषु अवस्थासु पदप्रत्ययोगसमासादिषु च एकरूपम् रूपान्तरमलभमानमित्यर्थः। अव्ययम्, अविनाशिनम् असङ्ख्यतया सङ्ख्यातीततया प्रवृत्तं त्वाम् अव्ययशब्दञ्च पश्यद्भिः यैः जनैः परत्वजुषः त्वदन्यः कश्चिदस्तीत्येवरूपायाः इत्यर्थः परवर्त्तिन्याश्च विभक्तेः प्रत्ययस्य लोपः कृतः तैः तव लक्षणं स्वरूपं तत्त्वमित्यर्थः सूत्रञ्च कृतं निरूपितमिति ध्रुवमेव निश्चितमेव मन्ये जानामि। वसन्ततिलकं वृत्तम्।

(ज) आगमेति। आगमशास्त्रं वेदः तत्र प्रसिद्धे तस्मिन् वस्तुनि ब्रह्मणीति भावः व्याकरणशास्त्रप्रसिद्धस्य वस्तुनः अव्ययशब्दस्य इत्यर्थः व्यवहारसमारोपः।

(झ) रूपके इति। अप्रकृतम् उपमानम् आत्मस्वरूपस्य सन्निवेशेन आरोपेण प्रकृतस्य उपमेयस्य रूपम् अवच्छादयति आवृणोति। इह तु समासोक्तौ

**उक्तिर्विशेषणैः साभि-**
**प्रायैः परिकरो मतः ॥७०७॥ (ञ)**

यथा ।

"अङ्गराज ! सेनापते ! द्रोणोपहासिन् !
कर्ण ! रक्षैनं भीमाद् दुःशासनम्" । (ट)

**शब्दैः स्वभावादेकार्थैः**
**श्लेषोऽनेकार्थवाचनम् ॥७०८॥ (ठ)**

"स्वभावादेकार्थैः" इति शब्दश्लेषाद् व्यवच्छेदः । "वाचनम्" इति च ध्वनेः । उदाहरणम् ।

"प्रवर्त्तयन् क्रियाः साध्वीर्मालिन्यं हरितां हरन् ।
महसा भूयसा दीप्तो विराजति विभाकरः" ॥ (ड)

---

तु स्वावस्था साधर्म्य तस्या. समारोपेण त प्रकृत पूर्वावस्थातः प्रकृतावस्थामव च्छायेत्यर्थ विशिषयति उतकृष्टत्वेन ज्ञापयति ।

(ञ) परिकरमाह उक्तिरिति । साभिप्राये अभिप्रायव्यञ्जके विशेषणै उक्ति परिकर मत । अपुष्टार्थत्वदोषपरिहारेण अस्य प्राप्तावपि एकत्र बहूनामेव विशेषणानामुक्तौ वैचित्र्यातिशयदर्शनात् अस्योक्तिरिति ध्येयम् ।

(ट) अङ्गराजेति । भीमेन बध्यमान दुःशासन रक्षितुमशक्नुवन्त कर्ण प्रति अश्वत्थाम्न सोल्लुण्ठन वचनमिदम् । अङ्गाना देशभेदाना राजा अङ्गराज तत्सम्बुद्धौ । सेनापते । मा विहाय त्व सैनापत्ये अभिषिक्तोऽसीति भाव' द्रोणम् उपहसितवान् इति द्रोणोपहासी तत्सम्बुद्धौ, त्वम् आत्मगर्वेण द्रोण मत्पितरम् उपहसितवानसि । कर्ण ! एन दुःशासन भीमात वृकोदरहस्तात् रक्ष परित्रायस्व । अत्र विशेषणत्रयप्रभावात् कर्णस्य दुःशासनरक्षणम् अवश्यकर्त्तव्य प्रतीयते, तदक्षमत्वे तस्यातिशयलज्जेति बोध्यम् ।

(ठ) अर्थश्लेषमाह । शब्दैरिति । स्वभावात् एकार्थैः शब्दैः अनेकार्थाना वाचन प्रतिपादन सम्बन्धिभेदेनेति भाव श्लेष. ।

(ड) शब्दश्लेषादिति । शब्दश्लेषे हि स्वभावादेव शब्दाना भिन्नार्थतेति भाव: ध्वने. व्यङ्ग्यस्य व्यवच्छेद इत्यनेनान्वय' । प्रवर्त्तयन्निति । साध्वी. क्रियाः

अत्र प्रकरणादिनियमाभावात् द्वावपि राजसूर्य्यौ वाच्यौ।

क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः।
कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम्॥
अप्रस्तुतात् प्रस्तुतञ्चेद्गम्यते पञ्चधा ततः।
अप्रस्तुतप्रशंसा स्यात् ॥७०६॥ (ढ)

क्रमेण उदाहरणम्।

"पादाहतं यदुत्थाय मूर्द्धानमधिरोहति।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः॥" (ण)

अत्र अस्मदपेक्षया रजोऽपि वरमिति विशेषे प्रस्तुते सामान्यमभिहितम् (त)।

"स्रगियं यदि जीवितापहा
हृदये किं निहिता न हन्ति माम्।

---

वैदिककर्म्माणि प्रवर्त्तयन् प्रजाभिः स्वयञ्च कारयन् हरितां दिशां मालिन्यं हरन् शिक्षाप्रदानादिना अन्धकारध्वंसेन चेति भावः भूयसा अतिमहता महसा तेजसा प्रभावेण उष्णकिरणेन च दीप्तः विभां प्रकाशं करोतीति विभाकरः राजा सूर्य्यश्च विराजति शोभते।

(ढ) अप्रस्तुतप्रशंसामाह क्वचिदिति। क्वचित् सामान्यात् साधारणात् अप्रस्तुतात् विशेषः प्रस्तुतः क्वचित् विशेषतः विशेषात् अप्रस्तुतात् सामान्यं प्रस्तुतं क्वचित् अप्रस्तुतात् कार्य्यात् प्रस्तुतं निमित्तं क्वचित् अप्रस्तुतात् निमित्तात् प्रस्तुतं कार्य्यं क्वचित् समात् अप्रस्तुतात् समं प्रस्तुतं गम्यते चेत् ततः तदा पञ्चधा पञ्चविधा उक्तरीत्येति भावः अप्रस्तुतप्रशंसा स्यात्।

(ण) पादाहतमिति। यत् रजः पादाहतं सत् उत्थाय मूर्द्धानम् अधिरोहति आक्रामति, तत् रजः अपमानेऽपि स्वस्थात् देहिनः वरं मनाक् प्रियमित्यर्थः, "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक् प्रिये" इत्यमरः।

(त) सामान्यमिति। देहिसामान्यमित्यर्थः।

(थ) स्रगिति। दिव्यस्रजि उरसि पतितामेव स्वप्रियामिन्दुमतीं गतासुं

विषमप्यमृतं क्वचिद्भवेत्
अमृतं वा विषमीश्वरेच्छया" ॥ (थ)

अत्रेश्वरेच्छया क्वाचिदहितकारिणोऽपि हितकारित्वं हितकारिणोऽप्यहितकारित्वमिति सामान्ये प्रस्तुते विशेषोऽभिहितः। एवं च अत्राप्रस्तुतप्रशंसामूलोऽर्थान्तरन्यासः। दृष्टान्ते प्रख्यातमेव वस्तु प्रतिबिम्बत्वेनोपादीयते। इह तु विषामृतयोरमृतविषीभावस्याप्रसिद्धेर्न तस्य सद्भावः (द)।

"इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा।
कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त। शिखिना बर्हाः सगर्हा इव'॥ (ध)

अत्र सम्भाव्यमानेभ्यः (ध) इन्द्वादिगताञ्जनलिप्तत्वादिभ्यः कार्य्येभ्यो वदनादिगतसौन्दर्य्यविशेषरूपं प्रस्तुतं कारणं प्रतीयते।

---

सवलोक्य अजस्य विलापवचनमिदम्। इयं स्रक् माल्यं यदि जीवितम् अपहन्तीति जीवितापहा जीवनहारिणीत्यर्थः। तदा हृदये निहिता सती मामिति शेषः मां किं कथं न हन्ति? मन्ये स्रजो न दोषः ममैवेश्वरप्रतिकूलतेत्याह विषमिति। क्वचित् ईश्वरेच्छया विषमपि अमृतम्, अमृतं वा विषं भवेत्।

(द) प्रख्यातमेवेति प्रसिद्धमेवेत्यर्थः। तस्य दृष्टान्तस्य।

(ध) इन्दुरिति। हन्तेति हर्षसूचकमव्ययम्। सीतायाः सौन्दर्य्यवर्णनमिदम्। सीतायाः पुरतः अग्रतः इन्दुः चन्द्रः अञ्जनेन लिप्त इव मालिन्यपूर्ण इव न राजते इति भावः, मृगीणां दृष्टिः जडिता इव सङ्कुचिता इव, विद्रुमदलं प्रवालपल्लवः प्रम्लानः प्रकर्षेण म्लानिं गतः अरुणिमा यस्य तादृशमिव, हेम्नः काञ्चनस्य प्रभा श्यामेव कृष्णवर्णेव, कोकिलवधूनां कोकिलानां कण्ठेषु कलया कार्कश्यं प्रस्तुतमिव कोकिलारवः कर्कशः प्रतीयते इति भावः। तथा शिखिनां मयूराणां बर्हाः सगर्हा इव निन्दिता इव। शार्दूलविक्रीडितं वृत्तम्।

(ध) सम्भाव्यमानेभ्यः उत्प्रेक्षणीयेभ्यः।

"गच्छामीति मयोक्तया मृगदृशा निःश्वासमुद्रेकिणं
त्यक्त्वा तिर्य्यगवेक्ष्य वाष्पकलुषेणैकेन मा चक्षुषा ।
अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यता-
मित्थं स्नेहविवर्द्धितो मृगशिशुः सोत्प्रासमाभाषितः" ॥ (न)

अत्र कस्यचिदगमनरूपे कार्य्ये कारणमभिहितम (प)। तुल्ये प्रस्तुते तुल्याभिधाने (फ) च द्विधा श्लेषमूला सादृश्यमात्रमूला च। श्लेषमूलापि समासोक्तिवद्विशेषणमात्रश्लेषे श्लेषवद्विशेष्यस्यापि श्लेषे भवतीति द्विधा ।

क्रमेण यथा ।

"सहकारः सदामोदो वसन्तश्रीसमन्वितः ।
समुज्ज्वलरुचिः श्रीमान् प्रभूतोत्कलिकाकुलः" ॥ (ब)

अत्र विशेषणमात्रश्लेषवशादप्रस्तुतात् सहकारात् कस्यचित् प्रस्तुतस्य नायकस्य प्रतीतिः ।

---

(न) गच्छामीति । विदेशगमने कृतनिश्चयमपि अगच्छन्तं प्रति तत्कारणं जिज्ञासुं सखायं प्रति कस्यचिदुक्तिरियम् । गच्छामि इति मया उक्तया मृगदृशा उद्रेकिणं दीर्घं निःश्वासं त्यक्त्वा वाष्पकलुषेण अश्रुपूर्णेन एकेन चक्षुषा मा तिर्य्यक् वक्रम् अवेक्ष्य अद्य मदर्पितं प्रेम त्वया प्रियसखीवृन्दे बध्यताम् इत्थम् अनेन प्रकारेण स्नेहेन विवर्द्धितः प्रतिपालितः मृगशिशुः सोत्प्रासं सस्मितम् आभाषितः कथितः । शार्दूलविक्रीडितं वृत्तम् ।

(प) अत्रेति । अगमनरूपे कार्य्ये जिज्ञासिते इति शेषः कारणं नायिकायाः मरणाभिप्रायव्यञ्जकं वाक्यरूपमिति भावः ।

(फ) तुल्याभिधाने इति । तुल्यस्य अप्रस्तुतस्य अभिधाने इत्यर्थः ।

(ब) सहकार इति । सहकारः आम्रः सदा आमोदः सौरभम् आनन्दश्च यस्य तथाभूतः, वसन्तस्य श्रिया पुष्पपल्लवादिजनितया इति भावः समन्वितः युक्तः वसन्तकालोचितवेशसमन्वितश्च समुज्ज्वला रुचिः कान्तिः अन्यत्र समुज्ज्वले शृङ्गारे रुचिः अभिलाषो यस्य तथोक्तः श्रीमान् सुदर्शनः तथा प्रभूताभिः बह्वीभिः उत्कलिकाभिः उद्गतकलिकाभिः अन्यत्र उत्कण्ठाभिः आकुलः ।

"पुंस्त्वादपि प्रविचलेद् यदि यद्यधोऽपि
यायाद् यदि प्रणयने न महानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन" ॥ (भ)

अत्र पुरुषोत्तमपदेन विशेष्येणापि श्लिष्टेन प्रचुरप्रसिद्ध्या प्रथमं विष्णुरेव बोध्यते। तेन वर्णनीयः कश्चित् पुरुषः प्रतीयते (म)। सादृश्यमात्रमूला यथा।

"एकः कपोतपोतः शतशः श्येना: क्षुधाभिधावन्ति।
अम्बरमावृतिशून्यं हरि ! हरि ! शरणं विधेः करुणा" ॥ (य)

अत्र कपोतादप्रस्तुतात् कश्चित् प्रस्तुतः प्रतीयते (र)। इयं क्वचित् वैधर्म्येणापि भवति। यथा।

"धन्या. खलु वने वाताः कह्लारस्पर्शशीतलाः।

---

(भ) पुंस्त्वादिति। पुंस्त्वात् पुरुषत्वात् प्रविचलेत् भ्रश्येत यदि स्त्री भवेद् यदीत्यर्थः, अधोऽपि पातालमपि यायात् गच्छेत यदि, प्रणयने याच्ञायां न महान् अपि स्यात् खर्वः स्यात् यदि, तदपि तथापि विश्वं जगत् अभ्युद्धरेत् केनापि पुरुषोत्तमेन इति ईदृशी एवम्प्रकारा इयं दिक् नीतिः प्रकटिता। वसन्ततिलकं वृत्तम्।

(म) अत्रेति। प्रचुरप्रसिद्ध्या बहुशः ख्यात्या विष्णुरेवेति तेन हि दैत्यहृतामृतहरणात् मोहिनीमूर्त्तिपरिग्रहः कृतः। महार्णवनिमग्नां धरामुद्धर्त्तुं वराहरूपेण पातालं प्रविष्टम्। बलिराजहृतं च लोकमुद्धर्त्तुं वामनरूपेण याच्ञापि कृता इति द्रष्टव्यम्।

(य) एक इति। एकः असहाय इत्यर्थः कपोतपोतः पारावतशावकः शतशः बहुशः श्येनाः घातकाः पक्षिविशेषाः क्षुधा अभिधावन्ति एनं प्रतीति शेषः, अम्बरम् आकाशम् आवृतिशून्यं निरावरणम्, हरि हरि खेदसूचकमव्ययं विधेः करुणा शरणं रक्षित्री। विधातैवास्येदानीं रक्षणक्षम इति भावः।

(र) अत्रेति। प्रस्तुतः आपन्नः बहुशत्रुपरिवृत इति भावः।

(ल) धन्या इति। दशरथस्योक्तिरियम्। कह्लाराणां रक्तोत्पलानां स्पर्शेन

रामभिन्दीवरश्याम ये स्पृशन्त्यनिवारिताः" ॥ (ल)

अत्र वाता धन्या अहमधन्य इति वैधर्म्येण प्रस्तुतः प्रतीयते। वाच्यस्य सम्भवासम्भवोभयरूपतया त्रिप्रकारेयम् (व)। तत्र सम्भवे उक्तोदाहरणान्येव। असम्भवे यथा।

"कोकिलोऽहं भवान् काकः समानः कालिमावयोः।

अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः" ॥ (श)

अत्र काककोकिलयोर्वाक्योपवाक्यं प्रस्तुताध्यारोपणं विनाऽसम्भवि (ष)। उभयरूपत्वे यथा।

"अन्तश्छिद्राणि भूयांसि कण्टका वहवो वहिः।

कथं कमलनालस्य मा भूवन् भङ्गुरा गुणाः" ॥ (स)

अत्र प्रस्तुतस्य कस्यचिदध्यारोपणं विना कमलनालान्तश्छिद्राणां गुणभङ्गुरीकरणे हेतुत्वमसम्भवि, अन्येषान्तु सम्भवीत्युभयरूपत्वम् (ह)। अस्याश्च समासोक्तिवद् व्यवहार-

---

शीतला वने वाता वनवायव धन्या खलु, ये वाता अनिवारिता सन्त इन्दीवरश्याम राम स्पृशन्ति।

(व) अत्रेति। प्रस्तुत सम इति शेष। वाच्यस्येति। क्वचित् वाच्यस्य सम्भवरूपत्व, क्वचित् असम्भवरूपत्वं क्वचिच्च उभयरूपत्वमिति भाव।

(श) कोकिल इति। अह कोकिल, भवान् काक, आवयो कालिमा कृष्णवर्णत्व समान। पुन किन्तु काकली तच्चो मधुरध्वनि तस्या कोविदा' विचक्षणा अन्तर प्रभेदम आवयोरिति शेष कथयिष्यन्ति।

(ष) अत्रेति। वाक्योपवाक्यम् उक्तिप्रत्युक्ती। प्रस्तुतस्य कस्यचित् जनस्य अध्यारोपणम् आरोपणम्।

(स) अन्तरिति। कमलनालस्य पद्ममृणालस्य गुणा सूत्राणीत्यर्थ कथ भङ्गुरा छिदुरा मा भूवन् न भवेयु, यत भूयांसि बहूनि अन्तश्छिद्राणि अभ्यन्तरविवराणि तथा बहि बहव कण्टका।

(ह) अत्रेति। अन्येषा कण्टकानामित्यर्थ। वस्तुध्वनेरिति। तत्र हि

समारोपप्राणत्वाच्छब्दशक्तिमूलाद् वस्तुध्वनेर्भेदः, उपमाध्वनावप्रस्तुतस्य व्यङ्ग्यत्वम् । एवं समासोक्तौ श्लेषेऽपि द्वयोरपि वाच्यत्वम् ।

**उक्ता व्याजस्तुतिः पुनः ।**

**निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः**

**॥७१०॥ (च)**

निन्दया स्तुतेर्गम्यत्वे व्याजेन स्तुतिरिति व्युत्पत्त्या व्याजस्तुतिः, स्तुत्या निन्दाया गम्यत्वे व्याजरूपा स्तुतिः । क्रमेण यथा ।

"स्तनयुगमुक्ताभरणाः कण्टककलिताङ्गयष्टयो देव ।।
त्वयि कुपितेऽपि प्रागिव विश्वस्ता रिपुस्त्रियो जाताः" ॥ (क)

इद मम ।

"व्याजस्तुतिस्तव पयोद ! मयोदितेयं
यज्जीवनाय जगतस्तव जीवनानि ।

---

व्यवहारसमारोपो नास्तीति भाव एव समासोक्तौ अप्रस्तुतस्य व्यङ्ग्यत्वमिति शेष, इह तु प्रस्तुतस्य इति भाव ।

(च) व्याजस्तुतिमाह उक्तेति । वाच्याभ्याम् अभिधेयाभ्या निन्दास्तुतिभ्यां स्तुतिनिन्दयोर्गम्यत्वे व्याजस्तुतिरुक्ता ।

(क) स्तनेति । राजविषयिणी व्याजस्तुतिरियम् । हे देव ! त्वयि कुपितेऽपि रिपूणा स्त्रिय नार्य्यः स्तनयुगेषु मुक्ताभरण यासामिति निन्दा, स्तनयुगेषु मुक्त त्यक्तम् आभरण याभिरिति स्तुति तथोक्ता कण्टकेन रोमाञ्चेन पतिसङ्गजनितसात्त्विकभावविशेषेण कलिता आक्रान्ता अङ्गयष्टयो यासामिति निन्दा, कण्टकेन क्षुद्रशत्रुणापि कलिता आक्रान्ता अङ्गयष्टिर्यासामिति स्तुति, तथाभूता अतएव प्रागिव अकुपिते इव विश्वस्ता निःशङ्का इति निन्दा, विधवा इति स्तुति जाता, "विश्वस्ता विधवा समे" इत्यमरः । अत्र निन्दया स्तुतेर्गम्यत्वम् ।

(ख) व्याजेति । हे पयोद ! मेघ ! तव जीवनानि जलानि जगतः

स्तोत्रन्तु ते महदिदं घन ! धर्मराज-
साहाय्यमर्जयसि यत् पथिकान् निहत्य" ॥ (ख)

पर्य्यायोक्तं यदा भङ्ग्या
गम्यमेवाभिधीयते ॥७११॥ (ग)

उदाहरणम्।

"स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः।
सावज्ञं पारिजातस्य मञ्जर्य्यो यस्य सैनिकैः।" ॥ (घ)

अत्र हयग्रीवेण स्वर्गो विजित इति प्रस्तुतमेव गम्यं कारणरूपं वैचित्र्यविशेषप्रतिपत्तये सैन्यस्य पारिजातमञ्जरी-सावज्ञस्पर्शनरूपकार्य्यद्वारेणाभिहितम्। न चेदं कार्य्यात् कारणप्रतीतिरूपा अप्रस्तुतप्रशंसा। तत्र कार्य्यस्य अप्रस्तुतत्वात्। इह तु वर्णनीयस्य प्रभावातिशयबोधकत्वेन कार्य्यमपि कारणवत् प्रस्तुतम्। एवञ्च।

"अनेन पर्य्यासयताश्रुविन्दून्
मुक्ताफलस्थूलतमान् स्तनेषु।

---

जीवनाय भवन्तीति यत् इयं तव व्याजस्तुति' छलरूपा स्तुति, हे घन। इदन्तु ते तव महत् स्तोत्रं यत् पथिकान् निहत्य धर्मराजस्य यमस्य साहाय्यम् आनुकूल्यम् अर्जयसि। वसन्ततिलक वृत्तम्। अत्र स्तुत्या धर्मराजसाहाय्यार्जन-रूपया निन्दाया गम्यत्वम्।

(ग) पर्य्यायोक्तमाह पर्य्यायोक्तमिति। यदा भङ्ग्या भङ्गीक्रमेण गम्यमेव अभिधीयते अभिधेयवत् प्रकाश्यते तत् पर्य्यायोक्तम्।

(घ) स्पृष्टा इति। यस्य हयग्रीवस्य सैनिकैः शच्या इन्द्राण्या' केशानां सम्भोगे विन्यासे लालिता, प्रयुक्ताः नन्दने तदाख्योपवने पारिजातस्य ताः प्रसिद्धाः मञ्जर्य्यः सावज्ञं सावहेलं स्पृष्टाः।

(ङ) अनेनेति। अनेन राज्ञा शत्रु विलासिनीनां स्तनेषु मुक्ताफलानीव च

प्रत्यर्पिताः शत्रुविलासिनीना-
माक्षेपसूत्रेण विनैव हाराः" ॥ (ङ)

अत्र वर्णनीयस्य राज्ञो गम्यभूतशत्रुमारणरूपकारणवत् कार्य्यभूतं तथाविधशत्रुस्त्रीक्रन्दनजलमपि प्रभावातिशय-बोधकत्वेन वर्णनार्हमिति पर्य्यायोक्तमेव ।

"राजन् ! राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे ! भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ? ।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवडभावेकैकमाभाषते" ॥ (च)

अत्र प्रस्थानोद्यत भवन्तं श्रुत्वा सहसैवारयः पलायिता इति कारणं प्रस्तुतम् । "कार्य्यमपि वर्णनार्हत्वेन प्रस्तुतम्" इति" केचित् । अन्ये तु "राजशुकवृत्तान्तेन न कोऽपि प्रस्तुतस्य प्रभावो बोध्यते इति अप्रस्तुतप्रशंसैव" इत्याहुः ।

**सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।**

---

स्थूलतमान् अतिस्थूलान् अश्रुविन्दून् पर्य्यासयता पातयता सता आक्षेपसूत्रेण गुम्फनसूत्रेण विनैव हाराः प्रत्यर्पिताः । उपजातिवृत्तम् ।

(च) राजन्निति । पलायितेषु राजपरिवारेषु प्रासादस्थितस्य पालित-शुकस्य राजादिचित्रपटेषु राजादिबुद्ध्या आवेदनमिदम् । हे राजन् ! राजसुता मा न पाठयति, देव्य महिष्य अपि किं कथ तूष्णीं स्थिताः ? हे कुब्जे ! मा भोजय, कुमारस्य राजपुत्रस्य सचिवैः सहचरैः किम् अद्यापि इदानीमपि न भुज्यते ? इत्थमनेन प्रकारेण तव अरिभवने अध्वगैः पथिकैः पञ्जरात् मुक्तः राज-शुकः शून्यवडभौ चित्रस्थान् राजादीन् अवलोक्य एकैकम् आभाषते कथयति । शार्दूलविक्रीडित वृत्तम् ।

(छ) अर्थान्तरन्यासमाह सामान्यमिति । साधर्म्येण समानधर्मवत्तया इतरेण वैधर्म्येण वा विशेषेण सामान्य वा तेन सामान्येन विशेषो वा, कार्य्येण

**कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते।**
**साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः॥**

**७१२॥ (छ)**

क्रमेण उदाहरणम्।

"बृहत्सहायः कार्य्यान्तं चोदीयानपि गच्छति।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा"॥ (ज)

अत्र द्वितीयार्द्धगतेन विशेषेणार्थेन प्रथमार्द्धगतः सामान्योऽर्थः सोपपत्तिकः क्रियते।

"यावदर्थपदां वाचमेवमादाय माधवः।
विरराम महीयांसः प्रकृत्या मितभाषिणः"॥ (झ)

"पृथ्वि! स्थिरा भव, भुजङ्गम। धारयैनां
त्वं कूर्मराज! तदिदं द्वितयं दधीथाः।

---

कार्य्यञ्च, कार्य्येण इदं कारणञ्च यदि समर्थ्यते दृढीक्रियते असौ ततः उक्तरीत्या अष्टधा अष्टप्रकारः अर्थान्तरन्यासः।

(ज) बृहदिति। चोदीयान् क्षुद्रतरोऽपि जनः बृहन् महान् सहायो यस्य तथाभूतः सन् कार्य्यान्तं कार्य्यपारं गच्छति प्राप्नोति सिद्धकार्य्यो भवतीत्यर्थः। तथाहि, नगापगा नगनिर्झरिणी महानद्या गङ्गया सम्भूय मिलित्वा अम्भोधिं समुद्रम् अभ्येति प्राप्नोति।

(झ) यावदिति। माधवः कृष्णः यावन्तः अर्थाः यावदर्थम्। यावदर्थं पदानि सुप्तिङन्तानि यस्याः तथोक्ताम् एवम् उक्तप्रकारां वाचम् आदाय गृहीत्वा उक्त्वेत्यर्थः, विरराम निवृत्ते। तथाहि, महीयांसः अतिमहान्तः जनाः प्रकृत्या स्वभावेन मितभाषिणः भवन्तीति शेषः। अत्र सामान्येन प्रथमार्द्धगतरूपो विशेषः सोपपत्तिकः कृतः।

(ञ) पृथ्वीति। लक्ष्मणस्योक्तिरियम्। हे पृथ्वि। त्वं स्थिरा भव, हे भुजङ्गम! अनन्त। त्वम् एनां पृथ्वीं धारय, हे कूर्मराज। त्वम् इदं द्वितयं पृथ्वी

दिक्कुञ्जराः ! कुरुत तत्त्रितये दिधीर्षाम्
आर्यः करोति हरकार्मुकमाततज्यम्" ॥ (ञ)

अत्र कारणभूतं हरकार्मुकाततज्यीकरणं पृथ्वीस्थैर्य्यादेः कार्य्यस्य समर्थकम् ।

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्" । (ट)

इत्यादौ सम्पद्वरणं कार्य्यं सहसा विधानाभावस्य विमृश्यकारित्वरूपस्य कारणस्य समर्थकम् । एतानि साधर्म्ये उदाहरणानि । वैधर्म्ये यथा ।

"इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः" ॥ (ठ)

अत्र सामान्यं विशेषस्य समर्थकम् । "सहसा विदधीत" इत्यत्र सहसाविधानाभावस्यापत्प्रदत्वं विरुद्धं कार्य्यं समर्थकम् । एवंमन्यत् ।

**हेतोर्वाक्यपदार्थत्वे**
**काव्यलिङ्गं निगद्यते ॥७१३॥ (ड)**

---

भुजङ्गमयोर्द्वयमित्यर्थः दधीथाः, हे दिक्कुञ्जराः ! दिग्गजाः ! तेषां पृथ्व्यादीनां त्रये दिधीर्षां धारणेच्छां धारणयत्नमित्यर्थः कुरुत । आर्य्यः रामः हरस्य शम्भोः कार्मुकम् आततज्यं विस्तृतमौर्विकं करोति । वसन्ततिलकं वृत्तम् ।

(ट) सहसेति । सहसा अविविच्येत्यर्थः क्रियां न विदधीत न कुर्य्यात्, अविवेकः अविमृश्यकारी जनः परमम् अत्यर्थम् आपदां पदं स्थानम् । सम्पदः गुणलुब्धाः गुणानुरक्ताः सत्यः विमृश्यकारिणं जनं स्वयं वृणते हि आश्रयन्त्येव ।

(ठ) इत्थमिति । इत्थम् अनेन प्रकारेण आराध्यमानः सेव्यमानोऽपि स तारकः भुवनत्रयं क्लिश्नाति तापयति । दुर्जनः दुष्टो जनः प्रत्यपकारेण शाम्येत् शान्तिं गच्छेत्, उपकारेण न शाम्येदिति शेषः प्रत्युत विकुर्य्यादिति भावः ।

(ड) काव्यलिङ्गमाह हेतोरिति । हेतोः कारणस्य वाक्यपदार्थत्वे वाक्यार्थपदार्थयोः कारणत्वे इत्यर्थः, काव्यलिङ्गं निगद्यते ।

तत्र वाक्यार्थता यथा।

"यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्
मेघैरन्तरितः प्रिये। तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते"॥ (ढ)

अत्र चतुर्थपादे पादत्रयवाक्यानि हेतवः। पदार्थगता यथा मम।

"त्वद्वाजिराजिनिर्धूतधूलिपटलपङ्किलाम्।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः"॥ (ण)

अत्र द्वितीयार्द्धे प्रथमार्द्धमेकपदं हेतुः। अनेकपदं यथा मम।

"पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम्।
देव! त्रिपथगात्मानं गोपयत्युग्रमूर्द्धनि"॥ (त)

---

(ढ) यदिति। रावणेन सीताहरणानन्तरं वर्षाकाले सीताविरहिणः रामस्य उक्तिः। हे प्रिये। तव नेत्रयोः समाना कान्तिर्यस्य तथोक्तं यत् इन्दीवरं नीलोत्पलं तत् सलिले मग्नं वर्षाप्रभावादिति भावः। तव मुखस्य छाया कान्तिम् अनुकरोतीति तथाभूतः शशी चन्द्रः मेघैरन्तरितः आच्छादितः। येऽपि तव गमनानुकारिणी गतिर्येषां तथोक्ताः तेऽपि राजहंसा गताः मानसमिति शेषः। वर्षासु भूयस्त्वजलानामाविलत्वात् तत्पानस्य हंसानां पीडाकरत्वात् ते निर्मलजलं मानसं सरो यान्तीति प्रसिद्धिः। अतः दैवेन तव सादृश्येन विनोदमात्रमपि सन्तापनिवृत्तिरपि न क्षम्यते न सह्यते।

(ण) त्वदिति। राजस्तुतिरियम्। हरः शम्भुः भूरिभारभिया बहुभारभयेन शिरसा तव वाजिराजिभिः अश्वसमूहैः निर्धूतं क्षिप्तं यत् धूलिपटलं रजोराशिः तेन पङ्किलां सञ्जातपङ्कां गङ्गां न धत्ते।

(त) पश्यन्तीति। हे देव। त्रिपथगा मार्गत्रयमात्रवाहिनीत्यर्थः गङ्गा तव दानजलवाहिनीं नदीमित्यर्थः असङ्ख्यपथगां बहुमार्गवाहिनीं पश्यन्ती सती

इह केचित् वाक्यार्थगतेन काव्यलिङ्गेनैव गतार्थतया कार्य्यकारणभावेऽर्थान्तरन्यासं नाद्रियन्ते, तदयुक्तम्। तथाहि अत्र हेतुस्त्रिधा भवति, ज्ञापको निष्पादकः समर्थकश्चेति। तत्र ज्ञापकोऽनुमानस्य विषयः, निष्पादकः काव्यलिङ्गस्य, समर्थकोऽर्थान्तरन्यासस्येति पृथगेव कार्य्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात्। तथाहि "यत्त्वन्नेत्रेत्यादौ" चतुर्थपादवाक्यम्। अन्यथा साकाङ्क्षतयाऽसमञ्जसमेव स्यादिति पादत्रयगतवाक्यं निष्पादकत्वेनापेक्ष्यते (थ)। "सहसा विदधीत" इत्यादौ तु।

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः।
वदामि भवतस्तत्त्वं न विधेया कदाचन" ॥ (द)

इत्यादिवदुपदेशमात्रेणापि निराकाङ्क्षतया स्वतोऽपि गतार्थं सहसाविधानाभावं समर्थनं सोपपत्तिकमेव करोतीति पृथगेव कार्य्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात्।

"न धत्ते शिरसा गङ्गां भूरिभारभिया हरः।
त्वद्वाजिराजिनिर्धूतधूलिभिः पङ्किला हि सा" ॥

---

आत्मानम् उग्रस्य हरस्य भीषणपुरुषस्येति ध्वनि मूर्द्धनि शिरसि गोपायति रक्षति लज्जयेति शेषः। प्रथमार्द्धगतमनेकपदं हेतुः।

(थ) अथेति। अन्यथा प्रथमद्वितीयतृतीयपादवाक्यानि विनेत्यर्थः. असमञ्जसम् असङ्गतम्।

(द) परापकारेति। भवतः तत्त्वं सत्यं वदामि, कदाचन परापकारनिरतैः दुर्जनैः सह सङ्गतिः न विधेया न कर्त्तव्या इति। निराकाङ्क्षतया कारणनिरपेक्षतया स्वतोऽपि आत्मनैव गतार्थं कृतार्थम्। नार्थान्तराद्धं निष्पादकत्वेन अपेक्ष्यते इति भावः।

इत्यत्र हिशब्दोपादानेन पङ्किलत्वादितिवद्धेतुत्वस्य स्फुटतया नायमलङ्कारः, वैचित्र्यस्यैवालङ्कारत्वात्।

अनुमानन्तु विच्छित्त्या
ज्ञानं साध्यस्य साधनात् ॥७१४॥ (ध)

यथा।

"जानीमहेऽस्या हृदि सारसाक्ष्या-
विराजतेऽन्तः प्रियवक्त्रचन्द्रः।
तत्कान्तिजालैः प्रसृतैस्तदङ्गे-
ष्वापाण्डुता कुड्मलताक्षिपद्मे" ॥ (न)

अत्र रूपकवशाद्विच्छित्तिः। यथा वा।

"यत्र पतत्यबलानां दृष्टिर्निशिताः पतन्ति तत्र शराः।
तच्चापरोपितशरो धावत्यासां पुरः स्मरो मन्ये" ॥ (प)

---

(ध) अनुमानमाह अनुमानमिति। विच्छित्त्या वैचित्र्येण साधनात् साध्यस्य कार्य्यस्य ज्ञानम् अनुमानम्।

(न) जानीमहे इति। अस्याः सारसाक्ष्याः हृदि अन्तः हृदयमध्ये प्रियस्य वक्त्रचन्द्रः मुखचन्द्रः विराजते इति जानीमहे मन्यामहे। तथाहि, प्रसृतैः विसृतैः तस्य हृदिस्थितस्य वक्त्रचन्द्रस्य कान्तिजालैः तदङ्गेषु तस्याः अङ्गेषु आपाण्डुता तथा अक्षिपद्मे नयनकमले कुड्मलता जातेति शेषः। उपजातिर्वृत्तम्। अत्र अङ्गानाम् आपाण्डुतया अक्षिपद्मस्य च मुकुलीभावेन लिङ्गेन साध्यस्य वक्त्रचन्द्रस्य हृन्मध्ये विराजनस्य ज्ञानम्।

(प) यत्रेति। यत्र अबलानां कामिनीनां दृष्टिः पतति तत्रैव निशिताः शराः कामस्येति शेषः पतन्ति। तत् तस्मात् स्मरः कामः चापे धनुषि रोपितशरो येन तथाभूतः सन् आसाम् अबलानां पुरः अग्रतः धावति इति मन्ये। अत्र अबलादृष्टिपतने कामशरपतनरूपात् लिङ्गात् साध्यस्य स्मरस्य धनुरारोपितशरत्वेन पुरोधावनरूपस्य ज्ञानम्।

अत्र कविप्रौढ़ोक्तिवशाद्विच्छित्तिः। उत्प्रेक्षायामनिश्चित-तया प्रतीतिरिह तु निश्चिततयेत्युभयोर्भेदः।

अभेदेनाभिधाहेतु-
र्हेतोर्हेतुमता सह ॥७१५॥ (फ)

यथा मम "तारुण्यस्य विलासः" इत्यत्र वशीकरण-हेतुर्नायिकावशीकरणत्वेनोक्तः। विलासह्रासयोस्तु अध्यवसा-यमूलोऽयमलङ्कारः (ब)।

अनुकूलं प्रातिकूल्य-
मनुकूलानुबन्धि चेत् ॥७१६॥ (भ)

यथा।

"कुपितासि यदा तन्वि! निधाय करजक्षतम्।
बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा" ॥ (म)

---

(फ) हेत्वलङ्कारमाह अभेदेनेति। हेतुमता कार्य्येण सह हेतो कारणस्य अभेदेन अभिधा उक्ति हेतु। केचित्तु हेतुमता सह हेतोरभेदेन अभेदारोपण-मित्यर्थः, अभेदे तृतीया। अभिधाहेतुनामालङ्कारम् इत्याहु।

(ब) तारुण्यस्येति। प्रकरणवशात् नायिकानाम। विलास विजृम्भ-णम्। ह्रासः बिकास। विलासह्रासयोरिति अध्यवसाय आहार्य्याभेदाव-बोध एव मूल यस्य तादृशोऽयम् अलङ्कार एतयो कार्य्यकारणसम्बन्धरूपला-भावादिति भावः।

(भ) अनुकूलालङ्कारमाह अनुकूलमिति। प्रातिकूल्य प्रतिकूलभाव अनु-कूलानुबन्धि आनुकूल्यविधायकं चेत् तदा अनुकूल नामालङ्कार।

(म) कुपितेति। हे तन्वि! यदा यदि कुपिता असि, तदा करजक्षत नखक्षत निधाय भुजपाशाभ्याम् अस्य कान्तस्य कण्ठ दृढ बधान। अत्र करजक्षत भुजबन्धनञ्च प्रतिकूलमपि नायकस्य आनुकूल्यकरम्। प्राचीनैरय मलङ्कारो नादृत इत्याशयेनाह अस्येति।

अस्य च विच्छित्तिविशेषस्य सर्वालङ्कारविलक्षणत्वेन स्फुरणात् पृथगलङ्कारत्वमेव न्याय्यम्।

**वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये।**
**निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा॥**

**७१७॥ (य)**

अत्र वक्ष्यमाणविषये क्वचित् सर्वस्यापि सामान्यतः सूचितस्य निषेधः क्वचिदंशोक्तावंशान्तरे निषेध इति द्वौ भेदौ, उक्तविषये च क्वचिद्वस्तुस्वरूपस्य निषेधः क्वचिद्वस्तुकथनस्येति द्वावित्याक्षेपस्य चत्वारो भेदाः। क्रमेण यथा।

"स्मरशरशतविधुराया भणामि सख्याः कृते किमपि।
क्षणमिह विश्राम्य सखे। निर्दयहृदयस्य किं वदाम्यथवा"॥(र)

अत्र सख्या विरहस्य सामान्यतः सूचितस्य वक्ष्यमाणविशेषे निषेधः।

"तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम्।
हन्त! नितान्तमिदानीम् आः! किं हतजल्पितैरथवा"॥ (ल)

---

(य) आक्षेपालङ्कारमाह वस्तुन इति। वक्तुमिष्टस्य विवक्षितस्य वस्तुन विषयस्य विशेषप्रतिपत्तये य निषेधाभास निषेधप्रकाश स आक्षेप.। स च द्विधा वक्ष्यमाणग', उक्तगश्चेति।

(र) स्मरेति। नायक प्रति नायिकाप्रेरितायाः सख्या उक्तिरियम्। हे सखे! स्मरस्य कामस्य शरशतै शरशतप्रहारैरित्यर्थ विधुराया कातराया सख्या. कृते निमित्त किमपि भणामि कथयामि, इह क्षण विश्राम्य तिष्ठ इत्यर्थ, अथवा निर्दयहृदयस्य तव कि वदामि? न किमपि वक्तुमुचितं त्वदग्रे इति भाव। अत्र वक्ष्यमाणगत आक्षेप।

(ल) तवेति। नायक प्रति दूत्या उक्तिरियम्। हरिणाक्षी तव विरहे नवमालिका दलिता विकसिता निरीक्ष्य, हन्तेति खेदसूचकमव्ययम्,

अत्र मरिष्यतीत्यंशो नोक्तः।

"बालअ! णाहं दूती तस्स पिओसि त्ति ण मह वावारो।
सा मरइ तुज्झ अअसो एअं धम्मक्खरं भणिम" (५) ॥ (व)

अत्र दूतीत्यस्य वस्तुनो निषेधः।

"विरहे तव तन्वङ्गी कथं चपयतु चपाम्।
दारुणव्यवसायस्य पुरस्ते भणितेन किम्?॥ (श)

अत्र कथनस्यैव निषेधः। प्रथमोदाहरणे सख्या अवश्यम्भाविमरणमिति विशेषः प्रतीयते। द्वितीयेऽशक्यवक्तव्यत्वादि। तृतीये दूतीत्वे यथार्थवादित्वम्। चतुर्थे दुःखस्यातिशयः। न च अयं विहितनिषेधः। अत्र निषेधाभासत्वात् (ष)।

---

(५) बालक! नाहं दूती तस्याः प्रियोऽसीति न महान् व्यापारः।
सा म्रियते तवायश एतद् धर्माक्षरं भणामि ॥ इति संस्कृतम्।

---

इदानीं न्तितान्तम् आः। अथवा हतजल्पिते अत्यन्तानिष्टत्वात् अशक्यवचनैरित्यर्थ किम्?

(व) बालकेति। नायकं प्रति दूत्या उक्तिरियम्। हे बालक! अविदग्ध इत्यर्थः नाहं दूती नाहं मिथ्या वदामीत्यर्थः। तस्यास्तव कान्तायाः प्रियः असि इति हेतोः महान् व्यापारः उद्यमः न, त्वदर्थं प्रयासो नेत्यर्थः सा तव कान्ता म्रियते चेत् तव अयशः अकीर्त्तिः एतत् धर्माक्षरं सत्यवचनं भणामि।

(श) विरहे इति। दूत्या उक्तिरियम्। तव विरहे तन्वङ्गी कृशाङ्गी कथं चपां रात्रिं चपयतु यापयतु रात्रियापनमशक्यमिति भावः, अथवा दारुणव्यवसायस्य निष्ठुरक्रियस्य तव पुरतः अग्रतः भणितेन उक्तेन किम्? उक्तिर्निरर्थकेति भावः।

(ष) चतुर्थे इति। चतुर्थोदाहरणे दुःखस्य नायिकाया इति शेषः। न

**अनिष्टस्य तथार्थस्य**
**विध्याभासः परो मतः॥ ७१८॥ (स)**

तथेति पूर्ववद्विशेषप्रतिपत्तये। यथा।

"गच्छ गच्छसि चेत् कान्त! पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्"॥ (ह)

अत्रानिष्टत्वाद्गमनस्य विधिः प्रस्खलद्रूपो निषेधे पर्य्यवस्यति (च)। विशेषस्य गमनस्यात्यन्तपरिहार्य्यत्वरूपः प्रतीयते।

**विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते।**
**उक्तानुक्तनिमित्तत्वाद् द्विधा सा परिकीर्त्तिता॥**
**७१९॥ (क)**

विना कारणमुपनिबध्यमानोऽपि कार्य्योदयः किञ्चिदन्यत्

---

चेति। विहितनिषेध वास्तवनिषेध कथनस्येति शेषः तथात्वे दूत्या आगमनस्य निष्प्रयोजकत्वात्। निषेधाभासस्यैव वैचित्र्याधायकत्वादिति बोध्यम्।

(स) प्रकारान्तरेणाक्षेपमाह अनिष्टस्येति। अनिष्टस्य अयस्य विषयस्य तथा विशेषप्रतिपत्तये इत्यर्थं विध्याभास विधिरूपेण प्रकाश, पर अन्य, आक्षेपो मत।

(ह) गच्छेति। हे कान्त। गच्छसि चेत् गच्छ। ते तव पन्थानः शिवा शुभदा, सन्तु भवन्तु। यत्र भवान् गत, ममापि तत्रैव जन्म भूयात्।

(च) अत्रेति। प्रस्खलत् असङ्गच्छत् रूप यस्य तथाविध पर्य्यवस्यति परिणमति।

(क) विभावनामाह विभावनेति। हेतु कारणं विना यत कार्य्यस्य उत्पत्ति, असौ विभावना उच्यते। सा उक्तनिमित्ता अनुक्तनिमित्ता चेति द्विधा परिकीर्त्तिता।

कारणमपेच्यैव भवितुं युक्तः। तच्च कारणान्तरं क्वचिदुक्तं क्वचिदनुक्तमिति द्विधा। यथा।

"अनायासकृशं मध्यमशङ्कतरले दृशौ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुवः" ॥ (ख)

अत्र वयोरूप निमित्तमुक्तम्। अत्रैव "वपुर्भाति मृगीदृशः" इति पाठेऽनुक्तम्।

सति हेतौ फलाभावे
विशेषोक्तिस्तथा द्विधा ॥ ७२० ॥ (ग)

तथेत्युक्तानुक्तनिमित्तत्वात्। तत्रोक्तनिमित्ता यथा।
"धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः" ॥ (घ)

अत्र महामहिमशालित्वं निमित्तमुक्तम्। अत्रैव चतुर्थपादे "कियन्तः सन्ति भूतले" इति पाठे त्वनुक्तम्। अचिन्त्यनिमित्तत्वं च अनुक्तनिमित्तस्यैव भेद इति पृथक् नोक्तम्। यथा।

---

(ख) अनायासेति। वयसि यौवने सुभ्रुवः नायिकाया मध्यम् अनायासम् आयासरहितम् अथच कृशं, दृशौ नेत्रे अशङ्के शङ्कारहिते अथच तरले चञ्चले, तथा वपुः शरीरम् अभूषणम् अनलङ्कारम् अथच मनोहारि भवतीति शेषः। अत्र कृशत्वे हेतुमायासः, तारल्ये हेतुः शङ्का, मनोहारित्वे हेतुः भूषणं विना कार्य्यस्य कृशत्वस्य, तारल्यस्य, मनोहारित्वस्य चोत्पत्तिः।

(ग) विशेषोक्तिमाह सतीति। हेतौ सति फलस्य कार्य्यस्याभावः विशेषोक्तिः। सा च तथा पूर्व्ववत् उक्तानुक्तनिमित्तत्वादित्यर्थ द्विधा।

(घ) धनिन इति। स्पष्टम्। अत्र उन्मादस्य हेतोर्धनस्य चाञ्चल्यस्य हेतोर्यौवनस्य प्रमादस्य हेतौ प्रभुत्वस्य सत्त्वेऽपि उन्मादादीनां फलानामभावः।

"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरताऽपि तनुं यस्य शम्भुना न हृतं बलम्" ॥ (ङ)

अत्र तनुहरणेऽपि बलाहरणे निमित्तमचिन्त्यम् । इह च कार्य्याभावः कार्य्यविरुद्धसद्भावमुखेनापि निबध्यते । विभावनायामपि कारणाभावः कारणविरुद्धसद्भावमुखेनापि । एवञ्च "यः कौमारहरः स एव हि वरः" इत्यादेरुत्कण्ठाकारणविरुद्धस्य निबन्धनाद् विभावना । "यः कौमारहरः" इत्यादेः कारणस्य च कार्य्यविरुद्धाया उत्कण्ठाया निबन्धनाद्विशेषोक्तिः । एवञ्चात्र विभावनाविशेषोक्त्योः सङ्करः । शुद्धोदाहरणन्तु मृग्यम् (च) ।

**जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ।**
**क्रिया क्रियाद्रव्याभ्यां यद् द्रव्यं द्रव्येण वा मिथः ।**
**विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः ॥**
**७२१ ॥ (छ)**

---

(ङ) स इति । स, कुसुमायुध एक एकक इत्यर्थः त्रीणि जगन्ति जयति । यस्य तनुं हरता भस्मीकुर्वतापि शम्भुना बलं न हृतम् । अत्र तनुहरणरूपहेतुसत्त्वेऽपि बलहरणरूपस्य कार्य्यस्य अभावः ।

(च) उत्कण्ठाकारणविरुद्धस्येति । उत्कण्ठायाः कारणं पत्याद्यभावः तस्य विरुद्धस्य पत्यादिसद्भावस्येत्यर्थः निबन्धनात् रचनात् । कारणस्येति । कारणस्य उत्कण्ठाद्यभावकारणस्य पत्यादिसद्भावस्य कार्य्यम् उत्कण्ठाभावः तद्विरुद्धाया तद्विपरीतायाः । शुद्धोदाहरणं केवलविभावनाविशेषोक्तिविषयमुदाहरणमित्यर्थः ।

(छ) विरोधालङ्कारमाह जातिरिति । जातिः गोत्वादि जात्याद्यैः, चतुर्भिः जातिगुणक्रियाद्रव्यैरित्यर्थः, गुणः शुक्लादिः गुणादिभिः त्रिभिः गुणक्रियाद्रव्यैरित्यर्थः, क्रिया पाकादिः क्रियाद्रव्याभ्यां तथा द्रव्यम् एकव्यक्तिवाचकः शब्दः

क्रमेण यथा ।

"तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः ।
हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः॥(ज)

सन्ततमुषलासङ्गात् बहुतरगृहकर्मघटनया नृपते ! ।
द्विजपत्नीना कठिनाः सति भवति कराः सरोजसुकुमाराः॥(झ)

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ? ॥ (ञ)

वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः ।
राकाविभावरीजानिर्विषज्वालाकुलोऽभवत् ॥ (ट)

---

इत्यर्थ द्रव्येण मिथः परस्पर यत् विरुद्धमिव भासेत असौ दशाकृतिः उक्तरीत्या दशविध विरोध । आपाततो विरोधवत् भासन विरोधालङ्कार इति फलितार्थ ।

(ज) तवेति । दूत्या नायक प्रत्युक्तिरियम् । तव विरहे अस्या मलयमरुत दवानल. दावाग्नि, शशिरुच चन्द्रमरीचय अपि तथा शीतला इत्यपिशब्दार्थ । सोष्माण उष्णा इत्यर्थ' अलिरुत भ्रमरस्वनोऽपि हृदय भिन्ते विध्यति, नलिनीदलमपि पद्मिनीपत्रमपि निदाघरवि' ग्रीष्मसूर्यः ।

(झ) सन्ततेति । हे नृपते । भवति राजनि सति विद्यमाने इत्यर्थ सन्तत निरन्तर यः मुषलेन आसङ्ग ससर्ग तस्मात् तथा बहुतराणा गृहकर्मणा घटनया अनुष्ठानेन कठिना' किणाङ्किता इति भाव द्विजपत्नीना ब्राह्मणीना करा सरोजवत् कमलवत् सुकुमारा कोमला जाता, तव दानशक्तिप्रभावात् ब्राह्मणाना कष्टकरवृत्तित्वव्यपगमादिति भाव । अत्र काठिन्य गुण, तस्य सौकुमार्य्येण सह विरोध आपाततो भासते, पर राज्ञो दानशक्त्या समाधानम् ।

(ञ) अजस्येति । ब्रह्मस्तुतिरियम् । हे देव । को जन अजस्य जन्मरहितस्य अथच जन्म गृह्णतः, निरीहस्य निश्चेष्टस्य अथच हता द्विषो येन तादृशस्य, स्वपत निद्राणस्य अथच जागरूकस्य तव याथार्थ्यं तत्त्व वेद जानाति ?

(ट) वल्लभोत्सङ्गेनेति । वल्लभस्य कान्तस्य उत्सङ्ग क्रोड तेन विना तत्रोपवेशनेन विनेत्यर्थः हरिणचक्षुष हरिणेक्षणाया कान्ताया राकाविभावरीजानि पौर्णमासीनिशाचन्द्रः विषस्य ज्वालया आकुलः आकुलताजनक इत्यर्थः

नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम्।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे" ॥ (ठ)

"त्वद्वाजिराजीत्यादि" "वल्लभोत्सङ्गेत्यादि" श्लोके चतुर्थपादे "मध्यन्दिनदिनाधिपः" इति पाठे द्रव्ययोर्विरोधः। अत्र "तव विरहे" इत्यादौ पवनादीनां बहुव्यक्तिवाचकत्वाज्जातिशब्दाना दावानलोष्णहृदयभेदनसूर्य्यैर्जातिगुणक्रियाद्रव्यरूपैरन्योन्य विरोधो मुखत आभासते। विरहहेतुकत्वात् समाधानम् (ड)। अत्र "अजस्य" इत्यादावजत्वादिगुणस्य ग्रहणातिक्रियया विरोधः, भगवतः प्रभावस्यातिशयित्वात्तु समाधानम्। "त्वद्वाजीत्यादौ" "हरोऽपि शिरसा गङ्गां न धत्ते" इति विरोधः। त्वद्वाजीत्यादिकविप्रौढोक्त्या तु समाधानम्। स्पष्टमन्यत्। विभावनाया कारणाभावेनोपनिबध्यमानत्वात् कार्य्यमेव बाध्यत्वेन प्रतीयते, विशेषोक्तौ च कार्य्याभावेन कारणमेव। इह तु अन्योऽन्य द्वयोरपि बाध्यत्वमिति भेदः।

---

अभवत्। आकुलत्व गुण. चन्द्ररूपद्रव्यवाचिना आपातत विरुद्धवत् प्रतीयते, विरहहेतुकत्वात् तु समाधानम्।

(ठ) नयनेति। नयनयुगलस्य आसेचनकम् अतितृप्तिकर, तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शने इत्यमर'। मानसवृत्त्या मनःकल्पनयापि दुष्प्रापं लब्धुमशक्य' मदिराक्ष्या इदं रूप मे हृदय मदयति उल्लासयति दर्शनेनेति भाव, दुनोति तापयति च अप्राप्त्या इति भाव। अत्र मदन क्रिया तापनक्रियया विरुद्धेव प्रतिभाति, पूर्वरागनिबन्धनात् तु समाधानम्।

(ड) त्वद्वाजीति। व्याख्यातं प्राक्। अत्र गङ्गाधरोऽपि गङ्गा न धारयतीति गङ्गाधररूपद्रव्य' क्रियया आवरणरूपया विरुद्धमिवापातत. प्रतीयते, राजस्तुतिपरत्वात् तु समाधानम्।

**कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिः॥**

७२२॥(ढ)

"सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम्।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयम्
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम्"॥ (ण)

अस्याश्चापवादत्वादेकदेशस्थयोर्विरोधे विरोधालङ्कारः। (त)

**गुणौ क्रिये वा यत् स्यातां विरुद्धे हेतुकार्य्ययोः।**
**यद्वाऽऽरब्धस्य वैफल्यमनर्थस्य च सम्भवः॥**

---

(ढ) असङ्गतिमाह कार्य्येति। कार्य्यकारणयो भिन्नदेशतया कार्य्यकारणयो समदेशवर्त्तित्व नियमः तदन्यथात्वे इत्यर्थे असङ्गति.।

(ण) सेति। सखाय प्रति कस्यचित् नायिकाविरहिण उक्तिरियम्। सा कान्ता बाला मुग्धा, वयम् अप्रगल्भमनस कार्य्याकार्य्याविधारणाक्षमचेतसः। तस्या मौग्ध्येन मत्सम्भोगपराङ्मुखत्वं युक्त मम तु तत्सम्भोगलालसत्वेऽपि तत्करणे अनभिमुखत्वमसङ्गतमिति भाव। सा स्त्री वय कातरा सभया कामभयार्त्ता इत्यर्थः, स्त्रीणामेव कातरत्व स्वभाव न तु पुंसामिति भाव। सा पीनोन्नतिमत् पीनमुन्नतञ्चेत्यर्थ पयोधरयुगं धत्ते धारयति, वय सखेदा श्रान्ता। सा गुरुणा दुर्भरेण जघनस्थलेन आक्रान्ता अभिभूता, वय गन्तुं चलितु न शक्ताः कामार्त्ततया किमपि कर्त्तुं न समर्था इति भाव। तस्मात् अन्यजनाश्रिते तत्कान्तारूपजनाश्रिते दोषे वयम् अपटवः इतिकर्त्तव्यमूढा जाता स्म इति अद्भुतम् आश्चर्य्यम्। शार्दूलविक्रीडितं वृत्तम्। अत्र अप्रगल्भमनस्त्वादिकं कार्य्यं नायकनिष्ठ कारणन्तु बालत्वादिकं नायिकानिष्ठमिति कार्य्यकारणयोर्भिन्नदेशत्वम्।

(त) अस्या इति। अस्याः असङ्गतेः अपवादत्वात् विशेषत्वात्। एकदेशस्थयोर्विरोधे विरोधालङ्कारः भिन्नदेशयोस्तथात्वे असङ्गतिरिति भाव.।

(थ) विषममाह गुणाविति। हेतुकार्य्ययोः विरुद्धौ गुणौ वा विरुद्धे

विरूपयोः सङ्घटना या च तद्विषमं मतम् ॥
७२३॥ (थ)

क्रमेण यथा ।

"सद्यः करस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु-
यशस्त्रिलोकाभरणं प्रसूते" ॥ (द)

अत्र कारणरूपासिलतायाः "कारणगुणा हि कार्य्यगुण-मारभन्ते" इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः । (ध)

"आनन्दममन्दमिमं कुवलयदललोचने ! ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे" ॥ (न)

अत्रानन्दजनकस्त्रीरूपकारणात्तापजनकविरहोत्पत्तिः ।

---

क्रिया यत् स्यात् तथा यत्र आरब्धस्य प्रक्रान्तस्य कर्मणः वैफल्यं निष्फलत्वम् अनर्थस्य अनिष्टस्य च सम्भवः, या च विरूपयोः विरुद्धयोः सङ्घटना सम्मिलनम् तत् विषमं मतम् ।

(द) सद्य इति । यस्य तमालनीला कृपाणलेखा खड्गयष्टिरित्यर्थः, रणे रणे प्रतिसंग्रामं करस्पर्शम् अवाप्य शरदिन्दुः शरच्चन्द्रः तद्वत् पाण्डु शुभ्रं त्रिलोकाभरणं सर्वगामित्वेन त्रिभुवनादृतमिति भावः । यशः सद्यः प्रसूते जनयति चित्रम् आश्चर्य्यमेतदिति शेषः । उपजातिवृत्तम् ।

(ध) अत्रेति । अत्र कारणरूपासिलताया हेतोरसिलताया इत्यर्थः विरुद्धो गुणः कार्य्यस्य यशसः शुक्लता, कार्य्यस्य च शुक्लयशसः विरुद्धो गुणः कारणस्य कृपाणस्य तमालनीलत्वम् ।

(न) आनन्देति । हे कुवलयदल नीलोत्पलपत्रं तद्वत् लोचने यस्याः तत्सम्बुद्धौ । त्वम् इदम् अमन्दं महान्तम् आनन्दं, ददासि, किन्तु त्वयैव जनितः उत्पादितः विरहः मे मम शरीरं तापयतितराम् अतिशयेन तापयति । आर्य्यावृत्तम् । अत्र हेतुरानन्दयित्री स्त्री तत्कार्य्यस्य विरहस्य तापजनकत्वमिति हेतोः कार्य्यस्य विरुद्धा क्रिया ।

"अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया ।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः" ॥ (प)

अत्र केवलं काङ्क्षितधनलाभो नाभूत् प्रत्युत क्षारवारिभिर्वदनपूरणम् ।

"क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता ।
नियतं प्रतिकूलवर्त्तिनो वत ! धातुश्चरितं सुदुःसहम्" ॥ (फ)

अत्र वनराजश्रियोर्विरूपयोः सङ्घटना । इदं मम ।

यथा वा ।

"विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा" ॥ (ब)

---

(प) अयमिति । अयम् अम्भोधि समुद्र रत्नानामाकर इति हेतो धनाशया धनप्राप्तिलालसया असेवि सेवित मयेति शेष । किन्तु धन दूरे अस्तु, प्रत्युत वदन क्षारवारिभि लवणजलै अपूरि पूरितम् ।

(फ) क्वेति । तरूणा वल्कानि त्वच. भूषणानि यत्र तादृश वन क्व. महेन्द्रवन्दिता देवेन्द्रादृता नृपलक्ष्मी राजश्रीश्च क्व, क्वद्वय महदन्तरमनयो सूचयति । वत खेदे, प्रतिकूलवर्त्तिन विरुद्धस्य धातु दैवस्य चरित नियत निश्चित सुदु सहम् ।

(ब) विपुलेनेति । युगक्षये कल्पान्ते सागरशयस्य समुद्रनिलयस्य यस्य कृष्णस्य विपुलेन कुक्षिणा उदरेण भुवनानि जगन्ति पपिरे पीतानि, स एकतमया पुरस्त्रिया नगरवासिन्या कामिन्या मदविभ्रमेण असकलया असम्पूर्णया कुटिलयेत्यर्थ एकया दृशा नेत्रेण पुन पपे पीत । मञ्जुभाषिणीवृत्त, सजसा जगौ च यदि मञ्जुभाषिणीति लक्षणात् । अत्र एकत्र सर्वजगत्पायित्वम् एकनार्य्यैकनेत्रपीतत्वञ्च विरुद्ध सङ्घटितम् ।

समं स्यादानुरूप्येण
श्लाघा योग्यस्य वस्तुनः ॥७२४॥ (भ)

यथा।

"शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्याऽवतीर्णा।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः." ॥ (म)

विचित्रं यद्विरुद्धस्य
कृतिरिष्टफलाय चेत् ॥७२५॥ (य)

यथा।

"प्रणमत्युन्नतिहेतोर्जीवनहेतोर्विमुञ्चति प्राणान्।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः" ॥ (र)

---

(भ) सममाह सममिति। योग्यसमागमेन आनुरूप्येण योग्यस्य वस्तुनः विषयस्य श्लाघा समं स्यात।

(म) शशिनमिति। इन्दुमत्या अजे स्वयंवृते पौराणामुक्तिः। इयं कौमुदी शशिनं मेघमुक्तं मेघावरणशून्यम् उपगता, जह्नुकन्या जाह्नवी अनुरूपं स्वसदृशं जलनिधिम् अवतीर्णा प्रविष्टा, समगुणयोः तुल्यगुणयोरजेन्दुमत्योर्योगेन मिलनेन प्रीतिः येषां तथाभूताः पौराः पुरवासिनः तत्र स्वयंवरस्थले नृपाणाम् अन्येषां स्वयंवरागतानामिति शेषः श्रवणकटु दुःश्रवम् इति इत्थम् एकवाक्यम् विवव्रुः प्रकटयामासुः ऊचुरित्यर्थः। मालिनीवृत्तम्।

(य) विचित्रमाह विचित्रमिति। विरुद्धस्य विपरीतस्य कृतिः करणम् इष्टफलाय अभिमतफलसाधनाय चेत् भवति तत् विचित्रम्।

(र) प्रणमतीति। सेवकात् भृत्यात् अन्यः को मूढः उन्नतिहेतोः प्रणमति जीवितहेतोः प्राणान् विमुञ्चति, तथा सुखहेतोः दुःखीयति? न कोऽपीत्यर्थः। अत्र उन्नतिरूपस्य नतिविरुद्धस्य फलस्य लाभाय उन्नतिविरुद्धस्य प्रणतिरूपकार्य्यस्य करणम्। एवमन्यत्रापि।

**आश्रयाश्रयिणोरेक-**

**स्याधिक्येऽधिकमुच्यते ॥७२६॥ (ल)**

आश्रयाधिक्ये यथा।

"किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र।

अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि" ॥ (व)

आश्रिताधिक्ये यथा।

"युगान्तकालप्रतिसंहृतात्मनो-

जगन्ति यस्यां सविकाशमासत।

तनौ ममुस्तत्र न कैटभद्विष-

स्तपोधनाभ्यागमसम्भवा मुदः" ॥ (श)

**अन्योन्यमुभयोरेक-**

**क्रियायाः करणं मिथः ॥७२७॥ (ष)**

---

(ल) अधिकमाह। आश्रयाश्रयिणोराधाराधेययो. एकस्य आधिक्ये अधिकम् उच्यते।

(व) किमधिकमिति। अस्य वारिधे समुद्रस्य अधिक महिमान महत्त्व किं ब्रूम ? यत्र हरिनारायण कुक्षौ जठरे भुवनानि निक्षिप्य अज्ञात एव कुत्रेति केनाप्यलक्ष्यमाण इव्यर्थ शेते। अत्राश्रयस्य वारिधेराधिक्यम्।

(श) युगान्तेति। युगान्तकाले कल्पान्तसमये प्रतिसंहृत सङ्कुचित आत्मा येन तादृशस्य कैटभद्विष कृष्णस्य यस्या तनौ शरीरे जगन्ति सविकाशम् असङ्कीर्णमिति यावत् यथा तथा आसत तिष्ठन्ति स्म तत्र तनौ तपोधनस्य नारदस्य अभ्यागमेन समागमेन सम्भवा समुत्पन्ना' मुद हर्षा न ममु. न मान्ति स्म। वंशस्थविल वृत्तम्। अत आश्रितस्य आनन्दस्याधिक्यम्।

(ष) अन्योन्यमाह अन्योन्यमिति। उभयोः मिथः परस्परम् एकक्रियाया. करणम् अन्योन्यम्।

यथा ।

"त्वया सा शोभते तन्वी तया त्वमपि शोभसे ।
रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी" ॥ (स)

**यदाधेयमनाधारमेकञ्चानेकगोचरम् ।**
**किञ्चित् प्रकुर्वतः कार्य्यमशक्यस्येतरस्य वा ॥**
**कार्य्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः॥७२८॥(ह)**

क्रमेण यथा ।

"दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमपि कवयो न ते वन्द्याः" ॥ (च)

"कानने सरिदुद्देशे गिरीणामपि कन्दरे ।
पश्यन्त्यन्तकसङ्काश त्वामेकं रिपव पुरः ॥" (क)

---

(स) त्वयेति । सा तन्वी कृशाङ्गी त्वया शोभते, त्वमपि तया कृशाङ्ग्या शोभसे । चन्द्र रजन्या शोभते निशीथिनो रजनो च चन्द्रेण शोभते इति शेष ।

(ह) विशेषमाह यदिति । यत् अनाधारम् आधारवर्जितम् आधेय यच्च एक वस्तु अनेकगोचरं बहुस्थानवर्त्ति, यदा किञ्चित् किमपि कार्य्यं प्रकुर्वत जनस्य अशक्यस्य इतरस्य शक्यस्य वा कार्य्यस्य दैवात् करण विशेष स च तत तस्मात् उक्तनयात् त्रिविध ।

(च) दिवमिति । दिव स्वर्गम् उपयातानामपि मृतानामपीत्यर्थ, येषा कवीनाम् अनल्पा बहव गुणाना गणा यासु ता गिर वाच आकल्पम् आप्रलयं जगन्ति रमयन्ति तोषयन्ति ते कवय कथमपि न वन्द्या, नार्चनीया, ? अपि तु वन्द्या एवेत्यर्थः । अत्राधेय कविवाक्य तेषा स्वर्गगमनादनाधारम् ।

(क) कानने इति । राजस्तुतिरियम् । रिपव शत्रव एकं त्वा कानने वने सरिता नदीनाम् उद्देशे अवकाशे गिरीणा पर्वताना कन्दरे गुहायामपि पुर अग्रत; अन्तकसङ्काश यमसदृश पश्यन्ति । अत्र एकस्य राज्ञ, बहुगोचरत्वम् ।

"गृहिणी सचिवः सखी मिथः
प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम् ?" ॥ (ख)
इति रघुवंशे ।

**व्याघातः स तु केनापि वस्तु येन यथा कृतम् ।**
**तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा ॥७२९॥**

यथा । "दृशा दग्धं मनसिजम्" इत्यादि । (ग)

**सौकर्य्येण च कार्य्यस्य**
**विरुद्धं क्रियते यदि ॥७३०॥ (घ)**

व्याघात इत्येव ।

"इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः
समागन्ता कान्ते ! मृदुरसि न चायाससहना ।

---

(ख) गृहिणीति । अजविलापोऽयम् । हे प्रिये । इत्यध्याहार्य्यम् । त्वां हरता करुणाविमुखेन निर्दयेन मृत्युना मे किं न हृतं वद तथाहि, त्वं मे गृहिणीति गृहिणी हृता, त्वं मे सचिवः मन्त्रीति मन्त्री हृतः, त्वं मे मिथः सखी विजनसहचरीति सखी हृता, त्वं मे ललिते मनोहरे कलाविधौ नृत्यगीताद्यनुष्ठाने प्रियशिष्या इति सापि हृता । तस्मात् सर्वमेव मे हृतमिति भावः । सुन्दरीवृत्तम् । अयुजोर्यदि सौ जगौ युजो सभरालगौ यदि सुन्दरी तदेति लक्षणात् । अत्र इन्दुमतीहरणरूपमेकं कार्य्यं प्रकुर्वतः विधेः गृहिण्यादिकस्य अपरस्य कार्य्यस्य दैवात् करणम् ।

(ग) व्याघातमाह व्याघात इति । येन केनापि यथा कृतं यद्वस्तु अन्यो जनः तेनैव उपायेन चेत् यदि तत् वस्तु अन्यथा अन्यप्रकारं कुरुते तदासौ व्याघातः । दृशेति व्याख्यातं प्राक् । अत्र हरेण नयनेन भस्मीकृतः मदनः नारीभिः तेनैव नेत्ररूपोपायेन सजीवः कृतः ।

(घ) प्रकारान्तरेण व्याघातमाह सौकर्य्येणेति । सौकर्य्येण सुकरत्वेन यदि कार्य्यस्य विरुद्धं क्रियते तदापि व्याघातः स्यादिति शेषः ।

मृदुत्वं मे हेतुः सुभग ! भवता गन्तुमधिकं
न मृद्वी सोढा यद्विरहकृतमायासमसमम्" ॥ (ङ)

अत्र नायकेन नायिकाया मृदुत्वं सहगमनाभावहेतुत्वेनोक्तम्। नायिकया च प्रत्युत सहगमने ततोऽपि सौकर्य्येण हेतुतयोपन्यस्तम्।

**परं परं प्रति यदा पूर्वपूर्वस्य हेतुता ।**
**तदा कारणमाला स्यात् ॥७३१॥ (च)**

यथा ।

"श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात् ।
लोकानुरागो विनयान्न किं लोकानुरागतः ?" ॥ (छ)

**तन्मालादीपकं पुनः ।**
**धर्म्मिणामेकधर्म्मेण सम्बन्धो यथ द्यथोत्तरम् ७३२(ज**

---

(ङ) उदाहरति इहेति। प्रवासगमनकाले दम्पत्योरुक्तिप्रत्युक्ती। हे कान्ते ! त्वम् इहैव गृहे तिष्ठ, अहं कतिपयैरेव अहोभि समागन्ता आगमिष्या मीत्यर्थ, त्व मृदु कोमलाङ्गी असि, आयाससहना क्लेशक्षमा न च येन मया सह गमिष्यसीति भाव । हे सुभग। मृदुत्व कोमलत्व मे मम भवता सह गन्तुम् अधिक हेतु, यत् यस्मात मृद्वी अह विरहकृतम् असम निरुपमम् आयास न सोढा न सहिष्ये । शिखरिणीवृत्तम्

(च) कारणमालामाह परमिति। यदा पूर्वपूर्वस्य पर पर प्रति हेतुता तदा कारणमाला स्यात्।

(छ) श्रुतमिति। कृतधिया शिक्षितमतीना सङ्गात् श्रुत शास्त्रज्ञान श्रुतात् विनय शिष्टाचार, विनयात् लोकानुराग लोकप्रियता, लोकानुरागत. कि न जायते ? अत्र पर पर विनयादिक प्रति पूर्वपूर्वस्य श्रुतादे. हेतुत्वम्।

(ज) मालादीपकमाह तदिति। धर्म्मिणा बहूना यथोत्तरम् उत्तरोत्तर यत् एकधर्म्मेण सम्बन्ध तत् पुन मालादीपकम्।

यथा ।

"त्वयि सङ्गरसम्प्राप्ते धनुषाऽऽसादिताः शराः ।
शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः" ॥ (झ)

अत्रासादनक्रिया धर्मः ।

**पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम् ।**
**स्थाप्यतेऽपोह्यते वा चेत् स्यात्तदैकावली द्विधा ॥**
**७३३॥ (ञ)**

क्रमेण उदाहरणम् ।

"सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम् ।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं सस्मरोदयम्" ॥ (ट)

"न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद् यदलीनषट्पदम् ।

---

(झ) त्वयीति । राजस्तुतिरियम् । हे राजन् । त्वयि सङ्गरसम्प्राप्ते रणं गते सति धनुषा शराः आसादिताः प्राप्ताः, शरैः अरेः शत्रोः शिरः आसादितमिति शेषः । तेन अरिशिरसा भूः भूतलम् आसादितं, तया भुवा त्वम् आसादितः तव भूस्वामित्वादिति भावः, त्वया यशः आसादितम् । अत्रैकया आसादनक्रियया यथोत्तरं बहूनां धर्मिणां धनुरादीनां सम्बन्धः ।

(ञ) एकावलीमाह पूर्वमिति । चेत् यदि पूर्वं पूर्वं प्रति परं परं विशेषणत्वेन स्थाप्यते वा अपोह्यते निराक्रियते तदा द्विधा स्थापनापोहनभेदात् द्विप्रकारा एकावली स्यात् ।

(ट) सर इति । सरः सरोवरं विकसितानि अम्भोजानि यस्मिन् तथोक्तम् । अम्भोजं भृङ्गैः भ्रमरैः सङ्गतं युक्तम् । भृङ्गा भ्रमराः, तत्र ससङ्गीताः, सङ्गीतशालिनः, सङ्गीतं स्मरस्य कामस्य उदयः स्मरोदयः तेन सहितं कामवृद्धिकरमित्यर्थः । अत्र पूर्वं पूर्वं वाक्यं प्रति परं परं वाक्यं विशेषणत्वेन स्थापितम् ।

न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः” ॥ (ठ)

क्वचिद्विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितञ्च दृश्यते। यथा।

“वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु।
कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदम्” ॥ (ड)

एवमपोहनेऽपि।

**उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते ॥७३४॥(ढ)**

यथा।

“राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम्।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम्” ॥ (ण)

**यथासङ्ख्यमनूद्देश उद्दिष्टानां क्रमेण यत्॥७३५॥(त**

---

(ठ) नेति। तत् जलं न आसीदिति शेषः यत् जलं सुचारूणि पङ्कजानि यस्मिन् तथाभूतं न। तत् पङ्कजं पद्मं न, यत् अलीनाः षट्पदाः भ्रमराः यत्र तादृशम्। असौ षट्पदो न, यः मधुरं न जुगुञ्ज। तत् गुञ्जितं न, यत् गुञ्जितं मनः न जहार। अत्र पूर्वं पूर्वं वाक्यं प्रति परं परं वाक्यं विशेषणत्वेन अपोहितम्।

(ड) वाप्य इति। वाप्यः सरस्यः विमलाः भवन्ति, वापीषु कमलानि स्फुटन्ति विकसन्ति, कमलेषु अलयः भ्रमराः पतन्ति, सङ्गीतम् अलिषु पदं स्थानं करोति अलयः सङ्गीतं कुर्वन्तीत्यर्थः।

(ढ) सारमाह उत्तरोत्तरमिति। उत्तरोत्तरं वस्तुनः विषयस्य उत्कर्षः सारः उच्यते।

(ण) राज्ये इति। राज्ये काननसागरसहितभूतले वसुधा पृथिवी सारं, वसुधायामपि पुरं नगरं सारं, पुरे सौधं हर्म्यं सारं, सौधे तल्पं शय्या सारं, तल्पे अनङ्गस्य कामस्य सर्वस्वं सर्वधनं वराङ्गना उत्तमा कान्ता सारम्।

(त) यथासङ्ख्यमलङ्कारमाह यथासङ्ख्यमिति। उद्दिष्टानां वस्तूनां क्रमेण अनु पश्चात् यत् उद्देशः कीर्त्तनं तत् यथासङ्ख्यम्।

यथा ।

"उन्मीलन्ति नखैर्लुनीहि वहति चौमाञ्चलेनावृणु
क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय ।
इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठेषु साङ्केतिक-
व्याहाराः सुभग ! त्वदीयविरहे तस्याः सखीनां मिथः॥(य)

**क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् ।**
**भवति क्रियते वा चेत् तदा पर्य्याय इष्यते ॥**
**७३६॥ (र)**

क्रमेण यथा ।

"स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।

---

(य) उन्मीलन्तीति । दूत्या नायकं प्रत्युक्तिरियम् । हे सुभग ! त्वदीय-विरहे तस्यास्तव कान्ताया मिथः अन्योन्यं वञ्जुला वकुलाः, दक्षिणानिलाः मलयवाताः कुहूकण्ठाः कोकिलाः तेषु इत्यम् एवम्प्रकाराः साङ्केतिकव्याहाराः इङ्गितोक्तयः वर्त्तन्ते इति शेषः, यथा उन्मीलन्ति विकसन्ति इति एकया वञ्जुलान् प्रति उक्ते अपरया नखैः लुनीहि छिन्धि वञ्जुलपुष्पाणीति भावः इति उच्यते। वहति इति एकया दक्षिणानिलं प्रति उक्ते अपरया चौमाञ्चलेन पट्टवसनप्रान्तेन तस्य घनत्वादिति भावः आवृणु आच्छादय यथा न सखीशरीरं स्पृशेदिति भावः इति उच्यते, क्रीडाकाननं विहारोद्यानम् आविशन्ति प्रविशन्ति इति एकया कोकिलान् प्रति उक्ते अपरया वलयक्वाणैः कङ्कणध्वनिभिः समुत्त्रासय ताडय कोकिलान् येन ते न कुहूरवमातन्वन्तीति भावः इति उच्यते। शार्दूलविक्रीडितं वृत्तम्। अत्र उद्दिष्टानां वस्तूनां पश्चात् क्रमेण पुनरुद्देशः।

(र) पर्य्यायालङ्कारमाह क्वचिदिति । क्वचित् एकं वस्तु क्रमात् अनेकस्मिन् भवति वा क्रियते चेत् तथा क्वचित् अनेकं वस्तु क्रमात् एकगं भवति वा क्रियते चेत् तदा पर्य्यायः इष्यते ।

वलीषु तस्याः स्खलिताः प्रपेदिरे
क्रमेण नाभिं प्रथमोदविन्दवः" ॥ (ध)
"विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः ।
वृककाकशिवास्तत्र धावन्त्यरिपुरे तव" ॥ (न)
"विसृष्टरागादधरान्निवर्त्तितः
स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः" ॥ (प)
"ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः ।
निधीयन्ते तयोः स्थूलाः स्तनयोरस्रुविन्दवः" ॥

एषु च क्वचिदाधारः संहतरूपोऽसंहतरूपश्च क्वचिदाधेयमपि। यथा "स्थिताः क्षणम्" इत्यत्र उदविन्दवः पक्ष्मादाव-

(ध) स्थिता इति। प्रथमे उदविन्दवः वृष्टिजलकणाः तस्याः पार्वत्याः पक्ष्मसु नेत्रलोमसु क्षणं स्थिताः पक्ष्मणामतिसान्द्रत्वादिति भावः, ततः ताडितः पतनेन क्लेशितः अधरः यैः तथाभूताः अधरपतिता इत्यर्थः, ततः पयोधरयोः स्तनयोः उत्सेधे उच्छ्राये निपातेन चूर्णिताः खण्डिताः, ततः वलीषु त्रिवलीषु स्खलिताः पतिताः सन्तः क्रमेण नाभिं प्रपेदिरे प्रापुः। वंशस्थविलं वृत्तम्। अत्र एकं वस्तु वर्षाम्बुरूपम् अनेकगोचरं क्रमेण भूतम्।

(न) विचरन्तीति। राजस्तुतिरियम्। हे राजन्! इति अध्याहार्य्यं, यत्र तव अरिपुरे शत्रुनगरे श्रोणिभरेण नितम्बभारेण अलसाः मन्थरगामिन्यः विलासिन्यः विचरन्ति, तत्र इदानीं वृककाकशिवाः श्वादूलवायसशृगालाः विचरन्ति। तव शत्रूणां निधनात् तन्नगरं वनीभूतमिति भावः। अत्र वृकादि अनेकं वस्तु एकगं भूतम्।

(प) विसृष्टेति। तया पार्वत्या विसृष्टः त्यक्तः व्रतविरुद्धत्वादिति भावः रागो रञ्जनं यस्य तथोक्तात् अधरात् तथा स्तनयोरङ्गरागेण अरुणितात् रक्तीकृतात् कन्दुकात् निवर्त्तितः, तथा कुशाङ्कुराणाम् आदानेन चयनेन परिक्षताः व्रणिताः अङ्गुलयः यस्य तादृशः करः पाणिः अक्षसूत्रप्रणयी जपमालानिरतः कृतः। अत्र एकं वस्तु कररूपम् अनेकस्मिन् कर्मणि वा विषये कृतम्।

संहतरूप आधारे क्रमेण अभवन्। "विचरन्ति" इत्यत्राधेय-भूता वृकादयः संहतरूपारिपुरे क्रमेण अभवन्। एवमन्यत्। अत्र चैकस्यानेकत्र क्रमेणैव वृत्तेर्विशेषालङ्काराद्भेदः। विनि मयाभावात् परिवृत्तेः।

**परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत्॥७३७(फ)**

क्रमेण उदाहरणम्।

"दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम।
मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः"॥ (ब)

अत्र प्रथमेऽर्द्धे समेन द्वितीयेऽर्द्धे न्यूनेन।

"तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना।
येन जर्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः"॥(भ)

अत्राधिक्येन।

**प्रश्नादप्रश्नतो वाऽपि कथिताद्वस्तुनो भवेत्।**
**तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा॥**
**परिसङ्ख्या ॥७३८॥ (म)**

---

(फ) परिवृत्तिमाह परिवृत्तिरिति। समन्यूनाधिकैः वस्तुभिः विनिमयः परिवृत्तिः भवेत्।

(ब) दत्त्वेति। स्पष्टम्। अत्रेति। समेन तुल्येन कटाक्षहृदययोर्द्वयोरपि तुल्यत्वादिति भावः। न्यूनेन निकृष्टेन हृदयात् मदनज्वरस्य निकृष्टत्वादिति भावः।

(भ) तस्येति। रामस्योक्तिरियम्। तस्य प्रवयसः स्थविरस्य जटायुषः अधुना स्वर्गिणः स्वर्गं गतस्य किमिव शोच्यते? नैव शोच्यो साविति भावः। येन जटायुषा जर्जरं जराजीर्णं यत् कलेवरं तस्य व्ययात् विनिमयात् इन्दुकिरण-वत् उज्ज्वलं यशः क्रीतम्। अधिकेन वस्तुना यशसा न्यूनं वस्तु जराजीर्णं शरीरं परिवर्त्तितम्। इन्द्रवज्रावृत्तम्।

(म) परिसङ्ख्यामाह प्रश्नादिति। प्रश्नात् वा अप्रश्नतः कथितात् वस्तुनः

क्रमेण उदाहरणम्।

"किं भूषणं सुदृढ़मत्र यशो न रत्नं
किं कार्य्यमार्य्यचरितं सुकृतं न दोषः।
किञ्चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम्"॥ (य)

अत्र व्यवच्छेद्यं रत्नादि शाब्दम्।

"किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः।
को ध्येयो भगवान् विष्णुः किं काम्यं परमं पदम्"॥ (र)

अत्र व्यवच्छेद्यं पापाद्यर्थम्। अनयोः प्रश्नपूर्वकम्।

अप्रश्नपूर्वकत्वे यथा।

"भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम्"॥ (ल)

"बलमार्त्तभयोपशान्तये विदुषां सम्मतये बहु श्रुतम्।

---

शाब्दः शब्दप्रतिपाद्यः, वा आर्थः अर्थबलात् लभ्यः; तादृशः अन्यस्य व्यपोहः निराकरणं चेत् भवति तदा परिसङ्ख्या।

(य) किमिति। उक्तिप्रत्युक्तौ। अत्र जगति सुदृढम् अचलमित्यर्थः भूषणं किम्? यशः न रत्नम्। किं कार्य्यम्? आर्य्याणां चरितं सुकृतं सत्कार्य्यं न दोषः। अप्रतिहतं चक्षुः किम्? धिषणा बुद्धिः न नेत्रम्। त्वदपरः त्वत्तोऽन्यः कः सदसतोः विवेकं जानाति? न कोऽपीत्यर्थः। वसन्ततिलकं वृत्तम्।

(र) किमिति। उक्तिप्रत्युक्तौ। सदा किम् आराध्यम् अनुष्ठेयम्? पुण्यम्। कश्च सेव्यः? सदागमः सच्छास्त्रम्। कः ध्येयः चिन्तनीयः? भगवान् विष्णुः। किं काम्यं वाञ्छनीयम्? परमं पदं मुक्तिपदम्।

(ल) भक्तिरिति। महतां जनानां प्रायः बाहुल्येन भवे शिवे भक्तिः न विभवे सम्पदि। शास्त्रे व्यसनम् आसक्तिः युवतिरेव कामस्य अस्त्रं तस्मिन् न। यशसि चिन्ता न वपुषि शरीरे परिदृश्यते। अत्र महतां कुत्र भक्तिर्दृश्यते इत्यादि-प्रश्नाभावः।

वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजनम्" ॥ (व)

श्लेषमूलत्वे च अस्य वैचित्र्यविशेषः। यथा।

"यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्मसु वर्णसङ्कराश्चापेषु गुणच्छेदाः" इत्यादि (श)।

**उत्तरं प्रश्नस्योत्तरादुन्नयो यदि।**
**यच्चासकृदसम्भाव्यं सत्यपि प्रश्न उत्तरम्॥**
**७३८॥ (ष)**

"वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः।
अहमेकाकिनी बाला तवेह वसतिः कुतः?" ॥ (स)

---

(व) बलमिति। तस्य विभो बलम् आर्त्तानां विपन्नाना भयस्य उपशान्तये नाशाय, न तु परपीडनायेति भाव। बहु श्रुत शास्त्रज्ञान विदुषा पण्डितानां सत्क्रतये सम्मानाय, न तु आत्मप्रतिष्ठायै इति भाव। वसु धन केवल न परप्रयोजनमिति भाव, गुणवत्तापि दयादाक्षिण्यादिगुणशालित्वमपि परप्रयोजना परेषा प्रयोजनानुरोधिनीत्यर्थ न तु स्वार्थपरेति भाव। अत्रापि किमर्थं तस्य बलमित्यादि-प्रश्नाभाव।

(श) यस्मिन्नेति। यस्मिन् राजनि जित जगत् येन तथाभूते महीं पृथ्वीं पालयति शासति सति चित्रकर्मसु आलेख्यव्यापारेषु वर्णानां रञ्जनद्रव्याणां सङ्कराः समावेशा, न तु वर्णाना ब्राह्मणादीना सङ्करा. सङ्करोत्पत्तिरिति भाव, चापेषु धनुःषु गुणाना मौर्वीणां छेदाः न तु गुणाना दयादाक्षिण्यादीना विच्छेदा इति भाव.।

(ष) उत्तरमाह उत्तरमिति। उत्तरात् उत्तरवाक्यात् यदि प्रश्नस्य उन्नयः आगम. स्यात् यद्वा सत्यपि विद्यमानेऽपि प्रश्ने असकृत् पुन पुन' असम्भाव्यं पूर्वं मनसानिश्चितम् अतिविचित्रमित्यर्थ उत्तरं स्यात् तत् उत्तरं नामालङ्कार.।

(स) वीक्षितुमिति। पथिकं प्रति कस्याश्चिदुक्ति.। श्वश्रू' स्वामिजननी वीक्षितु न क्षमा न शक्ता अन्धेति यावत्। स्वामी दूरतर अतिदूरं गत' न तस्याप्यागमनं सम्भवतीति भाव.। अह बाला मुग्धा एकाकिनी, अत. तव इह

अनेन पथिकस्य वसतियाचनं प्रतीयते।

"का विसमा देव्वगई किं लद्धव्वं जणो गुणग्गाही।
किं सोक्खं सुकलत्तं किं दुग्गेज्झं खलो लोओ" (१)॥

अत्र अन्यव्यपोहे तात्पर्य्याभावात् (ङ) परिसंख्यातो भेदः। न चेदमनुमानम्। साध्यसाधनयोर्निर्द्देश एव तस्याङ्गीकारात्। न च काव्यलिङ्गम्। उत्तरस्य प्रश्नं प्रत्यजनकत्वात्।

**दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते॥**

**७४०॥ (च)**

"मूषिकेण दण्डो भक्षितः" इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवतीति नियतसमानन्यायादर्थान्तरमापततीत्येष न्यायो दण्डापूपिका (छ)। अत्र च क्वचित् प्राकरणिकादर्थादप्राकरणिकस्यार्थस्यापतनं क्वचिदप्राकरणिकार्थात् प्राकरणिकार्थस्येति द्वौ भेदौ। क्रमेण उदाहरणम्।

---

(१) का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही।
किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः॥ इति संस्कृतम्।

---

वसतिः अवस्थानं कुतः कथं स्यात्? अत उत्तरवाक्येन पथिकः पूर्वं वसत्यर्थं प्रार्थितवानिति प्रश्नस्य उन्नयः।

(ङ) विषमा का? दैवगतिः। किं लब्धव्यं? प्राप्तव्यम्? गुणग्राही जनः। सौख्यं सुखहेतुः किम्? सुकलत्रं साध्वी भार्य्येत्यर्थः। दुर्ग्राह्यम् अवश्यं किम्? खलः लोकः दुर्जन इत्यर्थः।

अत्रेति। अन्यव्यपोहे अन्यस्य व्यवच्छेदे तात्पर्य्याभावात् वक्तुरभिप्रायासद्भावात्।

(च) अर्थापत्तिमाह दण्डेति। दण्डापूपिकया कैमुतिकन्यायेनेत्यर्थः अन्यस्य अर्थस्य आगमः उपस्थितिः अर्थापत्तिः इष्यते।

(छ) नियतेति। नियतो निश्चितः सिद्धान्तित इति यावत् यः समानन्यायः तस्मात् तुल्यनयात् आपतति आगच्छति। न्यायः नीतिः।

"हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले।
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः॥" (ख)
"विललाप सवाष्पगद्गदं सहजामप्यपहाय धीरताम्।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिणाम्?"॥ (ग)

अत्र च समानन्यायस्य श्लेषमूलत्वे वैचित्र्यविशेषो यथोदाहृते "हारोऽयम्" इत्यादौ। न चेदमनुमानम्। समानन्यायस्य सम्बन्धरूपत्वाभावात् (घ)।

विकल्पस्तुल्यबलयो-
र्विरोधश्चातुरीयुतः॥७४१॥ (ङ)

यथा।

"नम्यन्तां शिरांसि धनूंषि वा कर्णपूरीक्रियन्तामाज्ञा मौर्व्यो वा" (च)। अत्र शिरसा धनुषाञ्च नमनयो सन्धिविग्रहोपलक्षणत्वात् सन्धिविग्रहयोश्चैकदा कर्त्तव्यतासम्भवा-

---

(ख) हार इति। हरिणाक्षीणाम् अयं हार स्तनमण्डले लुठति। मुक्तानां मौक्तिकानां हारस्थितानामिति भाव, मुक्तिपथावलम्बिनामिति ध्वनि, अपि इयम् अवस्था दशा स्मरस्य कामस्य किङ्करा वयं के? अत्र प्राकरणिकात् मौक्तिकरूपात् अप्राकरणिकस्य स्मरार्त्तरूपस्य अर्थस्य आपतनम्।

(ग) विललापेति। स. अज सहजां स्वाभाविकीमपि धीरताम् अपहाय परित्यज्य वाष्पगद्गद विललाप। तथाहि, अभितप्त सन्तप्तम् अयोऽपि लौहमपि मार्दवं भजते शरीरिणा देहिना कोमलानामिति भाव कैव कथा? अत्र अप्राकरणिकात् लौहद्रवीभावात् प्राकरणिकस्य शरीरद्रवस्यापतनम्।

(घ) समानन्यायस्येति। सम्बन्धरूपत्वाभावात् व्याप्तिरूपत्वाभावात् व्याप्तिरेवानुमानस्य साधकमिति भाव।

(ङ) विकल्पमाह विकल्प इति। तुल्यं बल ययोः तादृशयो. चातुरीयुतः वैचित्र्ययुक्तो विरोध. विकल्पः।

(च) नम्यन्तामिति। शिरांसि धनूंषि वा नम्यन्तां नतैः भूयतां धनुर्गुणता वा इत्यर्थः; आज्ञाः अस्मदादेशाः मौर्व्यः धनुर्गुणा वा कर्णपूरीक्रियन्ताम्।

द्विरोधः। स च एकपक्षाश्रयणपर्य्यवसानः। तुल्यबलत्वात्र धनुः-शिरोनमनयोरपि स्पर्द्धया सम्भाव्यमानत्वात्। चातुर्य्यं च अत्रौपम्यगर्भत्वेन। एवं कर्णपुरीक्रियन्ताम्" (छ) इत्यत्रापि एवम्।

"युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः"। (ज) अत्र श्लेषावष्टम्भेन चारुत्वम्।

"दीयतामर्जितं वित्तं देवाय ब्राह्मणाय वा"॥

इत्यत्र चातुर्य्याभावान्नायमलङ्कारः।

**समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके।**
**खले कपोतिकान्यायात्तत्करः स्यात् परोऽपि चेत्।**
**गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये॥**
**७४२॥ (झ)**

---

(छ) सन्धिविग्रहेति। शिरोनमन सन्धिलक्षणं धनुर्नमन विग्रहलक्षणं तद्भावात। एकदा युगपत कर्त्तव्यताया असम्भवात् विरोध। एवमिति आज्ञाया' कर्णपूरीकरणस्य सन्धिलक्षणात मौर्व्या कर्णपूरीकरणस्य विग्रहलक्षण-त्वात् तयोर्यौगपद्ये विरोध, स च एकपक्षाश्रयणपर्य्यवसान। औपम्यञ्च वैचित्र्याधायकम्, तुल्यबलत्वञ्च अत्र उभयोरपि प्रस्तावस्य स्पर्द्धाजन्यत्वादिति बोध्यम्।

(ज) युष्माकमिति। हरेर्नारायणस्य नेत्रे तनु शरीर वा युष्माक भवा-र्त्तिशमन संसारदुःखध्वंस कुरुताम्। अत्र कुरुतामिति पदस्य लोट्विभक्तौ परस्मै-पदीयप्रथमपुरुषद्विवचनान्तत्वे नेत्रे इत्यनेनान्वय। आत्मनेपदीयैकवचना-न्तत्वे तनुरित्यनेनान्वय.। अत्र नेत्रयोस्तनयोश्च संसारदुःखमोचने सामर्थ्यात् तुल्यबलत्वम्।

(झ) समुच्चयमाह समुच्चय इति। एकस्मिन् कार्य्यस्य साधके सति खले कपोतिकान्यायात् परोऽपि चेत् तत्कर तस्य कार्य्यस्य कारक स्यात, वा गुणौ गुणद्वय वा क्रिये क्रियाद्वय युगपत् स्याताम, अथवा गुण क्रिया च द्वयं युगपत् स्यात् तदा समुच्चय., उक्तरीत्या चतुर्विध इति बोध्यम्।

यथा मम ।

"हहो धीर समीर ! हन्त जननं ते चन्दनक्ष्माभृतो
दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः ।
प्रत्यङ्गं दहसीह मे त्वमपि चेदुद्दामदावाग्निव-
न्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः" ॥ (ञ)

अत्रादाहे एकस्मिन्श्चन्दनक्ष्माभृज्जन्मरूपे कारणे सत्यपि दाक्षिण्यादीनां हेत्वन्तराणामुपादानम् । अत्र सर्वेषामपि हेतूनां शोभनत्वात् सद्योगः । तत्रैव चतुर्थपादे मत्तादीनामशोभनानां योगादसद्योगः । सदसद्योगो यथा ।

"शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे" ॥ (ट)

---

(ञ) हहो इति । विरहिण उक्तिरियम् । हहो इति सम्बोधनसूचकमव्ययम् । हे धीर समीर । हन्तेति खेदसूचकमव्ययम् । ते तव जननम् उत्पत्तिः चन्दनक्ष्माभृतः चन्दनपर्वतात् मलयशैलादित्यर्थः, तव दाक्षिण्यं सारल्यं दक्षिणदिग्भवत्वञ्च जगति उत्तरं प्रधानं ख्यातञ्च परिचयः सङ्गः गोदावरीवारिभिः । एतादृशोऽपि त्वं चेत् यदि इह मे मम प्रत्यङ्गं सर्वाण्यङ्गानि उद्दामदावाग्निवत् उत्कटदावानल इव दहसि, तदा मत्तः मलिनात्मकः मलिनस्वभावः कृष्णवर्णश्च वनचरः वन्यः अभद्र इति भावः अयं कोकिलः किं वक्ष्यते ? न किमपि वक्तुं शक्य इत्यर्थः । महतामपि यदि ईदृक् परपीडनं, तदा प्राकृता किमु वक्तव्या इति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ट) शशीति । दिवसे धूसरः मलिनः शशी, गलितं गतं यौवनं यस्यास्तादृशी कामिनी, विगतानि वारिजानि यस्मात् तादृशं सरः, शोभना आकृतिः यस्य तादृशस्य सुन्दरस्येत्यर्थः अनक्षरम् अक्षरशून्यं वचनाक्षममित्यर्थः मुखं, धनपरायणः धनलुब्धः प्रभुः राजा, सततं दुर्गतः दुरवस्थः सज्जनः साधुजनः तथा नृपाङ्गनगतः राजसभास्थ इत्यर्थः खलः दुर्जनः एतानि मे मनसि निखातानीति

इह केचिदाहुः "शशिप्रभृतीनां शोभनत्वं खलस्य अशोभनत्वमपि सदसद्योगः" इति। अन्ये तु "शशिप्रभृतीनां स्वतः शोभनत्वं धूसरादीना त्वशोभनत्वम्" इति सदसद्योगः, अत्र हि शशिप्रभृतिषु धूसरादेरत्यन्तमनुचितत्वमिति विच्छित्तिविशेषस्यैव चमत्कारविधायित्वं, "मनसि सप्त शल्यानि" इति समानामपि शल्यत्वेनोपसंहारश्च, (ठ) "नृपाङ्गनगतः खलः" इति प्रत्युत क्रमभेदाद् दुष्टत्वमावहति, सर्वत्र विशिष्यस्यैव शोभनत्वेन प्रक्रमादिति इह च खले (ड) कपोतवत् सर्वेषां कारणानां साहित्येनावतारः। समाध्यलङ्कारे तु एककार्य्यं प्रति साधके समग्रेऽप्यन्यस्य काकतालीयन्यायेन आपतनमिति भेदः।

"अरुणे च तरुणि! नयने तव मलिनञ्च प्रियस्य मुखम्।
मुखमानतञ्च सखि! ते ज्वलितश्चास्यान्तरे स्मरज्वलनः"॥ (ढ)

अत्राद्येऽर्द्धे गुणयोर्यौगपद्यं, द्वितीये क्रिययोः (ण)। उभयोर्यौगपद्ये यथा।

---

शेष सप्त शल्यानि। पृथ्वावृत्त, जसौ जसयला वसुग्रहयतश्च पृथ्वी गुरुरिति लक्षणात्।

(ठ) अत्र शल्यत्वे एकस्यैव दिवसधूसरशशिनः कारणत्वेऽपि कामिन्यादेर्गलितयौवनत्वादीनां बहूनामुपादानम्।

(ड) खल इति। खल धान्यादिविवेके यथा एकस्य कपोतस्य आगमनात् बहवः समापतन्ति तद्वत् एकस्य कारणत्वेऽपि यत्र अन्येषामापतनं स खले कपोतिकान्याय इति बोध्यम्। साहित्येन यौगपद्येन। काकतालीयन्यायेनेति। काकगमनेन तालपतनमिव आकस्मिकमन्यस्य यत्र आपतनं स काकतालीयन्याय तेन।

(ढ) अरुणे इति। हे तरुणि! तव नयने अरुणे रक्ते च, तव प्रियस्य मुखं मलिनञ्च, हे सखि! ते तव मुखम् आनतञ्च, अस्य तव प्रियस्य अन्तरे मनसि स्मरज्वलनः कामाग्निः ज्वलितश्च। च इय यौगपद्यसूचकम्।

(ण) अत्रेति। गुणयोः अरुणमलिनयोः। क्रिययोः आनमनज्वलनयोः।

"कलुषञ्च तवाहितेष्वकस्मात्
सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितञ्च महीपतीन्द्र ! तेषां
वपुषि प्रस्फुटमापदां कटाक्षैः" ॥ (त)

"धुनोति चासिं तनुते च कीर्त्तिम्" । (थ)

इत्यादावेकाधिकरणेऽप्येष दृश्यते । न च अत्र दीपकम् । एते हि गुणक्रियायौगपद्ये समुच्चयप्रकारानियमेन कार्य्यकारणकालनियमविपर्य्ययरूपातिशयोक्तिमूलाः । दीपकस्य च अतिशयोक्तिमूलत्वाभावः ।

**समाधिः सुकरे कार्य्ये**
**दैवाद्वस्त्वन्तरागमात् ॥७४३॥ (द)**

यथा ।

"मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम्" ॥ (ध)

---

(त) कलुषमिति । राजस्तुतिरियम् । तव सितं शुभ्रं यत् पङ्केरुहं पद्मं तस्य सोदरा सदृशी लक्ष्मीः श्रीर्यस्य तादृशं चक्षुः अकस्मात् आहितेषु शत्रुषु कलुषञ्च आविलञ्च, हे महीपतीन्द्र ! तेषां तव अहितानां वपुषि आपदां कटाक्षैः पतितञ्च । अत्र गुणस्य कलुषस्य क्रियायाः पतनस्य च यौगपद्यम् ।

(थ) धुनोतीति । असिं तलवारं धुनोति च कम्पयति च कीर्त्तिं तनुते च विस्तारयति च । समुच्चयप्रकाराः इति समुच्चयभेदाः इत्यर्थः, नियमेन अवश्यम्भाविना ।

(द) समाधिमाह । दैवात् सहसा वस्त्वन्तरस्य अन्यस्य वस्तुनः आगमात् कार्य्ये सुकरे सति समाधिः स्यात् ।

(ध) मानमिति । सखायं प्रति कस्यचिदुक्तिः । अस्याः कान्तायाः मानं निराकर्त्तुम् अपनेतुं पादयोः चरणयोः पतिष्यतः मे मम उपकाराय

**प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि।**
**तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः॥७४४ (न)**

तस्यैवेति रिपोरेव। यथा मम।

"मध्येन तनुमध्या मे मध्यं जितवतीत्ययम्।
इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः"॥ (प)

**प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्।**
**निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते॥**
**७४५॥ (फ)**

क्रमेण यथा। "यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्" (ब) इत्यादि।

---

पादपतनस्य अनावश्यकत्वात् इत्यथ दिष्ट्या दैवेन इदं घनगर्जितम् उदीर्णम् उपस्थितम्। येन तस्योद्दीपकत्वात् तत्क्षणादेव मानभङ्गो जात इति भावः। अत्र दैवात् मेघगर्जनरूपवस्तुन आगमात् मानभञ्जनस्य कार्य्यस्य सुकरत्वम्।

(न) प्रत्यनीकमाह प्रत्यनीकमिति। रिपौ प्रतीकारे दमने अशक्तेन जनेन यदि तस्यैव रिपोरेव उत्कर्षसाधकः तदीयस्य तस्य रिपुसम्बन्धिवस्तुनः तिरस्कारः स्यात् तत् प्रत्यनीकम्।

(प) मध्येनेति। तनुमध्या कृशाङ्गी प्रमदा मध्येन मे मम मध्यं कृशमिति शेषः जितवती इति क्रोधेनेति भावः, असौ हरिः सिंहः अस्याः प्रमदायाः कुचकुम्भनिभौ स्तनकलससदृशौ इभकुम्भौ हस्तिकुम्भौ भिनत्ति। अत्र मध्यजयित्वेन रिपौ प्रमदायाः प्रतीकारासमर्थेन हरिणा तस्या एव उत्कर्षसाधकः औपम्येनेति भावः तदीयस्य स्तनकुम्भस्य तत्सदृशहस्तिकुम्भभेदेन तिरस्कारः कृतः।

(फ) प्रतीपमाह प्रसिद्धस्येति। प्रसिद्धस्य विख्यातस्य उपमानस्य उपमेयत्वकल्पनं वा निष्फलत्वाभिधानं प्रतीपमिति कथ्यते।

(ब) यदिति। व्याख्यातं प्राक्। अत्र नेत्रादीनामुपमानानामपि इन्दीवरादीनामुपमेयत्वकथनम्।

तद्वक्त्रं यदि मुद्रिता शशिकथा हा! हेम सा चेद्द्युति-
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत् स्मितं का सुधा।
धिक्कन्दर्पधनुर्भ्रुवौ यदि च ते किंवा बहु ब्रूमहे।
यत् सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः" ॥ (भ)

अत्र वक्त्रादिभिरेव चन्द्रादीनां शोभातिवहनात्तेषां निष्फलत्वम्।

**उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः।**
**कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे ॥**
**७४६॥ (म)**

यथा।

"अहमेव गुरुः सुदारुणाना-
मिति हालाहल! तात! मास्म दृप्यः।

(भ) तदिति। विद्दशालभञ्जिकायां केरलाधिपतेः स्वप्नावस्थायां कुवलयमालां अवलोक्य तन्मूर्त्तिस्मरणम्। यदि तस्याः स्वप्नदृष्टाया इति बोध्यम् एवं सर्वत्र वक्त्रं मुखं तिष्ठतीति शेषः, तदा शशिकथा चन्द्रसम्बन्धिनी वार्त्ता मुद्रिता मुकुलिता नष्टेत्यर्थः। चेत् यदि सा द्युतिः कान्तिः तिष्ठति, तदा हेम स्वर्णं हा! शोचनीयमित्यर्थः, हाशब्दः शोकसूचकोऽव्ययः। यदि तस्याश्चक्षुः तिष्ठति, तदा कुवलयैः नीलोत्पलैः हारितं पराभूतम्। चेत् यदि तत् स्मितं तिष्ठति, तदा सुधा का? यदि ते भ्रुवौ तिष्ठत इति शेषः तदा कन्दर्पधनुः धिक् निन्दामौख्यर्थे 'धिक् निर्भर्त्सननिन्दयोः" इत्यमरः। किंवा बहु अधिकं ब्रूमहे वदामः वेधसः विधातुः सर्गक्रमः सृष्टिनियमः पुनरुक्तात् द्वितीयात् वस्तुनः विमुखः विधिरेकरूपं वस्तुद्वयं न सृजतीत्यर्थः इति यत् तत् सत्यम्। शार्दूलविक्रीडितं वृत्तम्।

(म) प्रकारान्तरेण प्रतीपमाह उक्त्वेति। अत्युत्कृष्टस्य अतिश्रेष्ठस्य वस्तुनः अत्यन्तम् उत्कर्षम् उक्त्वा तस्यैव उपमानत्वे कल्पिते सति केचित् प्रतीपम् ऊचिरे कथयामासुः।

(य) अहमिति। हे हालाहल कालकूट! अहमेव सुदारुणानां गुरुः

ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्जनानाम्" ॥

अत्र प्रथमपादे उत्कर्षातिशय उक्तः। तदनुक्तौ तु नायमलङ्कारः (र)।

यथा।

"ब्रह्मेव ब्राह्मणो वदति" इत्यादि।

**मीलितं वस्तुनो गुप्तिः
केनचित् तुल्यलक्ष्मणा ॥७४७ (ल)**

अत्र समानलक्षणं वस्तु क्वचित् सहजं, क्वचिदागन्तुकम्। क्रमेण यथा।

"लक्ष्मीवक्षोजकस्तूरीलक्ष्म वक्षःस्थले हरेः।
यस्तं नालक्षि भारत्या भासा नीलोत्पलाभया" ॥ (व)

तत्र भगवतः श्यामा कान्तिः सहजा।

"सदैव शोणोपलकुण्डलस्य
यस्या मयूखैररुणीकृतानि।

---

अथ इति बुद्धा सादृश्य दर्पमा कार्षीरित्यर्थ, अस्मिन् भुवने जगति भवादृशानि त्वत्सदृशानि दुर्जनाना वचनानि भूय बाहुल्येन सन्ति ननु विद्यन्ते खलु।

(र) अत्र प्रथमे पादे उत्कर्षमुक्त्वा द्वितीये दुर्जनवचनानाम् उपमानत्वं कल्पितम्। तदनुक्तौ उत्कर्षानुक्तावित्यर्थ।

(ल) मीलितमाह मीलितमिति। केनचित् तुल्यलक्ष्मणा समानचिह्नेन वस्तुन गुप्ति गोपन मीलितम्।

(व) लक्ष्मीति। भारत्या सरस्वत्या सपत्न्या इत्यर्थ हरे नारायणस्य वक्षःस्थले लक्ष्म्या. श्रिया वक्षोजयो स्तनयो या कस्तूरी मृगमद तस्य लक्ष्म चिह्न निलोत्पलाभया इन्दीवरतुल्यया भासा स्वदेहप्रभया ग्रस्तम् अतएव न अलक्षि न दृष्टम्।

अत्र तुल्यलक्ष्मवस्तुना देहप्रभया कस्तूरीलक्ष्मरूपस्य वस्तुन गोपनम्।

(श) सदेति। नगरीवर्णनमिदम्। यस्या नगर्य्या सदैव शोणोपलकुण्ड-

कोपोपरक्तान्यपि कामिनीनां
मुखानि शङ्कां विदधुर्न यूनाम्” ॥ (श)

अत्र माणिक्यकुण्डलस्यारुणिमा मुखे आगन्तुकः।

**सामान्यं प्रकृतस्यान्य-**
**तादात्म्यं सदृशैर्गुणैः ॥७४८॥ (ष)**

यथा।

“मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः।
अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः” ॥ (स)

मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानम्, इह तु उभयोस्तुल्यगुणतया भेदाग्रहः।

**तद्गुणः स्वगुणत्यागा-**
**दत्युत्कृष्टगुणग्रहः ॥७४९॥ (ह)**

---

स्वस्य माणिक्यकुण्डलस्य मयूखैः किरणैः अरुणीकृतानि रक्तीकृतानि कामिनीनां मुखानि कोपेन उपरक्तान्यपि यूनां तरुणानां शङ्कां भयं न विदधुः। उपजातिवृत्तम्। अत्र तुल्यलक्ष्मवस्तुना माणिक्यमयूखेन कोपापरागरूपस्य वस्तुनः गोपनम्।

(ष) सामान्यमाह सामान्यमिति। प्रकृतस्य प्रस्तुतस्य सदृशैः गुणैः अन्यस्य तादात्म्यम् अभेदप्रतीतिः सामान्यम्।

(स) मल्लिकेति। अभिसारिकाः कान्तार्थिन्यः नायिकाः। तदुक्तम्। कान्तार्थिनी तु या याति सङ्केतं साभिसारिकेति। मल्लिकाभिः पुष्पविशेषैः आचिताः खचिताः धम्मिल्लाः संयतकेशाः यासां तथोक्ताः, धम्मिल्लाः संयताः कचा इत्यमरः। तथा चारुभिः अतिसुरभिभिः चन्दनैः चर्चिताः कृताङ्गरागाः इत्यर्थः अतएव चन्द्रिकासु अविभाव्याः अभिसारिकात्वेन अप्रतीयमाना इत्यर्थः, सुखं यान्ति।

अत्र मल्लिकादिगुणसादृश्येन प्रकृतस्य अभिसारिकारूपस्य वस्तुनः चन्द्रिकातादात्म्यम्।

(ह) तद्गुणमाह तद्गुण इति। स्वस्य गुणत्यागात् अत्युत्कृष्टस्य गुणस्य ग्रहः ग्रहणम् तद्गुणः।

यथा ।

"जगाद वदनच्छद्मपद्मपर्य्यन्तपातिनः ।
नयन्मधुलिहः श्वैत्यमुदग्रदशनांशुभिः" ॥ (च)

मोलिते प्रकृतस्य वस्तुनो वस्त्वन्तरेणाच्छादनम्, इह तु वस्त्वन्तरगुणेनाक्रान्तता प्रतीयते इति ।

**तद्रूपाननुहारस्तु**
**हेतौ सत्यप्यतद्गुणः ॥७५०॥ (क)**

यथा ।

"हन्त सान्द्रेण रागेण भृतेऽपि हृदये मम ।
गुणगौर ! निषण्णोऽपि कथं नाम न रज्यसि ?" ॥ (ख)

यथा वा ।

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस ! तव सैव शुभ्रता चीयते न च न चापचीयते" ॥ (ग)

---

(च) जगादेति । उदग्रदशनांशुभिः उन्नतदन्तकिरणैः वदनमेव छद्म छलं यस्य तादृशं यत् पद्मं तस्य पर्य्यन्ते पतन्तीति तथोक्तान् मधुलिहः भ्रमरान् श्वैत्यं धावल्यं नयन् प्रापयन् जगाद उवाच ।

अत्र मधुलिहां कृष्णवर्णरूपस्वगुणत्यागात् अत्युत्कृष्टस्य श्वैत्यगुणस्य ग्रहणम् ।

(क) अतद्गुणमाह तद्रूपेति । हेतौ सत्यपि तस्य रूपस्य अननुहारः अग्रहणम् अतद्गुणः ।

(ख) हन्तेति । नायकं प्रति कस्याश्चिदुक्तिरियम् । हे गुणगौर ! गुणोज्ज्वल इत्यर्थः, हन्त खेदे । सान्द्रेण घनेन रागेण अनुरागेण लौहित्येन च भृते पूरितेऽपि मम हृदये निषण्णोऽपि त्वं कथं नाम न रज्यसि न अनुरागभाक् लौहित्यश्च न भवसीत्यर्थः ।

अत्र रक्ते स्थाने स्थितिरूपहेतौ सत्यपि रक्तताया अग्रहणम् ।

(ग) गाङ्गमिति । हे राजहंस ! गाङ्गम् अम्बु जलं सितं शुभ्रं यामुनम् अम्बु यमुनाजलं कज्जलाभं कृष्णवर्णमित्यर्थः उभयत्र गङ्गाजले यमुनाजले च मज्जतः तव सैव शुभ्रता न च चीयते न च वर्द्धते न च अपचीयते ह्रासं गच्छति ।

पूर्वत्रातिरक्तहृदयसम्पर्कात् प्राग्वदपि गुणगौरशब्द-वाच्यस्य नायकस्य रक्तत्वं न निष्पन्नम् । उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनापेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः सम्पर्केऽपि न तद्रूपता । अत्र च गुणाग्रहण-रूपविच्छित्तिविशेषाश्रयाद्विशेषोक्तेर्भेदः । वर्णान्तरोत्पत्त्य-भावाच्च विषमात् (घ) ।

**संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा ।**
**कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ॥**
**७५१॥ (ङ)**

सूक्ष्मं स्थूलमतिभिरसंलक्ष्यं । अत्राकारेण यथा ।

"वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख" ॥ (च)

---

(घ) अत्र शुभ्रताया हेतौ सत्यपि तदग्रहणम् । अत्रेति । गुणाग्रहणरूपा या विच्छित्ति वैचित्र्य तस्या विशेष वैशिष्ट्य तस्य आश्रयात् विशेषोक्ते सति हेतौ गुणाभावरूपात् भेद सामान्यविशेषभावेनेति भाव । विषमादिति । विषमे वर्णान्तरोत्पत्तिरस्ति इह तु न तथेति भाव ।

(ङ) सूक्ष्ममाह सलक्षित इति । आकारेण वा इङ्गितेन सलक्षित सम्यक् अनुभूत सूक्ष्म अर्थ कयापि भङ्ग्या प्रकारेण यत्र सूच्यते प्रकाश्यते त सूक्ष्मम् उच्यते ।

(च) वक्त्रेति । कापि वयस्या सखी वक्त्रात् वदनात् स्यन्दिन चरन्त ये स्वेदबिन्दव घर्मबिन्दव तेषा प्रबन्धै धाराभि कण्ठे कुङ्कुम भिन्न मृष्ट दृष्ट्वा तन्व्या. वयस्याया नायिकाया पुंस्त्वं पुरुषत्वं पुरुषवदाचरितत्वमित्यर्थ. व्यञ्ज-यन्ती प्रकटयन्ती सती स्मित्वा ईषत् हसित्वा पाणौ करे खड्गलेखा खड्गाकृतिं लिलेख ।

अत्र कयाचित् कुङ्कुमभेदेन मंलक्षितं कस्याश्चित् पुरुषायितं पाणौ पुरुषचिह्नखड्गलेखालिखनेन सूचितम्। इङ्गितेन यथा।

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्"॥ (छ)

अत्र विटस्य भ्रूक्षेपादिना लक्षितः सङ्केतकालाभिप्रायो रजनीकालभाविना पद्मनिमीलनेन प्रकाशितः।

**व्याजोक्तिर्गोपनं व्याजा-**
**दुद्भिन्नस्यापि वस्तुनः ॥७५२॥ (ज)**

यथा।

"शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चातिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः।
आः। शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद् वः शिवः"॥ (झ)

नेयं प्रथमापह्नुतिः अपह्नवकारिणो विषयस्यानभिधानात्। द्वितीयापह्नुतेर्भेदश्च तत्प्रस्तावे दर्शितः।

---

(छ) सङ्केतेति। व्याख्यात प्राक्।

(ज) व्याजोक्तिमाह व्याजोक्तिरिति। उद्भिन्नस्य प्रकटितस्य केनापि कारणेनेति शेष वस्तुन व्याजात छलात् गोपन व्याजोक्ति।

(झ) शैलेन्द्रेण। शैलेन्द्रेण हिमालयेन प्रतिपाद्यमानाया सम्प्रदीयमानाया. गिरिजाया गौर्य्या हस्तस्य उपगूढेन स्पर्शेन उल्लसद्भिः उत्पद्यमानैः रोमाञ्चै अतिविसंष्ठुल अतिशयेन विषमस्य. अतएव अखिलस्य विधे. वैवाहिकव्यापारस्य व्यासङ्ग' व्यासक्ति. तस्य भङ्गेन व्याघातेन आकुल. अतएव आः, तुहिनाचलस्य हिमाद्रे' करयो. शैत्य शीतलत्वम् इति ऊचिवान् तथा शैलस्य अन्त.पुरे स्थितैरिति भाव. मातृमण्डलगणै. ब्राह्मीत्यादिभिः सस्मितं दृष्टः शिवः, व. युष्मान् अवतात् रक्षतु। शार्दूलविक्रीडित वृत्तम्।

**स्वभावोक्तिर्दुरूहार्थ-**

**स्वक्रियारूपवर्णनम् ॥७५३॥ (ञ)**

दुरूहयोः कविमात्रवेद्ययोरर्थस्य डिम्भादेः स्वक्रिययोस्त-देकाश्रययोश्चेष्टारूपयोः। यथा मम।

"लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्या-
मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन् विक्रमेण।
स्फूर्जद्धुङ्कारघोषः प्रतिदिशमखिलान् द्रावयन्नेष जन्तून्
कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः" ॥ (ट)

**अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः।**
**यत् प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥**
**७५४॥ (ठ)**

यथा। "मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।

---

अत्र सत्त्वोद्रेकात् उद्भिन्नस्य रोमाञ्चरूपस्य वस्तुन तुहिनाचलकरशैत्य-व्याजेन गोपनम्।

(ञ) स्वभावोक्तिमाह स्वभावोक्तिरिति। दुरूहयो अर्थस्य क्रियास्वरूपयो वर्णन स्वभावोक्ति।

(ट) लाङ्गूलेनेति। एष तरक्षु शार्दूलविशेष, तरक्षुस्तु मृगादन इत्यमर। असकृत् पुन पुन. लाङ्गूलेन क्षितितलं अभिहत्य आहत्य अग्रपद्भ्या पादाग्राभ्या दारयन् उल्लिखन् आत्मन्येव अवलीय लीनो भूत्वा सङ्कुचद्वपुर्भूत्वेत्यर्थ अथ द्रुतं शीघ्र विक्रमेण बलेन गगन प्रोत्पतन् उल्लम्फन् स्फूर्जन् हुङ्कारस्य घोष यस्य तथोक्त घोर हुङ्कार कुर्वन्नित्यर्थ प्रतिदिशम् अखिलान् सर्वान् जन्तून् द्रावयन् ताडयन् कोपाविष्ट अतएव अरुणे रक्ते उच्छूने स्फीते चक्षुषी यस्य तथाभूत सन् प्रतिवन वन प्रति प्रविष्टः। स्रग्धरावृत्तम्।

(ठ) भाविकमाह अद्भुतस्येति। अद्भुतस्य भूतस्य अतीतस्य भविष्यत भाविनो पदार्थस्य वस्तुन यत् प्रत्यक्षायमाणत्व प्रत्यक्षवत् भासमानत्व तत् भाविकम् उदाहृतम्।

(ड) मुनिरिति। महात्मा कुम्भसम्भवः योगीन्द्र. मुनिः अगस्त्य. जयति,

येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ" ॥ (ड)

यथा वा। "आसीदञ्जनमत्रेति पश्यामि तव लोचने।

भाविभूषणसम्भारा साक्षात् कुर्वे तवाकृतिम्" ॥ (ढ)

न चायं प्रसादाख्यो गुणः। भूतभाविनोः प्रत्यक्षायमाणत्वे तस्याहेतुत्वात्। न च अद्भुतो रसः। विस्मयं प्रति अस्य हेतुत्वात्। न च अतिशयोक्तिरलङ्कारः। अध्यवसायाभावात्। न च भ्रान्तिमान्। भूतभाविनोर्भूतभावितयैव प्रकाशनात् न च स्वभावोक्तिः। तस्य लौकिकवस्तुगतसूक्ष्मधर्मस्वभावस्यैव यथावद्वर्णनं स्वरूपम्, अस्य तु वस्तुनः प्रत्यक्षायमाणत्वरूपो विच्छित्तिविशेषोऽस्तीति यदि पुनर्वस्तुनः क्वचित् स्वभावोक्तावपि अस्या विच्छित्तेः सम्भवस्तदोभयोः सङ्करः।

अनातपत्रोऽप्ययमत्र लक्ष्यते
सितातपत्रैरिव सर्वतो वृतः।
अचामरोऽप्येष सदैव वीज्यते
विलासवालव्यजनेन कोऽप्ययम्" ॥ (ण)

अत्र प्रत्यक्षायमाणस्यैव वर्णनान्नायमलङ्कारः। वर्णनाव-

---

येन अगस्त्येन एकचुलुके एकस्मिन् गण्डूषे तौ दिव्यौ मत्स्यकच्छपौ दृष्टौ। समुद्रपानकाले गण्डूषे समुद्रेण सह पातालनिलययोर्मत्स्यकूर्मयोरप्युत्थानादिति भाव।

अत्र अतीतपदार्थस्य अद्भुतस्य प्रत्यक्षायमाणत्वम्।

(ढ) आसीदिति। अत्र अञ्जनमासीदिति तव लोचने नयने पश्यामि तव आकृतिञ्च भाविन भूषणाना सम्भारा समूहा यस्यास्तादृशी साक्षात् कुर्वे पश्यामीत्यथ।

अत्र भूतभाविनोरुभयोरपि प्रत्यक्षायमाणत्वम्।

(ण) अनातपत्र इति। अयम् अनातपत्र छत्ररहितोऽपि सितातपत्रैरिव सर्वत' समन्तात् वृत आवृत' लक्ष्यते। एष अचामर अपि सदैव विलासवालव्यजनेन वीज्यते अत कोऽपि अयम् अलौकसामान्यगुण, पुरुष इति भावः।

शेन प्रत्यक्षायमाणत्वस्य अस्य स्वरूपत्वात्। यत् पुनः प्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्व तत्र अयमलङ्कारो भवितु युक्त'। यथोदाहृते "आसीदञ्जनम्" इत्यादौ।

**लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते।**
**यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्॥**

**७५५॥ (त)**

क्रमेण उदाहरणम्।

"अधःकृताम्भोधरमण्डलाना यस्या शशाङ्कोपलकुट्टिमानाम्।
ज्योत्स्नानिपातात् चरतां पयोभि. केलीवनं वृद्धिमुरीकरोति"॥ (थ)

"नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमान प्रथमेन धात्रा।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते॥ [द]

**रसभावौ तदाभासौ भावस्य प्रशमस्तथा।**

---

(त) उदात्तमाह लोकेति। लोकातिशयसम्पत्तिवर्णना अलौकिकसमृद्धिवर्णन यद्वा महता चरित प्रस्तुतस्य प्रकृतस्य वर्णनीयस्य इत्यर्थ अङ्ग भवेत तत् उदात्तम् उच्यते।

(थ) अध इति। नगरीवर्णनमिदम् यस्या पुर्याम् अध कृतानि अम्भोधरमण्डलानि यै अभ्रङ्कषाणामित्यर्थ शशाङ्कोपलकुट्टिमाना चन्द्रकान्तमणिनिर्मितगृहभूमीना ज्योत्स्नानिपातात् चरता पयोभि जलै केलीवन क्रीडाकानन वृद्धिम उरीकरोति अङ्गीकरोति गच्छतीत्यर्थ। उपजातिवृत्तम्।

अत्रालौकिकसमृद्धिवर्णनम्।

(द) नाभीति। समुद्रवर्णनमिदम्। युगान्ते कल्पान्ते उचिता अभ्यस्ता योगनिद्रा यस्य तादृश' पुरुष नारायण नाभे प्रभिन्नम् उत्थित यत् अम्बुरुह पद्म तदेव आसन यस्य तथोक्तेन प्रथमेन धात्रा ब्रह्मणा संस्तूयमान सन् लोकान् जगन्ति संहृत्य अमु समुद्रम् अधिशेते।

अत्र महतो नारायणस्य चरित प्रस्तुतस्य समुद्रस्य माहात्म्यप्रकटनेन अङ्गम्।

**गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा ॥**
**रसवत् प्रेय ऊर्जस्वि समाहितमिति क्रमात् ॥**

७५६॥ (घ)

तदाभासो रसाभासो भावाभासश्च। तत्र रसयोगाद्रसवदलङ्कारो यथा। "अयं स रसनोत्कर्षी" इत्यादि।

अत्र शृङ्गारः करुणस्याङ्गम्। एवमन्यत्रापि। प्रकृष्टप्रियत्वात् प्रेयः। यथा मम।

"आमीलितालसविवर्त्तिततारकाक्षीं
मत्कण्ठबन्धनदरश्लथबाहुवल्लीम्।
प्रस्वेदवारिकणिकाचितगण्डबिम्बां
संस्मृत्य तामनिशमेति न शान्तिमन्तः" ॥ [न]

अत्र सम्भोगशृङ्गारः स्मरणाख्यभावस्याङ्गं स च विप्रलम्भस्य। ऊर्जो बलम्। अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्जस्वि। यथा।

"वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः।

(घ) रसेति। यदा रस भाव रसाभास भावाभास तथा भावप्रशम गुणीभूतत्वम् अप्रधानभावम् आयान्ति प्राप्नुवन्ति तदा क्रमात् रसवदलङ्कार प्रेयोऽलङ्कार ऊर्जस्विनामालङ्कार तथा समाहितमलङ्कारश्च भवन्ति, तत्र रसाभासो भावाभासश्च उभावेव ऊर्जस्विनाम्ना अलङ्कारेण व्यपदिश्येते।

(न) आमीलितेति। आमीलिते ईषत्सङ्कुचिते अलस यथा तथा विवर्त्तिते चालिते तारके ययोः तादृशे अक्षिणी यस्यास्ताः सुरतान्ते निद्राविशपरामिति भाव मम कण्ठबन्धने कण्ठालिङ्गने दरश्लथा ईषत् शिथिला बाहुवल्ली यस्यास्तथाविधा तथा प्रस्वेदवारिकणिकाभि सुरतश्रमात सञ्जातप्रकृष्टस्वेदविन्दुभि आचित व्याप्त गण्डबिम्ब कपोलमण्डल यस्या तादृशी तां मत्कान्ताम् अनिशं सतत संस्मृत्य अन्त अन्तःकरणं शान्ति न एति न गच्छति। सखायं प्रति कस्यचिदुक्ति। वसन्ततिलकं वृत्तम्।

(प) वने इति। राजस्तुतिरियम्। हे राजन्निति अध्याहार्य्य, पुलिन्दा

त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम्" ॥ [प]

अत्र शृङ्गाराभासो राजविषयरतिभावस्याङ्गम्। एवं भावाभासोऽपि। समाहितं परीहारः [फ]। यथा।

"अविरलकरवालकम्पनै-
र्भ्रुकुटीतर्जनगर्जनैर्मुहुः।
ददृशे तव वैरिणां मदः
स गतः क्वापि तवेक्षणेक्षणात्" ॥ [ब]

अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गम्।

**भावस्य चोदये सन्धौ**
**मिश्रत्वे च तदाख्यका ॥७५७॥**

तदाख्यका भावोदयभावसन्धिभावशवलनामानोऽलङ्काराः। क्रमेण उदाहरणम्।

"मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम्" ॥ [म]

अत्र त्रासादयो राजविषयरतिभावस्याङ्गम्।

"जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका।

---

म्लेच्छजातिविशेषा वने अखिलकलासक्ता निजस्त्रियं परिहृत्य परित्यज्य तव वैरिणां शत्रूणां वनितावृन्दे कान्तासमूहे रतिं विहारं कुर्वते।

(फ) परिहारः परित्यागः विलय इति यावत्।

(ब) अविरलेति। हे राजन्। अविरलैः घनैः सन्ततैरित्यर्थः करवालानां असीनां कम्पनैः आस्फालनैः तथा मुहुः पुनः पुनः भ्रुकुटीभिस्तर्जनैः गर्जनैश्च तव वैरिणां मदः गर्वः ददृशे दृष्टः, स मदः क्षणात् तव ईक्षणे दर्शनमात्रे क्वापि गतः विलयं प्राप्त इत्यर्थः।

(भ) भावस्येति। भावस्य उदये, सन्धौ मिश्रत्वे च गुणीभावापन्ने इति शेषः तदाख्यकाः तन्नामानः अलङ्काराः भवन्ति।

(म) मध्विति। ते वैरिणः शत्रवः सुहृद्भिः सह मधुपाने प्रवृत्ताः अपि कुतोऽपि तव नाम श्रुत्वा विषमां वैकल्यकारिणीं दशाम् अवस्थां लेभिरे प्रापुः।

सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा" ॥ (य)

अत्रौत्सुक्यलज्जयोश्च सन्धिर्देवताविषयरतिभावस्याङ्गम्।

"पश्येत् कश्चिच्चल चपल रे का त्वराहं कुमारी
हस्तालम्बं वितर हह हा व्युत्क्रमः क्वासि यासि ?।
इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाभिधत्ते" ॥ (र)

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता राजविषयरतिभावस्याङ्गम् (ल)। (व) इह केचिदाहुः "वाच्यवाचकरूपालङ्करणमुखेन रसाद्युपकारका एवालङ्काराः। रसादयस्तु वाच्यवाचकाभ्यामुपकार्य्या एवेति न तेषामलङ्कारता भवितुं युक्ता" इति, अन्ये तु "रसाद्युपकारमात्रेणैवालङ्कृति-

अत्र चास्य भावस्य उदय राजविषयरते रङ्गम्।

(य) जन्मान्तरीणेति। जन्मान्तरीणस्य पूर्वजन्मनि भूतस्य रमणस्य पतेः हरस्य अङ्गसङ्गे समुत्सुका अतएव सख्या अन्तिके समीपे सलज्जा पार्वती सदा नः अस्मान् पातु रक्षतु।

(र) पश्येदिति। राज्ञः स्तुतिरियम्। कश्चित् पश्येत्, रे चपल। चल गच्छ, का त्वरा औत्सुक्यम्, अहं कुमारी अजातपरिणया, हस्तालम्बं वितर हस्तं गृहाणेत्यर्थ, हह हा दैन्यसूचकमव्ययमेतत, व्युत्क्रमः अहं राजकन्या कथमिममधमजातिं स्पृशामीति अधोगामित्वम् असि त्वं क्व यासि? हे पृथ्वीपरिवृढ। पृथिवीपते। अरण्यवृत्ते वनाश्रयस्य भवद्विद्विषः भवद्रिपोः कन्या फलकिसलयानि आददाना चिन्वती सती कञ्चित शबरयुवानमिति भावः इत्थम् उक्तप्रकारम अभिधत्ते कथयति। शिखरिणीवृत्तम्।

(ल) अत्रेति। पश्येत् कश्चिदिति शङ्का, चल चपल रे इति असूया, का त्वरेति धृतिः, अहं कुमारीति स्मृतिः, हस्तालम्बं वितर इति श्रमः, हह हेति दैन्यं व्युत्क्रम इति विरोधः, क्वासि यासीति औत्सुक्यम्, एतेषां शबलता मिश्रणम्।

(व) इहेति। वाच्यवाचकरूपालङ्करणमुखेन। वाच्यमभिधेयं वाचकः शब्दः तयोः रूपयोः अलङ्करणमुखेन शोभाजननद्वारेण इत्यर्थः. रसादीनाम्

व्यपदेशो भाक्तश्चिरन्तनप्रसिद्धया अङ्गीकार्य्य एव" इति, अपरे च "रसाद्युपकारमात्रेणालङ्कारत्वं मुख्यता रूपकादौ वाच्याद्युपधानम् अजागलस्तनन्यायेन" इति, अभियुक्तास्तु "स्वव्यञ्जकवाच्यवाचकाद्युपकृतैरङ्गभूतैः रसादिभिरङ्गिनो रसादेर्वाच्यवाचकोपस्कारद्वारेणोपकुर्वद्भिरलङ्कृतिव्यपदेशो लभ्यते, समासोक्तौ तु नायकादिव्यवहारमात्रस्यैवालङ्कृतिता न तु आस्वादस्य, तस्योक्तरीतिविरहात्" इति मन्यते। अतएव ध्वनिकारेणोक्तम् । (व) ।

"प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिरिति" ॥ (श)

यदि च रसाद्युपकारमात्रेणालङ्कृतित्वं तदा वाचकादिष्वपि तथा प्रसज्यते (ष)। एवञ्च यच्च केश्चिदुक्तं "रसादी-

---

उपकारकाः पोषकाः रसादयः रसभावतदाभासभावप्रशमभावोदयभावसन्धिभावशबलताः पूर्वोक्ता अलङ्कृतिव्यपदेशभाज इति शेषः वाच्यवाचकाभ्याम् अर्थशब्दाभ्याम्। भाक्तः गौणः। चिरन्तनप्रसिद्धया प्राचीनमतेनेत्यर्थः। रसादीति। रसादीनामुपकारकत्वम् अलङ्कारत्वमिति मुख्यलक्षणमिति भावः, वाच्याद्युपधानं वाच्यवाचकालङ्करणमित्यर्थः। अजागलस्तनन्यायेनेति। यथा छागस्य गलदेशवर्त्ती स्तनः दुग्धानुपयोगितया निष्प्रयोजनः तथा रसादेरुपकारकत्वाभावेन प्रकृतानुपयोगीत्यर्थः। अभियुक्ताः मान्याः। स्वव्यञ्जकेति। रसव्यञ्जका ये वाच्यवाचकाः अर्थशब्दाः तैः उपकृतैः पुष्टिं नीतैः अङ्गभूतैः अप्रधानतया स्थितैः। अङ्गिनः मुख्यस्य। वाच्यवाचकोपस्कारद्वारेण अर्थशब्दाभ्यां यः उपस्कारः स एव द्वारं तेन। उक्तरीतिविरहादिति वाच्यवाचकोपस्कारद्वारेण रसाद्युपकारकत्वाभावादित्यर्थः।

(श) प्रधाने इति। यत्र वाक्यार्थे प्रधाने अन्यत्र अन्यस्मिन् रसादौ रसादयः आदिपदेन भावादिपरिग्रहः। अङ्गम् अप्राधान्येन स्थिता इत्यर्थः। तस्मिन् काव्ये वाक्यार्थे रसादिः अलङ्कारः भवति इति मे मम मतिः।

(ष) वाचकादिष्विति। तथा अलङ्कारत्वमित्यर्थः। प्रसङ्गः निराकृतवाच्यवाचकालङ्करणमुखेन रसाद्युपकारकत्वाभावादिति भावः।

नामङ्गित्वे रसवदाद्यालङ्कारः अङ्गत्वे तु द्वितीयोदात्तालङ्कारः" तदपि परास्तम्।

यद्येत एवालङ्कारा: परस्परविमिश्रिताः।
तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा॥
७५८॥ (स)

यथा लौकिकालङ्काराणामपि परस्परमिश्रणे पृथक् चारुत्वेन पृथगलङ्कारत्वं तथोक्तरूपाणां काव्यालङ्काराणामपि परस्परमिश्रत्वे संसृष्टिसङ्कराख्यौ पृथगलङ्कारौ। तत्र।

मिथोऽनपेक्षयैतेषां
स्थितिः संसृष्टिरुच्यते॥७५९॥ (ह)

एतेषां शब्दार्थालङ्काराणाम्। यथा।

"देवः पायादपायान्नः स्मेरेन्दीवरलोचनः।
संसारध्वान्तविध्वंसहंसः कंसनिसूदनः"॥ (च)

अत्र "पायादपायात्" इति यमकम्। "संसारेति" आदौ चानुप्रास इति शब्दालङ्कारयोः संसृष्टिः। द्वितीये पादे उपमा

---

(स) अधुना संसृष्टिसङ्कराख्यावलङ्कारावाह यदीति। यदि एते पूर्वोक्ता एव अलङ्कारा परस्परं विमिश्रिता' भवन्ति तदा संसृष्टि. तथा सङ्कर इति नामानौ पृथक् भिन्नौ अलङ्कारौ स्यातामिति शेष.।

(ह) संसृष्टिमाह मिथ इति। मिथ अन्योन्यम् अनपेक्षया परस्परापेक्षा विनेत्यर्थ एतेषाम् अलङ्काराणा बहुवचनमुपलक्षण द्वयोरपि अलङ्कारयो. स्थितिः संसृष्टि उच्यते।

(च) देव इति। स्मेरे विकसिते इन्दीवरे इव लोचने यस्य तथोक्त', संसार एव ध्वान्तं तिमिर तस्य विध्वंसे हंस सूर्य्य. कंसनिसूदन. कंसारि. देवः कृष्णः अपायात् आपदः न अस्मान् पायात् रक्षतु।

द्वितीयार्द्धे च रूपकमित्यर्थालङ्कारयोः संसृष्टिः। उभयोः स्थितत्वाच्छब्दार्थालङ्कारसंसृष्टिः।

**अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थिता।**
**सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः॥**

७६०॥ (क)

अङ्गाङ्गिभावो यथा।

"आकृष्टिवेगविगलद्भुजगेन्द्रभोग-
निर्मोकपट्टपरिवेष्टनयाम्बुराशेः।
मन्थव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमवेष्टत पादमूले"॥ (ख)

अत्र निर्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यपह्नुतिः। सा च मन्दाकिन्या वस्तुवृत्तेन यत्पादमूलवेष्टनं तच्चरणमूल-वेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गम्। श्लेषश्च पादमूल-वेष्टनमेव। चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गम्, अतिशयोक्तिश्च "मन्थव्यथाव्युपशमार्थमिव" इत्युत्प्रेक्षाया अङ्गम्। उत्प्रेक्षा च अम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गम्। यथा वा।

---

(क) सङ्करमाह अङ्गेति। अलङ्कृतीनाम् अङ्गाङ्गित्वे गुणप्रधानभावे तद्वत् तथा एक एव आश्रय आधार तत्र स्थितौ तथा सन्दिग्धत्वे च अतएव त्रिविध सङ्कर भवति।

(ख) आकृष्टीति। आकृष्टे, समुद्रमन्थनसमये देवासुराणामुभयतः आक-र्षणस्य य वेग तस्मात् विगलन् स्खलन् भुजगेन्द्रभोगस्य वासुकिदेहस्य यः निर्मोकपट्ट परित्यक्तत्वग्वसन तस्य परिवेष्टनया परिवेष्टनच्छलेनेत्यर्थ अम्बुराशि. समुद्रस्य पत्युरिति भाव. मन्थव्यथायाः मन्थनजनितपीडायाः व्युपशमार्थमिव आशु शीघ्रं मन्दाकिनी गङ्गा यस्य नारायणस्य पादमूले पदतले चरणसमीपे च चिरम् अवेष्टत अवहत् संवाहनार्थमतिष्ठच्च। वसन्ततिलकं वृत्तम्।

"अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहो। दैवगतिश्चित्रा तथापि न समागमः" ॥ (ग)

अत्र समासोक्तिविशेषोक्तेरङ्गम्। सन्देहसङ्करो यथा।

"इदमाभाति गगने भिन्दानं सन्ततं तमः
अमन्दनयनानन्दकरं मण्डलमैन्दवम्" ॥ (घ)

अत्र किं मुखस्य चन्द्रतयाध्यवसानादतिशयोक्तिः उत इदमिति मुखं निर्दिश्य चन्द्रत्वारोपाद्रूपकम्, अथवा इदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्माभिसम्बन्धात्तुल्ययोगिता, आहोस्विच्चन्द्रस्याप्रकृतत्वाद्दीपकं, किंवा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात् समासोक्तिः, यद्वाऽप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा, यद्वा मन्मथोद्दीपनः कालः स्वकार्य्यभूतचन्द्रवर्णनामुखेन वर्णित इति पर्य्यायोक्तिरिति बहूनामलङ्काराणां सन्देहात् सन्देहसङ्करः, यथा वा मुखचन्द्रं पश्यामीत्यत्र किं मुखं चन्द्र इवेत्युपमा उत चन्द्र एवेति रूपकमिति सन्देहः, साधकबाधकयोर्द्वयोरेकतरस्य सद्भावेन पुनर्न सन्देहः। यथा "मुखचन्द्रं चुम्बति" इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकं, चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकम्। "मुखचन्द्रः प्रकाशते"

---

(ग) अनुरागेति। सन्ध्या अनुरागवती लौहित्यवती प्रेमवती च, दिवसः तस्याः सन्ध्यायाः पुरःसरः पुरवर्त्ती। अहो आश्चर्य्यं दैवगतिश्चित्रा अद्भुता, तथापि अनुरागवत्त्वे पुरोवर्त्तित्वे चेत्यर्थः न समागमः न सम्मेलनम्।

(घ) इदमिति। सन्ततं निविडं तमः अन्धकारं भिन्दानं खण्डयत् अमन्दं यथा तथा नयनयोः आनन्दकरम् ऐन्दवं चान्द्रं मण्डलमिदम् आभाति राजते।

(ङ) साधकेति। साधकं मुख्यतया उपमाननिष्ठं साधर्म्यं रूपकस्य

इत्यत्र प्रकाशाख्यो धर्मो रूपकस्य साधको मुखे उपचरितत्वेन सम्भवतीति नोपमाबाधकः (ङ)।

"राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्" ॥ (च)

अत्र योषित आलिङ्गनं नायकस्य सदृशेनोचितमिति लक्ष्म्यालिङ्गनस्य राजन्यसम्भवादुपमाबाधकं नारायणे सम्भवाद्रूपकम्। एवं

"वदनाम्बुजमेणाक्ष्या भाति चञ्चललोचनम्" । (छ)

अत्र वदने लोचनस्य सम्भवादुपमायाः साधकता अम्बुजे च असम्भवाद्रूपकस्य बाधकता। एवं "सुन्दरं वदनाम्बुजम्" इत्यादौ साधारणधर्मप्रयोगे, "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति वचनादुपमासमासो न सम्भवतीति उपमाया बाधकः। एवञ्चात्र मयूरव्यंसकादित्वाद्रूपकसमास एव। एकाश्रयानुप्रवेशो यथा मम।

"कटाक्षेणापीषत् क्षणमपि निरीक्षेत यदि सा
तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः।
सरोमाञ्चोदञ्चत्कुचकलसनिर्भिन्नवसनः
परीरम्भारम्भः क इव भविताम्भोरुहदृशः॥" (ज)

---

साधकम् उपमाया बाधकं तथा मुख्यतया उपमेयनिष्ठं साधर्म्यं च उपमाया साधकं रूपकस्य बाधकं तयोरेकतरस्य साधकस्य बाधकस्य वा इत्यर्थः।

(च) राजेति। राजा एव नारायणः तं त्वां लक्ष्मीः निर्भरं गाढम् आलिङ्गति आश्रयतीत्यर्थः।

(छ) एवमिति। एणाक्ष्याः हरिणाक्ष्याः चञ्चले लोचने यस्य तथाविधं वदनम् अम्बुजमिव तत् भाति शोभते।

(ज) कटाक्षेणापीति। यदि सा कटाक्षेण ईषत् क्षणमपि अल्पक्षणमपि निरीक्षेत पश्येत् तदा पिहितः आच्छादितः अशेषः विषयः येन तादृशः सान्द्रः

अत्र "कटाक्षेणापीषत् क्षणमपि" इत्यत्र छेकानुप्रासस्य "निरीक्षेत" इत्यत्र क्षकारमादाय वृत्त्यनुप्रासस्य चैकाश्रये-ऽनुप्रवेशः। एवं च अत्रैवानुप्रासार्थापत्त्यलङ्कारयोः। यथा वा। "संसारध्वान्तविध्वंसः" इत्यत्र रूपकानुप्रासयोः। यथा वा। "कुरवका रवकारणतां ययुः" इत्यत्र रवका रवका इत्येकं वकाररवकार इत्येकमिति यमकयोः। यथा वा।

"अहिणअपओदरसीएसु पहीअसामाइएसु दिअसेसु।
सोहइ पसारिअगीआणं णच्चिअं मोरबिंदाणम्" (१)॥ (भ)

अत्र "पहिअसामाइएसु" इत्येकाश्रये पथिकश्यामायितेत्युपमा। पथिकसामाजिकेषु इति रूपकं प्रविष्टम्।

श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-
श्रीविश्वनाथकविराजकृतं प्रबन्धम्।
साहित्यदर्पणममुं सुधियो विलोक्य
साहित्यतत्त्वमखिलं सुखमेव वित्त॥

---

(१) अभिनवपयोदरसितेषु पथिकश्यामायितेषु दिवसेषु।
महति प्रसारितग्रीवाणां नृत्यं मयूरवृन्दानाम्॥ इति संस्कृतम्।

---

घन आनन्दः स्फुरति उदेतीत्यर्थः। अम्भोरुहे इव दृशौ यस्याः तथाभूतायाः तस्याः सरोमाञ्चं यथा तथा उदञ्चद्भ्यां स्फीततां गच्छद्भ्यां कुचकलसाभ्यां निर्भिन्नं छिन्नं वसनं यत्र तादृशः परीरम्भारम्भः आलिङ्गनव्यापारः क इव भविता तत्र कियानानन्दो भवितेति न जाने इति भावः। शिखरिणीवृत्तम्।

(भ) अभिनवमिति। अभिनवं पयोदानां मेघानां रसितं गर्जितं येषु तथोक्तेषु पथिकाः श्यामायिता विरहदुःखेन मलिना इव आचरन्ति येषु तादृशेषु दिवसेषु वर्षासु इत्यर्थः प्रसारिता विस्फारिता ग्रीवा यैः तेषां मयूर-

यावत्प्रसन्नेन्दुनिभानना श्रीर्नारायणस्याङ्कमलङ्करोति।
तावन्मनः सम्मदयन् कवीनामेष प्रबन्धः प्रथितोऽस्तु लोके॥

इति साहित्यदर्पणे दशमः परिच्छेदः समाप्तः।

समाप्तञ्चेदं साहित्यदर्पणम्।

---

वृन्दाना नृत्य महति उत्सवायते इत्यर्थं। अथवा पथिकेति सम्बोधन स्यामायितेषु सैधेनेति भावः। दिवसेषु इत्यस्य विशेषणमिति च बोध्यम्।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता व्याख्या समाप्ता।